| विषयाः. | पृष्ठं. |
|---|---|
| ४१ कफतिमिरे नस्यम् | ५२५ |
| ४२ ,, धूमतर्पणयोगौ | ५२५ |
| ४३ ,, पुटपाकाञ्जनरसक्रियाञ्जने | ५२५ |
| ४४–४५ सर्वजकाचचिकित्सा | ५२५ |
| ४६ सांनिपातिकरागितिमिरचिकित्सा | ५२५ |
| ४७–४८ तिमिरे अन्तराश्रयं चिकित्सितम् | ५२६ |
| ४९–५१ ,, आहारविधिः | ५२६ |
| ५२ ,, वर्ज्याणि | ५२६ |
| ५३ तिमिरस्य साध्यासाध्यविचारः | ५२६ |
| ५४ याप्यतिमिरचिकित्सा | ५२६ |
| ५५–६० श्लैष्मिके लिङ्गनाशे शस्त्रकर्मविधिः | ५२६ |
| ६१–६३ सम्यग्विद्धे नेत्रे पश्चात्कर्म | ५२७ |
| ६४–६८ सम्यग्लिखितलक्षणम् | ५२७ |
| ६९–७० सम्यग्लिखिते धावनादिविधिः | ५२७ |
| ७१ श्लैष्मिके लिङ्गनाशे शस्त्रकर्मानर्हाः | ५२७ |
| ७२–७९ दैवकृतछिद्रादन्यत्र वेधे चिकित्सा | ५२७ |
| ८० शस्त्रकर्मार्हो लिङ्गनाशः | ५२८ |
| ८१ निर्लिखितस्यापि दोषस्य पुनरावृत्तिकारणम् | ५२८ |
| ८२–८३ दुष्टशलाकाजनितव्यापदः | ५२८ |
| ८४ शस्त्रकर्मयोग्यशलाकाकथनम् | ५२८ |
| ८५–८६ दुष्टव्यधाहाराचारजा व्यापदः | ५२८ |
| ८७–९४ तासां चिकित्सा | ५२८ |
| ९५–१०० अवशिष्टदोषप्रसादनार्थमञ्जनम् | ५२८ |
| **अष्टादशोऽध्यायः १८.** | |
| १–२ क्रियाकल्पोपक्रमः | ५२९ |
| ३–११ नेत्रे तर्पणविधिः | ५२९ |

| विषयाः. | पृष्ठं. |
|---|---|
| १२–१३ सम्यक्तृप्तनेत्रलक्षणम् | ५२९ |
| १४ अतितृप्तनेत्रलक्षणम् | ५२९ |
| १५ हीनतृप्तनेत्रलक्षणम् | ५३० |
| १६ हीनातितृप्तयोश्चिकित्सा | ५३० |
| १७ तर्पणविषयः | ५३० |
| १८ तर्पणाविषयः | ५३० |
| १९ पुटपाकस्य विषयाविषयौ | ५३० |
| २०–२२ पुटपाकस्यावस्थिकः कालः | ५३० |
| २३ स्नेहनपुटपाकः | ५३० |
| २४–२५ लेखनपुटपाकः | ५३० |
| २६ रोपणपुटपाकः | ५३० |
| २७ स्नेहनलेखनयोः पूर्वकर्म | ५३० |
| २८ तर्पणपुटपाकयोः परिहारकालः | ५३० |
| २९ ,, परिहार्याणि | ५३१ |
| ३० ,, व्यापच्चिकित्साबीजम् | ५३१ |
| ३१ पुटपाकस्य सम्यग्योगलक्षणं | ५३१ |
| ३२ अतियोगहीनयोगयोर्लक्षणम् | ५३१ |
| ३३–३८ पुटपाकविधिः | ५३१ |
| ३९–४० तर्पणपुटपाकयोर्व्यापदः | ५३१ |
| ४१ तर्पणपुटपाकयोर्गुणाः | ५३१ |
| ४२ तयोर्व्यापच्चिकित्सा | ५३१ |
| ४३ तर्पणपुटपाकयोः पूर्वकर्म पश्चात्कर्म च | ५३१ |
| ४४ आश्चोतनसेकौ | ५३१ |
| ४५ आश्च्योतने बिन्दुसंख्या | ५३१ |
| ४६ परिषेकधारणकालः | ५३२ |
| ४७ आश्च्योतनसेकयोः प्रयोगकालः | ५३२ |
| ४८–५० शिरोबस्तिविधिः | ५३२ |
| ५१–५२ अञ्जनभेदाः कालश्च | ५३२ |
| ५३ लेखनाञ्जनविधानम् | ५३२ |
| ५४ लेखनाञ्जनगुणाः | ५३२ |
| ५५ रोपणाञ्जनविधानम् | ५३३ |
| ५६ प्रसादनाञ्जनम् | ५३३ |

| विषयाः. | पृष्ठं. |
|---|---|
| ५७ पूर्वोक्ताञ्जनानां प्रयोगकालः | ५३३ |
| ५८ गुटिकारसचूर्णभेदेनाञ्जनत्रैविध्यम् | ५३३ |
| ५९ गुटिकाञ्जनप्रमाणम् | ५३३ |
| ६० रसक्रियाञ्जनप्रमाणम् | ५३३ |
| ६१ अञ्जनस्थापनार्हपात्राणि | ५३३ |
| ६२–६३ अञ्जनशलाकाकृतिः | ५३३ |
| ६४–६६ अञ्जनविधिः | ५३३ |
| ६७–६९ अकालप्रक्षालनदोषाः | ५३४ |
| ७०–७२ अञ्जनवैगुण्ये व्यापदः | ५३४ |
| ७३ अञ्जनं साधु युञ्जीत | ५३४ |
| ७४ अञ्जनव्यापदां चिकित्सा | ५३४ |
| ७५ लेखनाञ्जनस्य समयोगलक्षणम् | ५३४ |
| ७६ ,, अतियोगलक्षणम् | ५३४ |
| ७७ ,, अतियोगप्रतीकारः | ५३४ |
| ७८ ,, अतियोगलक्षणं तत्प्रतीकारश्च | ५३४ |
| ७९ प्रसादनाञ्जनस्य समयोगलक्षणं | ५३४ |
| ८० ,, अतियोगलक्षणं तच्चिकित्सा च | ५३४ |
| ८१ रोपणाञ्जनस्य समयोगातियोगलक्षणम् | ५३४ |
| ८२ प्रसादनरोपणयोर्हीनयोगलक्षणम् | ५३५ |
| ८३–८४ पूर्वोक्तबीजेनान्यान्यञ्जनानि कार्याणि | ५३५ |
| ८५–९३ सौवीराञ्जनविधानम् | ५३५ |
| ९४–९७ भद्रोदयाञ्जनम् | ५३५ |
| ९८–९९ तगराद्यञ्जनयोगः | ५३६ |
| १००–१०२ मनःशिलाद्यञ्जनम् | ५३६ |
| १०३–१०४ कांस्याद्यञ्जनम् | ५३६ |
| १०५–१०६ पथ्याद्यञ्जनम् | ५३६ |

| विषयाः. | पृष्ठं. |
|---|---|
| **एकोनविंशतितमोऽध्यायः १९.** | |
| १–२ नयनाभिघातप्रतिषेधोपक्रमः | ५३६ |
| ३ नयनाभिघाते सामान्यचिकित्सा | ५३६ |
| ४–५ ,, विशेषचिकित्सा | ५३७ |
| ६ नयनपटलाभिघातचिकित्सा | ५३७ |
| ७ अतिप्रविष्टनयनचिकित्सा | ५३७ |
| ८ अतिनिर्गतनयनचिकित्सा | ५३७ |
| ९–१० कुकूणकलक्षणं चिकित्सा च | ५३७ |
| ११–१२ कुकूणके वमनम् | ५३८ |
| १३ ,, प्रक्षालनार्थं कषायः | ५३८ |
| १४ ,, चूर्णाञ्जनम् | ५३८ |
| १५ ,, गुटिकाञ्जनम् | ५३८ |
| १६ बालानां शुक्रलेखनार्थमञ्जनम् | ५३८ |
| १७–२० नेत्रचिकित्सितोपसंहारः | ५३८ |
| **विंशतितमोऽध्यायः २०.** | |
| १–२ कर्णगतरोगविज्ञानीयोपक्रमः | ५३९ |
| ३–५ कर्णरोगाणां नामतो निर्देशः | ५३९ |
| ६ कर्णशूललक्षणम् | ५३९ |
| ७ कर्णप्रणादलक्षणम् | ५३९ |
| ८ बाधिर्यलक्षणम् | ५३९ |
| ९ कर्णक्ष्वेडलक्षणम् | ५४० |
| १० कर्णसंस्रावलक्षणम् | ५४० |
| ११ कर्णकण्डू-कर्णगूथकयोर्लक्षणम् | ५४० |
| १२ कर्णप्रतिनाहलक्षणम् | ५४० |
| १३ कृमिकर्णकलक्षणम् | ५४० |
| १४ कर्णविद्रधिलक्षणम् | ५४० |
| १५ कर्णपाकपूतीकर्णयोर्लक्षणम् | ५४० |
| १६ कर्णगतान्यरोगलक्षणातिदेशः | ५४० |
| **एकविंशतितमोऽध्यायः २१.** | |
| १–२ कर्णगतरोगप्रतिषेधोपक्रमः | ५४० |
| ३ कर्णरोगे सामान्यचिकित्सा | ५४० |
| ४–५ कर्णशूल-प्रणाद-बाधिर्य-क्ष्वेडानां सामान्यचिकित्सा | ५४१ |
| ६–७ कर्णशूले नाडीस्वेदः | ५४१ |
| ८ ,, पिण्डस्वेदः | ५४१ |
| ९–१० ,, स्नेहस्वेदः | ५४१ |
| ११ कर्णस्वेदस्य पश्चात्कर्म | ५४१ |
| १२ कर्णरोगे बलातैलम् | ५४१ |
| १३–१९ कतिपये कर्णपूरणयोगाः | ५४१ |
| २०–२२ कर्णरोगे दीपिकातैलम् | ५४२ |
| २३–२८ ,, कतिपये योगाः | ५४२ |
| २९–३० पित्तजकर्णशूले विशेषचिकित्सितं | ५४२ |
| ३१–३३ श्लेष्मजकर्णशूले ,, | ५४२ |
| ३४–३८ बाधिर्ये कतिपये योगाः | ५४२ |
| ३९–४१ कर्णस्राव-पूतिकर्ण-क्रिमिकर्णकेषु सामान्यचिकित्सा | ५४३ |
| ४२–४८ कर्णस्रावे कतिपये कर्णपूरणयोगाः | ५४३ |
| ४९–५० पूतिकर्णचिकित्सा | ५४३ |
| ५१ क्रिमिकर्णचिकित्सा | ५४३ |
| ५२–५३ क्रिमिकृतदौर्गन्ध्यचिकित्सा | ५४३ |
| ५४ कर्णक्ष्वेडचिकित्सा | ५४३ |
| ५५ कर्णगूथचिकित्सा | ५४३ |
| ५६ कर्णकण्डूचिकित्सा | ५४३ |
| ५७ कर्णप्रतिनाहचिकित्सा | ५४४ |
| ५८–५९ कर्णपाकचिकित्सा | ५४४ |
| **द्वाविंशतितमोऽध्यायः २२.** | |
| १–२ नासागतरोगविज्ञानीयोपक्रमः | ५४४ |
| ३–५ नासारोगाणां नामतो निर्देशः | ५४४ |
| ६–७ अपीनसलक्षणम् | ५४४ |
| ८ पूतिनस्यलक्षणम् | ५४४ |
| ९ नासापाकलक्षणम् | ५४४ |
| १० पूयरक्तलक्षणम् | ५४४ |
| ११–१२ क्षवथुलक्षणम् | ५४५ |
| १३ भ्रंशथुलक्षणम् | ५४५ |
| १४ दीप्तलक्षणम् | ५४५ |
| १५ नासाप्रतीनाहलक्षणम् | ५४५ |
| १६ नासास्रावलक्षणम् | ५४४ |
| १७ नासाशोषलक्षणम् | ५४५ |
| १८–२१ अनुक्तरोगलक्षणातिदेशः | ५४५ |
| **त्रयोविंशतितमोऽध्यायः २३.** | |
| १–२ नासागतरोगप्रतिषेधोपक्रमः | ५४६ |
| ३–४ पीनस-पूतिनस्ययोश्चिकित्सा | ५४६ |
| ५ नासापाकचिकित्सा | ५४६ |
| ६ पूयरक्तचिकित्सा | ५४६ |
| ७ क्षवथुभ्रंशथ्वोश्चिकित्सा | ५४६ |
| ८ दीप्तचिकित्सा | ५४६ |
| ९ नासानाहचिकित्सा | ५४६ |
| १० नासास्रावचिकित्सा | ५४६ |
| ११–१२ नासाशोषचिकित्सा | ५४६ |
| **चतुर्विंशतितमोऽध्यायः २४.** | |
| १–२ प्रतिश्यायप्रतिषेधोपक्रमः | ५४७ |
| ३ प्रतिश्यायनिदानम् | ५४७ |
| ४ प्रतिश्यायसंप्राप्तिः | ५४७ |
| ५ प्रतिश्यायपूर्वरूपम् | ५४७ |
| ६ वातजप्रतिश्यायलक्षणम् | ५४७ |
| ७–८ पित्तजप्रतिश्यायलक्षणम् | ५४७ |
| ९ कफजप्रतिश्यायलक्षणम् | ५४७ |
| १०–११ सांनिपातिकप्रतिश्यायलक्षणम् | ५४७ |
| १२–१३ रक्तजप्रतिश्यायलक्षणम् | ५४७ |
| १४ दुष्टप्रतिश्यायलक्षणम् | ५४८ |
| १६–१७ प्रतिश्यायोपद्रवाः | ५४८ |
| १८ प्रतिश्यायानां सामान्यचिकित्सितम् | ५४८ |
| १९ नवप्रतिश्याये पाचनम् | ५४८ |
| २० पक्वप्रतिश्यायस्य निर्हरणम् | ५४८ |
| २१ पक्वप्रतिश्याये सेव्यानि | ५४८ |
| २२ प्रतिश्याये वर्ज्यानि | ५४८ |

विषयाः. पृष्ठं.

२३-२४ पक्वप्रतिश्याये वमनम् ५४९
२५ वातिकप्रतिश्यायचिकित्सा ५४९
२६-२९ पैत्तिकरक्तजप्रतिश्यायचिकित्सा ५४९
३०-३३ कफजप्रतिश्यायचिकित्सा ५४९
३४-३५ सांनिपातिकप्रतिश्यायचिकित्सा ५४९
३६-३७ प्रतिश्याये मुस्तादितैलम् ५४९
३८-४१ प्रतिश्याये दशक्षीरघृतम् ५४९
४२ दुष्टप्रतिश्याये क्रिमिघ्नो विधिः ५४९

## पञ्चविंशतितमोऽध्यायः २५.

१-२ शिरोरोगविज्ञानीयोपक्रमः ५५०
३-४ शिरोरोगाणां नामतो निर्देशः ५५०
५ वातिकशिरोरोगलक्षणम् ५५०
६ पैत्तिकशिरोरोगलक्षणम् ५५०
७ कफजशिरोरोगलक्षणम् ५५०
८ सांनिपातिकशिरोरोगलक्षणम् ५५०
९ क्षयजशिरोरोगलक्षणम् ५५१
१० क्रिमिजशिरोरोगलक्षणम् ५५१
११-१२ सूर्यावर्तलक्षणम् ५५१
१३-१४ अनन्तवातलक्षणम् ५५१
१५ अर्धावभेदलक्षणम् ५५१
१६-१७ शङ्खकलक्षणम् ५५१

## षड्विंशतितमोऽध्यायः २६.

१-२ शिरोरोगप्रतिषेधोपक्रमः ५५१
३-५ वातिकशिरोरोगे आभ्यन्तरचिकित्सा ५५१
६-११ ,, बाह्यचिकित्सा ५५२
१२-१८ पित्तरक्तजशिरोगयोश्चिकित्सा ५५२
१९-२४ कफजशिरोरोगचिकित्सा ५५२

विषयाः. पृष्ठं.

२५-२६ क्षयजशिरोरोगचिकित्सा ५५३
२७-३० क्रिमिजशिरोरोगचिकित्सा ५५३
३१ सूर्यावर्तकचिकित्सा ५५३
३२-३६ अर्धावभेदकचिकित्सा ५५३
३७-३८ अनन्तवातचिकित्सा ५५४
३९-४४ शङ्खकचिकित्सा ५५४
४५-४७ शालाक्यतन्त्रोपसंहारः ५५४

## सप्तविंशतितमोऽध्यायः २७.

१-३ नवग्रहाकृतिविज्ञानीयोपक्रमः ५५५
४-५ बालग्रहाणां नामतो निर्देशः ५५५
६ ग्रहाणां बालावेशे हेतुः ५५५
७ देहं विशन्तो ग्रहाः कस्मान्नोपलभ्यन्ते ५५५
८ स्कन्दग्रहार्तलक्षणम् ५५५
९ स्कन्दापस्मारार्तलक्षणम् ५५५
१० शकुनिग्रहार्तलक्षणम् ५५५
११ रेवतीग्रहार्तलक्षणम् ५५५
१२ पूतनाग्रहार्तलक्षणम् ५५६
१३ अन्धपूतनार्तलक्षणम् ५५६
१४ शीतपूतनार्तलक्षणम् ५५६
१५ मुखमण्डिकार्तलक्षणम् ५५६
१६ नैगमेषार्तलक्षणम् ५५६
१७ असाध्यग्रहार्तलक्षणम् ५५६
१८-२२ साध्यग्रहचिकित्सा ५५६

## अष्टाविंशतितमोऽध्यायः २८.

१-२ स्कन्दग्रहप्रतिषेधोपक्रमः ५५६
३ स्कन्दग्रहे परिषेचनम् ५५६
४ ,, अभ्यञ्जनार्थं तैलम् ५५७
५-६ ,, धूपनम् ५५७
७ ,, धारणद्रव्याणि ५५७
८ ,, बलिः ५५७
९ ,, स्नानम् ५५७
१०-१४ ,, रक्षाविधानम् ५५७

## एकोनत्रिंशत्तमोऽध्यायः २९.

१-२ स्कन्दापस्मारप्रतिषेधोपक्रमः ५५७

विषयाः. पृष्ठं.

३ स्कन्दापस्मारार्ते परिषेकः ५५७
४-६ ,, धूपनम् ५५७
७-८ ,, बलिः स्नानं च ५५८
९ ,, रक्षाविधानम् ५५८

## त्रिंशत्तमोऽध्यायः ३०.

१-२ शकुनिप्रतिषेधोपक्रमः ५५८
३ शकुनिग्रहार्ते परिषेकः ५५८
४ ,, अभ्यञ्जनं तैलम् ५५८
५ ,, धूपनम् ५५८
६ ,, धारणीयानि ५५८
७ ,, बलिः ५५८
८ ,, स्नानम् ५५८
९-११ ,, रक्षाविधानम् ५५८

## एकत्रिंशत्तमोऽध्यायः ३१.

१-२ रेवतीप्रतिषेधोपक्रमः ५५८
३ रेवतीग्रहार्ते सेचनम् ५५८
४ ,, अभ्यञ्जनं तैलम् ५५९
५ ,, घृतम् ५५९
६ ,, धूपनम् ५५९
७ ,, धारणीयानि ५५९
८ ,, बलिः ५५९
९ ,, स्नानम् ५५९
१०-११ ,, रक्षाविधानम् ५५९

## द्वात्रिंशत्तमोऽध्यायः ३२.

१-२ पूतनाप्रतिषेधोपक्रमः ५५९
३ पूतनाग्रहार्ते परिषेचनम् ५५९
४ ,, अभ्यञ्जनं तैलम् ५५९
५ ,, अभ्यञ्जनं घृतम् ५५९
६-७ ,, धूपनम् ५५९
८ ,, बलिः ५५९
९ ,, स्नानम् ५५९
१०-११ ,, रक्षाविधानम् ५५९

## त्रयस्त्रिंशत्तमोऽध्यायः ३३.

१-२ अन्धपूतनाप्रतिषेधोपक्रमः ५६०

विषयाः. पृष्ठं.

३ अन्धपूतनार्ते परिषेचनम् ५६०
४-५ „ अभ्यञ्जनं तैलं घृतं च ५६०
६ „ धूपनम् ५६०
७ „ बलिः ५६०
८ „ स्नानम् ५६०
९ „ रक्षाविधानम् ५६०

**चतुस्त्रिंशत्तमोऽध्यायः ३४.**

१-२ शीतपूतनाप्रतिषेधोपक्रमः ५६०
३ शीतपूतनार्ते परिषेकः ५६०
४-५ „ अभ्यञ्जनं तैलं घृतं च ५६०
६ „ धूपः ५६०
७-८ „ बलिः स्नानं च ५६०
९ रक्षाविधानम् ५६०

**पञ्चत्रिंशत्तमोऽध्यायः ३५.**

१-२ मुखमण्डिकाप्रतिषेधोपक्रमः ५६०
३ मुखमण्डिकार्ते परिषेचनम् ५६०
४ „ अभ्यञ्जं तैलम् ५६१
५ „ अभ्यञ्जनं घृतम् ५६१
६ „ धूपः ५६१
७-८ „ बलिः स्नानं च ५६१
९ „ रक्षाविधानम् ५६१

**षट्त्रिंशत्तमोऽध्यायः ३६.**

१-२ नैगमेषप्रतिषेधोपक्रमः ५६१
३ नैगमेषार्ते परिषेकः ५६१
४ „ तैलम् ५६१
५ „ घृतम् ५६१
६ „ धारणीयानि ५६१
७-८ „ धूपः ५६१
९-१० „ बलिः ५६१
११ „ रक्षाविधानम् ५६१

विषयाः. पृष्ठं.

**सप्तत्रिंशत्तमोऽध्यायः ३७.**

१-२ ग्रहोत्पत्त्यध्यायोपक्रमः ५६२
३-१६ नवबालग्रहाणामुत्पत्तिवर्णनम् ५६२
१७-२२ किंभूतान् बालान् ग्रहा आविशन्ति ५६२

**अष्टत्रिंशत्तमोऽध्यायः ३८.**

१-२ योनिव्यापत्प्रतिषेधोपक्रमः ५६३
३-५ योनिरोगनिदानम् ५६३
६-८ दोषभेदेन योनिरोगसंख्या ५६३
९-११ वातजयोनिरोगाणां लक्षणानि ५६३
१२-१४ रक्तजयोनिरोगाणां लक्षणानि ५६४
१५-१७ कफजयोनिरोगाणां लक्षणानि ५६४
१८-२० सांनिपातिकयोनिरोगाणां लक्षणानि ५६४
२१-२३ वातजयोनिरोगचिकित्सा ५६४
२४-२६ पित्तजयोनिरोगचिकित्सा ५६४
२७-३० कफजयोनिरोगचिकित्सा ५६४
३१-३२ कौमारतन्त्रोपसंहारः ५६५

**एकोनचत्वारिंशत्तमोऽध्यायः ३९.**

१-७ ज्वरप्रतिषेधोपक्रमः ५६५
८-१२ रोगेषु ज्वरस्य प्राधान्यम् ५६६
१३ ज्वरस्वरूपम् ५६६
१४ ज्वरभेदाः ५६६
१५-२२ ज्वरसंप्राप्तिः ५६६
२३-२४ ज्वरे गात्रौष्ण्ये हेतुः ५६७
२५-२८ ज्वरपूर्वरूपम् ५६७
२९-३० वातज्वरलक्षणम् ५६७
३१-३२ पित्तज्वरलक्षणम् ५६७
३३-३४ कफज्वरलक्षणम् ५६८
३५-३७ सांनिपातिकज्वरलक्षणानि ५६८

विषयाः. पृष्ठं.

३८-४१ अभिन्यासज्वरलक्षणम् ५६८
४२-४५ संनिपातज्वरभेदाः ५६८
४६ संनिपातज्वरमर्यादा ५६९
४७-४८ वातपित्तज्वरलक्षणम् ५६९
४९ वातश्लेष्मज्वरलक्षणम् ५६९
५० श्लेष्मपित्तज्वरलक्षणम् ५६९
५१-५३ विषमज्वरसंप्राप्तिः ५६९
५४ प्रलेपकलक्षणम् ५६९
५५ चतुर्थकविपर्ययज्वरलक्षणम् ५७०
५६ विषमस्यैकीयमतेनागन्तुकत्वम् ५७०
५७-५८ विषमज्वराणामारम्भकदोषाः ५७०
५९-६१ शीतपूर्वदाहपूर्वज्वरयोर्लक्षणम् ५७०
६२ विषमज्वराणां स्वकालेषूद्गमः ५७०
६३-६५ विषमज्वराणामुपशान्तवेगानामपि देहेऽवस्थानम् ५७१
६६ कायचिकित्साविदां मतेन विषमज्वरसंप्राप्तिः ५७१
६७ विषमज्वराणामाश्रयभूता धातवः ५७१
६८ एकीयमते विषमस्य भूताभिषङ्गजत्वम् ५७१
६९-७० विषमज्वराणां लक्षणानि ५७१
७१-७४ विषमज्वराणां नियतकालागमने हेतुः ५७१
७५-८२ विविधागन्तुज्वराणां लक्षणानि ५७२
८३-९१ धातुगतज्वराणां लक्षणानि ५७२
९२-९६ ज्वराणामसाध्यलक्षणम् ५७३
९७-९९ ज्वरपूर्वरूपे चिकित्सा ५७३
१००-१०१ आमज्वरे लङ्घनम् ५७४
१०२ लङ्घनानर्हाः ५७४
१०३-१०४ सुलङ्घितलक्षणम् ५७४
१०५ अतिलङ्घितलक्षणम् ५७४

| विषयाः. | पृष्ठं. |
|---|---|
| १०६ ज्वरे उष्णोदकम् | ५७४ |
| १०७–१०८ ,, अवस्थाविशेषे शीतोदकम् | ५७४ |
| १०९–११४ आमज्वरे पाचनयोगाः | ५७५ |
| ११५ पक्वज्वरलक्षणम् | ५७५ |
| ११६–११८ आमज्वरलक्षणम् | ५७५ |
| ११९–१२० ज्वरे औषधदानकालः | ५७५ |
| १२१ आमज्वरे औषधदाने दोषाः | ५७६ |
| १२२ ज्वरे आवस्थिकं कर्तव्यम् | ५७६ |
| १२३–१२४ ज्वरे शोधनावस्था | ५७६ |
| १२५–१२८ ज्वरे वमनादिपरिपाटी | ५७६ |
| १२९ ज्वरे आध्माने उदरलेपः | ५७६ |
| १३० ,, ऊर्ध्ववाते गुदवर्तिः | ५७६ |
| १३१ ,, ,, यवागूः | ५७६ |
| १३२ रूक्षस्य ज्वरे सर्पिः | ५७६ |
| १३३ ज्वरे संशमनम् | ५७६ |
| १३४–१३६ जरे तर्पणम् | ५७७ |
| १३७–१४० द्वन्द्वजज्वराणां पथ्यम् | ५७७ |
| १४१ ज्वरे तक्रप्रयोगः | ५७७ |
| १४२–१४३ ज्वरे क्षीरयोगः | ५७७ |
| १४४–१४७ ,, हितभोजनोपदेशः | ५७७ |
| १४८–१५७ ज्वरे आहारोपयोगीनि द्रव्याणि | ५७८ |
| १५८–१६० ज्वरमुक्तेन असेव्यानि | ५७८ |
| १६१ ज्वरे आयासनिषेधः | ५७९ |
| १६२ शान्तज्वरेऽपि शोधनम् | ५७९ |
| १६३ ज्वरे स्नाननिषेधः | ५७९ |
| १६४–१६५ संक्षेपतः सर्वज्वरचिकित्सितम् | ५७९ |
| १६७–१७२ वातज्वरे संशमनकषायाः | ५७९ |
| १७३–१८३ पित्तज्वरे शमनयोगाः | ५८० |
| १८४–१८९ कफज्वरे शमनयोगाः | ५८१ |
| १९०–१९८ द्वन्द्वजज्वरे शमनयोगाः | ५८१ |
| १९९ संनिपाते सामान्यचिकित्सा | ५८१ |
| २००–२०१ ,, क्षीरयोगाः | ५८२ |
| २०२–२०३ ,, नलादिक्काथः | ५८२ |
| २०४–२०५ सर्वज्वरे अनन्तादिक्वाथः | ५८२ |
| २०६ सर्वज्वरे लेहः | ५८२ |
| २०७–२१३ विषमज्वरे विशेषचिकित्सितम् | ५८२ |
| २१४–२१६ जरे पिप्पल्यादिघृतम् | ५८३ |
| २१७–२१८ ,, गुडूच्यादिघृतम् | ५८३ |
| २१९–२२१ ,, कलश्यादिघृतम् | ५८३ |
| २२२–२२४ ,, पटोलादिघृतम् | ५८३ |
| २२५–२२९ ,, विडङ्गादिघृतम् | ५८३ |
| २३०–२३५ ,, महाकल्याणं घृतम् | ५८४ |
| २३६–२३८ ,, पञ्चगव्यं घृतम् | ५८४ |
| २३९ जीर्णज्वरे बलाघृतम् | ५८४ |
| २४०–२४८ त्रिफलादिघृतम् | ५८४ |
| २४९–२५० पञ्चसारम् | ५८४ |
| २५१ लाक्षादितैलम् | ५८४ |
| २५२–२५३ क्षीरिवृक्षादितैलम् | ५८५ |
| २५४–२५९ विषमज्वरे विशेषचिकित्सितम् | ५८५ |
| २६० भूतज्वरचिकित्सितम् | ५८५ |
| २६१–२६५ द्विविधागन्तुज्वरचिकित्सा | ५८५ |
| २६६–२७६ द्वन्द्वजज्वरचिकित्सा | ५८६ |
| २७७–२८९ ज्वरे दाहप्रतीकारः | ५८७ |
| २९०–३०१ ज्वरोपद्रवचिकित्सा | ५८७ |
| ३०२ वातज्वरे निरूहद्रव्याणि | ५८८ |
| ३०३–३०५ पित्तज्वरे निरूहद्रव्याणि | ५८९ |
| ३०६ ,, अनुवासनद्रव्याणि | ५८९ |
| ३०७ कफज्वरे निरूहद्रव्याणि | ५८९ |
| ३०८ संसर्गसंनिपातयोर्निरूहद्रव्याणि | ५८९ |
| ३०९–३११ ज्वरे तैलयोगविचारः | ५८९ |
| ३१२–३१३ ,, घृतावशेषदोषचिकित्सा | ५८९ |
| ३१४ ,, घृतदानयोग्यः कालः | ५८९ |
| ३१५ मुच्यमानज्वरलक्षणम् | ५८९ |
| ३१६ ज्वरमुक्तलक्षणम् | ५९० |
| ३१७–३१८ ज्वरचिकित्सितोपसंहारः | ५९० |


## चत्वारिंशत्तमोऽध्यायः ४०.


| विषयाः. | पृष्ठं. |
|---|---|
| १–२ अतिसारप्रतिषेधोपक्रमः | ५९० |
| ३–५ अतिसारनिदानम् | ५९० |
| ६–७ अतिसारसंप्राप्तिः | ५९० |
| ८ अतिसारपूर्वरूपाणि | ५९१ |
| ९ वातातिसारलक्षणम् | ५९१ |
| १० पित्तातिसारलक्षणम् | ५९१ |
| ११ कफातिसारलक्षणम् | ५९१ |
| १२ संनिपातातिसारलक्षणम् | ५९१ |
| १३–१४ शोकजातिसारलक्षणम् | ५९१ |
| १५–१६ आमातिसारलक्षणम् | ५९२ |
| १७–१८ आमपक्वमललक्षणम् | ५९२ |
| १९–२१ अतिसारस्यासाध्यलक्षणानि | ५९२ |
| २२–२३ अनुक्तातिसाराणां पूर्वोक्तषट्स्वेवान्तर्भावः | ५९२ |
| २४–३४ अतिसारचिकित्सासूत्रम् | ५९३ |
| ३५–५१ आमातिसारे पाचनयोगाः | ५९३ |
| ५२–५७ सशूले अतिसारे कतिपययोगाः | ५९४ |
| ५८–५९ आमातिसारे आहारकल्पना | ५९४ |
| ६०–६६ पैत्तिके आमातिसारे पाचनयोगः | ५९४ |
| ६७–७९ पक्वातिसारे शमनयोगाः | ५९५ |
| ८०–८८ अतिसारे पुटपाकयोगाः | ५९६ |
| ८९–९० ,, कौटजं फाणितम् | ५९६ |
| ९१–९२ ,, यवागूयोगाः | ५९७ |
| ९३–९८ ,, कतिपये योगाः | ५९७ |

| विषयाः. | पृष्ठं. |
|---|---|
| ९९–१०२ ,, क्षीरयोगाः | ५९७ |
| १०३–१०५ सरक्ते अतिसारे कतिपये योगाः | ५९७ |
| १०६ अतिसारे वमनम् | ५९८ |
| १०७–१११ अतिसारे बस्तियोगाः | ५९८ |
| ११२– ,, गुददौर्बल्यचिकित्सा | ५९८ |
| ११३– ,, शूलोपद्रवचिकित्सा | ५९८ |
| ११३–११५ ,, आहारोपयोगिद्रव्याणि | ५९८ |
| ११६ रक्तातिसारलक्षणम् | ५९९ |
| ११७–१२८ रक्तातिसारचिकित्सा | ५९९ |
| १२९–१३० अतिसारे अवस्थायां विरेचनम् | ५९९ |
| १३१–१३६ निःसारकलक्षणं चिकित्सा च | ६०० |
| १३७–१३८ प्रवाहिकालक्षणम् | ६०० |
| १३९–१५६ प्रवाहिकाचिकित्सा | ६०१–६०२ |
| १५७ अतिसारे यवागूप्रशंसा | ६०२ |
| १५८–१६० ,, हेतुविपरीतचिकित्सा | ६०२ |
| १६१ अतिसारनिवृत्तिलक्षणम् | ६०३ |
| १६२–१६४ कर्मजदोषजभेदेन रोगद्वैविध्यम् | ६०३ |
| १६५–१६७ ग्रहणीनिदानम् | ६०३ |
| १६८ ग्रहण्याः स्थाननिरूपणम् | ६०३ |
| १६९–१७१ ग्रहणीलक्षणम् | ६०४ |
| १७२ ग्रहणीपूर्वरूपाणि | ६०४ |
| १७३–१७६ ग्रहण्या विशिष्टलक्षणानि | ६०४ |
| १७७–१८१ ग्रहणीचिकित्सा | ६०४ |


## एकचत्वारिंशोऽध्यायः ४१.


| विषयाः. | पृष्ठं. |
|---|---|
| १–२ शोषप्रतिषेधोपक्रमः | ६०५ |
| ३–५ शोषस्य रोगराजत्वनिरूपणम् | ६०५ |
| ६–७ ,, सांनिपातिकत्वनिरूपणम् | ६०५ |
| ८–९ ,, चतुर्विधो हेतुः | ६०६ |
| १० धातुक्षयाद्राजयक्ष्मसंभवः | ६०६ |
| ११–१५ शोषलक्षणानि | ६०६ |
| १६ एकीयमतेन शोषभेदाः | ६०६ |
| १७ व्यवायशोषलक्षणम् | ६०६ |
| १८ शोकशोषलक्षणम् | ६०७ |
| १९–२० जराशोषलक्षणम् | ६०७ |
| २१ अध्वशोषलक्षणम् | ६०७ |
| २२ व्यायामशोषलक्षणम् | ६०७ |
| २३ व्रणशोषलक्षणम् | ६०७ |
| २४–२८ उरःक्षतशोषलक्षणम् | ६०७ |
| २९–३० शोषपूर्वरूपाणि | ६०७ |
| ३१ शोषस्यासाध्यलक्षणानि | ६०८ |
| ३२–३५ शोषे सामान्यचिकित्सा | ६०८ |
| ३६–३९ शोषिणां देयानि मांसानि | ६०८ |
| ४०–४२ शोषे कतिपययोगाः | ६०९ |
| ४३ ,, वासाघृतम् | ६०९ |
| ४४–५४ शोषे घृतयोगाः | ६०९ |
| ५५ शोषोपद्रवाणां चिकित्सा | ६१० |
| ५६ शोषे अजाया सर्वथोपयोगित्वम् | ६१० |
| ५७–५८ ,, परिहार्याणि, दैवव्यपाश्रयचिकित्सा च | ६१० |


## द्विचत्वारिंशत्तमोऽध्यायः ४२.


| विषयाः. | पृष्ठं. |
|---|---|
| १–२ गुल्मप्रतिषेधोपक्रमः | ६१० |
| ३ गुल्मभेदाः | ६११ |
| ४ गुल्मस्य सामान्यरूपम् | ६११ |
| ५ गुल्मनिरुक्तिः | ६११ |
| ६ गुल्मस्य पाकाभावे हेतुः | ६११ |
| ७ गुल्मस्य पञ्चविधत्वम् | ६११ |
| ८–९ गुल्मपूर्वरूपाणि | ६११ |
| १० वातगुल्मलक्षणम् | ६११ |
| ११ पित्तगुल्मलक्षणम् | ६१२ |
| १२ कफगुल्मलक्षणम् | ६१२ |
| १३–१५ रक्तगुल्मलक्षणम् | ६१२ |
| १६–२३ विविधगुल्मचिकित्सा | ६१२ |
| २४ गुल्मे षडङ्गघृतम् | ६१३ |
| २५–२६ ,, चित्रकादिघृतम् | ६१३ |
| २७–२८ ,, हिङ्ग्वादिघृतम् | ६१३ |
| २९–३० दाधिकं घृतम् | ६१३ |
| ३१–३३ ,, रसोनादिघृतम् | ६१३ |
| ३४–३५ वातगुल्मे घृतम् | ६१३ |
| ३६ पित्तगुल्मे घृतम् | ६१४ |
| ३७–३८ कफगुल्मे घृतम् | ६१४ |
| ३९ सांनिपातिकगुल्मचिकित्सा | ६१४ |
| ४०–४५ गुल्मे पानीयक्षारः | ६१४ |
| ४६–४८ ,, वृश्चीवाद्यरिष्टः | ६१४ |
| ४९–६६ ,, आवस्थिकी चिकित्सा | ६१५ |
| ६७–६८ गुल्मोपद्रवशूललक्षणम् | ६१६ |
| ६९–७५ गुल्मोपद्रवशूलचिकित्सा | ६१६ |
| ७६ गुल्मं विनाऽपि शूलसंभवः | ६१७ |
| ७७–८० शूलनिदानं संप्राप्तिश्च | ६१७ |
| ८१ शूलनिरुक्तिः | ६१७ |
| ८२–८७ वातजादिभेदेन शूललक्षणानि | ६१७ |
| ८८–१०२ वातशूलचिकित्सा | ६१७ |
| १०३–१०८ पित्तजशूलचिकित्सा | ६१८ |
| १०९–११६ श्लैष्मिकशूलचिकित्सा | ६१९ |
| ११७–११९ पार्श्वशूलनिदानम् | ६१९ |
| १२०–१२२ पार्श्वशूलचिकित्सा | ६१९ |
| १२३–१२५ कुक्षिशूललक्षणम् | ६१९ |
| १२६–१३० कुक्षिशूलचिकित्सा | ६१९ |
| १३१–१३२ हृच्छूललक्षणम् | ६२० |
| १३३–१३४ हृच्छूलचिकित्सा | ६२० |
| १३५ मूत्रशूललक्षणम् | ६२० |
| १३६–१३९ विड्शूललक्षणम् | ६२० |
| १४०–१४१ मूत्रशूलविड्शूलयोश्चिकित्सा | ६२० |


## त्रिचत्वारिंशत्तमोऽध्यायः ४३.


| विषयाः. | पृष्ठं. |
|---|---|
| १–२ हृद्रोगप्रतिषेधोपक्रमः | ६२१ |
| ३–४ हृद्रोगनिदानं संप्राप्तिश्च | ६२१ |
| ५ हृद्रोगभेदाः | ६२१ |
| ६–१० वातजादिभेदेन हृद्रोगलक्षणानि | ६२१ |
| ११–१४ वातहृद्रोगचिकित्सा | ६२१ |
| १५–१६ पित्तहृद्रोगचिकित्सा | ६२२ |
| १७–१९ श्लैष्मिकहृद्रोगचिकित्सा | ६२२ |
| २०–२२ क्रिमिहृद्रोगचिकित्सा | ६२२ |

विषयाः. पृष्ठं.

**चतुश्चत्वारिंशत्तमोऽध्यायः ४४.**

१–२ पाण्डुरोगप्रतिषेधोपक्रमः ६२२
३ पाण्डुरोगनिदानं संप्राप्तिश्च ६२३
४–९ वातजादिभेदेन पाण्डुरोगलक्षणानि ६२३
१० कामलालक्षणम् ६२३
११ कुम्भकामलालक्षणम् ६२४
१२ हलीमकलक्षणम् ६२४
१३ पाण्डुरोगोपद्रवाः ६२४
१४–२९ पाण्डुरोगचिकित्सा ६२४–६२६
३० कामलाचिकित्सा ६२६
३१–३७ कुम्भकामलाचिकित्सा ६२७
३७ पाण्डुरोगोपद्रवचिकित्सा ६२७
३९–४० पाण्डुरोगिणोऽसाध्यलक्षणानि ६२७

**पञ्चचत्वारिंशत्तमोऽध्यायः ४५.**

१–२ रक्तपित्तप्रतिषेधोपक्रमः ६२८
३–६ रक्तपित्तनिदानं संप्राप्तिश्च ६२८
७ रक्तपित्तपूर्वरूपम् ६२८
८–९ रक्तपित्तोपद्रवाः ६२८
१० असाध्यरक्तपित्तलक्षणम् ६२९
११–१५ रक्तपित्ते सामान्यचिकित्सा ६२९
१६–१८ रक्तपित्ते भोजनद्रव्याणि ६२९
१९–३७ रक्तपित्ते कतिपययोगाः ६३०
३८–४१ रक्तपित्तिन आस्थापनानुवासनयोगः ६३१
४२–४५ रक्तपित्ते आवस्थिकी चिकित्सा ६२३

**षट्चत्वारिंशत्तमोऽध्यायः ४६.**

१–२ मूर्च्छाप्रतिषेधोपक्रमः ६३२
३–५ मूर्च्छानिदानं संप्राप्तिश्च ६३२
६ मूर्च्छायाः सामान्यलक्षणम् ६३३
७–८ मूर्च्छाभेदाः ६३३
९–१० रक्तजमूर्छासंप्राप्तिः ६३३

विषयाः. पृष्ठं.

११–१३ विषमद्योत्थमूर्च्छालक्षणम् ६३४
१४–१९ मूर्च्छाचिकित्सा ६३४
२०–२१ संन्यासलक्षणम् ६३५
२२–२५ संन्यासचिकित्सा ६३५

**सप्तचत्वारिंशत्तमोऽध्यायः ४७.**

१–२ पानात्ययप्रतिषेधोपक्रमः ६३५
३ मद्यगुणाः ६३५
४–५ मद्यकर्माणि ६३६
६ मद्यरसाः ६३६
७–८ विधिसेवितमद्यगुणाः ६३६
९–१० अविधिसेवितमद्यदोषाः ६३६
११–१२ मदस्य त्रयोऽवस्थाः ६३६
१३ पुरुषविशेषे मद्यस्य नातिबाधकत्वम् ६३६
१४–१६ मदात्ययनिदानम् ६३६
१७–१८ मदात्ययलक्षणम् ६३७
१९ परमदलक्षणम् ६३७
२० पानाजीर्णलक्षणम् ६३७
२१ पानविभ्रमलक्षणम् ६३७
२२ मदात्ययस्यासाध्यलक्षणानि ६३७
२३ मदात्ययोपद्रवाः ६३७
२४–२५ वातिकमदात्ययचिकित्सा ६३७
२६–२७ पैत्तिकमदात्ययचिकित्सा ६३८
२८ श्लैष्मिकमदात्ययचिकित्सा ६३८
२९ सांनिपातिकमदात्ययचिकित्सा ६३८
३०–३३ मदात्यये कतिपये योगाः ६३८
३४–३६ परमदचिकित्सा ६३९
३७–३८ पानाजीर्णचिकित्सा ६३९
३९–४१ पानविभ्रमचिकित्सा ६३९
४२–४७ पानात्ययादीनां सामान्यचिकित्सा ६३९
४८ मदात्यये मद्यस्यौपयोगिकत्वम् ६४०
४९ मदात्ययचिकित्सितोपसंहारः ६४०

विषयाः. पृष्ठं.

५० मद्यजतृष्णासंप्राप्तिः ६४०
५१–५३ मद्यजतृष्णाचिकित्सा ६४०
५४ मद्यजदाहसंप्राप्तिः ६४१
५५–६६ मद्यजदाहचिकित्सा ६४१
६७–६८ रक्तजदाहलक्षणम् ६४३
६९ रक्तजदाहचिकित्सा ६४३
७०–७१ तृष्णानिरोधजदाहलक्षणम् ६४३
७२ तृष्णानिरोधजदाहचिकित्सा ६४३
७३ कोष्ठभेदजदाहलक्षणं चिकित्सा च ६४३
७४–७५ धातुक्षयजदाहलक्षणं चिकित्सा च ६४३
७६–७७ क्षतजदाहलक्षणं चिकित्सा च ६४३
७८ दाहानामसाध्यलक्षणम् ६४३
७९ प्रशान्तोपद्रवस्यापि मदपीडितस्य शोधनम् ६४४
८०–८१ मद्यसेवनविधिः ६४४

**अष्टचत्वारिंशत्तमोऽध्यायः ४८.**

१–२ तृष्णाप्रतिषेधोपक्रमः ६४४
३ तृष्णायाः सामान्यलक्षणम् ६४४
४–५ ,, निदानं संप्राप्तिश्च ६४४
६ ,, संख्या ६४५
७ ,, पूर्वरूपम् ६४५
८–१४ सप्तविधतृष्णानां लक्षणानि ६४५
१५–१८ तृष्णायां सामान्यविधिः ६४६
१९ वातिकतृष्णाचिकित्सा ६४६
२० पित्तजतृष्णाचिकित्सा ६४६
२१–२२ कफजतृष्णाचिकित्सा ६४६
२३–२७ क्षतजतृष्णाचिकित्सा ६४७
२८ आमजतृष्णाचिकित्सा ६४८
२९ गुर्वन्नजतृष्णाचिकित्सा ६४८
३० श्रमजतृष्णाचिकित्सा ६४८
३१ मद्यजतृष्णाचिकित्सा ६४८
३२ हृद्रोगजतृष्णाचिकित्सा ६४८
३३ सर्वतृष्णासु सामान्यविधिः ६४८

| विषयाः. | पृष्ठं. |
|---|---|
| **एकोनपञ्चाशत्तमोऽध्यायः ४९.** | |
| १–२ छर्दिप्रतिषेधोपक्रमः | ६४८ |
| ३–५ छर्दिनिदानम् | ६४८ |
| ६ छर्दिनिरुक्तिः | ६४९ |
| ७ छर्दिसंप्राप्तिः | ६४९ |
| ८ छर्दिपूर्वरूपम् | ६४९ |
| ९–१३ वातजादिभेदेन छर्दिलक्षणानि | ६४९ |
| १४ छर्दीनामसाध्यलक्षणानि | ६४९ |
| १५–१७ छर्दीनां सामान्यचिकित्सितम् | ६५० |
| १७–२० वातजछर्दिचिकित्सितम् | ६४० |
| २१–२२ पित्तजछर्दिचिकित्सितम् | ६५० |
| २३ कफजच्छर्दिचिकित्सितम् | ६५० |
| २४ सांनिपातिकच्छर्दिचिकित्सितम् | ६५० |
| २५–२६ बीभत्सजादिच्छर्दिचिकित्सितम् | ६५१ |
| २७–३५ छर्दिषु कतिपये योगाः | ६५१ |
| **पञ्चाशत्तमोऽध्यायः ५०.** | |
| १–२ हिक्काप्रतिषेधोपक्रमः | ६५१ |
| ३–५ हिक्कायाः निदानम् | ६५१ |
| ६ ,, निरुक्तिः | ६५२ |
| ७ ,, संप्राप्तिः | ६५२ |
| ८ ,, पूर्वरूपाणि | ६५२ |
| ९–१५ पञ्चविधहिक्कानां लक्षणानि | ६५२ |
| १६ हिक्काया असाध्यलक्षणम् | ६५२ |
| १७–१९ हिक्कायां नस्यधूमयोगाः | ६५३ |
| २०–२१ ,, लेह्ययोगाः | ६५३ |
| २२–२३ ,, यवागूक्षीरयोगाः | ६५३ |
| २४–३१ हिक्कायां कतिपये योगाः | ६५३ |
| **एकपञ्चाशत्तमोऽध्यायः ५१.** | |
| १–२ श्वासप्रतिषेधोपक्रमः | ६५४ |
| ३ श्वासनिदानम् | ६५४ |
| ४ श्वाससंप्राप्तिः | ६५५ |
| ५ श्वासभेदाः | ६५५ |
| ६ श्वासपूर्वरूपम् | ६५५ |
| ७–१३ पञ्चविधश्वासानां लक्षणानि | ६५५ |
| १४ श्वासानां साध्यासाध्यविचारः | ६५५ |
| १५–१७ श्वासे सामान्यचिकित्सा | ६५५ |
| १८–२० श्वासे हिंस्रादिघृतम् | ६५५ |
| २१–२२ ,, शृङ्ग्यादिघृतम् | ६५६ |
| २३–२४ ,, सुवहादिघृतम् | ६५६ |
| २५–२६ ,, सौवर्चलादिघृतम् | ६५६ |
| २७–२८ ,, तालीसादिघृतम् | ६५६ |
| २९ ,, भृङ्गराजतैलम् | ६५६ |
| ३०–३१ ,, पथ्यम् | ६५६ |
| ३२–३४ ,, लेह्ययोगाः | ६५६ |
| ३५–४६ ,, कतिपये योगाः | ६५७ |
| ४७ ,, स्नेहस्वेदविधिः | ६५७ |
| ४८–५१ ,, धूमयोगाः | ६५८ |
| ५२ ,, वमनविरेचने | ६५८ |
| ५३ ,, तर्पणम् | ६५८ |
| ५४ ,, निदिग्धिकादिलेहः | ६५८ |
| ५५ श्वासादीनां कष्टसाध्यत्वम् | ६५८ |
| **द्विपञ्चाशत्तमोऽध्यायः ५२.** | |
| १–२ कासप्रतिषेधोपक्रमः | ६५८ |
| ३ कासनिदानम् | |
| ४ काससंप्राप्तिः | |
| ५ काससंख्या | ६५९ |
| ६ कासपूर्वरूपम् | ६५९ |
| ७–११ वातजादिभेदेन कासलक्षणानि | ६५९ |
| १२ कासस्य असाध्यलक्षणम् | ६६० |
| १३–२४ कासे सामान्यचिकित्सा | ६६० |
| २५–२६ वातकासचिकित्सा | ६६१ |
| २७–३० कफकासचिकित्सा | ६६१ |
| ३१–३६ पित्तज-क्षयज-क्षतज-कासानां चिकित्सा | ६६२ |
| ३७–४० कासे कल्याणगुडः | ६६२ |
| ४१–४५ कासे अगस्त्यावलेहः | ६६३ |
| ४६–४७ ,, कुलीरादिघृतम् | ६६३ |
| **त्रिपञ्चाशत्तमोऽध्यायः ५३.** | |
| १–२ स्वरभेदप्रतिषेधोपक्रमः | ६६३ |
| ३ स्वरभेदनिदानं संप्राप्तिश्च | ६६३ |
| ४–७ वातजादिभेदेन स्वरभेदलक्षणानि | ६६४ |
| ८–९ स्वरभेदे सामान्यचिकित्सा | ६६४ |
| १०–१२ वातजस्वरभेदचिकित्सा | ६६४ |
| १३–१४ पित्तजस्वरभेदचिकित्सा | ६६५ |
| १५ कफजस्वरभेदचिकित्सा | ६६५ |
| १६–१७ मेदोज-सान्निपातिक-क्षयज-स्वरभेदानां चिकित्सा | ६६५ |
| **चतुःपञ्चाशत्तमोऽध्यायः ५४.** | |
| १–२ क्रमिरोगप्रतिषेधोपक्रमः | ६६५ |
| ३–७ क्रमीणां निदानं संप्राप्तिश्च | ६६५ |
| ८–११ पुरीषजक्रमीणां नामानि लक्षणं च | ६६६ |
| १२–१४ कफजक्रमीणां नामलक्षणकर्माणि | ६६६ |
| १५–१६ रक्तजक्रमीणां नामलक्षणकर्माणि | ६६६ |
| १७–१८ पुरीषजादिक्रमीणां विशेषलक्षणानि | ६६६ |
| १९ क्रमीणां साध्यासाध्यविचारः | ६६६ |
| २०–३३ पुरीषज-कफज-क्रमीणां सामान्यचिकित्सितम् | ६६६ |
| ३४ पुरीषकफजानां विशेषचिकित्सितम् | ६६८ |
| ३५–३७ स्थानविशेषेण क्रमीणां विशेषचिकित्सा | ६६८ |
| ३८–३९ रक्तजक्रमिचिकित्सितम् | ६६८ |
| ४० क्रमिरोगे वर्ज्याणि | ६६८ |
| **पञ्चपञ्चाशत्तमोऽध्यायः ५५.** | |
| १–२ उदावर्तप्रतिषेधोपक्रमः | ६६८ |
| ३ वेगविधारणनिषेधः | ६६८ |
| ४ उदावर्तनिदानं निरुक्तिश्च | ६६९ |
| ५–१८ त्रयोदशविधोदावर्तानां लक्षणानि | ६६९ |
| १९ उदावर्ते सामान्यचिकित्सा | ६७० |

विषयाः. पृष्ठं.

२० वातजोदावर्तचिकित्सा ६७०
२१ पुरीषजोदावर्तचिकित्सा ६७१
२२–२६ मूत्रोदावर्तचिकित्सा ६७१
२७–२८ जृम्भणजोदावर्तचिकित्सा ६७१
२९ क्षवजोदावर्तचिकित्सा ६७१
३० उद्गारजोदावर्तचिकित्सा ६७१
३१ छर्द्याघातजोदावर्तचिकित्सा ६७१
३२–३३ शुक्रोदावर्तचिकित्सा ६७१
३४ क्षुज्जोदावर्तचिकित्सा ६७१
३५–३६ निद्राघातजोदावर्तचिकित्सा ६७२
३७–४० दोषजोदावर्तनिदानं लक्षणानि च ६७२
४१–५३ दोषजोदावर्तचिकित्सा ६७२

**षट्पञ्चाशत्तमोऽध्यायः ५६.**

१–२ विसूचिकाप्रतिषेधोपक्रमः ६७३
३ अजीर्णभेदाः ६७३
४ विसूचिकानिरुक्तिः ६७३
५–६ विसूचिकालक्षणम् ६७४
७–८ अलसकलक्षणम् ६७४
९ विलम्बिकालक्षणम् ६७४
१० आमस्य विकारान्तरकादित्वम् ६७४
११ विसूचिकायाः साध्यासाध्यलक्षणम् ६७४
१२–१९ विसूचिकादिचिकित्सा ६७४
२० आनाहसंप्राप्तिः ६७५
२१ आमजानाहलक्षणम् ६७६
२२ पुरीषजानाहलक्षणम् ६७६
२३–२७ आनाहचिकित्सा ६७६

**सप्तपञ्चाशत्तमोऽध्यायः ५७.**

१–२ अरोचकप्रतिषेधोपक्रमः ६७७
३ अरोचकसंप्राप्तिः
४–५ पञ्चविधारोचकानां लक्षणानि ६७७
६ वातिकारोचकचिकित्सा ६७७
७ पैत्तिकारोचकचिकित्सा ६७८
८ कफजारोचकचिकित्सा ६७८
९–१५ अरोचके कतिपये योगाः ६७८
१६–१७ आगन्तुजारोचकचिकित्सा ६७९

**अष्टपञ्चाशत्तमोऽध्यायः ५८.**

१–२ मूत्राघातप्रतिषेधोपक्रमः ६७९
३–४ मूत्राघातानां नामभिर्निर्देशः ६७९
५–६ वातकुण्डलिकालक्षणम् ६७९
७–८ वाताष्ठीलालक्षणम् ६८०
९–१० वातबस्तिलक्षणम् ६८०
११–१२ मूत्रातीतलक्षणम् ६८०
१३–१४ मूत्रजठरलक्षणम् ६८०
१५–१६ मूत्रोत्सङ्गलक्षणम् ६८०
१७ मूत्रक्षयलक्षणम् ६८०
१८–१९ मूत्रग्रन्थिलक्षणम् ६८१
२०–२१ मूत्रशुक्रलक्षणम् ६८१
२२–२३ उष्णवातलक्षणम् ६८१
२४–२६ मूत्रौकसादलक्षणम् ६८१
२७–५० मूत्राघातानां चिकित्सा ६८१
५१–५२ मूत्ररक्तचिकित्सा ६८३
५३–५६ मूत्राघाते स्वयंगुप्तादियोगः ६८३
५७–६१ „ बलाघृतम् ६८३
६२–६८ „ महाबलाघृतम् ६८४

**एकोनषष्टितमोऽध्यायः ५९.**

१–२ मूत्रकृच्छ्रप्रतिषेधोपक्रमः ६८४
३ मूत्रकृच्छ्रभेदाः ६८४
४–१४ मूत्रकृच्छ्राणां लक्षणानि ६८४
१५–१६ मूत्रकृच्छ्रचिकित्सितम् ६८५
१७–१९ वातजमूत्रकृच्छ्रचिकित्सा ६८५
२०–२२ पित्तजमूत्रकृच्छ्रचिकित्सा ६८५
२३ कफजमूत्रकृच्छ्रचिकित्सा ६८५
२४ संनिपातजमूत्रकृच्छ्रचिकित्सा ६८६
२५ अभिघातजमूत्रकृच्छ्रचिकित्सा ६८६
२६ पुरीषजमूत्रकृच्छ्रचिकित्सा ६८६
२७ अश्मरीजमूत्रकृच्छ्रचिकित्सा ६८६

**षष्टितमोऽध्यायः ६०.**

१–२ अमानुषोपसर्गप्रतिषेधोपक्रमः ६८६
३–४ ग्रहसामान्यलक्षणम् ६८६
५ ग्रहावेशयोग्या नराः ६८६
६–७ ग्रहाधिपानां संख्या ६८६
८–१६ देवाद्यष्टविधग्रहजुष्टलक्षणं ६८७
१७–१८ देवादीनां ग्रहणकालः ६८८
१९ देहं विशन्तो ग्रहाः कुतो न दृश्यन्ते इत्यत्र दृष्टान्तः ६८८
२०–२५ ग्रहाणां प्रभावः ६८८
२६ ग्रहाणां भूतसंज्ञत्वे हेतुः ६८९
२७ भूतविद्याशब्दनिरुक्तिः ६८९
२८–३० सर्वग्रहाणां सामान्यचिकित्सा ६८९
३१ ग्रहाणां बल्यादिप्रदानकालः ६८९
३२ देवग्रहचिकित्सा ६८९
३३ असुरग्रहचिकित्सा ६८९
३४ गन्धर्वयक्षग्रहयोश्चिकित्सा ६८९
३५ पितृग्रहचिकित्सा ६८९
३६ नागराक्षसग्रहयोश्चिकित्सा ६८९
३७ पिशाचग्रहचिकित्सा ६९०
३८–३९ ग्रहजुष्टे धूपनम् ६९०
४० ग्रहजुष्टे गजपिप्पल्यादियोगः ६९०
४१–४२ „ खरपुरीषादितैलम् ६९०
४३–४५ „ कतिपययोगाः ६९०
४७–५४ „ पुराणसर्पिरादियोगः ६९०
५५ देवग्रहे अचौक्षप्रयोगनिषेधः ६९१
५६–५७ ग्रहजुष्टे हिताहारादिसेवनम् ६९१

**एकषष्टितमोऽध्यायः ६१.**

१–२ अपस्मारप्रतिषेधोपक्रमः ६९१
३ अपस्मारनिरुक्तिः ६९१

विषयाः. — पृष्ठं.

४–६ अपस्मारसंप्राप्तिः ६९१
७– अपस्मारपूर्वरूपाणि ६९२
८–९ अपस्माररूपाणि ६९२
१० अपस्मारभेदाः ६९२
११–१६ वातजादिभेदेनापस्मारलक्षणानि ६९२
१७ एकीयमतेऽपस्मारस्यागन्तुकत्वम् ६९३
१८–२१ स्वमते दोषजत्वप्रतिपादनम् ६९३
२२–३० अपस्मारे कतिपयेयोगाः ६९३
३१–३३ „ सिद्धार्थकं घृतम् ६९४
३४–३७ „ पञ्चगव्यं घृतम् ६९४
३८–४० „ भार्ग्यादि सुरा ६९४
४१ „ सिराव्यधः ६९५

**द्विषष्टितमोऽध्यायः ६२.**

१–२ उन्मादप्रतिषेधोपक्रमः ६९५
३ उन्मादनिरुक्तिः ६९५
४–५ उन्मादभेदाः ६९५
६–७ उन्मादपूर्वरूपाणि ६९५
८–१३ पञ्चविधोन्मादानां लक्षणानि ६९५
१४–१६ उन्मादे सामान्यचिकित्सा ६९६
१७ „ बाह्या उपचाराः ६९६
२०–२१ „ आहारविधानम् ६९७
२२–२९ „ फलघृतम् ६९७
३०–३२ „ ब्राह्म्यादियोगः ६९७
३३ „ सिराव्यधः ६९७
३४–३५ „ चित्तप्रसादनम् ६९७

**त्रिषष्टितमोऽध्यायः ६३.**

१–२ रसभेदविकल्पोपक्रमः ६९८
३ रसभेदकथने प्रयोजनम् ६९८
४ रसभेदाः ६९८
५ दोषभेदे रसभेदोपयोगः ६९९
६–८ पञ्चदश द्विरससंयोगाः ६९९
९–१० विंशतिस्त्रिरससंयोगाः ६९९
११–१२ पञ्चदश चतुष्करससंयोगाः ६९९
१३–१४ षट् पञ्चरससंयोगाः ७००
१५ एकः षड्रससंयोगः ७००
१६ असंयुक्ताः षड्रसाः ७००
१७ अध्यायोपसंहारः ७००

**चतुःषष्टितमोऽध्यायः ६४.**

१–२ स्वस्थवृत्तोपक्रमः ७००
३ स्वस्थलक्षणम् ७००
४ ऋत्वाश्रयं स्वस्थवृत्तम् ७००
५–१२ वर्षाचर्या ७००
१३–१९ शरच्चर्या ७००
२०–३० हेमन्तचर्या ७०१
३१–३८ वसन्तचर्या ७०२
३९–४४ ग्रीष्मचर्या ७०२
४५–५१ प्रावृट्चर्या ७०३
५२ आर्तवविविधिसेवनफलम् ७०३
५३ द्वादशाशनप्रविचाराः ७०३
५४ शीताहारविषयः ७०३
५५ उष्णाहारविषयः ७०३
५६ स्निग्धाहारविषयः ७०३
५७ रुक्षाहारविषयः ७०४
५८ द्रवशुष्काहारयोर्विषयः ७०४
५९ एककालोभयकालाहारविषयः ७०४
६० मात्राहीनाहारविषयः ७०४
६१–६२ यथर्तुदत्ताहारफलम् ७०४
६३ दशौषधकालाः ७०४
६४–६५ अभक्तकालनिरूपणम् ७०४
६६–६७ प्राग्भक्तकालनिरूपणम् ७०४
६८–७० अधोभक्तमध्यभक्तयोर्लक्षणम् ७०५
७१–७२ अन्तराभक्तनिरूपणम् ७०५
७३–७४ सभक्तनिरूपणम् ७०५
७५–७६ सामुद्गकालनिरूपणम् ७०५
७७–७८ मुहुर्मुहुःकालनिरूपणम् ७०५
७९–८१ ग्रासान्तरकालनिरूपणम् ७०५
८२ आहारकालनिरूपणम् ७०५

**पञ्चषष्टितमोऽध्यायः ६५.**

१–२ तन्त्रयुक्त्यध्यायोपक्रमः ७०६
३ द्वात्रिंशत्तन्त्रयुक्तीनां नामतो निर्देशः ७०६
४–७ तन्त्रयुक्तीनां प्रयोजनम् ७०६
८ अधिकरणकथनम् ७०६
९–१० योगकथनम् ७०६
११ पदार्थकथनम् ७०६
१२ हेत्वर्थकथनम् ७०७
१३ उद्देशलक्षणम् ७०७
१४ निर्देशलक्षणम् ७०७
१५ उपदेशलक्षणम् ७०७
१६ अपदेशलक्षणम् ७०७
१७ प्रदेशलक्षणम् ७०९
१८ अतिदेशलक्षणम् ७०७
१९ अपवर्ज्यलक्षणम् ७०७
२० वाक्यशेषलक्षणम् ७०८
२१ अर्थापत्तिलक्षणम् ७०८
२२ विपर्ययलक्षणम् ७०८
२३ प्रसङ्गलक्षणम् ७०८
२४ एकान्तलक्षणम् ७०८
२५ अनेकान्तलक्षणम् ७०८
२६ पूर्वपक्षलक्षणम् ७०८
२७–२८ निर्णयलक्षणम् ७०८
२९ अनुमतलक्षणम् ७०८
३० विधानलक्षणम् ७०८
३१ अनागतावेक्षणलक्षणम् ७०८
३२ अतिक्रान्तावेक्षणलक्षणम् ७०८
३३ संशयलक्षणम् ७०९
३४ व्याख्यानलक्षणम् ७०९
३५ स्वसंज्ञालक्षणम् ७०९
३६ निर्वचनलक्षणम् ७०९
३७ निदर्शनलक्षणम् ७०९
३८ नियोगलक्षणम् ७०९
३९ समुच्चयलक्षणम् ७०९
४० विकल्पलक्षणम् ७०९
४१ ऊह्यलक्षणम् ७०९
४२–४४ अध्यायोपसंहारः ७१०

**षट्षष्टितमोऽध्यायः ६६.**

१–३ दोषभेदविकल्पोपक्रमः ७१०
४–५ दोषभेदविषये सुश्रुतप्रश्नः ७१०
६ दोषादीनां देहधारकत्वम् ७१०
७–८ तन्त्रोक्तविषयोपसंहारः ७१०
९–१४ द्विषष्टिदोषभेदनिरूपणम् ७१२
१५–१६ एतत्तन्त्रप्रशंसा ७१२
१७ एतत्तन्त्राध्ययनफलम् ७१२

निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता।



## सूत्रस्थानम्।

### प्रथमोऽध्यायः।

सहस्राक्षं गणाधीशं स्वगुरुं च सरस्वतीम्।
जनकं जनयित्रीं च शास्त्रादौ प्रणमाम्यहम्॥

समस्तजनपदतिलककल्पे श्रीभादानकदेशे नगरीवरमथुरासमीपे अङ्कोलानामकं वैद्यस्थानमस्ति। यत्र सौरवंशजा ब्राह्मणाः समस्तभूमिपतिमान्या अश्विनीकुमारसमानाः पार्वणचन्द्ररुचियशःप्रसाधितदिङ्मण्डला वैद्या अभूवन्। तदन्वये गोविन्दनामा चिकित्सकशिरोमणिरभूत्। ततस्तत्पुत्रो भिषक्शिरोमुकुटमणिर्जयपालः समजनि। तत्तनयश्च समस्तशास्त्रार्थतत्त्वज्ञो भरतपालः संजातः। तत्पुत्रः स्वकुलनभस्तलचन्द्रमा विवेकबृहस्पतिः श्रीसहपालदेवनृपतिवल्लभः श्रीडल्हणः समभूत्। तेन श्रीजेज्झटं टीकाकारं श्रीगयदासभास्करौ च पञ्जिकाकारौ श्रीमाधवब्रह्मदेवादीन् टीप्पनकारांश्चोपजीव्य आयुर्वेदशास्त्रसुश्रुतव्याख्यानाय निबन्धसंग्रहः क्रियते। यद्यपि सुश्रुतोपरि जेज्झटादिभिष्टीका रचिताः तथापि तासां कुशाग्रीयधियामभिगम्यत्वात् अल्पमेधसामनुग्रहाय सुश्रुतं व्याख्यातुकामस्य मम प्रयासः सफलः।

**अथातो वेदोत्पत्तिमध्यायं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥ १॥**

अथातो वेदोत्पत्तिमध्यायं व्याख्यास्यामः। ननु, कतमत् सूत्रमिदम्? चतुर्विधानि हि सूत्राणि भवन्ति। तद्यथा,—प्रतिसंस्कर्तृसूत्रं, एकीयसूत्रं, शिष्यसूत्रं, गुरुसूत्रं चेति। इह प्रतिसंस्कर्तृसूत्रं नास्त्येवेत्येके, अन्ये त्वस्तीति भाषन्ते, यथा च तदस्ति तथैहैव नैकव्येन कथयिष्यामः; एकीयसूत्रं यथा,—'तत्र लोहितकपिलपाण्डुपीतनीलशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासंख्यमुदकानि भवन्ति इत्येके भाषन्ते'—इति एकीयसूत्रं; शिष्यसूत्रं यथा,—'वायोः प्रकृतिभूतस्य व्यापन्नस्य च लक्षणम्। स्थानं कर्म च रोगांश्च वदस्व वदतांवर'—इति शिष्यसूत्रं; गुरुसूत्रं यथा,—'देहे विचरतस्तस्य लक्षणानि निबोध मे'—इति गुरुसूत्रं; इति सूत्राणामनेकत्वात् कस्येदं सूत्रम्? उच्यते,—गुरोरेवैतत् सूत्रं, शिष्येण ग्रन्थं चिकीर्षता लिखितम्। अन्ये तु शिष्यस्यैवेदं सूत्रमित्याहुः; स तु आत्मशिष्येषु धन्वन्तरिप्रशिष्येषु प्रतिज्ञां कृतवान्। तन्नेच्छति गयी। किमेतत् स्वकपोलकल्पितं सुश्रुतेनोक्तम्, अथवा यथैव गुरुणोदीरितमिति पृष्टः प्रतिसंस्कर्ता सुश्रुतमुखेनेदमाह—यथोवाच भगवान् धन्वन्तरिरिति। इदं प्रतिसंस्कर्तृसूत्रं, यत्र यत्र परोक्षे लिड्प्रयोगस्तत्र तत्रैव प्रतिसंस्कर्तृसूत्रं ज्ञातव्यमिति। प्रतिसंस्कर्ताऽपीह नागार्जुन एव। अथशब्दोऽनन्तरार्थ एव। अतो युष्मच्छल्यतन्त्रोपदेशकामितादनन्तरम्। वेदोत्पत्तिमिति अस्यादौ आयुःशब्दो लुप्तो ज्ञेयः। तेन आयुर्वेदोत्पत्तिमिति। उत्पत्तिरत्राभिव्यक्तिः, नतु अभूतप्रादुर्भावः। अधीयन्तेऽस्मिन्नर्था इत्यध्यायः। व्याख्यास्याम इति विर्विशेषे, आङ् अभिव्याप्तौ, व्याख्यास्यामः प्रकथयिष्यामः। अन्ये तु अथशब्दः शिष्यप्रश्नानन्तर्ये, अतःशब्दो हेत्वर्थः, यत एते शिष्याः प्रजाहितार्थमायुर्वेदं गुरुं पप्रच्छुः अतो हेतोरित्यर्थः; विर्विविधप्रकारे, आङ् आभिमुख्ये, शेषं समम्। एतेनातः शल्यतन्त्रोपदेशकामितादनन्तरं आयुर्वेदाभिव्यक्तिमधिकृत्य कृतोऽध्यायस्तं विशेषाभिव्याप्त्या प्रकथयिष्यामः। द्वितीयव्याख्यानपक्षेऽपि इत्थं योजनीयम्। यथोवाच इति यादृक् उक्तवान्। भगवान् धन्वन्तरिरिति समस्तैश्वर्यमाहात्म्ययशःश्रीकामार्थप्रयत्नैर्युक्तो भगवान् उच्यते, अन्ये तु ज्ञानातिशयवान् पुरुषातिशयो भगवान्, अपरे तु अष्टगुणैश्वर्यवानेवात्र भगवान् उच्यते। अथात इत्यादिकं प्रतिज्ञासूत्रं यद्यपि अध्यायादौ लिखितं, तथापि 'वत्स सुश्रुत!' इत्यनन्तरं द्रष्टव्यं; अन्ये तु 'अध्याप्याश्च भवन्तो वत्सा' इत्यनन्तरं पठन्ति, तन्नेच्छति गयी। अत्र केचिद् 'वेदोत्पत्तिं नामाध्यायं' इति पठन्ति॥ १॥

**अथ खलु भगवन्तममरवरमृषिगणपरिवृतमाश्रमस्थं काशिराजं दिवोदासं धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकरवीर्यगोपुररक्षितसुश्रुतप्रभृतय ऊचुः॥ २॥**

अथ खल्वित्यादि। अथेति मङ्गलार्थः, तत्तु श्रोतृव्याख्यात्रे क्रियाफलसिद्धिं कथयति। खलु वाक्यशोभार्थः, अन्ये तु निश्चयार्थः। अमरवरं देवश्रेष्ठं, पूर्वजन्मामृतोद्धरणात्; अर्थवन्तरिः,

१. 'सहस्रांशुं' इति पाठान्तरम्।

णोऽवनारत्वात् । ऋषिगणपरिवृतं देवर्षिब्रह्मर्षिराजर्षिसमूहैर्वेष्टितं, तपोज्ञानबाहुल्यादुपादेयवाक्यत्वाच्च । आश्रमस्थं वानप्रस्थाश्रमस्थं, एतेन राज्यचिन्तापरित्यागादनाकुलचित्तत्वं राजर्षित्वं च सूचितम् । काशिराजं वाराणसीजनपदनृपतिं, काशिराजस्य निर्वाणपदाभिलाषित्वात् तत्पुत्रत्वमापन्नमिति काशिराजम् । काशिराजानामनेकत्वात् विशेषणमाह—दिवोदासं ।—दिवशब्देनात्र तत्स्थानदेवाः कथ्यन्ते, तैः पूजाकाम्यया संप्रदीयते यस्मै स दिवोदासस्तं तथा; अन्ये तु दासयति कर्माणि यत्नेन करोतीति दासः, दिवः स्वर्गस्य दासो दिवोदासस्तम् । सर्वजनप्रसिद्धं विशेषणमाह—धन्वन्तरिमिति । धन्वं शल्यशास्त्रं तस्य अन्तं पारम् इयर्ति गच्छतीति धन्वन्तरिस्तम्; अपरा व्युत्पत्तिर्विस्तरभयान्न लिखिता । औपधेनवादयः सुश्रुतान्ताः सप्त शिष्या ऊचुः उक्तवन्तः । प्रभृतिशब्देन भोजादयः । अन्ये तु गोपुररक्षितौ इति नामद्वयं मन्यन्ते, इत्यौपधेनवादयोऽष्टौ; प्रभृतिग्रहणात् निमिकाङ्कायनगार्ग्यगालवाः एवमेतान् द्वादश शिष्यानाहुः । ननु, प्रश्नकर्तृकतया सुश्रुतस्य मुख्यत्वादादावस्य नामग्रहणमुचितं स्यात्, कथमौपधेनवादिनामान्यादावुक्तानि ? सत्यं, देवर्षयस्ते राजर्षीणां पूज्या इति न दोषः ॥ २ ॥

**भगवन् ! शारीरमानसागन्तुव्याधिभिर्विविधवेदनाभिघातोपद्रुतान् सनाथानप्यनाथवद्विचेष्टमानान् विक्रोशतश्च मानवानभिसमीक्ष्य मनसि नः पीडा भवति; तेषां सुखैषिणां रोगोपशमार्थमात्मनश्च प्राणयात्रार्थं (प्रजाहितहेतोः) आयुर्वेदं श्रोतुमिच्छाम इहोपदिश्यमानम् । अत्राऽऽयत्तमैहिकमामुष्मिकं च श्रेयः । तद्भगवन्तमुपपन्नाः स्मः शिष्यत्वेनेति ॥ ३ ॥**

ऋषयस्ते तं काशिराजं प्रति किमूचुरित्याह—भगवन्नित्यादि ।—भगवन्निति संबोधने । तत्र शारीराः वातादिवैषम्यनिमित्ताः, मानसाः रजस्तमःसंभूताः कामादयः, आगन्तवः व्याघ्रादिकृताः शस्त्रादिकृताश्च । स्वाभाविकानामत्राग्रहणमस्मिन् शास्त्रे तत्प्रतिकारस्याप्राधान्यसूचनार्थं, अथवा आत्मनश्च प्राणयात्रार्थमित्यत्रैवावरोधाच्च । ऋषीणां हि शारीरमानसागन्तुव्याध्यसंभवात् केवलं स्वभावव्याधिनिषेधेनैव प्राणयात्राभिप्रेता । उपद्रुतान् उपसृष्टान् । सनाथानपि समित्रादिकानपि । अनाथवत् एकाकिजनवत् । विचेष्टमानान् विरुद्धां क्रियां कुर्वाणान् । एतेनायुर्वेदं विना मित्रादयोऽप्यनर्थका इति । विक्रोशतश्च विशेषादार्तस्वरैः रुदतश्च । नः अस्माकम् । आत्मनश्च प्राणयात्रार्थं प्राणानामग्नीषोमादीनां यात्रार्थं व्यवहारार्थं स्वस्थवृत्तानुवर्तनार्थम् । अत्र केचित् 'आत्मप्रजाहितहेतोः' इति पठन्ति । उपदिश्यमानं संक्षेपतः कथ्यमानम् । अत्रायत्तमिति अत्रायुर्वेदोपदेशे आयत्तं अधीनम् । ऐहिकं इहलोकभवं, आमुष्मिकं परलोकभवं, [illegible]ः कल्याणलाभः । अर्थकामौ मित्रादिलाभो यशश्च ऐहिकं स्वर्गादिविशिष्टं जन्मान्तरज्ञानादयश्च आमुष्मिकं श्रेयः । तदिति हेतौ, यस्मादायुर्वेदोपदेशाद् विविधं श्रेयः आयत्तं तस्मात् उपपन्नाः स्मः समीपमागताः स्मः । शिष्यत्वेन छात्रभावेनेति ॥ ३ ॥

**तानुवाच भगवान् स्वागतं वः; सर्वे एव अमीमांस्या अध्याप्याश्च भवन्तो वत्साः ! ॥ ४ ॥**

तेषां औपधेनवादीनां समीपगतानां काशिराजेन किं कृतमित्याह—तानुवाच भगवानिति । स्वागतं शोभनमागतं, वः युष्माकम् । अमीमांस्याः अविचारणीयाः, प्रसिद्धजात्यादिवत्त्वात् । अध्याप्याश्च अध्यापनार्हाश्च । वत्साः इति पक्षपातातिशयत्वसूचकं संबोधनं, अथवा वत्साः प्रथमवयसो गवां पुत्राः, वत्सा इव वत्साः; अनेन विशेषणेन प्रथमवयस्त्वं पुत्रसादृश्यं दमनीयत्वं च सूचयति ॥ ४ ॥

**इह खलु आयुर्वेदमष्टाङ्गमुपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रं च कृतवान् स्वयम्भूः; ततोऽल्पायुष्ट्वमल्पमेधस्त्वं चालोक्य नराणां भूयोऽष्टधा प्रणीतवान् ॥ ५ ॥**

इदानीमायुर्वेदस्य सामान्यं लक्षणं दर्शयन्नाह,—इह खल्वित्यादि ।—इह खल्विति वाक्यालङ्कारे, वक्ष्यमाणं वाक्यमलङ्करोति; अन्ये तु इह मयि सूत्रकारे, खलु एवार्थः; एतेन मय्येव आयुर्वेदोऽष्टाङ्गो नान्येषु सूत्रकारेषु, अन्येषामेकस्यैवाङ्गस्य प्रणेतृत्वात्; इहेति वाक्योपक्रमे, खलु संबोधने इत्यपरे । उपाङ्गं अङ्गमेवाल्पत्वात् उपाङ्गम्, तद्यथा—देहस्य बाहुजङ्घे शिरः इत्यङ्गानि, करचरणनासिकादीन्युपाङ्गानि, एतेन उपाङ्गमित्युक्तं; उपाङ्गमङ्गसमीपमित्येके । अनुत्पाद्यैव प्रजाः लोकसृष्टेः प्राक्, आयुर्वेदं प्रदर्श्य प्रजाः पश्चात् सृष्टवानित्यर्थः । कृतवान् संस्कृतवान्, न तु पूर्वमुत्पादितवान्, कुतः ? नित्यत्वात् । स्वयम्भूः ब्रह्मा । ततोऽल्पायुष्ट्वमिति ततः प्राक्तनकरणादनन्तरं अधर्मप्रवृत्तौ सत्यां अल्पायुष्ट्वं अल्पजीवितत्वम्, अल्पमेधस्त्वं स्वल्पबुद्धित्वम् । भूयः पुनः । अष्टधा अष्टभिः प्रकारैः ॥ ५ ॥

**तद्यथा—शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्यं, अगदतन्त्रं, रसायनतन्त्रं, वाजीकरणतन्त्रमिति ॥ ६ ॥**

अथ के तेऽष्टौ प्रकाराः ? इत्याह—तद्यथेत्यादि । शल्यमिति शल्याहरणप्रधानं तन्त्रं शल्यतन्त्रं; शलाकायाः कर्म शालाक्यम्, तत्प्रधानं तन्त्रमपि शालाक्यम्; कायोऽत्राग्निरुच्यते, तस्य चिकित्सा कायचिकित्सा; अथवा कायो देहस्तस्य चिकित्सा कायचिकित्सा; भूतानि देवासुरगन्धर्वयक्षरक्षःपितृनागपिशाचा अष्टौ, तानि वेत्ति अनया इति भूतविद्या, अथवा भूतावेशापाकरणार्था विद्या भूतविद्या; कुमाराः बालाः, तेषां भृतिः धारणं पोषणं च, तस्या भृत्या इदं तन्त्रमिति कौमारभृत्यं; अगदो विषप्रतिकारस्तदर्थं तन्त्रं अगदतन्त्रं; अन्ये विषगरवैरोधिकसंप्रयोगो गदः, गदस्याभावः अगदः, अगदाय तन्त्रं अगदतन्त्रमित्या-

चक्षते; रसानां रसरक्तादीनां अयनमाप्यायनं रसायनं, तदर्थं तन्त्रं रसायनतन्त्रं, अथवा रसानां रसवीर्यविपाकादीनां आयुःप्रभृतिकारणानामयनं विशिष्टलाभोपायः रसायनं, तदर्थं तन्त्रं रसायनतन्त्रम्; वाजीकरणतन्त्रमिति येन स्त्रीषु विषये वाजीव नरः सामर्थ्यं प्राप्नोति तत् वाजीकरणं, येनात्यर्थं व्यज्यते स्त्रीषु तद् वाजीकरणं, अन्ये तु वजनं वाजो वेगः प्रस्रवात् शुक्रस्य, स विद्यते येषां ते वाजिनः, अवाजिनो वाजिनः क्रियन्तेऽनेनेति वाजीकरणम्; अन्ये तु वाजीशब्देन शुक्रमभिधीयते, तेन शुक्ररहितस्य वाजी शुक्रं क्रियतेऽनेनेति वाजीकरणं, तदर्थं तन्त्रं वाजीकरणतन्त्रम्। इति शब्दोऽष्टाङ्गपरिसमाप्तौ ॥ ६ ॥

**अथास्य प्रत्येकमङ्गलक्षणसमासः[1] ।—**

अथेति ।—अथेत्यानन्तर्ये। अस्य आयुर्वेदस्य, प्रत्येकमङ्गलक्षणसमासः एकमेकमङ्गं प्रति लक्षणसंक्षेपः ॥—

**तत्र शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावदुष्टव्रणान्तर्गर्भशल्योद्धरणार्थं, यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थं च (॥ १ ॥)**

किं तदेकमेकमङ्गं प्रति लक्षणं संक्षेपेणेत्याह—तत्रेत्यादि। 'तत्र शल्यं नाम' इति केचित् पठन्ति। तत्र तेष्वङ्गेषु, नामशब्दः प्रतिपादने, शल्यं प्रतिपाद्यते कथ्यते इत्यर्थः। विविधतृणादीनां पूयास्रावान्तानां दुष्टव्रणस्यान्तर्मध्यादुद्धरणार्थं उद्धरणप्रयोजनम्, तथा गर्भशल्यस्यापि। उद्धरणार्थमित्यस्याग्रे 'षष्ठ्या विधानैः' इति केचित् पठन्ति, व्याख्यानयन्ति च—अपतर्पणाद्यैः रक्षाविधानान्तैर्द्विव्रणीयोक्तैरित्यर्थः। प्रणिधानार्थं निषेवणार्थम्। न केवलं काष्ठतृणादि शल्यम्, किंतु "अतिप्रवृद्धं मलदोषजं वा शरीरिणां स्थावरजङ्गमानाम्। यत्किंचिदाबाधकरं शरीरे तत्सर्वमेव प्रवदन्ति शल्यम्" (॥ १ ॥)

**शालाक्यं नाम ऊर्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थं, शलाका[2]यन्त्रप्रणिधानार्थं च (॥ २ ॥)**

शालाक्यमिति। जत्रु ग्रीवामूलं, अन्ये वक्षोंऽससन्धिमाहुः। वदनं अत्र मुखकुहरमाहुः। घ्राणादिसंश्रितानां आदिशब्दात् शिरःकपालादिसंश्रितानाम् (॥ २ ॥)

**कायचिकित्सा नाम सर्वाङ्गसंश्रितानां व्याधीनां ज्वररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहातिसारादीनामुपशमनार्थम् (॥ ३ ॥)**

कायचिकित्सेति। केचित् ज्वरानन्तरमतिसारं पठन्ति, तन्न, पञ्जिकया दूषितत्वात् (॥ ३ ॥)

**भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादिग्रहोपशमनार्थम् (॥ ४ ॥)**

भूतविद्येति। असुराः दैत्याः, गन्धर्वाः देवगायकाः, यक्षाः धनदादयः, रक्षांसि रावणप्रभृतीनि, पितरः अग्निष्वात्तादयः, पिशाचाः पिशिताशनाः, एते ग्रहणाद् ग्रहाः प्रोच्यन्ते। शान्तिकर्मबलिहरणादिग्रहोपशमनार्थं शान्तिकर्मादिभिरुग्रग्रहोपशमनप्रयोजनम् (॥ ४ ॥)

**कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामुपशमनार्थम् (॥ ५ ॥)**

कौमारभृत्यमिति। दुष्टस्तन्यग्रहसमुत्थानां चेति दुष्टस्तन्येन दुष्टग्रहेण च जातानामित्यर्थः; तत्र दुष्टस्तन्येन शारीराः, दुष्टग्रहेणागन्तवः (॥ ५ ॥)

**अगदतन्त्रं नाम सर्पकीटलूतादष्टविषव्यञ्जनार्थं विविधविषसंयोगोपशमनार्थं च (॥ ६ ॥)**

अगदतन्त्रमिति। कीटा वृश्चिकादयः। लूता मर्कटः, कीटभेदो वा। विविधानां नानाप्रकाराणां विषाणां स्थावरजङ्गमानां संयोगः सङ्गमः तदुपशमाय। अन्ये तु विविधविषसंयोगविषोपहतोपशमार्थं चेति पठन्ति। संयोगविषं समानमधुघृतादि (॥ ६ ॥)

**रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थं च (॥ ७ ॥)**

रसायनतन्त्रमिति। वयःस्थापनं वर्षशतमायुःस्थापनम्। आयुष्करं शताधिकमपि करोति। अन्ये तु वयःस्थापनं जरापहरणं, तारुण्यं बहुकालं स्थापयतीत्यर्थः (॥ ७ ॥)

**वाजीकरणतन्त्रं नाम अल्पदुष्टक्षीणविशुष्करेतसामाप्यायनप्रसादोपचयजनननिमित्तं प्रहर्षजननार्थं च (॥ ८ ॥) ॥ ७ ॥**

वाजीकरणतन्त्रमिति। अल्परेतसः प्रकृत्यैव स्तोकरेतसः, तेषामाप्यायननिमित्तम्; दुष्टरेतसो वातादिदुष्टरेतसः, तेषां प्रसादनिमित्तं; क्षीणरेतसः कारणैः स्वमानादल्पीभूतरेतसः, तेषामुपचयनिमित्तम्; विशुष्करेतसः स्वमानादत्यर्थं क्षीणरेतसः, तेषां जनननिमित्तम्। अथवाल्परेतसः पञ्चविंशतिमप्राप्ताः, क्षीणरेतसस्तु मध्यवयसःकारणादल्पीभूतरेतसः, शुष्करेतसो वृद्धाः। प्रहर्षजननार्थं चेति स्वस्थस्य शुक्रवृद्धिस्रुतिकरणार्थं चेत्यर्थः (॥ ८ ॥) ॥ ७ ॥

**एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते अत्र कस्मै किमुच्यतामिति ॥ ८ ॥**

एवमयमिति एवं अनेन प्रकारेण। अत्रेति एषु मध्ये। किमङ्गं कस्मै शिष्यायोपदिश्यतां व्याख्यायताम्। इतिशब्दः सामान्येन ॥ ८ ॥

**त ऊचुः—अस्माकं सर्वेषामेव शल्यज्ञानं मूलं कृत्वोपदिशतु भगवानिति ॥ ९ ॥**

**स उवाचैवमस्त्विति ॥ १० ॥**

त ऊचुः ते शिष्या धन्वन्तरिं प्रति ऊचुः उक्तवन्तः। शल्यज्ञानं मूलं कृत्वा शल्यज्ञानमादौ कृत्वा। सः धन्वन्तरिः,

१ 'अथास्य प्रत्यङ्गलक्षणं समासेनोपदेक्ष्यामः' इति पाठान्तरम्।

२ शलाका पटलवेधनी।

उवाच उक्तवान्, एवमस्त्विति एवं भवत्विति । सहोवाचेति केचित् पठन्ति । तैः शिष्यैः सहेत्यर्थः ॥ ९ ॥ १० ॥

**त ऊचुर्भूयोऽपि भगवन्तम्—अस्माकमेकमतीनां मतमभिसमीक्ष्य सुश्रुतो भगवन्तं प्रक्ष्यति, अस्मै चोपदिश्यमानं वयमप्युपधारयिष्यामः ॥ ११ ॥ स उवाचैवमस्त्विति ॥ १२ ॥**

प्रक्ष्यति पृच्छां करिष्यति ॥ ११ ॥ १२ ॥

**वत्स सुश्रुत! इह खल्वायुर्वेदप्रयोजनं—व्याध्युपसृष्टानां व्याधिपरिमोक्षः, स्वस्थस्य रक्षणं च ॥ १३ ॥**

वत्स सुश्रुत! इति संबोधने । अस्याग्रे अथात इत्यादिका प्रतिज्ञा ज्ञातव्येति पूर्वमेवोक्तम् । इह खलु इत्यधिकारे, इह खलु आयुर्वेदोत्पत्त्यधिकारे इत्यर्थः । व्याधिशब्दोऽयं दुष्टेषु वातादिषु तत्कार्येषु ज्वरादिषु क्लेशेषु रागादिषु दुःखेषु संसारानुवृत्तिजनकेषु च वर्तते । परिमोक्षो निवृत्तिः । ननु, व्याधिपरिमोक्षस्वस्थस्वास्थ्यरक्षणादन्यदपि प्रयोजनमस्ति, किं तत्? याप्यव्याधितरक्षा रसायनादायुरुत्कर्षश्च, तदिदं वक्तव्यं; उच्यते,—स्वस्थस्य रक्षणं चेति चकारोऽनुक्तसमुच्चयार्थः, तेन याप्यव्याधितरक्षणं रसायनादायुरुत्कर्षश्च; अथवा साध्यव्याधौ क्रियैकत्वात् याप्यावरोधः; रसायनादायुरुत्कर्षस्तु स्वस्थरक्षयैव गृह्यते ॥ १३ ॥

**आयुरस्मिन् विद्यतेऽनेन वा आयुर्विन्दतीत्यायुर्वेदः ॥ १४ ॥**

आयुर्वेदस्य निरुक्तिं दर्शयन्नाह—आयुरस्मिन्निति । आयुः शरीरेन्द्रियसत्वात्मसंयोगः, तदस्मिन्नायुर्वेदे विद्यते अस्तीत्यायुर्वेदः; अथवा आयुर्विद्यते ज्ञायते अनेनेत्यायुर्वेदः; आयुर्विद्यते विचार्यते अनेन वा इत्यायुर्वेदः; आयुरनेन विन्दति प्राप्नोति इति वा आयुर्वेदः ॥ १४ ॥

**तस्याङ्गवरमाद्यं प्रत्यक्षागमानुमानोपमानैरविरुद्धमुच्यमानमुपधारय ॥ १५ ॥**

तस्याङ्गवरमिति । अङ्गवरं अङ्गश्रेष्ठम् । आद्यं आदिभवम् । प्रत्यक्षागमानुमानोपमानैरविरुद्धमिति अनेन शल्येनाङ्गवरेण योऽर्थः प्रतिपाद्यते स खलु प्रत्यक्षादिभिरपि तथा अवगम्यते इत्यर्थः । प्रत्यक्षमिति यत्किंचिदेवार्थस्य साक्षात्कारिज्ञानं तदेव प्रत्यक्षम्, तथाहि,—"मनोऽक्षगतमभ्रान्तं वस्तु प्रत्यक्षमुच्यते । इन्द्रियाणामसंज्ञानं वस्तुतत्त्वे भ्रमः स्मृतः—" इति; प्रत्यक्षाविरुद्धं यथा,—सूर्यावलोकनात् नासान्तः सूत्रवर्तिप्रवेशनाच्च क्षुतः प्रादुर्भावः । आगमो वेदः, आप्तानां शास्त्रं वा; तथाहि,—"सिद्धं सिद्धैः प्रमाणैस्तु हितं चात्र परत्र च । आगमः शास्त्रमाप्तानामाप्तास्तत्त्वार्थवेदिनः"—इति, आगमाविरुद्धं यथा—पुराणादिष्वपि श्रूयते, रुद्रेण यज्ञस्य शिरश्छिन्नमश्विभ्यां संहितमिति । आगमस्य प्रत्यक्षफलत्वात् वरीयस्त्वं, तेनानुमानात् पूर्वं निर्दिष्टवान् । अनु पश्चादव्यभिचारिलिङ्गाल्लिङ्गी मीयते ज्ञायते येन तदनुमानं, तेनानुमानेनाविरुद्धं यथा,—प्रनष्टे शल्ये चन्दनघृतोपदिग्धायां त्वचि विशोषणविलयनाभ्यामनुमीयते अत्र शल्यमिति । प्रसिद्धसाधर्म्यात् सूक्ष्मव्यवहितविप्रकृष्टस्यार्थस्य साधर्म्यसाधनमुपमानं, तेनाविरुद्धं यथा—माषवन्माषः, तिलमात्रस्तिलकालकः; विदारीकन्दवद् विदारीरोगः; शालूकवत् पनसिकेत्यादिकम् । उच्यमानं उपदिश्यमानम् । मया धन्वन्तरिणेत्यर्थः॥१५॥

**एतद्धि अङ्गं प्रथमं, प्रागभिघातव्रणसंरोहात्, यज्ञशिरःसन्धानाच्च । श्रूयते हि, यथा—'रुद्रेण यज्ञस्य शिरश्छिन्नमिति ततो देवा अश्विनावभिगम्योचुः—भगवन्तौ! नः श्रेष्ठतमौ युवां भविष्यथः, भवद्भ्यां यज्ञस्य शिरः सन्धातव्यमिति । तावूचतुरेवमस्त्विति । अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रासादयन् । ताभ्यां यज्ञस्य शिरः संहितम्' इति॥१६॥**

शल्याङ्गस्याद्यत्वं प्रतिपादयन्नाह—एतद्धीत्यादि ।—हिशब्दोऽवधारणे । एतेनैतदेवाङ्गं प्रथमं आद्यं प्रधानं वा । कस्मात् प्रथमं? प्रागभिघातव्रणसंरोहात् । शारीरव्याधीनां प्रागेव देवासुरसंग्रामे अभिघातव्रणोत्पत्तिस्तत्संरोहात् । द्वितीयहेतुमाह,—यज्ञशिरःसंधानाच्चेति । अत्रापि प्रागिति संबध्यते । अन्ये त्वत्र यज्ञप्रधानशिरःसंधानाच्चेति पठन्ति । यतः प्राक् यज्ञस्य प्रधानभूतस्य शिरसः संधानं तस्मादिदमाद्यम् । अत्रैव पारम्पर्योपदेशमाह—श्रूयते हीत्यादि यावत्संहितमिति । अत्र केचित् संहितमित्यत्र सन्धितमिति पठन्ति ॥ १६ ॥

**अष्टास्वपि चायुर्वेदतन्त्रेषु एतदेवाधिकमभिमतमाशुक्रियाकरणात् यन्त्रशस्त्रक्षाराग्निप्रणिधानात्, सर्वतन्त्रसामान्याच्च ॥ १७ ॥**

इदानीं वरत्वे प्रतिज्ञातहेतुं प्रतिपादयन्नाह—अष्टास्विति । एतदेवाधिकमिति एतदेवाधिकं नान्यत् शालाक्यादि । कस्मादाशुक्रियाकरणात् । कुतोऽस्य पुनराशुक्रियाकरणत्वं? यन्त्रादिप्रणिधानात्, नहि यन्त्रादिषु प्रणिधाने मन्दा क्रिया कर्तुं युक्ता, मन्दकारित्वे हि आतुरस्य व्यापत्तिः स्यात् । वरत्वे द्वितीयं हेतुमाह—सर्वतन्त्रसामान्याच्च शालाक्यादितन्त्रतुल्यत्वाच्च । 'अधिकक्रियाकरणात्' इति केचित् पठन्ति । अधिकक्रियाकरणमप्यस्य यन्त्रादिप्रणिधानात् सर्वतन्त्रसामान्याच्च हेतुभ्याम् । अन्ये तु वरत्वे आशुक्रियाकरणादिति हेतुत्रयमाहुः; आशुक्रियाकरणात् शीघ्रं छेदादिक्रियाकरणादिति व्याख्यानयन्ति ॥ १७ ॥

**तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरं चेति ॥ १८ ॥**

अतः शिष्योत्साहनाय यथाभूतानुशंसामाह—तदिदमित्यादि । तदिदं शल्यतन्त्रं, शाश्वतं अविनाशि, अथवा शाश्वतशब्देन मोक्षोऽभिधीयते, तत्संपादनत्वात् शाश्वतं; पुण्यं पुण्यहेतुत्वात्; स्वर्गस्य निमित्तं स्वर्गाय हितं वा स्वर्ग्यम्; यशसो निमित्तं यशसे हितं वा यशस्यम्; आयुषो निमित्तम् आयुषे हितं वा आयुष्यम्; वृत्तिकरं चेति निर्वाहकरम् ॥ १८ ॥

**ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे, तस्माद-**

**वाति कामिजनानन्दजननोऽनङ्गदीपनः ॥**
**दम्पत्योर्मानभिदुरो वसन्ते दक्षिणोऽनिलः॥२७॥**
**दिशो वसन्ते विमलाः काननैरुपशोभिताः ।**
**किंशुकाम्भोजबकुलचूताशोकादिपुष्पितैः ॥२८॥**
**कोकिलाषट्पदगणैरुपगीता मनोहराः ॥**
**दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः२९**

अधुना वसन्तमाह—सिद्धेत्यादि । वसन्ते दक्षिणदिशो जातत्वात् मलयपर्वतस्थितचन्दनसुरभिर्दक्षिणवायुर्वाति । अन्यदपि वसन्तलक्षणमाह,—दिशो वसन्त इत्यादि । वसन्ते दिशः विमलाः रजोधूमादिवर्जितत्वात् निर्मला भवन्ति । दिशः एव च किंशुकादिवृक्षपुष्पितैः काननैः उपशोभिताः भूषिता भवन्ति । ता एव दिशः कोकिलाषट्पदगणैः उपगीताः मधुरध्वनियुक्ता भवन्ति । दक्षिणानिलसंवीताः दक्षिणवातेनावृता दिश इत्यर्थः । सुमुखाः शोभनावकाशाः । पल्लवोज्ज्वलाः पल्लवैः कृत्वा शृङ्गारिताः ॥ २६–२९ ॥

**ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः ॥**
**भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव॥३०**
**भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः ॥**
**ध्वस्तवीरुत्तृणलता विपर्णाङ्कितपादपाः ॥ ३१ ॥**

अव्यापन्नग्रीष्मर्तुलक्षणमाह—ग्रीष्म इत्यादि । असुखः इति ग्रीष्मे हि नैर्ऋतो वायुरसुखप्रदो भवति । तन्व्यः अल्पप्रवाहाः । भ्रान्तचक्राह्वयुगलाः इति जलाशयान्वेषितया भ्रान्तचक्रवाकयुगला दिशो भवन्ति । पयःपानाकुलाः इति उदकपानाय व्यग्रा मृगा भवन्ति । ध्वस्तवीरुत्तृणलता इति वीरुधः विटपाः, तृणानि प्रसिद्धानि, लता वल्ली, एते वीरुदादयः ध्वस्ताः अधःपतिता भवन्ति । विपर्णाङ्कितपादपा इति विपर्णैः विगलितपत्रैः, अङ्किताः चिह्निताः, पादपाः वृक्षा भवन्ति ॥ ३०–३१ ॥

**प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः ॥**
**अम्बुदैर्विद्युदुद्द्योतप्रस्रुतैस्तुमुलस्वनैः ॥ ३२ ॥**
**कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही ।**
**कदम्बनीपकुटजसर्जकेतकभूषिता ॥ ३३ ॥**

अव्यापन्नप्रावृड्ऋतुलक्षणमाह—प्रावृषीत्यादि । पश्चिमानिलकर्षितैरम्बुदैः अम्बरं आकाशं प्रावृषि आनद्धं आच्छादितं भवति । कथंभूतैरम्बुदैरित्याह—विद्युदुद्द्योतेत्यादि ।—विद्युदुद्योतेन सह प्रस्रुतैः क्षरितैः, तुमुलस्वनैः प्रचण्डगर्जितैः । मही च प्रावृषि कथम्भूता भवति इत्याह—कोमलेत्यादि ।—शष्पं बालतृणं, आढ्याः समृद्धाः । शक्रगोपः इन्द्रवधूः, अन्ये ज्योतिरिङ्गणमाहुः । नीपः धूलीकदम्बः ॥ ३२–३३ ॥

**तत्र वर्षासु नद्यम्भःपूरोद्भग्नतटद्रुमाः ॥**
**वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः॥३४॥**
**भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता ।**
**नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः ॥ ३५ ॥**

अव्यापन्नवर्षालक्षणमाह—तत्र वर्षास्वित्यादि ।—वर्षासु अम्भसा पानीयेन छन्नोत्खाततटद्रुमाश्च नद्यो भवन्ति । सोपानसहितकूपविशेषाः वाप्यः । भूरव्यक्तस्थलश्वभ्राः इति भूमिश्च अदृश्यस्थलगर्ता भवति । नातिगर्जत् इति अतिगर्जितवर्जितं पर्जन्यो योऽसौ मेघः तेन निरुद्धार्कग्रहं नभो भवति॥३४–३५॥

**बभ्रुरुष्णः शरद्यर्कः श्वेताभ्रविमलं नभः ॥**
**तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः ॥३६॥**
**पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः ।**
**बाणसप्ताह्वबन्धूककाशासनविराजिता ॥ ३७ ॥**

शरल्लक्षणमाह-बभ्रुरुष्ण इत्यादि ।—बभ्रुः कपिलपिङ्गलः।श्वेताभ्रविमलं नभ इति नभः आकाशं, श्वेताभ्रं विमलं च भवति। हंसांसघट्टितैः इति हंसस्कन्धचालितैः । पङ्कशुष्केति निम्नादिषु प्रदेशेषु यथासङ्ख्यं पङ्कादिकीर्णा भवति । द्रुमाश्च वल्मीककारिण्यः सूक्ष्माः पिपीलिकाः (?) । बाणेत्यादि बाणः सहचरः, सप्ताह्वः सप्तपर्णः, बन्धूकः बन्धुजीवकः, 'बाडुली' इति लोके । "मत्स्याम्लभोजिनः प्राच्याः नित्यं चानूपसेविनः । श्लीपदा गलगण्डाश्च प्रायस्तेषु भवन्ति हि ॥ निम्नतोयगतान् मत्स्यान् भक्षयन्ति समुद्रजान् । प्रायशः कुष्ठिनस्तेन मनुष्या दक्षिणाश्रिताः ॥ तैलाम्लभोजिनो नित्यं गोधूमविदलाशिनः । भूयिष्ठमर्शसास्तेन खञ्जाश्चावन्तिजा नराः ॥ मांसकामाः सुराकामाः स्त्रीकामाः साहसे रताः । मागधास्तेन भूयिष्ठं दृश्यन्ते राजयक्ष्मिणः ॥ तीक्ष्णान्यन्नानि सेवन्ते बाह्लीकास्तु विशेषतः । अभिष्यन्दीनि मांसानि तथा धान्योदकानि च ॥ प्रकृत्या चाप्यभिष्यन्ना सेवन्ते मानुषाः सदा । तेन बह्लीकदेशेषु प्रायो व्याधिर्बलासकः ॥ नानादेशस्वभावा येऽनाचारा न च स्वत्ववान् (?) । धर्मिणोऽधर्मिणस्तेषां साम्यं सत्वं च लक्षयेत् ॥ वर्जनादृतुसात्म्यानां कृशो नित्यं सुदुर्बलः । नित्यं रोगाभिभूतश्च पुमान् सात्म्यविवर्जनात् ॥ तस्मात् सात्म्यं निषेवेत असात्म्यं परिवर्जयेत् ॥ सात्म्यसेवी जितक्रोधो नित्यं चापि जितेन्द्रियः॥ जीर्णभोजी मितस्वप्नः सुखं जीवत्यनामयः । ऋतवः प्राग् विनिर्दिष्टा बलयोगस्वभावतः ॥ तेषु गर्भा निषिक्तास्तु तथा रूपास्तथायुतान्(?)। सुविज्ञाय ततो बुद्ध्या प्रशस्तान्निन्दितानपि ॥ ततोऽस्याहारसंयुक्तं भेषजं चावचारयेत् (?) । ततोऽस्यारोगता देहे बलं वीर्यं च वर्धते" ॥ ३६—३७ ॥

**स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः ॥**
**विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम्॥ ३८॥**

इदानीमध्यायपरिसमाप्तौ व्यापत्संग्रहश्लोकः—स्वगुणैरित्यादि । स्वगुणैरतियुक्तेष्विति स्वगुणाः ऋतूनामनन्तरोक्ताः, तैः अतियुक्तेषु अतिशययुक्तेषु ऋतुषु, दोषा देहिनां कुप्यन्तीति सर्वत्र संबन्धनीयम्; अथवा ऋतूनां स्वगुणाः शीतोष्णवर्षाणि, तैरतियुक्तेषु । विपरीतेषु इति मन्दशीतादियुक्तेषु, अन्ये तु शीते उष्णं उष्णे शीतं, वर्षास्ववृष्टिरिति ऋतुवैपरीत्यमाहुः । विषमेष्वपीति वैषम्यं पुनः ऋतूनां वर्षालिङ्गं शरदि, शरल्लिङ्गं हेमन्ते, एवमनुलोमविलोमाभ्यां शेषमृतुवैषम्यमुदाहार्यं; अन्ये तु ऋ-

तूनां यथोक्तलिङ्गानामेकस्मिन् ऋतौ सर्वेषां लिङ्गानां भावोऽभावश्चेति वैषम्यमाहुः । एतेन स्वगुणातियोगात् ऋतूनां षट् व्यापत्तयः, विपरीतेषु षड्विषमेषु च षडेव, इति ऋतूनामष्टादश व्यापत्तयः उक्ताः ॥ ३८ ॥

**हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् ॥**
**वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात् ॥ ३९ ॥**

हरेद्वसन्ते श्लेष्माणमित्यादि सुगमम् ॥ ३९ ॥

इति श्रीडह्लनविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

**अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

अथात इत्यादि । यन्त्रं शल्यानामाहरणोपायः, विधिः कल्पनं भेदो वा ॥ १ ॥ २ ॥

**यन्त्रशतमेकोत्तरं; अत्र हस्तमेव प्रधानतमं यन्त्राणामवगच्छ, (किं कारणं? यस्माद्धस्तादृते यन्त्राणामप्रवृत्तिरेव) तदधीनत्वाद्यन्त्रकर्मणाम् ॥ ३ ॥**

यन्त्राणां संख्यामाह,—यन्त्रशतमित्यादि । एकोत्तरमेकाधिकं; अन्ये तु शतशब्दोऽसङ्ख्येयवाची उत्तरशब्दः प्रधानवाचीति व्याख्यानयन्ति; एतेन यन्त्राणामसंख्येयत्वमुक्तमेकस्य प्रधानत्वं च । अत्र यत् प्रधानं तदेव दर्शयति—अत्र हस्तमेवेत्यादि । प्रधानतमं अतिशयेन प्रधानम् । अवगच्छ जानीहि। यद्यपि अग्रे कङ्कमुखस्य प्रधानत्वमुक्तमस्ति, तथापि हस्तस्य प्राधान्यं न विरुध्यते, प्रधानतमत्वात्तस्येति । प्रधानत्वे हेतुमाह, —तदधीनत्वाद् यन्त्रकर्मणामिति । हस्तायत्तत्वाद् यन्त्राणामित्यर्थः । अन्ये त्वन्यथा पठन्ति,—'किं कारणं यस्मात् हस्तादृते यन्त्राणामप्रवृत्तिरेव तदधीनत्वाद् यन्त्रकर्मणाम्' इति ॥ ३ ॥

**तत्र मनःशरीराबाधकराणि शल्यानि । तेषामाहरणोपायो यन्त्राणि ॥ ४ ॥**

इदानीं यन्त्रव्यापिलक्षणपरिभाषां प्रतिपादयन्नाह—तत्र मन इत्यादि । तत्र इति तस्मिन् वक्ष्यमाणे शल्यविनिश्चये ॥ ४ ॥

**तानि षट्प्रकाराणि; तद्यथा—स्वस्तिकयन्त्राणि, संदंशयन्त्राणि, तालयन्त्राणि, नाडीयन्त्राणि, शलाकायन्त्राणि, उपयन्त्राणि चेति ॥ ५ ॥**

तानीत्यादि । प्रकारो भेदः सादृश्यं च, तेषां षड्भेदाः स्वस्तिकादयः, सादृश्यानि वा षट् स्वस्तिकादीनां सादृश्यादेव । प्रतिज्ञातान् षट्प्रकारान् दर्शयितुमाह—तद्यथेत्यादि । स्वस्तिकं चतुरङ्गुलं पिष्टघटितं, तदाकृतीनि चतुरवयवानि स्वस्तिकयन्त्राण्युच्यन्ते । शेषाणामपि नामभिरेवाकृतयो ज्ञातव्याः ॥ ५ ॥

**तत्र चतुर्विंशतिः स्वस्तिकयन्त्राणि, द्वे संदंशयन्त्रे, द्वे एव तालयन्त्रे, विंशतिर्नाड्यः, अष्टाविंशतिः शलाकाः, पञ्चविंशतिरुपयन्त्राणि ॥ ६ ॥**

तत्र चतुर्विंशतिरित्यादि । द्वे एव तालयन्त्रे इति ननु, एवशब्दं विनापि द्वे तालयन्त्रे लब्धे तत् किमेवशब्देन? उच्यते, एवशब्दोऽयं स्वस्तिकादिषु निर्दिष्टां संख्यां व्यभिचारयति, तेन शल्याकृतिमवेक्ष्य स्वस्तिकादीनि यन्त्राणि अधिकान्यपि कार्याणि, तालयन्त्रे द्वे एव, एवं सति न दोषः ॥ ६ ॥

**तानि प्रायशो लौहानि भवन्ति; तत्प्रतिरूपकाणि वा तदलाभे ॥ ७ ॥**

किंद्रव्याणि पुनर्यन्त्राणि कर्तव्यानि इत्याह—तानि प्रायश इत्यादि । लोहाः पञ्च सुवर्णादयः, तत्कृतानि लौहानीत्युच्यन्ते । तत्प्रतिरूपकाणि लोहप्रतिरूपकाणि वा । लोहाभावे चैतानि दन्तशृङ्गदारूणि यन्त्रयोनित्वेनोक्तानि इति व्याख्यानयन्ति । लोहवेणुवृक्षसूत्रशृङ्गवल्कलतृणानि स्नायुप्रताना अश्मानश्चेत्येतेभ्यो यन्त्राणि निष्पाद्यन्ते ॥ ७ ॥

**तत्र नानाप्रकाराणां व्यालानां मृगपक्षिणां मुखैर्मुखानि यन्त्राणां प्रायशः सदृशानि; तस्मात् तत्सारूप्यादागमादुपदेशादन्ययन्त्रदर्शनाद्युक्तितश्च कारयेत् ॥ ८ ॥**

तत्र यन्त्राणां समासेनाकृतिं प्रसिद्धसाधर्म्यादुदाहर्तुमिच्छुराह—तत्र नानाप्रकाराणामित्यादि । नानाप्रकाराणां विविधभेदानां, मृगपक्षिणां हिंस्राणां पशुविहङ्गमानां, मुखैः सदृशानि यन्त्राणां मुखानि, भवन्तीत्यध्याहारः । अत्र मृगाः सिंहादयः पशवः, पक्षिणः वायसादयः । व्यालानामिति पशूनामेव विशेषणं, नतु पक्षिणामित्येके । तस्मादित्यादि ।—तत्सारूप्यादिति व्यालपशुपक्षिमुखसादृश्यात्, आगमात् इति शास्त्रात्, तथाहि,—'स्वस्तिकयन्त्राणि अष्टादशाङ्गुलानि', उपदेशात् इति वृद्धवैद्यवचनोपदेशात्, युक्तितश्च इति प्रयोजनतः, पुरुषवयोऽवयवादिविभागविचारतश्च ॥ ८ ॥

**समाहितानि यन्त्राणि खरश्लक्ष्णमुखानि च ॥**
**सुदृढानि सुरूपाणि सुग्रहाणि च कारयेत् ॥ ९ ॥**

गद्योक्तं श्लोकेनोपसंहरन्नाह,—समाहितानीत्यादि । समाहितानि न्यूनातिरिक्तमानवर्जितानि। खरश्लक्ष्णमुखानि दृढमसृणमुखानि, अन्ये तु कार्यभेदात् कानिचित् खरमुखानि कानिचित् श्लक्ष्णमुखानि, तत्र खरमुखानि कङ्कमुखादीनि, श्लक्ष्णमुखानि

---

१ अनेकान्येव यन्त्राणि । यदाह वृद्धवाग्भटः,—"अतः कर्मवशात्तेषामियत्ताऽवधारणमशक्यम्"—इति । तस्मादत्रोक्ता यन्त्राणां शतसंख्या निदर्शनार्था, नतु इयत्तावधारणपरेति ज्ञेयम् ॥

२ अत्राह वाग्भटः,—"नानाविधानां शल्यानां नानादेशप्रबाधिनाम् । आहर्तुमभ्युपायो यस्तद्यन्त्रं यच्च दर्शने ॥ अर्शोभगन्दरादीनां शस्त्रक्षाराग्नियोजने । शेषाङ्गपरिरक्षायां तथा बस्त्यादिकर्मणि ॥ घटिकालाबुशृङ्गं च जाम्बवोष्ठादिकानि च"—इति ॥ वा. सू. स्था. अ. २५ ॥

सिंहमुखादीनि। सुदृढानि समुदायेन। सुग्रहाणि सुवाराङ्गाणि॥९॥

**तत्र स्वस्तिकयन्त्राणि अष्टादशाङ्गुलप्रमाणानि, सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्जारशृगालमृगैर्वारुककाककङ्ककुररचासभासशशघात्युलूकचिल्लिश्येनगृध्रक्रौञ्चभृङ्गराजाञ्जलिकर्णावभञ्जननन्दिमुखमुखानि, मसूराकृतिभिः कीलैरवबद्धानि, मूलेऽङ्कुशवदावृत्तवाराङ्गाणि, अस्थिविदष्टशल्योद्धरणार्थमुपदिश्यन्ते॥१०॥**

तत्र स्वस्तिकयन्त्राण्येव प्रमाणाकाराभ्यां दर्शयन्नाह—तत्र स्वस्तिकेत्यादि। तत्र सिंहादयो नव व्यालमृगाः, काकादयः पञ्चदश पक्षिणः, एषां मुखसादृश्याच्चतुर्विंशतिः। तरक्षुः 'जरष' इति लोके; ऋक्षः भल्लूकोऽतिलोमशः, 'रीन्छ' इति लोके; द्विपी चित्रव्याघ्रः, 'चित्रक' इति लोके; मार्जारः बिडालः; मृगैर्वारुकः हरिणवत् इति लोके; कङ्कः कङ्कमल्लो दीर्घचञ्चुर्महाप्रमाणः, सुरमासुत इत्यन्ये; कुरवः चिरिल्लाकारः नादोत्थापितमत्स्यः, 'कुरल' इति लोके; भासः गोकुलचारी गृध्रविशेषः; शशघाती शशारि इति लोके; चिल्लिः 'चिल्ल' इति लोके; श्येनः सिञ्चानो गरुडान्वये; गृध्रः महाप्रमाणः स तु योजनदृष्टिरामिषाशी च; क्रौञ्चः 'कुरञ्ज' इति लोके; भृङ्गराजः 'कालचटक' इति पारियात्रीयाः, कान्यकुब्जास्तु 'पेगि' इति; अञ्जलिकर्णावभञ्जनयोः सुश्रुतचरकादिटीकासु पर्यायो न दृश्यते तस्माद् देशान्तरे लोकादवगन्तव्यम्; नन्दिमुखः पत्राटी। मसूराकृतिभिः कीलैः शल्यैः अवबद्धानि कीलितानि, 'स्कन्धप्रदेशे' इति वाक्यशेषः; अन्ये तु 'तृतीये भागे' इति वाक्यशेषं मन्यन्ते। मूलेऽङ्कुशवदावृत्तवाराङ्गाणि इति अङ्कुशवत् आवृत्तं चक्रं वाराङ्गं ग्रहणस्थलं येषां तानि तथोक्तानि। अस्थिविदष्टं अस्थिनिमग्नम्॥१०॥

**[2]सनिग्रहोऽनिग्रहश्च संदंशौ षोडशाङ्गुलौ भवतः; त्वङ्मांससिरास्नायुगतशल्योद्धरणार्थमुपदिश्येते[3]॥११॥**

सनिग्रहोऽनिग्रहश्चेति। सनिग्रहानिग्रहौ द्वौ सन्दंशौ, एकः सनिग्रहः सवाराङ्गो नापितस्येव, अन्यश्च अनिग्रहः अनिबन्धनः सुवर्णकारस्येव; अन्ये तु सनिग्रहः लोहकारसंदंश इव कीलबद्ध इति मन्यन्ते॥११॥

**[4]तालयन्त्रे द्वादशाङ्गुले मत्स्यतालवदेकतालद्वितालके; कर्णनासानाडीशल्यानामाहरणार्थम्॥१२॥**

तालयन्त्रे इत्यादि। तालसंज्ञके द्वे यन्त्रे, द्वे अपि द्वादशाङ्गुलप्रमाणे। तयोराकारमाह—मत्स्यतालवदिति। तालमत्र शकलमाहुः, मत्स्यस्य मीनस्य, तालतुल्ये प्रतनुमुखे इत्यर्थः। के ते द्वे इत्याह—एकतालद्वितालके इति। अत्र तालशब्देन प्रदेश उच्यते; एतेन एकं तालं प्रदेशो यस्य तदेकतालं, द्वे ताले प्रदेशौ यस्य तत् द्वितालम्; एतेन मत्स्यस्य शकलवत्प्रतनुमुखैकप्रदेशं एकतालं, मत्स्यशकलवत्प्रतनुमुखद्विप्रदेशं द्वितालमित्युक्तम्। परिणाहस्तु कर्णादिप्रवेशी ज्ञेयः। अन्ये तु 'मत्स्यतालकवदेकतालकद्वितालके' इति पठन्ति, व्याख्यानयन्ति च—मत्स्योऽत्र भेट्ठलिमत्स्यः, तस्य लौहमयतालकाकारं मुखं भवति, अतस्तन्मुखाधाकारं यन्त्रमेकतालकं, सर्वमुखाकारं द्वितालकं, तालकोऽत्र अपवारकादिकपाटसन्धिबन्धनं लौहमयमुच्यते, कर्णनासाशल्यं गूथकेशादि॥१२॥

**[5]नाडीयन्त्राण्यप्यनेकप्रकाराणि अनेकप्रयोजनानि एकतोमुखानि उभयतोमुखानि च; तानि स्रोतोगतशल्योद्धरणार्थं, रोगदर्शनार्थं[6], आचूषणार्थं, क्रियासौकर्यार्थं चेति; तानि स्रोतोद्वारपरिणाहानि यथायोगदीर्घाणि च। [7]भगन्दरार्शोव्रणबस्त्यु-**

१ मसूराकृतिभिः कीलैरिति मसूराकारप्रान्तैः कीलैरित्यर्थः। तथा च वाग्भटः,—"मसूराकारपर्यन्तैः कण्ठे बद्धानि कीलकैः"—इति॥

२ 'सनिबन्धनोऽनिबन्धनश्च संदंशौ' इति हस्तलिखितपुस्तके पाठ उपलभ्यते, वृद्धवाग्भटेऽपि "सनिबन्धनो निर्निबन्धनश्च संदंशौ द्वौ षोडशाङ्गुलौ भवत" "—इत्येव पठ्यते। सनिग्रहसंदंशयन्त्रं संप्रति आङ्ग्लभाषायां 'फोर्सेप्स' (Farceps) इति नाम्ना प्रसिद्धं, अनिग्रहसंदंशयन्त्रं च 'टोंग' (Tong) इति नाम्ना प्रसिद्धम्॥

अनिग्रहसंदंशयन्त्रम्।



सनिग्रहसंदंशयन्त्रम्।



३ वृद्धवाग्भटे संदंशद्वयमधिकमुक्तम्। यथा,—"तथाऽन्यः संदंशः षडङ्गुलोऽर्धाङ्गुलविस्तृतो वक्रद्विबाह्वङ्गुष्ठाङ्गुलिप्रान्तसमागमाकृतिः सूक्ष्मशल्याक्षिपक्ष्मव्रणाधिमांसहरणे। तद्वच्च मुचुण्डी सा तु ऋजुश्लक्ष्णा सूक्ष्मदन्ता सक्तद्विभुजा मूले रुचकनद्धा वल्यपीडनाच्छिन्नार्मशेषगम्भीरव्रणाधिमांसहरणे"—इति॥

४ तालयन्त्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'स्कूप' (Scoop) इत्याख्येन यन्त्रेण सह सादृश्यं उपलभ्यते।

५ नाडीयन्त्रं संप्रति आङ्ग्लभाषायां 'ट्युब्युलर' (Tubular) इति नाम्ना प्रसिद्धम्॥

६ रोगदर्शनार्थं व्यवह्रियमाणानि नाडीयन्त्राणि आङ्ग्लभाषायां 'स्पेक्युलम' इति नाम्ना प्रसिद्धानि॥

७ भगन्दरयन्त्रादीनां तन्त्रान्तरोक्तलक्षणादिकं, प्रतिकृतिः, संप्रति पाश्चात्यैस्तदर्थं व्यवह्रियमाणयन्त्रैः सह सादृश्यादिकं च तत्र तत्रैव दर्शयिष्यामः॥

८ व्रणयन्त्रलक्षणं वृद्धवाग्भटे एवं पठ्यते; यथा,—"नाडीव्रणप्रक्षालनाभ्यञ्जनयन्त्रे षडङ्गुले बस्तियन्त्राकारे मुखतोऽकर्णिके मूलमुखयोरङ्गुष्ठकलायप्रवेशस्रोतसी मूले निबद्धमृदुचर्मणी च—" इति॥

**त्तरवस्तिमूत्रवृद्धिदकोदरधूमनिरुद्धप्रकाशसन्निरुद्धगुदयन्त्राणि अलावूशृङ्गयन्त्राणि च उपरिष्टाद्वक्ष्यामः ॥ १२ ॥**

नाडीयन्त्राण्यपीत्यादि । नाडीयन्त्राणीति नाडीवन्मध्यच्छिद्राणि । एकतोमुखानि रक्ताहरणार्थानि अलाबुभगन्दरार्शोयन्त्रादीनि; उभयतोमुखानि वस्त्युत्तरवस्तिधूमयन्त्रादीनि । तानि स्रोतोगतशल्योद्धरणार्थमिति तानि नाडीयन्त्राणि स्रोतोगतशल्योद्धरणप्रयोजनानि । तथाहि,—'लाक्षा शल्ये कण्ठासक्ते मुखे नाडीं दत्त्वा तप्तया लोहशलाकया आकर्षयेत्—' इत्यादिकम् । रोगदर्शनार्थमिति रोगाः अभ्यन्तरार्शःप्रभृतयः । आचूषणार्थं अस्थिगतवायोर्दुष्टरक्तस्तन्ययोराकर्षणार्थम्। क्रियासौकर्यार्थमिति अत्र अभ्यन्तरार्शःप्रभृतिषु शस्त्रक्षाराग्न्यादिक्रियासुकरत्वाय सुखकरणायेत्यर्थः । तानि स्रोतोद्वारपरिणाहानीति वर्तुलत्वेन स्रोतोद्वारतुल्यानि । ननु, 'विंशतिर्नाड्यः' इति पूर्वमेवोक्तं, इह तु भगन्दरार्शोव्रणेत्यादि नाडीयन्त्राणि अलाबुशृङ्गान्तानि द्वादश, तत् कथं विंशतिः पूर्यते? उच्यते, भगन्दरयन्त्रे द्वे, एकं एकच्छिद्रं, अपरं द्विच्छिद्रं; अर्शोयन्त्रे अपि द्वे, एकच्छिद्रद्विच्छिद्रभेदेन; व्रणयन्त्रमेकं व्रणच्छिद्रायामपरिणाहं; वस्तिनेत्रं चतुर्विधं वयोभेदेन, अन्ये त्रिविधमाहुः; उत्तरवस्तिनेत्रं द्विविधं पुंसां स्त्रीणां च, एके त्रिविधमाहुः; मूत्रवृद्धिदकोदरयोर्द्वे, मूत्रवृद्धिस्रावणार्थमेकं, दकोदरस्रावणार्थं चैकम्; धूमनेत्राणि त्रीणि एकं वैरेचनिकं, अपरं स्नैहिकं, अन्यच्च प्रायोगिकं; निरुद्धप्रकशयन्त्रमेकं; सन्निरुद्धगुदयन्त्रमेकं; अलाबुयन्त्रमेकं; एवं विंशतिर्नाडीयन्त्राणि ॥१२

**शलाकायन्त्राण्यपि[3] नानाप्रकाराणि, नानाप्रयोजनानि, यथायोगपरिणाहदीर्घाणि च; तेषां गण्डूपद[4]सर्पफण[5]शरपुङ्ख[6]बडिश[7]मुखे द्वे द्वे, एषणव्यूहनचालनाहरणार्थमुपदिश्यते; मसूरदल[8]मात्रमुखे द्वे किञ्चिदानताग्रे स्रोतोगतशल्योद्धरणार्थं; षट् का-**

---

१ वृद्धवाग्भटे तु एतानि नाडीयन्त्राण्यधिकान्युक्तानि । यथा,—"कण्ठशल्यदर्शनार्थं नाडीं दशाङ्गुलायतां पञ्चाङ्गुलपरिणाहाम् । द्विकर्णस्य तु वारङ्गस्य संग्रहार्थं द्विछिद्रमुखां नाडीं तत्प्रमाणतः कुर्यात् । तथा चतुष्कर्णस्य पञ्चछिद्रमुखाम् । शल्यनिर्घातनीं तु पद्मकर्णिकाकारशीर्षां द्वादशाङ्गुलां त्र्यङ्गुलसुषिराम् । तथाऽङ्गुलित्राणकं अङ्गुलिप्रवेशनं किञ्चित्स्थूलवृत्तौष्ठं ऊर्ध्वाधश्छिद्रं गोस्तनाकृति चतुरङ्गुलं दान्तं शार्ङ्गं वार्क्षं वा, तत् दृढेन सूत्रेण मणिबन्धप्रतिबद्धं आस्यविवृतौ योज्यम् । योनिव्रणदर्शने यन्त्रं षोडशाङ्गुलं मध्ये सुषिरं चतुर्भित्तं चतुःशलाकं संचारिण्या मुद्रयोर्ध्वं निबद्धमुत्पलमुकुलवक्त्रं मूले शलाकाक्रमणादूर्ध्वविकासि च। एषां मध्ये वाग्भटोक्तयोनिव्रणेक्षणयन्त्रस्य संप्रति पाश्चात्यैर्योन्येक्षणार्थं व्यवह्रीयमाणेन 'वेजिनलस्पेक्युलम्' Vaginalspeculum इत्याख्येन यन्त्रेण सह सादृश्यं उपलभ्यते । एतच्च यन्त्रं संप्रति चतुर्भित्तं, द्विभित्तं, वृत्तं इत्याद्यनेकविधं व्यवह्रियते, तेषां मध्ये चतुर्भित्तस्येयं प्रतिकृतिः ।

योन्येक्षणयन्त्रम् ।



२ स्तन्यचूषणार्थं संप्रति पाश्चात्यैः 'ब्रेष्ट पंप' वा 'ब्रेष्ट रिलीवर' (Breast pump or reliever) इत्याख्यं नाडीयन्त्रमुपयुज्यते ।

३ शलाकायन्त्रं आङ्ग्लभाषायां 'केन्युला' (Canula) इति नाम्ना प्रसिद्धम् ॥

४ एषणियन्त्रं आङ्ग्लभाषायां 'प्रोब्ज' (Probes) इति नाम्ना प्रसिद्धम् । एषणे संप्रति पाश्चात्यैर्भिषग्भिः 'डायरेक्टर' (Director) इत्याख्यं अर्धनलिकाकारं यन्त्रमपि व्यवह्रियते ॥

एषणी ।



५ सर्पफणमुखे द्वे इति एकं षोडशाङ्गुलं अपरं द्वादशाङ्गुलं इति भेदेन सर्पफणमुखस्य द्वैविध्यं ज्ञेयं; यदाह वाग्भटः,—"उभौ तेषां षोडशद्वादशाङ्गुलौ । व्यूहनेऽहिफणावक्त्रौ—" इति ॥

६ शरपुङ्खमुखे द्वे इति एकं दशाङ्गुलं, अपरं द्वादशाङ्गुलमिति भेदेन शरपुङ्खमुखस्य द्वैविध्यं ज्ञेयम् । यदाह वाग्भटः,—"द्वौ दशद्वादशाङ्गुलौ । चालने शरपुङ्खास्यौ—" इति ॥

७ बडिशमुखे द्वे इति स्वानतनात्यानतभेदेन बडिशमुखस्य द्वैविध्यं ज्ञेयम् । बडिशं आङ्ग्लभाषायां 'हुक्स' (Hooks) इति नाम्ना प्रसिद्धम् ॥

बडिशं नात्यानतम् ।



बडिशं स्वानतम् ।



८ मसूरदलमात्रमुखे द्वे इति एकं अष्टाङ्गुलं, अपरं नवाङ्गुलं; यदाह वाग्भटः,—"स्रोतोभ्यः शल्यहारिणी ॥ मसूरदलवक्त्रे द्वे स्यातामष्टनवाङ्गुले—" इति ।

९ अत्राह वाग्भटः,—"कार्पासविहितोष्णीषाः शलाकाः षड् प्रमार्जने । पायावासन्नदूरार्थे द्वे दशद्वादशाङ्गुले ॥ द्वे षट्सप्ताङ्गुले घ्राणे, द्वे कर्णेऽष्टनवाङ्गुले—" इति ॥

**र्पासकृतोष्णीषाणि, प्रमार्जनक्रियासु; त्रीणि दर्व्याकृतीनि खल्लमुखानि, क्षारौषधप्रणिधानार्थं; त्रीणि अन्यानि जाम्बववदनानि, त्रीणि अङ्कुशवदनानि, षडेवाग्निकर्मसु अभिप्रेतानि; नासार्बुदहरणार्थमेकं कोलास्थिदलमात्रमुखं खल्लतीक्ष्णोष्ठं; अञ्जनार्थमेकं कलायपरिमण्डलमुभयतो मुकुलाग्रं; मूत्रमार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति ॥ १४ ॥**

शलाकायन्त्राणि निर्देष्टुमाह—शलाकायन्त्राण्यपीत्यादि । यथायोगपरिणाहमिति परिणाहः वर्तुलता । तेषां शलाकायन्त्राणां मध्ये । गण्डूपदेत्यादि मुखशब्दो गण्डूपदादिभिः सह प्रत्येकं संबध्यते, तेन गण्डूपदमुखसर्पफणमुखे द्वे एवं शेषयोरपि । शरपुङ्खः शरगुणसन्धानस्थानम् । वडिशो मत्स्यबन्धनम् । तेषां चतुर्णां गण्डूपदमुखादीनां यथासंख्येन प्रयोजनमाह,—एषणमित्यादि । —एषणं गम्भीरपाकादौ पूयाद्यन्वेषणं, व्यूहनं ऊर्ध्वीकरणं छित्त्वा उत्तुण्डितस्य उद्धरणार्थं, वारङ्गेणानुसरणमित्येके । मसूरदलं इति मसूरस्य दलितस्य निस्तुषस्य खण्डं दलमित्युच्यते । किंचिदानताग्र इति मनाक् वक्राग्रे । षट्कार्पासकृतोष्णीषाणीति तूलवेष्टिताग्राणि, प्रमार्जनक्रियासु प्रोञ्छनक्रियासु । त्रीणि दर्व्याकृतीनीति दर्वी दारुहस्तकः, खल्लमुखानि निम्नमुखानि । जाम्बववदनानीति जम्बुफलमुखाकृतीनि । कोलास्थिदलमात्रमुखमिति बदरास्थिमज्जविदलप्रमाणं; खल्लतीक्ष्णोष्ठमिति खल्लं मध्ये बोद्धव्यं, तीक्ष्णोष्ठं तु अन्ते । कलायपरिमण्डलमिति कलायमात्रं परितो मण्डलं वर्तुलं, उभयतो मुकुलाग्रमिति द्वयोरन्तयोः कलिकावदग्रं; दैर्घ्येण तु अष्टाङ्गुलं शालक्योक्तत्वात् । गण्डूपदमुखादीनामङ्कुशवदनान्तानां शलाकायन्त्राणां तुल्याकृतित्वेऽपि द्विखषड्लादीनि कार्यापेक्षीणि ॥ १४ ॥

**उपयन्त्राण्यपि-रज्जुवेणिकापट्टचर्मान्तवल्कलतावस्त्राष्ठीलाश्ममुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तनखमुखबालाश्वकटकशाखाष्ठीवनप्रवाहणहर्षायस्कान्तमयानि क्षाराग्निभेषजानि चेति ॥ १५ ॥**

**एतानि देहे सर्वस्मिन् देहस्यावयवे तथा ॥**
**संधौ कोष्ठे धमन्यां च यथायोगं प्रयोजयेत् ॥१६॥**

उपयन्त्राणि निर्देष्टुमाह—उपयन्त्राण्यपीत्यादि । उपयन्त्राणीति यन्त्रसमीपवर्तीनि, हीनयन्त्राणीत्यन्ये । रज्जुः मुञ्जादिविरचितो गुणः; वेणिका गुणत्रयग्रथिता; चर्मान्तं चर्मावयवः, अत्र वर्मान्तमित्येके पठन्ति, वर्म सन्नाहः; वल्कलं पलाशोडुम्बरादीनां त्वक्, सा च भग्नादिबन्धनयन्त्रार्थं; लता प्रतानिनी वेलिरिति लोके; वस्त्रं कर्पटः; अष्ठीलाश्म इति अष्ठीला दीर्घवर्तुलपाषाणः, अन्ये लौहकाराणां लौहीं दीर्घवर्तुलभाण्डिमाहुः, तया तुल्योऽश्मा स चाष्ठीलाश्मा उत्तरापथे प्रसिद्धः; मुद्गरः काष्ठादिकृतः, अयं अस्थिविदष्टशल्यस्य चालनार्थं; पाणिपादतलमिति तलशब्दः पाणिपादाभ्यां सह प्रत्येकं संबध्यते; अश्वकटकः घोटककविकाचूडकं, शाखा वृक्षस्य, अनयोः प्रयोजनं शल्यापनयनीये वक्ष्यति; ष्ठीवनं श्लेष्मादिनिरसनं; प्रवाहणवमनविरेचनाश्रुप्रवर्तनादि यथासंख्यं पुरीषकफपित्ताक्षिरजःशल्यादिषु; हर्षः तुष्टिः; अयस्कान्तः पाषाणविशेषः, आकर्षकद्रावकचुम्बकभ्रामकभेदाच्चतुर्विधः; इतिशब्दः समाप्तौ । "स्वभावं पाचनं प्रमार्जनम्" इत्यादयोऽनवबद्धशल्योद्धरणहेतवो रज्ज्वाद्युपयन्त्रेष्वेवान्तर्भूता इति पृथङ्नोक्ताः । तद्यथा, प्रवाहणग्रहणेन तावदश्रुक्षवथुप्रभृतीनामप्यत्र ग्रहणमित्यादिकं बोद्धव्यम् ॥ १५–१६ ॥

**यन्त्रकर्माणि तु—निर्घातनपूरणबन्धनव्यूहनवर्तनचालनविवर्तनविवरणपीडनमार्गविशोधनविकर्षणाहरणाञ्छनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणदारणर्जूकरणप्रक्षालनप्रधमनप्रमार्जनानि चतुर्विंशतिः ॥ १७ ॥**

कानि पुनर्यन्त्राणां कर्माणीत्याह,—यन्त्रकर्माणि त्वित्यादि । निर्घातनं इतश्चेतश्च विचाल्य निर्हरणं, इतश्चेतश्च घट्टनमित्येके; पूरणं बस्तिनेत्रप्रभृतिभिस्तैलादिना; बन्धनं रज्ज्वादिना; व्यूहनं (ऊर्ध्वीकरणं छित्वा उत्तुण्डितस्य उद्धरणार्थं) अत्रैवाध्याये व्याख्यातं प्राक्; वर्तनं विवृत्तस्य वर्तुलीकरणं; चालनं स्थानात् स्थानान्तरनयनं, अन्ये शल्यकम्पनमाहुः; विवर्तनं कर्णवायोर्निष्कासयितुमिष्टस्य कर्णलग्नस्य पुनर्निवर्तनं, अन्ये यन्त्रस्य भ्रमणमन्तरे वा; विवरणं प्रकाशनं, मांसच्छेदावकाशदानेन विवरणमित्येके, 'विवरणं प्रसारणं' इति लक्ष्मणटिप्पणकेनोक्तं; पीडनं व्रणस्य पूयादिनिर्गमनार्थं अङ्गुल्यादिना; मार्गविशोधनं मूत्रपुरीषसङ्गे; विकर्षणं विगृह्य कर्षणं, अन्ये मांसादिप्रतिबद्ध-

१ अत्राह वाग्भटः,—"अष्टाङ्गुला निम्नमुखास्तिस्रः क्षारौषधक्रमे । कनीनीमध्यमानामिनखमानसमैर्मुखैः—" इति ॥ एतत् शलाकायन्त्रं आङ्ग्लभाषायां 'स्पेल्युला' ( Spalula ) इति नाम्ना प्रसिद्धम् ॥

२ अत्राह वाग्भटः,—"शलाकाजाम्बवोष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् ॥ युञ्ज्यात्स्थूलाणुदीर्घाणाम्—" इति ॥

३ मूत्रमार्गशोधनार्थं संप्रति पाश्चात्यैः 'साउण्ड' (Sound) इत्याख्यं शलाकायन्त्रं 'केथेटर' ( Cathater ) इत्याख्यं नाडीयन्त्रं च व्यवह्रियते ॥

केथेटर ।



४ वाग्भटे कर्णशोधनं, गर्भशङ्कुश्च इति शलाकायन्त्रद्वयमधिकमुक्तम् । यदाह—'कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननं—'' इति; तथा "नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः । अष्टाङ्गुलायतस्तेन मूढगर्भं हरेत्स्त्रियाः—" इति । गर्भशङ्कोः संप्रति पाश्चात्यैर्मूढगर्भाहरणार्थं व्यवह्रियमाणेन 'क्रोचेट'( Crotchet ) इत्याख्येन यन्त्रेण सह सादृश्यमुपलभ्यते ।

शल्यस्य मोचनमाहुः; आहरणं आनयनं; आञ्छनं ईषन्मुखानयनं, ईषन्मुखे आनयनमित्यर्थः; उन्नमनं अधःस्थितस्य शरःकर्णादेरूर्ध्वं नयनं; विनमनं निम्नीकरणं; भञ्जनं शरःकर्णादेरामर्दनं, समन्ततो मर्दनमित्यन्ये; उन्मथनं प्रनष्टस्य शल्यस्य मार्गे शलाकादिभिरालोडनं; आचूषणं विषदुष्टस्तन्यरुधिरेषु शृङ्गालाबुभ्यां मुखेन वा; एषणं गण्डूपदमुखेन गतेर्व्रणोत्सङ्गशल्यादीनां; दारणं शिरःकर्णादिद्विधाकरणं; ऋजुकरणं कुटिलस्य; प्रक्षालनं तोयादिभिः व्रणोत्सङ्गादीनां; प्रधमनं श्लेष्मशल्यसङ्गे नासिकायां नाड्या चूर्णक्षेपणं; प्रमार्जनं प्रोञ्छनं बालाङ्गुलिवस्त्रैरक्षिरजःशल्यादिषु ॥ १७ ॥

**स्वबुद्ध्या चापि विभजेद्यन्त्रकर्माणि बुद्धिमान् ॥**
**असंख्येयविकल्पत्वाच्छल्यानामिति निश्चयः॥१८**

इदानीं नानाविधशल्याकारेण कर्मणां बहुलात् संख्यायामनियमं दर्शयन्नाह,—स्वबुद्ध्या चापीत्यादि ॥ १८ ॥

**तत्र अतिस्थूलं, असारं, अतिदीर्घं, अतिह्रस्वं, अग्राही, विषमग्राही, वक्रं, शिथिलं, अत्युन्नतं, मृदुकीलं, मृदुमुखं, मृदुपाशमिति द्वादश यन्त्रदोषाः ॥ १९ ॥**

यन्त्रदोषान् वक्तुमाह,—तत्रातिस्थूलमित्यादि । असारं अशुद्धलोहादिघटितं; अग्राहि विकृतमुखं; विषमग्राहि एकदेशग्राहि; वक्रमनृजु; शिथिलं पीडनाक्षमं; अत्युन्नतमुच्छ्रितकीलकादि; मृदुकीलं दुर्बलशल्यं; अन्ये तु 'वक्रशिथिलात्युन्नतमृदुकीलं' इति पठन्ति, व्याख्यानयन्ति च—अत्र कीलशब्दो वक्रादिभिः सह प्रत्येकं संबध्यते, तेन वक्रकीलमित्यादि योज्यं; मृदुपाशं तनुपाशं; मृदुमुखं शल्यपीडनासहमुखम् । एते प्रायेण स्वस्तिकयन्त्राणां दोषा बोद्धव्याः ॥ १९ ॥

**एतैर्दोषैर्विनिर्मुक्तं यन्त्रमष्टादशाङ्गुलम् ॥**
**प्रशस्तं भिषजा ज्ञेयं तद्धि कर्मसु योजयेत् ॥ २०॥**

यन्त्रस्य प्रशस्तत्वं वक्तुमाह—एतैर्दोषैरित्यादि ॥ २० ॥

**दृश्यं सिंहमुखाद्यैस्तु गूढं कङ्कमुखादिभिः ॥**
**निर्हरेत शनैः शल्यं शास्त्रयुक्तिव्यपेक्षया ॥ २१**

स्वस्तिकयन्त्राणां विषयभेदं दर्शयन्नाह—दृश्यमित्यादि । दृश्यं दर्शनगतं शल्यं; गूढं अदृश्यं कङ्कमुखादिभिः; अत्रादिशब्दः प्रधानवाची, तेन कङ्कमुखमादि प्रधानं येषां तैर्निर्हरेदित्यर्थः; यदि पुनरिहादिशब्दः प्रधानवाची न स्यात् तदा काकमुखस्य ग्रहणं न स्यादिति । व्यपेक्षयेति विविधापेक्षा व्यपेक्षा, विशिष्टापेक्षा वा ॥ २१ ॥

**निवर्तते साध्ववगाहते च**
**शल्यं निगृह्योद्धरते च यस्मात् ॥**
**यत्रेष्वतः कङ्कमुखं प्रधानं**
**स्थानेषु सर्वेष्वधिकारि चैव ॥ २२ ॥**

कङ्कमुखस्य प्राधान्यं दर्शयन्नाह,—निवर्तत इत्यादि । निवर्तते साध्विति साधु झटिति निःसरतीत्यर्थः, अवगाहते प्रविशति च साधु, अन्येषां सिंहमुखादीनां स्थूलमुखत्वेन साध्ववगाहनसाधुनिवर्तनाभावात्; अन्ये विवर्तते विवृतत्वादन्तर्भ्रमतीत्याहुः । शल्यं निगृह्योद्धरते आकर्षति । स्थानेषु सर्वेषु इति सन्धिधमन्यादिषु । अधिकारि अस्य कङ्कमुखस्य अधिकारोऽस्ति नान्यस्य; अन्ये तु 'अविकारि' इति पठन्ति, तत्रापि स एव तात्पर्यार्थ इति ॥ २२ ॥

इति श्रीडल्हणविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

**अथातः शस्त्रावचारणीयमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

अथात इत्यादि । शस्त्राणामवचारणं यस्मिन्नध्यायेऽस्ति सः शस्त्रावचारणीयः, तं व्याख्यास्यामः ॥ १ ॥ २ ॥

**विंशतिः शस्त्राणि, तद्यथा—मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधारसूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चककुठारिकाव्रीहिमुखारावेतसपत्रकवडिशदन्तशङ्क्वेषण्य इति३**

कियन्ति पुनस्तानि शस्त्राणीत्याह—विंशतिरित्यादि ।—मण्डलाग्रादीनि मण्डलाग्रे द्वे सूच्यस्तिस्र इत्याद्यवयवान्तरभेदेन तु बहून्यपि स्युः । तानि नामभिर्निर्देष्टुमाह—तद्यथा मण्डलाग्रेत्यादि । —'तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः' तथा 'नखशस्त्रैषण्यावष्टाङ्गुलो' इत्यादिवाक्येन शस्त्राणामाकारः प्रमाणं च यद्यप्यग्रे वक्ष्यति तथापीहैव परतन्त्रोक्तं शस्त्रप्रमाणलक्षणं सुखावबोधार्थमुपदेक्ष्यामः । मण्डलाग्रमिति मण्डलमिवाग्रं यस्य तत् मण्डलाग्रं, तच्च द्विविधम् । तथाहि,—"यदग्रे मण्डलं वृत्तं क्षुरसंस्थानमेव वा । मण्डलाग्रस्य जानीयात् प्रमाणं तु षडङ्गुलम्—" इति । करपत्रमिति करवत् पत्रं यस्य तत् करपत्रं, यथा करोऽङ्गुलिभिराचितो भवति तद्वत् यत् कण्टकैराचितं स्यात्तत् करपत्रमुच्यते; अन्ये तु करपत्रशस्त्रं करपत्राकारमेव,

---

१ मण्डलाग्रलक्षणं वाग्भटे एवं पठ्यते । यथा; "मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृति । लेखने छेदने योज्यं पोथकीशुण्डिकादिषु—" इति ॥ मण्डलाग्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'स्पुन' Spoon इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते ॥

मण्डलाग्रम् ।



२ करपत्रलक्षणं वाग्भटे एवं पठ्यते,—"छेदेऽस्थ्नां करपत्रं तु खरधारं दशाङ्गुलम् ॥ विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धनम्—" इति । करपत्रं आंग्लभाषायां 'सो' Saw इति नाम्ना प्रसिद्धम् ॥

तच्च द्वादशाङ्गुलं तन्त्रान्तरवचनात्; ननु, यदि तन्त्रान्तरात्तद् द्वादशाङ्गुलं करपत्रमुच्यते तर्हि स्वतन्त्रे विरोधः, कुतः? स्वतन्त्रे करपत्रस्य निर्दिष्टप्रमाणत्वात् 'शेषाणि तु षडङ्गुलानि–' इत्यनेन वाक्येन षडङ्गुलमेव करपत्रं स्यान्न द्वादशाङ्गुलम्। नैवम्, 'तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः'– इत्यस्मात् सूत्रात् प्रायशब्दोऽनुवर्तते, तेनायमर्थः–शेषाणि प्रायेण षडङ्गुलानि; एवं शस्त्रमानेऽन्यत्राप्यविरोधः। वृद्धिपत्रमिति[1] वृद्धेः पत्रमिव वृद्धिपत्रं, तच्च द्विविधं, एकमवनताग्रं, द्वितीयं प्रयताग्रं; द्वे अपि सप्ताङ्गुलप्रमाणे, द्वयोरपि "अर्धपञ्चाङ्गुलं वृन्तं कार्यं सार्धाङ्गुलं फलम्"—इति; अनयोर्मध्ये अवनताग्रं वृद्धिपत्रं क्षुरमाहुः। नखशस्त्रमिति[2] नखानां छेदनाय शस्त्रं नखशस्त्रं; तस्य फलं द्व्यङ्गुलायामं, एकाङ्गुलविस्तृतम्। अर्धधारमिति[3] अर्धे धारा यस्य तत् अर्धधारं, चक्रधारमिति प्रसिद्धं; तच्च अष्टाङ्गुलायतं, उरसि अङ्गुलविस्तारं, द्व्यङ्गुलफलम्; अन्ये त्वध्यर्धधारमिति पठन्ति, अधिकमर्धे धारा यस्य तत् अध्यर्धधारम्। सूची अग्रे वक्ष्यते। कुशपत्रमिति कुशपत्रतुल्यं कुशपत्रं, तन्मानमाह,– "द्व्यङ्गुलं रुचकं विद्यादङ्गुलं फलमुच्यते। वृन्तं स्यात् त्र्यङ्गुलं मध्ये कुशपत्रस्य लक्षणम्"—इति। आटीमुखमिति[4] आटी जलवर्धनी नाम पक्षिविशेषः, तन्मुखवन्मुखं यस्य तत् आटीमुखं, तथा चोक्तं,—"वृन्तं सप्ताङ्गुलं विद्यात् तस्याग्रे फलमिष्यते। आटीमुखप्रकारं हि फलमङ्गुष्ठमायतम्"—इति। शरारीमुखमिति शरारी दीर्घचञ्चुः पक्षिविशेषः, स द्विविधः धवलस्कन्धः रक्तशीर्षश्च, धवलस्कन्धस्य शरारीति संज्ञा, तन्मुखवन्मुखं यस्य तच्छरारीमुखं, तस्य शस्त्रस्य लोके कर्तरीति[5] संज्ञा; तां च द्वादशाङ्गुलां चलत्पलाशां कुर्यात्। अन्तर्मुखमिति[6] मध्यमुखं, तल्लक्षणमाह,—"अष्टाङ्गुलं प्रमाणेन जिह्वा(ह्म)धारेण चाप्लुतम्। शस्त्रमन्तर्मुखं नाम चन्द्रार्धमिव चोद्गतम्"—इति। त्रिकूर्चकमिति त्रयः कूर्चा यस्य तत् त्रिकूर्चकं, अत्र तन्त्रान्तरम्—"अङ्गुलानि तथाष्टौ च शस्त्रं कार्यं त्रिकूर्चकम्। फलैरन्तर्मुखाकारैरङ्गुलैरन्वितं त्रिभिः॥ एकैकस्य फलस्यैषामन्तरं व्रीहिसम्मितम्। वृन्तं पञ्चाङ्गुलायामं कार्यं रुचकभूषितम्"–इति। कुठारिकेति[7] कुठारतुल्या कुठारिका, "कुठारिकाया वृन्तं स्यात् सार्धसप्ताङ्गुलायतम्। फलमर्धाङ्गुलायामं गोदन्तसदृशं समम्"—इति। व्रीहिमुखमिति[8]

करपत्रम्।



१ वृद्धिपत्रलक्षणं वाग्भटे एवं पठ्यते,—"वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने। ऋज्वग्रमुन्नते शोथे गम्भीरे च तदन्यथा॥ नताग्रं पृष्ठतः–" इति। अवनताग्रवृद्धिपत्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन (स्केलपल) (Scalpel) इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते; प्रयताग्रस्य च वृद्धिपत्रस्य (एब्सेस नाइफ्) (Abscess Knife) इत्याख्येन शस्त्रेण सह सादृश्यमुपलभ्यते॥

प्रयताग्रं वृद्धिपत्रम्।



अवनताग्रं वृद्धिपत्रम्।



२ नखशस्त्रलक्षणं वाग्भटे एवं पठ्यते,–"वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम्॥ सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने"—इति। नखशस्त्रं आंग्लभाषायां (नेल पेरर) (Nail Pairer) इति नाम्ना प्रसिद्धम्॥

३ अर्धधारस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'पेजेट्स नाइफ' (Paget's Knife) इति नाम्ना प्रसिद्धेन शस्त्रेण सह सादृश्यमुपलभ्यते।

४ कुशपत्राटीमुखयोर्लक्षणं वाग्भटे एवं पठ्यते,—"कुशाटीवदने स्नाव्ये द्व्यङ्गुलं स्यात्तयोः फलम्"—इति॥

५ वाग्भटे तु शरार्यास्यं कर्तरी च इति पृथगेव शस्त्रद्वयं पठ्यते। यथा,—"स्नाव्ये शरार्यास्यत्रिकूर्चके" तथा,—"स्नायुसूत्रकचच्छेदे कर्तरी कर्तरीनिभा–" इति। कर्मण्युभयोर्भिन्नमेवोक्तं शरार्यास्यविस्रावणं कर्तर्याश्च छेदनं, अत्रापि शस्त्राणां अष्टविधकर्मणि विषयभेदकथनावसरे "सूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे" इति वाक्येन शरारीमुखस्य विस्रावणमेव कर्मोक्तं, कर्तर्यास्तु कर्म छेदनमेव; तस्मादेतच्छस्त्रद्वयं पृथगेव भवितुमर्हति॥

कर्तरी।



६ अन्तर्मुखलक्षणं वाग्भटे एवं पठ्यते,—"तद्वदन्तर्मुखं तस्य फलमध्यर्धमङ्गुलम्। अर्धचन्द्राननं चैतत्–" इति॥

७ कुठारिकालक्षणं वाग्भटे एवं पठ्यते,–"पृथुः कुठारी गोदन्तसदृशार्धाङ्गुलानना। तयोर्ध्वदण्डया विध्येदुपर्यस्थां स्थितां शिराम्"—इति। कुठारिकाशस्त्रं आङ्ग्लभाषायां 'एक्स् शेप्ड' (Axe-shaped) इति नाम्ना प्रसिद्धम्॥

कुठारिका।



८ व्रीहिमुखलक्षणं वृद्धवाग्भटे एवं पठ्यते,—"व्रीहिमुखं अध्यर्धाङ्गुलफलं मांसलप्रदेशशिराव्यधार्थं वृद्ध्युदरगुल्मविद्रध्यादिव्यधनभेदनार्थं च–" इति। व्रीहिमुखं आङ्ग्लभाषायां 'ट्युकर' (Teocar) इति नाम्ना प्रसिद्धम्॥

व्रीहिमुखम्।



व्रीहिमुखमिव मुखं यस्य तत् व्रीहिमुखं, तत्र भोजः,—"शस्त्रं व्रीहिमुखं कार्यमङ्गुलानि षडायतम् । द्व्यङ्गुलं तस्य वृन्तं स्यात् तत्फलं चतुरङ्गुलम् । तन्मुखं व्रीहिविस्तारं तनुसंगूढकण्टकम्—" इति । आरेति आरेव आरा, आरा चर्मकाराणां शस्त्रम्; अत्र तन्त्रान्तरम्,—"आरा द्व्यष्टाङ्गुलायामा कर्तव्या तु विशाम्पते! । तिलप्रमाणं तु फलं तस्याः कार्यं समाहितम् । दूर्वाङ्कुरपरीणाहं वृन्तं गोपुच्छसन्निभम्—" इति । वेतसपत्रमिति वेतसपत्रमिव वेतसपत्रम्; अत्र भोजः,—"तीक्ष्णमङ्गुलविस्तारं चतुरङ्गुलमायतम् । अङ्गुलानि तु चत्वारि वृन्तं कार्यं विजानता—" इति । बडिशमिति बडिशतुल्यं बडिशं, बडिशं मत्स्यवेधनमाहुः । अत्र तन्त्रान्तरं,—"बडिशे चापि कर्तव्ये प्रमाणेन षडङ्गुले । स्वाननं तु तयोरेकमेकं नात्याननं भवेत् ॥ अर्धपञ्चाङ्गुलं वृन्तं शेषं कार्यं मुखं तयोः । अर्धचन्द्राकृति वक्रं कार्यं नात्याननस्य तु ॥ स्वाननं नामयेत् तत्र बडिशं च भिषग्वरः । वृन्ताग्रयोरन्तरं स्याद् यावदर्धाङ्गुलं मतम् । एवं हि क्रियते एतौ दन्तशङ्कुर्विजानता ॥ शङ्कुवच्च मुखं तस्य कार्यमर्धाङ्गुलायतम् । चतुरस्रं समं चैव तीक्ष्णधारं समाहितम् । वृन्ताग्रं तस्य कर्तव्यं शस्त्रव्रीहिमुखाकृति ॥ कपालिकां शर्करां च दन्तस्थां तेन शोधयेत्"—इति । एषणीति एष्यते अनया इति एषणी, अत्र तन्त्रान्तरं,—"व्रणस्तासां परीणाहो मुखं गण्डूपदाकृति—" ॥ ३ ॥

१ आरालक्षणं वाग्भटे एवं पठ्यते,—"आरार्धाङ्गुलवृत्ता स्यात्तत्प्रवेशा तथोर्ध्वतः । चतुरस्रा तया विध्येच्छोफं पक्कामसंशये ॥ कर्णपालिं च बहुलाम्"—इति । आरा आङ्गलभाषायां 'ऑल लाइक नाइफ' (Owl-like Knife) इति नाम्ना प्रसिद्धा ॥

२ वेतसपत्रस्य संप्रति पाश्चात्यैर्व्यवह्रियमाणेन 'नेरो ब्लेडेड-नाइफ' (Narrow-bladed Knife) इत्याख्येन शस्त्रेण सह सादृश्यं उपलभ्यते ।

वेतसपत्रम् ।



३ बडिशलक्षणं वृद्धवाग्भटे एवं पठ्यते,—"बडिशोऽत्यवनतः सूचीतीक्ष्णाग्रो ग्रहणे गलशुण्डिकार्मादेः"—इति । बडिशशस्त्रं आङ्गलभाषायां 'शार्प हुक्स' (Sharp Hooks) इति नाम्ना प्रसिद्धम् ॥

४ दन्तशङ्कुशस्त्रं वाग्भटे दन्तलेखनकमिति नाम्ना प्रसिद्धम् । तल्लक्षणं च तत्रैवं पठ्यते,—"एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः । दन्तलेखनकं तेन शोधयेद्दन्तशर्कराम्—" इति । दन्तशङ्कुः आङ्गलभाषायां 'टुथपिक' (Tooth-Pick) इति नाम्ना प्रसिद्धः ॥

५ एषणीलक्षणं वाग्भटे एवं पठ्यते,—"गतेरन्वेषणे श्लक्ष्णा गण्डूपदमुखैषिणी । भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा"—इति । एषणीशस्त्रं आङ्गलभाषायां 'शार्पप्रोब्स' (Sharp Probes) इति नाम्ना प्रसिद्धम् ॥

**तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च, वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधाराणि छेदने भेदने च, सूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे, कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूची च, बडिशो दन्तशङ्कुश्चाहरणे, एषण्येषणे आनुलोम्ये च, सूच्यः सीवने; इति अष्टविधे कर्मणि उपयोगः शस्त्राणां व्याख्यातः ॥ ४ ॥**

तेषां विषयभेदमष्टविधकर्मणि दर्शयितुमाह,—तत्र मण्डलाग्रेत्यादि । तत्र तेषु मध्ये स्यातां भवेताम् । चकारः कर्मान्तरं समुच्चिनोति । वृद्धिपत्रेत्यादि । चकाराल्लेखने च । सूची चेति चकारः कुशपत्रोत्पलपत्रकादींश्च व्यधने समुच्चिनोति । ननु, उभयत्रापि एकार्थत्वात् किमर्थं यन्त्रशस्त्रयोर्मध्ये बडिशस्य पाठः? उच्यते, यन्त्रपठितं बडिशं यथायोगपरिणाहदैर्घ्यं, शस्त्रपठितं तु षडङ्गुलमेव तीक्ष्णकण्टकमुखमेवेत्यदोषः । एषणीति आनुलोम्यमत्र विस्रावणमभिप्रेतं, न तु ऋजुकरणं; कस्मात्? ऋजुकरणस्य शस्त्रकर्मसु अनिर्दिष्टत्वात्; यदि कथंचित् स्यात्, तदा शस्त्रकर्मणां नवत्वप्रसङ्गः, तस्मादाद्य एव पक्षो न्याय्य इति; चकारात् व्यधनेऽपि । ननु, एषणी यन्त्रशस्त्रयोः पठ्यते प्रयोजनं च उभयत्रापि एषणमेव, तस्मादुभयपाठे को विशेषः? उच्यते—यन्त्रपठिताया एषण्या आकृतिः गण्डूपदमुखी, प्रमाणं तु यथायोगपरिणाहदैर्घ्यं; शस्त्रेषु पुनरेषण्याः प्रमाणमष्टाङ्गुलं, आकृतिस्तु तीक्ष्णकण्टकयवपत्रमुखी चेत्यदोषः । द्व्यङ्गुलादिभेदेन सूचीनां बहुत्वात् सूच्य इति बहुत्वेन निर्देशः ॥ ४ ॥

**तेषामथ यथायोगग्रहणसमासोपायः कर्मसु वक्ष्यते—तत्र वृद्धिपत्रं वृन्तफलसाधारणे भागे गृहीयाच्छेदनान्येवं सर्वाणि, वृद्धिपत्रं मण्डलाग्रं च किंचिदुत्तानेन पाणिना लेखने बहुशोऽवचार्यं, वृन्ताग्रे विस्रावणानि, विशेषेण बालवृद्धसुकुमारभीरुनारीणां राज्ञां राजपुत्राणां च त्रिकूर्चकेन विस्रावयेत्, तलप्रच्छादितवृन्तमङ्गुष्ठप्रदेशिनीभ्यां व्री-**

६ वाग्भटे तु सर्पवक्रं, शलाका, कर्तरी, सूचीकूर्चः, खजः, कर्णव्यधनं चेति षट् शस्त्राण्यधिकानि पठ्यन्ते, तेषां लक्षणानि क्रमतो यथा,—"सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धाङ्गुलं फले" "ताम्री शलाका द्विमुखी मुखे कुरुबकाकृतिः । लिङ्गनाशं तथा विध्येत्"; "स्नायुसूत्रकचच्छेदे कर्तरी कर्तरीनिभा"; "सर्ववृत्तास्ताश्चतुरङ्गुलाः । कूर्चो वृत्तैकपीठस्थाः सप्ताष्टौ वा सुबन्धनाः ॥ संयोज्यो नीलिकाव्यङ्गकेशशातनकुट्टने"; "अर्धाङ्गुलमुखैर्वृत्तैरष्टाभिः कण्टकैः खजः । पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरदसृक्"; "व्यधनं कर्णपालीनां यूथिकामुकुलाननम्—" इति ॥ कर्तरी आङ्गलभाषायां 'सीज़र्स'—(Scissors) इति नाम्ना प्रसिद्धा ॥

**हिमुखं, कुठारिकां वामहस्तन्यस्तामितरहस्तमध्यमाङ्गुल्या अङ्गुष्ठविष्टब्धया अभिहन्यात्, आराकरपत्रैषण्यो मूले, शेषाणि तु यथायोगं गृह्णीयात् ॥ ५ ॥**

तेषामित्यादि । वृन्तफलसाधारणे भागे इति वृन्तफलयोर्मध्यदेश इत्यर्थः । एवं इत्थमेव यथा वृद्धिपत्रं वृन्तफलयोर्मध्यदेशे गृह्यते तथा भेदनान्यपीत्येवंशब्दार्थः । बहुशः इति बहून् वारान्, सकृदपहरेदित्यस्यापवादः । वृन्ताग्रे वारङ्गाग्रे, ^८^ यादित्यध्याहारः । तलप्रच्छादितवृन्तमिति हस्ततलपिहितवृन्तं, अङ्गुष्ठप्रदेशिनीभ्यां गृह्णीयादित्यध्याहारः । अङ्गुष्ठविष्टब्धया इति अङ्गुष्ठाग्रे विष्टम्भितवेगया । मूलं त्सरु वृंतमिति पर्यायाः । यथायोगमिति योगानतिक्रमेण । तथया—कानिचिद् वृन्ताग्रे, कानिचिद् वृन्तमध्ये, कानिचिद् वृन्तमूले कर्मयोगापेक्षयेत्यर्थः ॥५॥

**तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ ६ ॥**

संक्षेपेण शस्त्राकारं दर्शयन्नाह—तेषां नामभिरित्यादि । तेषां शस्त्राणां, आकृतयः लक्षणानि, नामभिरेव प्रायेण व्याख्याताः ॥ ६ ॥

**तत्र नखशस्त्रैषण्यौ अष्टाङ्गुले । सूच्यो वक्ष्यन्ते । प्रदेशिन्यग्रपर्वप्रदेशप्रमाणा मुद्रिका, दशाङ्गुला शरारीमुखी या सा कर्तरीति कथ्यते । शेषाणि तु षडङ्गुलानि ॥ ७ ॥**

तेषां प्रमाणानि दर्शयन्नाह,—तत्र नखशस्त्रेत्यादि । अन्ये तु नखशस्त्रस्थाने नखवर्धनीति पठन्ति व्याख्यानयन्ति च—नखवर्धनी नखच्छेदनी । सूच्यो वक्ष्यन्त इति अष्टविधशस्त्रकर्माध्याये द्व्यङ्गुला त्र्यङ्गुलेत्यादिना सूच्यो वक्ष्यन्ते इति । एतस्याग्रे मुद्रिकाकर्तरीशस्त्रयोः केचिन्मानं पठन्ति । तदुच्यते,—"प्रदेशिन्यग्रपर्वप्रदेशप्रमाणा मुद्रिका । दशाङ्गुला शरारिमुखी या सा कर्तरीति कथ्यते"—इति । शेषाणीति निर्दिष्टप्रमाणेभ्यो नखवर्धन्येषणीसूचीभ्योऽन्यानि शेषाणि ॥ ७ ॥

**तानि सुग्रहाणि, सुलोहानि, सुधाराणि, सुरूपाणि, सुसमाहितमुखाग्राणि, अकरालानि, चेति शस्त्रसंपत् ॥ ८ ॥**

प्रमाणाकाराभ्यां शस्त्राणि निर्दिश्य शस्त्रगुणसंपदं दर्शयितुमाह—तानि सुग्रहाणीत्यादि । सुग्रहाणि शोभनवारङ्गाणि । सुलोहानि शोभनलोहानि । सुधाराणि शोभनधाराणि । सुसमाहितमुखानि सुष्ठु सम्यक् आहितं मुखं येषां तानि तथोक्तानि । अकरालानि अदन्तुराणि । शस्त्रसंपत् शस्त्रगुणः ॥ ८ ॥

**विपरीत[illegible] कुण्ठं, खण्डं, खरधारं, अतिस्थूलं, [illegible] अतिह्रस्वमित्यष्टौ शस्त्रदोषाः । अतो [illegible]दीत, अन्यत्र करपत्रात्; तद्धि खरध[illegible] भवनार्थम् ॥ ९ ॥**

शस्त्रदोषान्निर्दिशन्नाह[illegible] वक्रमित्यादि । कुण्ठं स्थूलधारत्वेन अरोमवाहि । खण्डं असमग्रम् । खरधारं कर्कशधारम् । अत्यल्पं अतिन्यूनम् । अतो विपरीतमिति वक्रादिशस्त्रेभ्यो विपरीतगुणं, ऋजुतीक्ष्णसकलमसृणधारादिगुणम् । किं सर्वाण्येव विपरीतगुणान्याददीत इत्याह—अन्यत्र करपत्रादिति । कुतः पुनरेतत् ? तद्धीत्यादि ।—तच्छब्दो यस्मादर्थे, ~~हिशब्दो हेतौ~~, यस्मात् करपत्रमस्थिच्छेदनार्थं अतो हेतोः खरधारम् ॥ ९ ॥

**तत्र धारा भेदनानां मासूरी, लेखनानामर्धमासूरी, व्यधनानां विस्रावणानां च कैशिकी, छेदनानामर्धकैशिकीति ॥ १० ॥**

अष्टविधे कर्मणि सुकर्मनिष्पादकत्वेन यथा शस्त्राणां सुधारत्वं भवति तथा निर्दिशन्नाह—तत्र धारेत्यादि । भेदनानां वृद्धिपत्रनखशस्त्रादीनाम् । मासूरी मसूरदलधारातन्वी । लेखनानां मण्डलाग्रादीनाम् । अर्धमासूरी मसूरदलधारार्धतन्वी । व्यधनानां कुठारिकादीनाम् । विस्रावणानां सूचीकुशपत्रादीनाम् । कैशिकी केशप्रमाणा । छेदनानां इति अत्र छेदनानि वृद्धिपत्रादीन्येव तानि यदा छेदने प्रयुज्यन्ते तदा तेषां धारा अर्धकैशिकी अर्धकेशप्रमाणतन्वी कर्तव्या ॥ १० ॥

**बडिशो दन्तशङ्कुश्चानताग्रे । तीक्ष्णकण्टकप्रथमयवपत्रमुख्येषणी गण्डूपदाकारमुखी च ॥ ११ ॥**

आहरणे एषणे च शस्त्राणां धाराविशेषं दर्शयन्नाह,—बडिशं

---

१ अत्राह वाग्भटः,—"छेदभेदनलेख्यार्थं शस्त्रं वृन्तफलान्तरे । तर्जनीमध्यमाङ्गुष्ठैर्गृह्णीयात्सुसमाहितः ॥ विस्रावणानि वृन्ताग्रे तर्जन्यङ्गुष्ठकेन च । तलप्रच्छन्नवृन्ताग्रं ग्राह्यं व्रीहिमुखं मुखे ॥ मूलेष्वाहरणार्थे तु क्रियासौकर्यतो ऽपरम्"—इति ॥

२ मुद्रिकाशस्त्रं वाग्भटे अङ्गुलिशस्त्रमिति नाम्ना पठ्यते । तल्लक्षणं यथा,—"कुर्यादङ्गुलिशस्त्रकम् । मुद्रिकानिर्गतमुखं फले त्वर्धाङ्गुलायतम् । योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम् । सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने—" इति॥

मुद्रिकाशस्त्रम् ।



३ अत्राह वाग्भटः,—"बाहुल्येनाङ्गुलानि षट्" तथा "स्वोन्मानार्धचतुर्थांशफलानि"—इति । बाहुल्येन प्रायेण विशेषप्रमाणानुक्तौ, तानि शस्त्राणि षडङ्गुलानि कार्याणीत्यर्थः; यत्र विशेषप्रमाणमुक्तं तत्र तत्प्रमाणान्येव कार्याणि । स्वोन्मानार्धचतुर्थांशफलानीति स्वं च तदुन्मानं च स्वोन्मानं उन्मानं दैर्घ्यं, तस्मादर्धं चतुर्थांशं वा फलं येषां तानि स्वोन्मानार्धचतुर्थांशफलानि ॥

४ वृद्धवाग्भटे तु "धारा पुनश्छेदनानां मासूरी, लेखनानामर्धमासूरी, व्यधनानां विस्रावणानां च कैशिकी"—इति पठ्यते।

दन्तशङ्कुरित्यादि । अत्र आननाग्रे इति बडिशस्यैव विशेषणं, न दन्तशङ्कोः, कुतः? शङ्कुतुल्यत्वेनैव तस्याननतलदर्शनात् । एषणी त्रिविधा भवति तीक्ष्णकण्टकमुखी, प्रथमयवपत्रमुखी, गण्डूपदाकारमुखी च । अन्ये तु तीक्ष्णकण्टकप्रथमयवपत्रमुखे इति पठन्ति, व्याख्यानयन्ति च—एतद्विशेषणद्वयं बडिशदन्तशङ्क्वोः; तेन तीक्ष्णकण्टकमुखं बडिशं, प्रथमयवपत्रमुखो दन्तशङ्कुः, शङ्कुमुखत्वेन दन्तशङ्कोर्मुखतनुत्वमाकारश्च कथितः, तेन गण्डूपदाकारमुखी चेति चकारादेतद्विशेषणद्वयमेषण्यामपि संबध्नन्ति । अन्ये तु तत्र धारा भेदनानां मासूरीत्यादिग्रन्थं एषणी गण्डूपदाकारमुखी चेति यावन्न पठन्ति ॥ ११ ॥

**तेषां पायना त्रिविधा** ... चापि कर्तव्ये प्रम... **तत्र क्षारपायितं शरशल्यास्थि**... नाल्पानतं भवेत् ... **दकपायितं मांसच्छेदनभेदनपाटनेषु** ... । अर्धचन्द्र... **तं सिराव्यधन-स्नायुच्छेदनेषु ॥ १२ ॥**

तत्र पायनायां तीक्ष्णत्वाद्... यो गुणाः कर्मविशेषोत्कर्षहे[1]तवो भवन्तीति तामाह—तेषां पायनेत्यादि । पायना पातुं प्रयोजना, सा च लौहकाराणां प्रसिद्धा । केचित् क्षारतैलपायनयोरर्थैक्यमाचक्षते ... क्षारादिपायनानां कर्मविशेषविषयं दर्शयन्नाह—तत्र क्षारपायितमित्यादि ॥ १२ ॥

**तेषां निशानार्थं श्लक्ष्णशिला माषवर्णा; धारासंस्थापनार्थं शाल्मलीफलकमिति ॥ १३ ॥**

सुधाराणीति प्रागुक्तं, कथं धारा शोभना कर्तव्या इत्यत्राह,—तेषामित्यादि । धारासंस्थापनार्थं स्थिरीकरणार्थम् । फलकं पट्टकम् । श्लक्ष्णा अकर्कशा । तत्र अनिशितधाराणां निशानार्थं श्लक्ष्णशिला, निशितानां संस्थापनार्थं शाल्मलीफलकम् । अन्ये तु 'तेषां निशानी श्लक्ष्णशिलिका माषयूषप्रभा, धारासंस्थापनं शाल्मलीफलम्' इति पठन्ति, व्याख्यानयन्ति च—श्लक्ष्णशिलिका नापितशिलिका, माषयूषप्रभा कृष्णकपिलेत्यर्थः ॥ १३ ॥

**भवति चात्र ।**

**यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम् ॥**
**सुगृहीतं प्रमाणेन तदा कर्मसु योजयेत् ॥ १४ ॥**

कथं पुनः शस्त्रं संस्थापितधारं ज्ञातव्यमित्याह—भवति चात्रेत्यादि । यदा शस्त्रं रोमच्छेदि भवति तदा सुनिशितं भवति; यावद्रोमाणि न छिनत्ति तावन्निशितव्यमित्यर्थः । सुसंस्थितं शोभनाकारम् । सुगृहीतं ग्रहणं शस्त्राणां प्रागुक्तं, तद्यथा;—"वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयात्"—इत्यादि । प्रमाणेन इति प्रमाणेन लक्षितं, शस्त्रप्रमाणं "तेषां नखशस्त्रैषण्यावष्टाङ्गुले"—इत्यादि । अन्ये तु सुगृहीतं प्रमाणेनेति प्रमाणेन सुगृहीतं इति व्याख्यानयन्ति; तच्च वृद्धिपत्रादिवृन्तफलसाधारणभागादिग्रहणप्रमाणेनेत्यर्थः । केचित् 'रोमच्छेदि' स्थाने 'रोमवाहि'—इति पठन्ति ॥ १४ ॥

**अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलय इति ॥ १५ ॥**

अशस्त्रावचारणीयेषु शिशुप्रभृतिषु अलाभे वा शस्त्राणां तत्कर्मसाधकद्रव्यान्तरेण शस्त्रातिदेशं कुर्वन्नाह—अनुशस्त्राणीत्यादि । अनुशस्त्राणि हीनशस्त्राणि शस्त्रसदृशानि वा । त्वक्सारः वंशः; कुरुविन्दः पाषाणविशेषः, येन निशितानि लोहानि तीक्ष्णानि भवन्ति, अन्ये तु कुरुविन्दं लोहिताश्मरत्नप्रधानम्; गोजी गोजिह्वा, अन्ये शाखोटकमाहुः; शेफालिका रक्तवृन्ता शारदकुसुमा; शाकः महावृक्षः कर्कशपत्रः; पत्रशब्दो गोजीप्रभृतिभिः सह प्रत्येकं संबध्यते; करीरः अङ्कुरः ॥ १५ ॥

**शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत् ॥**
**त्वक्सारादिचतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान् ॥ १६**
**आहार्यच्छेद्यभेद्येषु नखं शक्येषु योजयेत् ॥**
**विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम् ॥ १७**
**ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये ॥**
**गोजीशेफालिकाशाकपत्रैर्विस्रावयेत्तु तान् ॥ १८**
**एष्येष्वेषण्यलाभे तु बालाङ्गुल्यङ्कुरा हिताः ॥**

तेषां विषयमाह—शिशूनामित्यादि । त्वक्सारादिचतुर्वर्गः वंशस्फटिककाचकुरुविन्दानि । आहार्यच्छेद्यभेद्येषु नखं शक्येष्विति आहार्यादिषु नखशक्येषु नखं प्रयोजयेदित्यर्थः । नेत्रवर्त्म नेत्रपक्ष्म । एष्येष्वेषण्यलाभे त्वित्यादि एष्येषु शल्येषु एषण्या अलाभे बालादयो हिताः ॥ १६–१८ ॥—

**शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु ॥**
**कारयेत् करणप्राप्तं कर्मारं कर्मकोविदम् ॥ १९ ॥**

इदानीं शस्त्राणां गुणसंपत्कारणं वक्तुमाह—शस्त्राण्येतानीत्यादि । कारयेत् कर्तुं प्रयोजयेत् । कः कर्तुं प्रयोजयेत्? बुद्धिमान् वैद्य इत्यर्थः । कं? कर्मारं लौहकारम् । किंविशिष्टं लौहकारं? करणप्राप्तं करणे प्राप्तं करणप्राप्तं युक्तं स्वकर्मणि निपुणमित्यर्थः । पुनः किंविशिष्टं? कर्मकोविदं कर्मपण्डितं, यतः स्वकर्मणि निपुणं अतएव च कर्मकोविदम् । कानि कारयेत्? शस्त्राणि । एतानि पूर्वोक्तानि किंभूतानि शस्त्राणि कारयेदित्याह,—शुद्धशैक्यायसानि लिति शुद्धं मलरहितं, शैक्यं तीक्ष्णं; अन्ये तु शैक्यायसानि सारमयलौहघटितानि । केचित् श्लोकार्धमन्यथा पठन्ति;—"कारयेत् करणैः प्रोक्तैः कर्मारैः कर्मकोविदैः"—इति, व्याख्यानयन्ति च—करणैरुपकरणैः, शेषं समम् ॥ १९ ॥

**प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः ॥**
**तस्मात् परिचयं कुर्यात् शस्त्राणामादितः सदा २०**

---

१ 'कर्मविशेषसौकर्यहेतवः' इति पाठान्तरम् ।

२ वाग्भटे शस्त्रसंस्थापनार्थं शस्त्रकोशोऽप्युक्तः । यथा,—"स्यान्नवाङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः । क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ विन्यस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः । शलाकापिहितास्यश्च शस्त्रकोशः सुसंचयः;"—इति ॥

प्रयोगज्ञस्येत्यादि। प्रयोगः प्रकृष्टो योगः, योजनात् । अस्य सिद्धिः आरोग्यसंपादनं, नित्यशः सर्वदा। परिचयः शास्त्रग्रहणाभ्यासः। अन्ये 'प्रमाणज्ञस्य वैद्यस्य—' इति पठन्ति । प्रमाणज्ञस्य शास्त्रग्रहणमानज्ञस्य ॥ २० ॥

इति डल्लनविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने अष्टमोऽध्यायः ।

## नवमोऽध्यायः ।

**अथातो योग्यासूत्रीयमध्यायं व्याख्यास्यामः ॥ १॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २॥**

अथात इति योग्या सम्यक् कर्माभ्यासः, योग्यायाः सूत्रं तद्वियते यस्मिन् स तथा; अन्ये तु योग्याख्यापकं सूत्रं योग्यासूत्रं, तदधिकृत्य कृतोऽध्यायो योग्यासूत्रीयः तं तथा ॥ १ ॥ २ ॥

**अधिगतसर्वशास्त्रार्थमपि शिष्यं योग्यां कारयेत्। स्नेहादिषु छेद्यादिषु च कर्मपथमुपदिशेत्। सुबहुश्रुतोऽप्यकृतयोग्यः कर्मसु अयोग्यो भवति ॥ ३ ॥**

अधिगतेत्यादि । स्नेहादिष्विति आदिशब्दात् स्वेदवमनविरेचनास्थापनानुवासनादीनां ग्रहणं, छेद्यादिष्विति आदिशब्दात् भेद्यादीनां सप्तानां ग्रहणं; यद्यप्यस्मिन् तन्त्रे छेद्यादिकर्मणां प्राधान्यं तथापि छेद्यादिष्वपि प्राक् स्नेहादि प्रयुज्यते इति प्राक् स्नेहादिग्रहणम्; अन्ये 'छेद्यादिषु स्नेहादिषु च' इति पठन्ति । कर्मपथं क्रियामार्गम् । कुतोऽधिगतसर्वशास्त्रार्थमपि शिष्यं योग्यां कारयेदित्याह,—सुबहुश्रुतोऽपीत्यादि । अकृतयोग्यः अकृतकर्माभ्यासः । कर्मसु क्रियासु ॥ ३ ॥

**तत्र पुष्पफलालाबूकालिन्दकत्रपुसैर्वारुककर्कारुकप्रभृतिषु छेद्यविशेषान् दर्शयेत्, उत्कर्तनपरिकर्तनानि चोपदिशेत्; दृतिबस्तिप्रसेवकप्रभृतिषु उदकपङ्कपूर्णेषु भेद्ययोग्याम् ; सरोमणी चर्मणि आतते लेख्यस्य; मृतपशुसिरासु उत्पलनालेषु च वेध्यस्य; घुणोपहतकाष्ठवेणुनलनालीशुष्कालाबूमुखेषु एष्यस्य; पनसबिम्बीबिल्वफलमज्जमृतपशुदन्तेषु आहार्यस्य; मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य; सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्मान्तयोश्च सीव्यस्य; पुस्तमयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धनयोग्यां; (मृदुषु मांसखण्डेषु अग्निक्षारयोग्याम्;) मृदुचर्ममांसपेशीषु उत्पलनालेषु च कर्णसन्धिबन्धयोग्यां; उदकपूर्णघटपार्श्वस्रोतसि अलाबूमुखादिषु च नेत्रप्रणिधानबस्तिपीडनयोग्यामिति ४**

शल्यतन्त्रस्य छेद्यादिकर्मप्राधान्यात् प्राक् छेद्यादियोग्यामुपदर्शयन्नाह,—तत्र पुष्पफलेत्यादि । पुष्पफलं कूष्माण्डः, कालिन्दकः जोन्नलकूष्माण्डभेदः, त्रपुसादयः कर्कटीभेदाः, प्रभृतिग्रहणात् शीर्णवृन्तादीनां ग्रहणम् । छेद्यविशेषानिति गोतीर्थार्धलाङ्गलकप्रभृतीन् । उत्कर्तनं ऊर्ध्वकर्तनं, परिकर्तनं अधश्छेदः । दृतिबस्तीत्यादि दृतिः चर्मपुटकं बस्तिः मूत्रपुटकं, प्रसेवकः चर्मखल्लपुटः, उदकपङ्कमिति उदकं आपः, पङ्कः उदकपङ्कः । सरोम्णीत्यादि—आतते प्रसारिते । पनस इत्यादि पनसः वहिष्कण्टकीमहाफलः 'कटहल' इति लोके; पनसादीनां फलानि तेषां मज्जा । मधूच्छिष्टेति मधूच्छिष्टं मधुसिक्थकम् । शाल्मलीफलके शाल्मलीपट्टके । पुस्तमयेति पुस्तमयपुरुषः वस्त्रादिरचितो मनुष्यः । मृदुमांसेति मांसपेशी मांसवर्तिः । उदकेति नेत्रप्रणिधानं नेत्रप्रवेशनं बस्तिपीडनं च, अनयोर्योग्यां कारयेत्; क्व कारयेत्? उदकपूर्णघटपार्श्वस्रोतसि, न केवलं जलपूर्णघटपार्श्वच्छिद्रे अलाबुमुखादिषु चेत्यर्थः ॥ ४ ॥

भवतश्चात्र ।

**एवमादिषु मेधावी योग्यार्हेषु यथाविधि ॥**
**द्रव्येषु योग्यां कुर्वाणो न प्रमुह्यति कर्मसु ॥ ५ ॥**

भवतश्चात्रेत्यादि । एवमादिष्विति आदिशब्दः प्रकारे, एवंप्रकारेषु । योग्यार्हेषु पुष्पफलादिषु ॥ ५ ॥

**तस्मात् कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्मसु ॥**
**यस्य यत्रेह साधर्म्यं तत्र योग्यां समाचरेत् ॥ ६ ॥**

तस्मादित्यादि । यस्य कर्मणः, यत्र यस्मिन् द्रव्ये, साधर्म्यं साम्यं, तस्य तत्र योग्यां समाचरेदिति । केचिदेवमादिषु मेधावीत्यादिश्लोकस्याग्रे आपातनिकापूर्वं श्लोकमेकं पठन्ति तद्यथा—अनुक्तं योग्याविषयमुपग्रहीतुमाह,—'दृष्टान्तमात्रमुपदिष्टम्—' इत्यादि, स च वर्तमानेषु पुस्तकेषु न पठ्यते इत्यस्माभिरुपेक्षितः ॥ ६ ॥

इति डल्लनविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने नवमोऽध्यायः ।

## दशमोऽध्यायः ।

**अथातो विशिखानुप्रवेशनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

अथात इत्यादि । विशिखात्र कर्ममार्गः, विशिखायाः अनुप्रवेशनं तदधिकृत्य कृतोऽध्यायो विशिखानुप्रवेशनीयः; तं व्याख्यास्यामः ॥ १ ॥ २ ॥

**अधिगततन्त्रेण उपासिततन्त्रार्थेन दृष्टकर्मणा कृतयोग्येन शास्त्रार्थं निगदता राज्ञाज्ञातेन नीचनखरोम्णा शुचिना शुक्लवस्त्रपरिहितेन छत्रवता दण्डहस्तेन सोपानत्केन अनुद्धतवेशेन सुमनसा कल्याणाभिव्याहारेण अकुहकेन बन्धुभूतेन भूतानां सुसहायवता वैद्येन विशिखा अनुप्रवेष्टव्या ॥ ३ ॥**

यादृशस्य वैद्यस्य कर्ममार्गप्रवेशाधिकारस्तादृशं वक्तुमाह,—

वातादिदोषदुष्टरुधिरास्रावणप्रसङ्गागतयोः शृङ्गालाबुकयोरवचारणं दर्शयन्नाह,—तत्र प्रच्छित इत्यादि। वस्तिः मूत्राशयः, पटलं घनं शुभ्रं मर्कटीजालकम्, तनुशब्दस्तु उभयोरपि संबध्यते। अन्ये तु तनुवस्त्रपटलावनद्धेनेति पठन्ति व्याख्यानयन्ति च सूक्ष्मवस्त्रावरणपिहितेन। सान्तर्दीपया मध्यदीपसहितया, शोणितमवसेचयेदिति संबन्धः। केचित् अलाव्ववचारणमन्यथा पठन्ति। तथाहि,—भूर्जपत्रशणतुलानामित्यादि। अयं पाठोऽभावात्समग्रो न लिखितः। शृङ्गालाबुप्रमाणं भाल्लुकिसकाशादवगन्तव्यम्। तथाच तद्वचः,—"विषाणं श्वेतगोरिन्दुचक्रं सप्ताङ्गुलायतम्। क्षिप्तान्तःपिचुपेशीकं योज्यं वातयुतेऽसृजि। अङ्गुष्ठमूलवन्मूले छिद्रमग्रेऽस्य मुद्गवत्"—इति; "अष्टाङ्गुलपरीणाहा चतुरङ्गुलनालसंमिता सुमुखी। कृष्णमृदालिप्ततनुः श्रेष्ठा रक्तावसेचनेऽलावुः—" इति। अन्ये तु शृङ्गालाबुप्रमाणमत्रैव पठन्ति, तथा वातादिदुष्टरक्तलक्षणं च, स पाठोऽस्माभिरभावान्न लिखितः॥ ८॥

**(अथ जलायुका वक्ष्यन्ते।) जलमासामायुरिति जलायुकाः, जलमासामोक इति जलौकसः॥ ९॥**

जलौकसां निरुक्तिमाह,—जलमासामायुरिति। आसां जलौकसां जलमायुरिति जलायुकाः कथ्यन्ते इत्यध्याहारः। निरुक्तिपक्षान्तरमाह,—जलमासामोक इति जलौकसः॥ ९॥

**ता द्वादश; तासां सविषाः षट्, तावत्य एव निर्विषाः॥ १०॥**

इदानीं चिकित्सोपयोगिनीं जलौकसां संख्यां निर्देष्टुमाह,—द्वादशेति। तासामेव सविषनिर्विषभेदाद् द्विविधत्वमाह,—तासामित्यादि। एवशब्दोऽत्र परतन्त्रोक्तसविषाष्टजलौकाशङ्कानिरासार्थम्॥ १०॥

**तत्र सविषाः—कृष्णा, कर्बुरा, अलगर्दा, इन्द्रायुधा, सामुद्रिका, गोचन्दना चेति। तासु अञ्जनचूर्णवर्णा पृथुशिराः कृष्णा; वर्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्बुरा; रोमशा महापार्श्वा कृष्णमुखी अलगर्दा; इन्द्रायुधवत् ऊर्ध्वराजिभिश्चित्रिता इन्द्रायुधा; ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका; गोवृषणवत् अधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति। ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्दिर्मदः सदनमिति लिङ्गानि भवन्ति। तत्र महागदः पानालेपननस्यकर्मादिषु उपयोज्यः। इन्द्रायुधादष्टमसाध्यम्। इत्येताः सविषाः सचिकित्सिता व्याख्याताः॥ ११॥**

सविषाणां पोषणावचारणनिषेधार्थं प्रमादतस्त्ववचारितानां स्वयं वा लग्नानां व्यापचिकित्सार्थं नाम्ना निर्देशं कुर्वन्नाह,—तत्र सविषा इत्यादि। तासामाकृतिं निर्देष्टुमाह,—तास्वञ्जनेत्यादि। अञ्जनं कज्जलं, पृथुशिराः महामस्तकाः। वर्मिमत्स्यः सर्पाकारः, अन्ये रोहितमत्स्यमाहुः; छिन्नोन्नतकुक्षिः इति क्वचिच्छिन्नकुक्षिः क्वचिदुन्नतकुक्षिः। रोमशा इति वलियुक्तत्वात् रोमावततेव प्रतिभाति। इन्द्रायुधं शक्रधनुः, चित्रा विचित्रिता मण्डितेत्यर्थः। विचित्रपुष्पाकृतिचित्रा इति नानासंस्थानधवलविन्दुचित्रा। गोवृषणवदिति वृषभाण्ड इव अधोभागे द्विप्रकारभूताकृतिः। तासां दंशे विषोपद्रवं निर्दिशन्नाह,—ताभिर्दष्ट इत्यादि। अतिमात्रशब्दः कण्ड्वादिभिः सह प्रत्येकं संबध्यते। मदः पूगफलेनेव मत्तता, सदनं अङ्गग्लानिः। तासां दंशविषे चिकित्सां वक्तुमाह—तत्र महागद इति। नस्यकर्मादिष्विति आदिशब्दात् परिषेकावगाहादिषु योज्यः। इन्द्रायुधेति असाध्यं असाधनार्हम्। तद्दंशलिङ्गं असाध्यसर्पदष्टविषवेगविज्ञानवद्वेदितव्यम्; अन्ये तु श्वयथ्वादीनां संपूर्णलिङ्गत्वादरिष्टाद्युपपत्तेर्महागदावचारणेनापि अनुपशान्तेस्तल्लिङ्गज्ञानमित्याहुः॥ ११॥

**अथ निर्विषाः—कपिला, पिङ्गला, शङ्कुमुखी, मूषिका, पुण्डरीकमुखी, सावरिका, चेति। तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला; किंचिद्रक्ता वृत्तकाया पिङ्गाऽऽशुगा च पिङ्गला; यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी; मूषिकाकृतिवर्णा अनिष्टगन्धा च मूषिका; मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी; स्निग्धा पद्मपत्रवर्णा अष्टादशाङ्गुलप्रमाणा सावरिका, सा च पश्वर्थे; इत्येता अविषा व्याख्याताः॥ १२॥**

उपादानार्थं निर्विषाणां नामानि निर्दिशन्नाह,—अथेत्यादि। पिङ्गला कपिला, आशुगा शीघ्रगामिनी। यकृद्वर्णा नीललोहितवर्णा। मूषिकाकृतिवर्णा इति मूषिकाकृतिर्मूषिकवर्णा चेत्यर्थः। पुण्डरीकतुल्यवक्त्रा इति पद्मवद्विस्तीर्णमुखा। सावरिकाया विषयमाह,—सा चेति। पश्वर्थे हस्त्यश्वादीनामर्थे, न पुनर्मनुष्याणाम्॥ १२॥

**तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि; तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति।**

निर्विषाणां प्रशस्तानि क्षेत्राण्याह,—तासामित्यादि। यवनः तुरस्कदेशः, पाण्ड्यः दक्षिणदिग्विभागे यो देशः, ("काम्बोजाद्दक्षभागे तु इन्द्रप्रस्थाच्च पश्चिमे। पाण्ड्यदेशो महेशानि महाशूरत्वकारकः"—इति शक्तिसङ्गमतन्त्रे सप्तमः पटलः।) सह्यः नर्मदायाः पारे पर्वतविशेषः, पौतनः मथुराप्रदेशः। यव-

१ अत्राह वाग्भटः,—"त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशाङ्गुलम्। अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति॥ स्याद्द्वादशाङ्गुलोऽलाबुर्नाहे त्वष्टादशाङ्गुलः। चतुरत्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तः श्लेष्मरक्त इत्—" इति॥

नादिक्षेत्रेषु कीदृशा जलौका भवन्तीत्याह,—तेष्वित्यादि । केचिद् यवनादीनि क्षेत्राणि न पठन्ति । कुतः? सविषाणां सविषकीटादिकोथक्षेत्रत्वान्निर्विषाणां तु पद्मोत्पलादिकोथस्य क्षेत्रत्वादयुक्तं यवनादिक्षेत्रकथनमिति वदन्ति ॥—

**तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः । पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवालकोथजाता विमलेष्वम्भःसु च निर्विषाः ॥ १३ ॥**

**भवति चात्र ।**

**क्षेत्रेषु विचरन्त्येताः सलिलाढ्यसुगन्धिषु ॥**
**न च संकीर्णचारिण्यो न च पङ्केशयाः सुखाः॥१४॥**

इदानीं सविषनिर्विषकोथकलुषजलोत्पन्नानां जलौकसां सविषनिर्विषत्वं दर्शयन्नाह,—तत्र सविषेत्यादि । कोथः पूतिभावः; कलुषेषु मलिनेषु । पद्मोत्पलेति पद्मं ईषच्छुक्लं, उत्पलं ईषन्नीलं, नलीनं ईषद्रक्तं, कुमुदं 'कुइआ' इति लोके, सौगन्धिकं गर्दभपुष्पाभिधानमत्यन्तसुरभि चन्द्रोदयविकाशि, कुवलयः रक्तोत्पलं, पुण्डरीकं अतिश्वेतपद्मं, शैवलं शैवालं, कोथजाताः इति एषां पूतिभावजाताः । इदानीं क्षेत्रसंग्रहश्लोकमाह,—भवति चात्रेत्यादि । एता इति पूर्वोक्ता निर्विषा जलौकाः । सुगन्धिषु शोभनगन्धिषु । न च सङ्कीर्णचारिण्य इति न विषादिविरुद्धाहारभुजः शैवलाद्यशनत्वात्, न च पङ्के स्वपन्ति तृणोदकपत्रशयनत्वात्; सुखा इति सुखहेतुत्वात्, सुखकारिण्य इत्यर्थः ॥१३॥१४॥

**तासां प्रग्रहणमार्द्रचर्मणा अन्यैर्वा प्रयोगैः गृह्णीयात् ॥ १५ ॥**

तासां ग्रहणोपायं दर्शयन्नाह,—तासां प्रग्रहणमित्यादि । ग्रहणं चासां शरत्काले तन्त्रान्तरवचनात् । अन्यैर्वा प्रयोगैः इति सद्योहतजन्तुमांसपेशीनवनीतघृतक्षीराढ्यभक्ताजङ्घाद्यवयवैर्वा १५

**अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात्; भक्ष्यार्थे चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य; शय्यार्थं तृणमौदकानि च पत्राणि; द्व्यहात् त्र्यहात् च आभ्यो अन्यत् जलं भक्ष्यं च दद्यात्; सप्तरात्रात् सप्तरात्राच्च घटमन्यं संक्रामयेत् ॥ १६ ॥**

पोषणं दर्शयन्नाह,—अथैनामिति । आवाप्य प्रक्षिप्य, निदध्यात् स्थापयेत् । वल्लूरं शुष्कमांसम् । संक्रामयेत् संचारयेत् ॥१६॥

**भवति चात्र ।**

**स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः ॥**
**अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः॥१७॥**

तास्वयोग्या निदर्शयन्नाह,—भवति चात्रेत्यादि । परिक्लिष्टाः अन्योऽन्यदर्शनाः, पृथ्व्यः विस्तीर्णाः, मन्दविचेष्टिताः मन्दगामिन्यः, न पूजिताः न श्लाघिताः ॥ १७ ॥

**अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैः यद्यरुजः स्यात् । गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्तस्थिता विगतक्लमा ज्ञात्वा ताभिः रोगं ग्राहयेत् । सूक्ष्मशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमपावृणुयात्; अगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्यात्, शस्त्रपदानि वा कुर्वीत; यदि एवमपि न गृह्णीयात् तदान्यां ग्राहयेत् ॥ १८ ॥**

तासामवचारणमुद्दिशन्नाह,—अथेत्यादि । संवेश्य शाययित्वा, अरुजं अव्रणं, व्रणे तु गन्धक्लेदाभ्यामेव गृह्णन्ति; अथवा रुजावति विरुक्षणेन रुजातिवृद्धिः । सलिलसरकं जलपात्रं; केचित् सलिलसरकस्थाने सरकमध्ये इति पठन्ति, सरकं जलपूर्णपात्रम् । रोगमत्र रोगाधिष्ठानं दोषाधिष्ठानं वा । श्लक्ष्णेति पिचुः तुलं बीजहीनः कार्पासः, प्रोतं वस्त्रं, अपावृणुयात् आच्छादयेत् ॥ १८ ॥

**यदा च निविशतेऽश्वखुरवदाननं कृत्वा उन्नम्य वा स्कन्धं तदा जानीयाद् गृह्णातीति; गृह्णन्तीं च आर्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च ॥ १९ ॥**

रोगाधिष्ठाने तासां ग्रहणलक्षणमाह,—यदेत्यादि । निविशते लगतीत्यर्थः, गृह्णाति विध्यतीत्यर्थः । गृह्णन्तीं इति शोणितमाददानामित्यर्थः । आर्द्रवस्त्रावच्छन्नां इति इत्थं सुखिता शीघ्रं रक्तं पिबति; जलौकास्तु आत्मप्रभावेण प्रागदुष्टमेव रक्तं पिबति यथा दुग्धमिश्रितोदकात् हंसो दुग्धमेव पिबतीत्यर्थः ॥ १९ ॥

**(दंशे) तोदकण्डुप्रादुर्भावैः जानीयात् शुद्धमियमादत्त इति; शुद्धमाददानामपनयेत् । अथ शोणितगन्धेन न मुञ्चेत् मुखमस्याः सैन्धवचूर्णेन अवकिरेत् ॥ २० ॥**

तासां विशुद्धरक्तादाने विज्ञानोपायं दर्शयन्नाह,—तोदेति । तोदः व्यथा, सा धातुक्षयोत्पन्नेन वायुना । ननु, शुद्धरक्तक्षयात् श्लेष्मकार्यं कण्डूरिह न स्यात् इति केचित् कण्डूग्रहणं न कुर्वन्ति; अन्ये तु वदन्ति आग्नेयरक्तधातुक्षयात् कफधातोः सौम्यस्य जलौकामुखक्लेदवर्धितस्य वृद्धेः कण्डूसंभव इति; अन्ये तु दंशतोदकण्डूप्रादुर्भावैरिति पठन्ति व्याख्यानयन्ति च—दंशो वनमक्षिका दंशेन कृतो यस्तोदः तथा तस्मिन् तोदे यादृशी कण्डूः स्यात् तदाशुद्धरक्तादानं जानीयात् । तत्र किं कुर्यादित्याह,—शुद्धमिति । अवकिरेत् अवचूर्णयेत् । अन्ये तु शोणितगर्धेनेति पठन्ति, गर्धेन अभिकाङ्क्षया, वदन्ति च गन्धेनेति अयुक्तः पाठः, कुतः? यस्माज्जलौकसां गन्धेन्द्रियं नास्तीति ॥ २० ॥

---

१ यदाह वाग्भटः,—"संपृक्ताद्दुष्टशुद्धास्राज्जलौका दुष्टशोणितम् । आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव—" इति ॥ वा, सू, स्था, अ, २६, श्लो, ४२।

**अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलिभ्यां शनैःशनैः अनुलोममनुमार्जयेत् आमुखात्, वामयेत् तावत् यावत् सम्यक् वान्तलिङ्गानीति। सम्यग्वान्ता सलिलसरकन्यस्ता भोक्तुकामा सती चरेत्। या सीदती न चेष्टते सा दुर्वान्ता, तां पुनः सम्यग्वामयेत्। दुर्वान्ताया व्याधिरसाध्य इन्द्रमदो (रक्तमदो) नाम भवति। अथ सुवान्तां पूर्ववत् सन्निदध्यात्॥ २१॥**

पातिताया रुधिरापहरणविधानमाह,—अथ पतितामित्यादि। तण्डुलकण्डनं गुण्डनं कणा इत्यर्थः, अनुलोमं अनुकूलं, अनुमार्जयेत् प्रोञ्छयेत्, आमुखात् इति मुखं यावदित्यर्थः। सम्यग्वान्तलिङ्गान्याह,—सम्यगिति। सलिलसरकन्यस्ता जलपूर्णशरावेष्वर्पिता। असम्यग्वान्तलिङ्गान्याह,—या सीदतीति। सीदति निमज्जति। दुर्वान्तावचाराद्व्याधिविशेषमाह,—दुर्वान्ताया इति। अस्य तु व्याधेः शास्त्रे लक्षणानिर्देशान्न पठनीय इत्येके। अथ सुवान्ता किं कार्येत्याह,—अथ सुवान्तामिति पूर्ववत् इति यथा नवे महति घटे इत्यादौ॥ २१॥

**शोणितस्य च योगायोगान् अवेक्ष्य जलौकोव्रणान् मधुनावघट्टयेत्, शीताभिरद्भिश्च परिषेचयेद्बध्नीत वा, कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति॥ २२॥**

शोणितावसेचने उत्तरकर्माणि निर्दिशन्नाह,—शोणितस्येत्यादि। योगः सम्यक्स्रुतिः, अयोगः योगादन्यः; स त्रिविधो हीनातिमिथ्यायोगभेदात्। तत्र योगे शतधौतघृताभ्यङ्गः, शतधौतघृताक्तपिचुधारणं वा। हीनयोगे किं कुर्यादित्याह,—जलौक इति। अवघट्टयेत् चालयेत्, स्रावणार्थम्। अतियोगे किं कुर्यादित्याह,—शीताभिरद्भिश्च परिषेचयेद्बध्नीत वेति शीतलजलपरिषेचनं बन्धनं च जलौकोमुखपदस्य रक्तस्थित्यर्थम्। मिथ्यायोगे उपक्रममाह,—कषायेति। प्रदिह्यात् लिम्पेत्। अत्र कषायप्रदेहः शेषदुष्टरक्तप्रसादार्थं, मधुरैः प्रदेहः स्रुतादुष्टरक्तबन्धनार्थं; अन्ये तु मूर्च्छाद्युपद्रवपरिहारार्थं शीतलजलसेकः, मधुनावघट्टनं कषायादिलेपनं च सन्धानार्थमिति व्याख्यानयन्ति। शोणितस्रावणमपि पुरुषबलप्रमाणाद्दोषबलप्रमाणाद्वा वातादिजनितव्याधिबलप्रमाणाद्वा यावत् शोणितस्य सम्यक्शुद्धिर्भवति तावद्वा रोगाशयं वा समीक्ष्य। तद्यथा –, अल्पीयसि रोगाशये अल्पं रक्तमाहरणीयं महति पुनर्बह्विति। रक्तमोक्षणं च पलादिमानेन, पलं चात्र पक्वसप्तगुञ्जाफलप्रमाणमाषकेण; तान्यपि चार्धत्रयोदशपलानि प्रस्थः; रक्तप्रस्थश्चैकैकस्यां सिरायां मोक्षणीयः; तदपि द्वाभ्यां दिवसाभ्यां; प्रस्थश्चात्र उत्तममात्रा, मध्यमा मात्रा अर्धप्रस्थः, अर्धप्रस्थश्चात्र कर्षाधिकषट्पलानि, एतदपि द्वाभ्यामहोभ्यां स्रावणीयं; अधममात्रा कुडवं, कुडवश्चात्र अष्टमाषाधिकानि त्रीणि पलानि; इदमपि दिनद्वयेन मोक्षणीयं; इति प्रसिद्धः कर्ममार्गः॥ २२॥

भवति चात्र।

**क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम्॥**
**जलौकसां च यो वेत्ति तत्साध्यान् स जयेद्गदान् २३**

इदानीं संग्रहश्लोकमाह,—भवति चात्रेत्यादि। क्षेत्राणि इति सविषाणां क्षेत्राणि तत्र सविषकीटेत्यादि, निर्विषाणां पद्मोत्पलपत्रेत्यादि। ग्रहणमिति तासां ग्रहणमार्द्रचर्मणेत्यादि। जातयः सविषाणां कृष्णकर्बुरेत्यादि; निर्विषाणां कपिला पिङ्गलेत्यादि। पोषणमिति नवे महति घटे इत्यादि। अवचारणमिति अथ जलौकोऽवसेकसाध्यमित्यादि, चकारात् पश्चात् कर्मादि॥ २३॥

इति डल्लनविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने त्रयोदशोऽध्यायः।

## चतुर्दशोऽध्यायः।

**अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः॥ १॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥ २॥**

अथात इत्यादि॥ १॥ २॥

**तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्यस्य अष्टविधवीर्यस्य वाऽनेकगुणस्योपयुक्तस्याहारस्य सम्यक् परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते; तस्य च हृदयं स्थानं; स हृदयात् चतुर्विंशतिधमनीरनुप्रविश्य ऊर्ध्वगा दश दश चाधोगामिन्यश्चतस्रश्च तिर्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्धयति धारयति यापयति च अदृष्टहेतुकेन कर्मणा। तस्य शरीरमनुसरतोऽनुमानात् गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः। तस्मिन् सर्वशरीरावयवदोषधातुमलाशयानुसारिणि रसे जिज्ञासा–किमयं सौम्यस्तैजस? इति। अत्र उच्यते, स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते ३**

शोणितोत्पत्ते रसाधीनत्वात् रसमेव दर्शयन्नाह,—तत्रेत्यादि। इत्थंभूतस्याहारस्य यः सारः स रस इत्युच्यते इति पिण्डार्थः। पाञ्चभौतिकस्य इति पृथिव्यादिभूतद्रव्यभेदेन, चतुर्विधस्य इति पेयलेह्यभोज्यभक्ष्यभेदेन, षड्रसस्य इति मधुरादिरसभेदेन, द्विविधवीर्यस्य इति शीतोष्णवीर्यभेदेन, पक्षान्तरमाह,—अष्टविधवीर्यस्य वा इति शीतोष्णस्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णभेदेन, अनेकगुणस्य इति शीतादिद्रवादिगुणभेदेन विंशतिगुणस्य, उपयुक्तस्य इति सम्यक्परिणतस्येत्यनेनैवोपयुक्तपदार्थस्य लब्धत्वात् यदुपयुक्तग्रहणं करोति तत्सम्यग्योगं स्वास्थ्यवृत्तीयद्वादशविधाशनविचारमपेक्ष्योपयोगं प्रापयति। तेजोभूतः इति तेजसा

भूतः तेजोभूतः वह्निसंभूत इत्यर्थः; अन्ये तु तेजःशब्देन घृतमाहुः, तत्र तेजोभूतो घृतवदुत्पन्न इत्यर्थः; अन्ये तु वदन्ति भूतशब्दोऽत्र उपमानार्थः, तत्र तेजोभूतः घृताकार इत्यर्थः । सार इति विडादिमलरहित इत्यर्थः. परमसूक्ष्मः इति अतिशयेन अ-स्थूलावयवसूक्ष्मस्रोतोऽनुसारी इत्यर्थः । रसस्य स्थानमाह,—त-स्येत्यादि । रसस्य सर्वदेहानुसारित्वेऽपि हृदयं स्थानम् । हृदय-शब्देनात्र हृदयोपलक्षितः प्रदेश उच्यते, न तु साक्षात् हृदयं, कुतः? हृदयस्यौजःस्थानत्वात् । रसस्य क्रियां निर्दिशन्नाह,—स हृदयादिति । तर्पयति बालमध्यस्थविरान् सर्वानेव प्रीणयति, अन्ये गर्भं तर्पयतीति मन्यन्ते, तस्याहारासंभवात्; वर्धयतीति बालं; धारयतीति मध्यवयसं पूर्णधातुत्वात्, केचित् धारयती-त्यत्र जीवयतीति पठन्ति, अत्रापि स एवार्थः; यापयतीति वृद्धं क्षीयमाणदेहत्वात् । केचिदत्र स हृदयाच्चेत्यादि पाठं चतस्रश्च तिर्यग्गा इत्यन्तं न पठन्ति, कृत्स्नं शरीरमित्यादि च पठन्ति । कुतः पुनरयं तर्पणादि करोतीति पृष्ट आह,—अदृष्टहेतुकेनेति । तस्य शरीरमित्यादि—तस्य इति रसस्य । अनुसरतः अनुग-च्छतः । क्षयवृद्धिवैकृतैः इति वैकृतं विकारः । क्षयविकारैः 'रस-क्षये हृत्पीडाकम्प' इत्यादिभिः, वृद्धिविकारैः हृदयोत्क्लेदमित्या-दिभिः, तत्र क्षयवृद्धिविकारैर्विकृतस्य; क्षयवृद्धिवैकृतैश्चेति च-कारो द्रष्टव्यः, तेन सर्वशरीरतर्पणादिभिश्चाविकृतस्य गतिरनुम-न्तव्येत्यर्थः । रसस्वभावं विनिर्देष्टुमाह,—तस्मिन्नित्यादि । पूर्वोक्ते रसे जिज्ञासा ज्ञातुमिच्छा । किमयं सौम्यः कफवत्, अथवा तैजसः पित्तवत्? इति संशयः इति पिण्डार्थः । अत्रोच्यते इति । अनुसारी अनुसरणशीलः । स्नेहनः स्नेहयतीति, जीवनः जीवयतीति, तर्पणः प्रीणनः शरीरस्य, आदिशब्दादवष्टम्भनादयः । विशेषैः भेदैः, अवगम्यते अवबुध्यते ॥ ३ ॥

**स खलु आप्यो रसो यकृत्प्लीहानौ प्राप्य राग-मुपैति ॥ ४ ॥**

इदानीं क्रमनिष्पत्त्या शोणितं दर्शयन्नाह,—स खल्वित्यादि । खलुशब्दोऽप्यर्थः । आप्योऽपि रसो रागमुपैति लोहितत्वं गच्छति ।

**भवतश्चात्र ।**

**रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् ॥**
**अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥ ५ ॥**

तमेवार्थं श्लोकेन स्पष्टीकुर्वन्नाह,—भवतश्चात्रेत्यादि । तेजसा रञ्जकनाम्ना, अव्यापन्ना एवंगुणविशिष्टा आपो रञ्जिता लोहिती-कृताः सत्यो रक्तमित्युच्यते । आपोऽत्र रसः ॥ ४—५ ॥

**रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्तते ॥**
**तद्वर्षाद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ६ ॥**

रक्तार्तवयोरभेदं दर्शयन्नाह,—रसादेवेति । रजःसंज्ञं इति संज्ञान्तरमेतत् स्त्रीयोनिप्रवृत्तस्य रक्तस्य, ऋतुकालजरक्तमेव रजः-संज्ञमुच्यते इत्यर्थः । तद्वर्षाद्द्वादशादूर्ध्वमिति तद्रजःसंज्ञं शोणितं द्वादशवर्षादनन्तरं प्रवर्तते इति संबंधः । तस्य निवृत्तिकालमाह,—याति पञ्चाशतः क्षयमिति । "रसादेव रजः स्त्रीणां मासि मासि त्र्यहं स्रवेत् । तद्वर्षाद् द्वादशादूर्ध्वं यावत् पञ्चाशतं समाः"—इत्यन्ये पठन्ति । समाः वर्षाणि ॥ ६ ॥

**आर्तवं शोणितं तु आग्नेयमग्नीषोमीयत्वाद्ग-र्भस्य ॥ ७ ॥**

रक्तार्तवयोः सौम्यरससंभूतयोरपि स्वभावभेदं दर्शयन्नाह,—आर्तवमित्यादि । तुशब्दोऽत्र भेदे, तेन रसात् सौम्याज्जातमपि आर्तवं शोणितं च आग्नेयम् । कुतः कारणादित्याह,—अग्नीषो-मीयत्वाद्गर्भस्येति आर्तवमाग्नेयं शुक्रं सौम्यं ताभ्यामग्नीषोमीयो गर्भो भवति । यदि अग्नीषोमीयत्वाद् गर्भस्येत्यत्र आर्तव-शोणितयोः स्वभावाभेदः, तदाऽऽर्तवस्याग्नेयत्वे उक्ते शोणित-स्यापि आग्नेयत्वमुक्तमेवेति 'आर्तवशोणितं त्वाग्नेयं'—इत्यन्ये प-ठन्ति । आर्तवं च तत् शोणितं चेति तत् आर्तवशोणितम् । तु-शब्दोऽत्रावधारणे । तेनार्तवस्याग्नेयत्वमवधारयतीति व्याख्यान-यन्ति । रक्तं पुनरनुष्णाशीतमेवं आचार्या न मन्यन्ते ॥ ७ ॥

**पाञ्चभौतिकं त्वपरे जीवरक्तमाहुराचार्याः ॥ ८ ॥**

शोणितस्वभावे मतान्तरमाह,—पाञ्चभौतिकमिति । जीवरक्तं जीवतुल्यं रक्तम् । कुतः? जीवच्छरीरे रक्तदर्शनात्, मृत-शरीरे चादर्शनात्; ननु जीवरक्तमोज इति एवं प्रस्तुतस्यैव रक्तस्य लक्षणमनुक्तं स्यात् ॥ ८ ॥

**विस्रता द्रवता रागः स्पन्दनं लघुता तथा ॥**
**भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते ॥ ९ ॥**

तदेव पाञ्चभौतिकत्वं सुखबोधार्थं स्पष्टयितुमाह,—विस्रते-त्यादि । विस्रता आमगन्धिता, भूमिगुणः; द्रवता द्रवभावः, अयमम्बुगुणः; रागः रक्तता, तेजोगुणः; स्पन्दनं किंचिच्चलनं वातगुणः; लघुता अगुरुत्वं, आकाशगुणः । भूम्यादीनामिति अत्र आदिशब्देन तेजोवाय्वाकाशा गृह्यन्ते । हि यस्मादर्थे, यस्मादेते विस्रतादयः पृथिव्यादीनां गुणा अत्र शोणिते दृश्यन्ते तस्माद्रक्तं पाञ्चभौतिकमिति ॥ ९ ॥

**रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते ॥**
**मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रं तु जायते ॥ १० ॥**

---

१ पोष्यस्य धातुरसस्यैव हृदयं स्थानं नतु पोषकस्याहाररसस्य, तस्य तु धमन्य एव स्थानं, यदाह चक्रः,—"तत् स्थानं तु धमन्य एव; पोषकाहारस्य च पृथक् रसादिधातुभ्यः प्रदेशान्तरग्रहणं न क्रियते, रसादिकारणरूपतया रसादिग्रहणेनैव तद्ग्रहणात्—" इति ।

२ तत्र पाकजन्यैः प्रसादांशैर्येन क्रमेण ये ये जन्यन्ते तानाह—र-सादित्यादि । प्रसादज इत्यस्य लिङ्गविपरिणामेन रक्तमित्यादिषु सर्वत्र संबन्धः । प्रसादजश्च सारभागः । तेन रसाद्रक्तं प्रसादजम्, ततो रक्तान्मांसं प्रसादजम्, मांसाच्च मेदः प्रसादजमित्यादि योज्यम् । रसाद्रक्तं प्रसादजमिति रसात् पाकेन जायते यः प्रसादांशस्तस्मा-द्रक्तं जायते; एवं रक्तात् पाकेन जायते यः प्रसादांशस्तस्माच्च मांसं जायत इत्यादि व्याख्येयम् । जनिश्चायं पोषण एव वर्तते नापू-

शोणितप्रसङ्गेन अन्येषामपि धातूनां क्रमेणोत्पत्तिं दर्शयन्नाह,—रसाद्रक्तमित्यादि । स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैतीत्यनेनैव रसादेव रक्तस्य भवने उक्ते रसात् पुनः शोणितभवनवचनं नियमार्थम् । तेन रसात् क्रमोत्पत्त्या शोणितमेव भवति नापरे धातव इति । एतेन युगपदेव सर्वधातुषु रससंचारात् रसेनैव सर्वधातुपोषणमिति तन्त्रान्तरीयं वचो निरस्तम् । ननु, यदि परिणमन्ति रसादयो रक्तादिभावेन तर्हि सर्वेषामुच्छेदः स्यात्? सन्तत्या परिणाम इति चेत्? तर्हि सर्वेषां पूर्वेषामल्पता स्यात् उत्तरेषां बाहुल्यमिति? नैतदस्ति, तेषां रसादीनां मलस्थूलाणुभागविशेषेण त्रिविधः परिणामो भवति; तद्यथा—अन्नात् पच्यमानात् विण्मूत्रं मलः, मलात् सारो रसः; रसादग्निपक्वात् मलः कफः, स्थूलो भागो रसः, अणुभागो रक्तं; रक्तादग्निपक्वात् मलः पित्तं, स्थूलभागः शोणितं, अणुभागस्तु मांसमिति; ततोऽपि आत्मपावकपच्यमानान्मलः श्रोत्रनासाक्षिप्रजननादिस्रोतो-

---

वोत्पादे; यतो रक्तादयो गर्भात् प्रभृत्येव उत्पन्ना रसादिभिः पोष्यन्ते । अन्ये तु गर्भप्रसादजमिति पठित्वा गर्भप्रसादजमिति समस्तपदेन ओज आचक्षते । अस्मिंस्तु पक्षे प्रसादजशब्दस्य न सर्वत्रान्वयः । ननु, "पुष्यन्ति त्वाहाररसात्—"इत्यादिना चरके रसेन रसपोषणमुक्तं, अत्र तु रसाद्रक्तमित्यादिना रसेन रक्तपोषणमुच्यत इति विरोधः । नैवम्, एक एवायमाहाररसो द्विप्रस्थानः पोष्यपोषकभेदेन; तत्रान्नपानादुत्पन्नो रसः पोषकः, रक्तादिवत् स्थायी यः स पोष्यः, तस्यैव हृदवस्थानमुक्तम् । (पोषकाहाररसस्य तु धमन्य एव स्थानं) अतएव पोष्यस्थायिरसव्यवच्छेदार्थमाहारेति रसविशेषणमुक्तं चरकेण । यत्तु रसाद्रक्तमित्यादिवचनं तद्रसत्वेनाभेदविवक्षया रसं परित्यज्य रक्तमेव पठितं, न तु पोष्यस्य रसाख्यधातोरभावादिति । न चैवमष्टधातुकत्वं शरीरस्येति वाच्यम्; यतः स्थायिरसभागपोषकरसभागयोः स्थानभेदाग्निभेदाद्यभावादेकत्वमेवेति सप्तधातुकमेव शरीरमित्युच्यत इति । अत्र च रसाद्रक्ताद्युत्पादे केचिदिदं वदन्ति—यद्रसोऽग्निपच्यमानः सर्वात्मना रक्ततां याति रक्तं च मांसतामित्यादि पूर्वपूर्वधातुपरिणामेन उत्तरोत्तरधातूत्पादः, यथा—सर्वात्मना क्षीराद्दधि भवति दध्नो नवनीतं नवनीताद्घृतं घृताच्च घृतमण्ड इत्येकः पक्षः । किंवा रस एव रक्तं प्रथमं प्लावयति, तत्र रक्तस्थानसंबन्धात् रक्तसादृश्यं रक्तव्यपदेशं चानुभवति, रक्तं च रक्तसमानेन स्तोकेनांशेनास्रं पोषयति, ततो रक्तमाप्लाव्य मांसमाप्लावयति तत्रापि, मांससमानेनांशेन मांसपोषणं करोति मांससादृश्यं मांसशब्दाभिधेयतां चानुभवति, एवमुत्तरोत्तरधातून् रस एव प्लावयति, यथा—केदारनिषिक्तं कुल्याजलं प्रत्यासन्नां केदारीमाप्लावयतीति द्वितीयः पक्षः; एतदेवोक्तं हारीते यत्,—"रसः सप्ताहादर्वाक् परिवर्तमानः श्वेतकपोतहरितहारिद्रपद्मकिंशुकालक्तकरसप्रख्यश्चायं यथाक्रमं दिवसपरिवर्ताद्वर्णपरिवर्तमापद्यमानः पित्तोष्मोपरागाच्छोणितत्वमापद्यते—" इति, तथा सुश्रुतेऽपि,—"तत्रैषां धातूनाम्—" इत्यादिना तथा "स खलु त्रीणि त्रीणि—" (सु. सू. स्था. अ. १४) इत्यादिना रसेनैव रक्तादिधातुपोषणमनेन न्यायेनोक्तम्; किंवा आहाररस उत्पन्नो भिन्नैरेव मार्गैः स्थायिरसरुधिरमांसादीन् रसरुधिरादिसमानांशेन तर्पयति, तत्र यः प्रत्यासन्नो धातुस्तत्पोषको भागस्तच्छीघ्रं पुष्णाति, यस्तु विदूरधातुस्तस्य सूक्ष्मविदूरमार्गतया चिरेण पोषणं भवति, एवं भिन्नैरपि मार्गैर्धातुपोषणं भवति, तेन रक्तपोषणकालादुत्तरकालं मांसपोषको रसभागो मांसं पोषयति, तथा मांसपोषणकालादुत्तरकालं मेदःपोषको रसभागो मेदः पोषयतीत्यादि, तेन रसाद्रक्तमित्यादिवचनस्यायमर्थो यत्—रसपुष्टिकालादुत्तरकालं रक्तं प्रवर्तते रक्तपुष्टिकालादुत्तरकालं मांसं प्रवर्तत इत्यादि; अस्मिंस्तु पक्षे—"विण्मूत्रमाहारमलः सारः प्रागीरितो रसः । स तु व्यानेन निक्षिप्तः सर्वान् धातून् प्रतर्पयेत्"—इत्यादिवचनं मुख्यार्थमेव घटते; तेन यथा खले उपचितानां कपोतानां भिन्नदिग्गामिनां स्वीयस्वीयमार्गेणैव गच्छतां गम्यदेशस्य प्रत्यासन्नत्वविप्रकृष्टत्वादिभेदेन शीघ्रं चिरेण गमनं भवति तद्वत्; इति क्षीरदधिन्यायकेदारीकुल्यान्यायखलेकपोतन्यायात्त्रिधा धातुपोषणक्रमः । तत्र एतेषु पक्षेषु सर्वात्मपरिणामे त्रिचतुरोपवासेनैव देहस्य नीरसत्वं स्यात्, मासोपवासाच्च शुक्रमयं शरीरं स्यादित्युपेक्षणीय एव प्रथमः पक्षः । केदारीकुल्यान्यायपक्षे तु रसाद्रक्तादिपोषणं मुख्यार्थतया भवति, यदपि रक्तादेर्मांसादिपोषणं तदपि रसादेव रक्तादिधर्मतया रक्तादिव्यपदेशभाजो भवतीति व्युत्पादितमेव, यत्तु रसस्य सर्वधातुपोषकत्वमुक्तं तदपि रक्तादिपोषकतया तथा हृदयस्थस्थायिरसस्य कृत्स्नदेहव्यापकतया वोपपन्नम्; एवं चरकेऽप्युक्तम्;—"व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा । युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा—" (च. चि. स्था. अ. १७) इत्यादि । तदप्युक्तन्यायात् एवोपपन्नं; यदपि मांसादिना समानेन मांसादेरेव पोषणं तदपि धात्वाप्लावनन्यायेन गच्छतापि रसेन तद्धातुसमानेनांशेन तद्धातुपोषणादुपपन्नम् । वृष्यं तु प्रभावात् यथा खले कपोतन्यायेन विदूरमपि शुक्रं प्रभावात् शीघ्रं याति तथात्रापि शीघ्रमेव वृष्योत्पन्नो रसो रक्तादिधातून् शीघ्रमाप्लावयतीति सुघटम् । एवमनया दिशाप्यत्र दूषणमुद्धार्यम् । तेनायं पक्षस्तावत् साधुः । खलेकपोतपक्षेऽपि यथा रसाद्रक्तमित्यादि गौणतया भवति तद्दर्शितमेव । यत्तु चरके "रक्तं विबद्धमार्गत्वान्मांसादीन् न प्रपद्यते"—इत्युक्तं तत् कृत्स्नदेहचारिशोणिताभिप्रायेण, न तु पोषकरक्ताभिप्रायेणेति व्यवस्थाप्यते । यत्तु "एकैकस्मिन् धातौ त्रीणि त्रीणि"—इत्यादिना धातौ अवस्थानकाल उक्तः स पूर्वपूर्वरक्तादिधातुलङ्घनकालो विदूरगामिरसस्येति व्यवस्थाप्यते । एवमनयोः पक्षयोर्महाजनपरिगृहीतयोर्गतिरुपदर्शिता; स्वरसस्तु अस्माकं केदारीकुल्यान्याये । यत्तु अन्यैः खलेकपोतन्यायस्वीकारेण चरके संततज्वरस्य द्वादशाश्रयत्वं युक्तमित्याद्युक्तं तन्न बुद्ध्यामहे, सन्ततज्वरस्य द्वादशाश्रयत्वं दोषमहिम्ना कृत्स्नदेहव्यापकतया "यथा धातुं तथा मूत्रं पुरीषं चानिलादयः"—(च. चि. स्था. अ. ३) इत्यादिनोक्तम् । दोषाणां च कुपितानां संप्राप्तिविशेषात् किमगम्यमस्ति देहे येन तावद्रसमेव परं सर्वधात्वादिव्यापकं सर्वधातुदूषणेऽपेक्षन्त इति ॥ इति शिवदासव्याख्या ।

मलः, स्थूलो भागो मांसं, सूक्ष्मो मेदः; ततोऽपि निजवह्निपच्यमानान्मलः स्वेदः, स्थूलांशो मेद एव, सूक्ष्मभागोऽस्थि; ततोऽपि पच्यमानान्मलः केशलोमश्मश्रूणि, स्थूलोऽस्थि, सूक्ष्मस्तु मज्जा; ततोऽपि मज्ज्ञः पावकपच्यमानान्मलो नयनपुरीषत्वचां स्नेहः, स्थूलो भागो मज्जा, सूक्ष्मः शुक्रं; ततः पुनः पच्यमानादत्र मलो नोत्पद्यते सहस्रधाध्मातसुवर्णवत्, स्थूलो भागः शुक्रमेव, स्नेहभागः सूक्ष्मस्तेजोभूतं ओजः। पूर्वोक्त एवार्थः श्लोकाभ्यां कथ्यते, —"स्थूलसूक्ष्ममलैः सर्वे भिद्यन्ते धातवस्त्रिधा। स्वः स्थूलोऽशः परं सूक्ष्मस्तन्मलं याति तन्मलः। स्वाग्निभिः पच्यमानेषु मलः षट्सु रसादिषु। न शुक्रे पच्यमानेऽपि हेमनीवाक्षये मलः"— इति। आकृष्टाण्डकोषस्य पुंसः श्मश्रुपातात् श्मश्रु शुक्रमल इत्येके। तन्न, श्मश्रुहीनस्यापि शुक्रदर्शनात्। ननु, मांसान्मेदः प्रजायते इत्यनर्थकं, मज्ज्ञः शुक्रं तु जायते इत्येतेनैव क्रियापदेन प्रजायत इत्यस्यार्थस्य लब्धत्वात्। सत्यं, प्रजायते इति क्रियापदं रसादीनां मेदःपर्यन्तानां विशिष्टकार्योत्पाददर्शनार्थम्। एभ्य एवोपधातवः स्वभावादुत्पद्यन्ते न पुनरस्थ्यादिभ्यः इति। तथाहि,

रसात् स्तन्यमार्तवं च, रक्तात् कण्डराः, मांसाद्वसा त्वचः, मेदसः स्नायुसन्धीति। शुक्रं तु जायते इति द्वितीयजायते ग्रहणेन शुक्रे विशिष्टधर्मवत्ता उक्ता इति पठन्ति व्याख्यानयन्ति च। संभवशब्दोऽत्र पोषणे न तु अपूर्वोत्पादने, यतो रसादीनां शुक्रान्तानां गर्भादेवोत्पत्तिरिति। शुक्रं हि स्वाग्निपच्यमानमपि नाणुभागमुत्पादयति। अन्ये तु मेदः प्रजायते इत्यत्र प्रवर्तते इति पठन्ति, शुक्रं तु जायते इत्यत्र संभव इति ॥ १० ॥

**तत्रैषां धातूनामन्नपानरसः प्रीणयिता ॥ ११ ॥**
**रसजं पुरुषं विद्याद्रसं रक्षेत् प्रयत्नतः ॥**
**अन्नात् पानाच्च मतिमानाचाराच्चाप्यतन्द्रितः १२**

रसस्य निर्दिष्टस्य प्राधान्यं दर्शयितुमाह,—तत्रैषामित्यादि। तत्र तेषु धातुषु मध्ये। एतेषां धातूनां प्रागुक्तानां रक्तादीनाम्। अन्नपानरसः अन्नपानस्य सारः। प्रीणयिता तर्पयितेत्यर्थः ११,१२

**तत्र 'रस' गतौ, धातुः अहरहः गच्छतीत्यतो रसः ॥ १३ ॥**

रसस्यैव निरुक्तिमाह,—तत्र रसगतावित्यादि ॥ १३ ॥

**स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धातौ अवतिष्ठते; एवं मासेन रसः शुक्रीभवति स्त्रीणां च आर्त्तवम् ॥ १४ ॥**

**भवति चात्र ।**

**अष्टादशसहस्राणि सङ्ख्या ह्यस्मिन् समुच्चये ॥**
**कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः ॥ १५ ॥**

रसधातुर्धात्वन्तराणां स्वभावं जनयन् एकैकस्मिन् धातौ कियन्तं कालमवतिष्ठत इत्याह,—स खल्वित्यादि। अवतिष्ठते अवस्थितिं करोतीत्यर्थः, परिणामं गच्छन्नेव तिष्ठति पच्यमानस्थालीतण्डुलवत्, न पुनरस्य गमननिवृत्तिः। त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला इति अस्यार्थः—रसः किलैकाहेनैव संपद्यते

१ यदाह चरकः,—"किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः। पित्तं मांसस्य खमला मलः स्वेदस्तु मेदसः ॥ स्यात्किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट्त्वचाम्"—इति ॥

यदाह चरकः,—

२ **"रसात् स्तन्यं तथा रक्तमसृजः कण्डराः शिराः ॥ मांसाद्वसा त्वचः षट् च मेदसः स्नायुसन्धयः।"—इति** "संप्रति प्रसादजन्यानां धातूनामभिधाय उपधातूनामप्याह—रसादित्यादि। अत्रापि रसात् स्तन्यं प्रसादजमित्यादि योज्यम्। रक्तमिति स्त्रीणां रजःसंज्ञं रक्तमप्युपधातुरूपं रसादेव रक्तं प्रसादभागजन्यमित्यर्थः। उक्तं च सुश्रुते,—"रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्तते" (सु. सू. स्था. अ १४) इति। एतच्च रजोरूपं रक्तं रसजन्यमपि धातुशोणितवत् न शीघ्रं जायते, किंतु शुक्रवन्मासेनैव। तदुक्तं सुश्रुते,—"एवं मासेन रसः शुक्रीभवति स्त्रीणां च आर्तवम्—"इति। अन्ये तु—"घृतकुम्भो यथैवाग्निमाश्रितः प्रविलीयते। विसर्पत्यार्तवं पुंसां तथा स्त्रीणां समागमे—" इत्यत्र यथा आर्तवशब्देन शुक्रमुच्यते तथा स्त्रीणां च आर्तवमित्यत्रापि आर्तवशब्दः शुक्र एव वर्तते न तु रजसि, रजो हि रसाद्रक्तवत् शीघ्रमेव जायते न तु मासेन इत्याहुः। तन्न इत्यन्ये, विसर्पत्यार्तवमित्यादावपि स्त्रीणामार्तवं पुंसां समागमे सति विसर्पतीति योजनया आर्तवशब्दस्य रजोवचनत्वेनाप्युपपत्तेः। वस्तुतस्तु आर्तवस्य रक्तरूपता यद्यपि मासादर्वाग्भवति तथापि तस्यार्तवरूपता गर्भाशयप्राप्त्यैव भवति, गर्भाशयप्राप्तिस्तु मासेनैव भवतीति कृत्वा मासेनार्तवं भवतीति सुश्रुतेनोक्तम्। उक्तं हि विश्वामित्रेण,—"सूक्ष्माः केशप्रतीकाशा बीजरक्तवहाः शिराः। गर्भाशयं पूरयन्ति मासाद्बीजाय कल्पते—" इति। तत्र बीजभूतरक्तं बीजरक्तमार्तवमित्यर्थः। असृजः कण्डरा इति स्थूलस्नायवः। मेदसः स्नायुसन्धय इत्यनेन तु मेदसः सूक्ष्मस्नायुपोषणमिति ज्ञेयम्। चरके हि कण्डराशब्दः स्थूलस्नायुवाची, सुश्रुते च स्थूलशिरावाचीति ज्ञेयम्। एते च स्तन्यादयः शरीरधारका अपि उपधातुशब्देनैवोच्यन्ते, न तु धातुशब्देन; धातुशब्दप्रवृत्तेर्धारणपोषणनिमित्तत्वात्। तेन ये शरीरं धारयन्ति धातूंश्च पुष्णन्ति रसादयस्त एव मुख्यतया धातुशब्दवाच्या न स्तन्यादयः, ते हि शरीरं धारयन्त्येव न तु किंचित् पुष्णन्ति। उक्तं हि भोजे,—"शिरास्नायुरजःस्तन्यत्वचो गतिविवर्जिताः। धातुभ्यश्चोपजायन्ते तस्मात्ते उपधातवः"—इति। अत्र गतिविवर्जिता इत्यनेन धात्वन्तरपोषणाख्या गतिर्निषिध्यते। अतएव धातुभ्यश्चोपजायन्त एव नतु परं जनयन्तीत्यर्थः। यत्तु "किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम्—" इत्यत्र धातुशब्देन दोषाणामपि ग्रहणम्, तद्गौणधातुशब्दप्रयोगाज् ज्ञेयम्। उक्तं हि,—"दोषा ह्यपि धातुसंज्ञां लभन्ते"—इति। शुक्रस्याप्योजःपोषकतया धारणपोषणयोगोऽस्तीति धातुत्वमखण्डितमेव। ओजस्तु यद्यपि न धातुषु नाप्युपधातुषु पठितं तथापि तत् सप्तधातुसाररूपतया सप्तधात्वन्तर्गतमेवेति ज्ञेयम्। अतएव तस्याग्निरपि पृथङ्नोक्तः" इति शिवदासव्याख्या।

तदनन्तरं ये षड्धातवः ते प्रत्येकं पञ्चभिरहोभिः संपद्यन्ते। यावता कालेन रसः शुक्रतां याति तावन्तं वक्तुमाह,—एवं मासेनेति। अत्र आर्तवशब्दोऽयं शुक्रे वर्तते न तु रजसि, रजो हि रसाद्रक्तवत् सप्तमेऽहनि जायते; यद्ययमार्तवशब्दः शुक्रे न वर्तते तदा अत्र शुक्रस्यानुक्तत्वात् षड्धातुत्वं स्यात्; तस्मात् आर्तवशब्दः शुक्रे वर्तते; अन्ये तु पुनरत्रार्तवशब्दं रजस्येव वर्तयन्ति चकारेण स्त्रीशुक्रं समुच्चिन्वन्तीति, शुक्रेऽपि गर्भजननशक्तिद्योतनार्थम्। तथाचोक्तं,—"यदा नार्यावुपेयातां वृषस्यन्त्यौ कथंचन। मुञ्चन्त्यौ शुक्रमन्योऽन्यमनस्थिस्तत्र जायते"—इति। अस्मिन् पक्षे मासेनार्तवस्य भवनमुपचयोऽभिप्रेतः प्रकाशश्च; यस्मादार्तवस्य रक्तवत् सप्ताहेनैवोत्पत्तिरिति। इदानीं समुदायसंख्यामाह,—अष्टादशेत्यादि। अष्टादशसहस्राणि इत्यादिना त्रिंशद्दिनानि कथितानि। स्वतन्त्रपरतन्त्रयोः इति समानतन्त्रासमानतन्त्रयोरित्यर्थः॥ १४॥ १५॥

**स शब्दार्चिर्जलसन्तानवदणुना विशेषेण अनुधावत्येव शरीरं केवलम्॥ १६॥**

दृष्टान्तत्रयेण शरीरे रसगतिं त्रिधा दर्शयन्नाह,—स शब्दार्चिर्जलसंतानवदिति। सः रसः, संतानशब्दः शब्दादिभिः सह प्रत्येकं संबध्यते। अणुना विशेषेण सूक्ष्मप्रकारेण। अनुधावति संचरति। एवशब्दो नियमार्थः। शरीरं केवलं सकलमित्यर्थः। तत्र शब्दसंतानवदित्यनेन तिर्यग्गामित्वं रसस्योक्तं, अर्चिःसंतानवदित्यनेन ऊर्ध्वगामित्वं, जलसंतानवदित्यनेनाधोगामित्वमिति। केचिदन्यथा व्याख्यानयन्ति दृष्टान्तत्रयेण तीक्ष्णमध्यमन्दाग्नयो निर्दिष्टाः। शब्दसंतानवत्तीक्ष्णाग्नीनां रसः संचरति, अर्चिःसंतानवन्मध्याग्नीनां, जलसंतानवन्मन्दाग्नीनामिति। तेन तीक्ष्णाग्नीनामष्टाहेनैव रसः शुक्रीभवति, मन्दाग्नेर्मासेनैव। अयमर्थः गयदासाचार्येण बहुधा दूषितः। दीप्ताग्नेस्तु किंचिन्न्यूनेन मासेन शुक्रं भवति, मन्दाग्नेस्तु किंचिदधिकेन मासेन इत्ययमर्थो न्याय्य इति॥ १६॥

**वाजीकरण्यस्तु ओषधयः स्वबलगुणोत्कर्षाद् विरेचनवदुपयुक्ताः शुक्रं शीघ्रं विरेचयन्ति॥ १७॥**

यदि मासेन रसः शुक्रीभवति तर्हि वाजीकरीणां महौषधीनां प्रयोगो निष्फलः स्यादित्याह,—वाजीकरण्य इति। वाजीकरण्यस्त्वोषधयः इति याभिरोषधिभिः स्त्रीषु नरो वाजीव समर्थो भवति ताः वाजीकरण्यः। स्वबलगुणोत्कर्षादिति स्वशब्दो बलगुणाभ्यां सह प्रत्येकं संबध्यते, उत्कर्षशब्दोऽपि। अत्र काश्चिदोषधयः स्वबलोत्कर्षात्, काश्चित् स्वगुणोत्कर्षात्, काश्चित् स्वबलगुणोत्कर्षात्। तत्र संकल्पपादलेपविशिष्टकान्तास्पर्शादयः स्वबलोत्कर्षात्, स्वप्रभावोत्कर्षादित्यर्थः; घृतक्षीरादयः स्वगुणोत्कर्षात्, स्वस्नेहाद्युत्कर्षादित्यर्थः; माषादयः स्वबलगुणोत्कर्षात्, स्वप्रभावस्नेहाद्युत्कर्षादित्यर्थः। उत्कर्षः आधिक्यम्। वाजीकरण्य इति बहुवचनं आद्यर्थे। तेन बल्यबृंहणीयजीवनसंग्रहणादयोऽपि तद्ग्राह्या इति॥ १७॥

**यथाहि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वा नैव अस्तीति; अथवा अस्ति, सतां भावानामभिव्यक्तिरिति ज्ञात्वा, केवलं सौक्ष्म्यान्नाभिव्यज्यते: स एव कुसुमे विवृतपत्रकेशरे कालान्तरेण अभिव्यक्तिं गच्छति; एवं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो भवति रोमराज्यादयश्च विशेषाः नारीणां। (रजसि च उपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति)॥ १८॥**

ननु, यदि मासेन रसः शुक्रीभवति तर्हि बालानामश्नतामपि तत् कथं न दृश्यते इति दृष्टान्तमाह,—यथेत्यादि। यथा हि इति दृष्टान्ततप्रतिपादनार्थम्। पुष्पमुकुलस्थः इति कुसुमकलिकामध्यस्थः। इहेति पुष्पमुकुले गन्धोऽस्त्येव नास्त्येव इति च वक्तुं न शक्यम्। पारमार्थिकं रूपमाह,—अथवा अस्तीति।—अथशब्दः संबोधने, वाशब्द एवार्थे, अस्त्येवेत्यर्थः। युक्तिमाह,—सतां भावानामभिव्यक्तिरिति ज्ञात्वेति पूर्वं सन्त एव भावाः पश्चाद्धेतुमासाद्याभिव्यज्यन्ते, यथा तिलेषु तैलमित्यादि। यद्यस्त्येवेति तत् किं मुकुलावस्थायामेव कथं नाभिव्यज्यत इत्याह,—केवलं सौक्ष्म्यान्नाभिव्यज्यते इति। स एवेत्यादि। स एव गन्धो विवृतपत्रकेशरे कुसुमे कालांतरेणोपचितोऽभिव्यक्तिं गच्छति। एवं बालानामित्यादि। इत्थं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो व्यक्तीभावो भवति। रोमराज्यादयश्च विशेषा भावाः वयःपरिणामान्नारीणामपि प्रादुर्भवन्ति, आदिशब्दात् स्तन्यार्तवादयः; रोमराज्यादयश्चेति चकारो नारीणां च इत्यत्र द्रष्टव्यः; तेन पुरुषाणामपि श्मश्रुप्रभृतयो गृह्यन्ते। अत्र केचित् 'रजसि चोपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति—' इति पठन्ति, न तु निबन्धकाराः, कुतः? आदिशब्दात्तदर्थस्य लब्धत्वादिति॥१८॥

**स एव अन्नरसो वृद्धानां जरापरिपक्वशरीरत्वाद् न प्रीणनो भवति॥ १९॥**

ननु रसस्योपचयकरत्वाद् वृद्धानामपि वर्धितव्यमित्याह,—स एवान्नरस इति। स एवाशेषधातुपोषकोऽपि वृद्धानां अप्रीणनः ईषत् प्रीणनो भवति, जीवनमात्रं करोतीत्यर्थः। कुत इत्याह,—परिपक्वशरीरत्वात्॥ १९॥

**त एते शरीरधारणाद्धातव इत्युच्यन्ते॥ २०॥**

रसादिधातूनां निरुक्तिं कुर्वन्नाह,—त एते शरीरधारणादिति। यद्यपि क्वचिदुदुष्टा दोषा अपि देहधारणाद्धातुशब्देनोच्यन्ते तथाप्यत्र रसादीनामधिकृतत्वात्त एव धातवः कथ्यन्ते॥ २०॥

**तेषां क्षयवृद्धी शोणितनिमित्ते तस्मात् तदधिकृत्य वक्ष्यामः॥ २१॥**

प्रस्तुतं शोणितमेवाधिकर्तुमाह,—तेषामित्यादि। तेषामिति धातूनाम्। तदधिकृत्य इति शोणितमधिकृतं कृत्वेत्यर्थः॥ २१॥

**तत्र, फेनिलमरुणं कृष्णं परुषं तनु शीघ्रगमस्कन्दि च वातेन दुष्टं; नीलं पीतं हरितं श्यावं**

मलः, स्थूलो भागो मांसं, सूक्ष्मो मेदः; ततोऽपि निजवह्निपच्यमानान्मलः स्वेदः, स्थूलांशो मेद एव, सूक्ष्मभागोऽस्थि; ततोऽपि पच्यमानान्मलः केशलोमश्मश्रूणि, स्थूलोऽस्थि, सूक्ष्मस्तु मज्जा; ततोऽपि मज्ज्ञः पावकपच्यमानान्मलो नयनपुरीषत्वचां स्नेहः, स्थूलो भागो मज्जा, सूक्ष्मः शुक्रं; ततः पुनः पच्यमानादत्र मलो नोत्पद्यते सहस्रधाध्मातसुवर्णवत्, स्थूलो भागः शुक्रमेव, स्नेहभागः सूक्ष्मस्तेजोभूतं ओजः। पूर्वोक्त एवार्थः श्लोकाभ्यां कथ्यते,—"स्थूलसूक्ष्ममलैः सर्वे भिद्यन्ते धातवस्त्रिधा। स्वः स्थूलोऽंशः परं सूक्ष्मस्तन्मलं याति तन्मलः। स्वाग्निभिः पच्यमानेषु मलः षट्सु रसादिषु। न शुक्रे पच्यमानेऽपि हेमनीवाक्षये मलः"—इति। आकृष्टाण्डकोषस्य पुंसः श्मश्रुपातात् श्मश्रु शुक्रमल इत्येके। तन्न, श्मश्रुहीनस्यापि शुक्रदर्शनात्। ननु, मांसान्मेदः प्रजायते इत्यनर्थकं, मज्ज्ञः शुक्रं तु जायते इत्येतेनैव क्रियापदेन प्रजायत इत्यस्यार्थस्य लब्धत्वात्। सत्यं, प्रजायते इति क्रियापदं रसादीनां मेदःपर्यन्तानां विशिष्टकार्योत्पाददर्शनार्थम्। एभ्य एवोपधातवः स्वभावादुत्पद्यन्ते न पुनरस्थ्यादिभ्यः इति। तथाहि, रसात् स्तन्यमार्तवं च, रक्तात् कण्डराः, मांसाद्वसाः त्वचः, मेदसः स्नायुसन्धीति। शुक्रं तु जायते इति द्वितीयजायते ग्रहणेन शुक्रे विशिष्टधर्मवत्ता उक्ता इति पठन्ति व्याख्यानयन्ति च। संभवशब्दोऽत्र पोषणे न तु अपूर्वोत्पादने, यतो रसादीनां शुक्रान्तानां गर्भादेवोत्पत्तिरिति। शुक्रं हि स्वाग्निपच्यमानमपि नाणुभागमुत्पादयति। अन्ये तु मेदः प्रजायते इत्यत्र प्रवर्तते इति पठन्ति, शुक्रं तु जायते इत्यत्र संभव इति ॥ १० ॥

**तत्रैषां धातूनामन्नपानरसः प्रीणयिता ॥ ११ ॥**
**रसजं पुरुषं विद्याद्रसं रक्षेत् प्रयत्नतः ॥**
**अन्नात् पानाच्च मतिमानाचाराच्चाप्यतन्द्रितः १२**

रसस्य निर्दिष्टस्य प्राधान्यं दर्शयितुमाह,—तत्रैषामित्यादि। तत्र तेषु धातुषु मध्ये। एतेषां धातूनां प्रागुक्तानां रक्तादीनाम्। अन्नपानरसः अन्नपानस्य सारः। प्रीणयिता तर्पयितेत्यर्थः ११,१२

**तत्र 'रस' गतौ, धातुः अहरहः गच्छतीत्यतो रसः ॥ १३ ॥**

रसस्यैव निरुक्तिमाह,—तत्र रसगतावित्यादि ॥ १३ ॥

**स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धातौ अवतिष्ठते; एवं मासेन रसः शुक्रीभवति स्त्रीणां च आर्त्तवम् ॥ १४ ॥**

**भवति चात्र ।**

**अष्टादशसहस्राणि सङ्ख्या ह्यस्मिन् समुच्चये ॥**
**कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः ॥ १५ ॥**

रसधातुर्धात्वन्तराणां स्वभावं जनयन् एकैकस्मिन् धातौ कियन्तं कालमवतिष्ठत इत्याह,—स खल्वित्यादि। अवतिष्ठते अवस्थितिं करोतीत्यर्थः, परिणामं गच्छन्नेव तिष्ठति पच्यमानस्थालीतण्डुलवत्, न पुनरस्य गमननिवृत्तिः। त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला इति अस्यार्थः—रसः किलैकाहेनैव संपद्यते

---

१ यदाह चरकः,—"किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः। पित्तं मांसस्य खमला मलः स्वेदस्तु मेदसः॥ स्यात्किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट्त्वचाम्"—इति ॥

यदाह चरकः,—

२ **"रसात् स्तन्यं तथा रक्तमसृजः कण्डराः शिराः॥ मांसाद्वसा त्वचः षट् च मेदसः स्नायुसन्धयः।"—इति** "संप्रति प्रसादजन्यतां धातूनामभिधाय उपधातूनामप्याह—रसादित्यादि। अत्रापि रसात् स्तन्यं प्रसादजमित्यादि योज्यम्। रक्तमिति स्त्रीणां रजःसंज्ञं रक्तमप्युपधातुरूपं रसादेव रक्तं प्रसादभागजन्यमित्यर्थः। उक्तं च सुश्रुते,—"रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रपद्यते"। (सु. सू. स्था. अ १४) इति। एतच्च रजोरूपं रक्तं रसजन्यमपि धातुशोणितवत् न शीघ्रं जायते, किंतु शुक्रवन्मासेनैव। तदुक्तं सुश्रुते,—"एवं मासेन रसः शुक्रीभवति स्त्रीणां च आर्तवम्—"इति। अन्ये तु—"घृतकुम्भो यथैवाग्निमाश्रितः प्रविलीयते। विसर्पत्यार्तवं पुंसां तथा स्त्रीणां समागमे—" इत्यत्र यथा आर्तवशब्देन शुक्रमुच्यते तथा स्त्रीणां च आर्तवमित्यत्रापि आर्तवशब्दः शुक्र एव वर्तते न तु रजसि, रजो हि रसाद्रक्तवत् शीघ्रमेव जायते न तु मासेन इत्याहुः। तन्न इत्यन्ये, विसर्पत्यार्तवमित्यादावपि स्त्रीणामार्तवं पुंसां समागमे सति विसर्पतीति योजनया आर्तवशब्दस्य रजोवचनत्वेनाप्युपपत्तेः। वस्तुतस्तु आर्तवस्य रक्तरूपता यद्यपि मासादर्वाग्भवति तथापि तस्यार्तवरूपता गर्भाशयप्राप्त्यैव भवति, गर्भाशयप्राप्तिस्तु मासेनैव भवतीति कृत्वा मासेनार्तवं भवतीति सुश्रुतेनोक्तम्। उक्तं हि विश्वामित्रेण,—"सूक्ष्माः केशप्रतीकाशा बीजरक्तवहाः शिराः। गर्भाशयं पूरयन्ति मासाद्बीजाय कल्पते—" इति। तत्र बीजभूतरक्तं बीजरक्तमार्तवमित्यर्थः। असृजः कण्डरा इति स्थूलस्नायवः। मेदसः स्नायुसन्धय इत्यनेन तु मेदसः सूक्ष्मस्नायुपोषणमिति ज्ञेयम्। चरके हि कण्डराशब्दः स्थूलस्नायुवाची, सुश्रुते च स्थूलशिरावाचीति ज्ञेयम्। एते च स्तन्यादयः शरीरधारका अपि उपधातुशब्देनैवोच्यन्ते, नतु धातुशब्देन; धातुशब्दप्रवृत्तेर्धारणपोषणनिमित्तत्वात्। तेन ये शरीरं धारयन्ति धातूंश्च पुष्णन्ति रसादयस्त एव मुख्यतया धातुशब्दवाच्या न स्तन्यादयः, ते हि शरीरं धारयन्त्येव न तु किंचित् पुष्णन्ति। उक्तं हि भोजे,—"शिरास्नायुरजस्तन्यत्वचो गतिविवर्जिताः। धातुभ्यश्चोपजायन्ते तस्मात्ते उपधातवः"—इति। अत्र गतिविवर्जिता इत्यनेन धात्वन्तरपोषणाद्या गतिर्निषिध्यते। अतएव धातुभ्यश्चोपजायन्त एव नतु परं जनयन्तीत्यर्थः। यत्तु "किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम्—" इत्यत्र धातुशब्देन दोषाणामपि ग्रहणम्, तद्गौणधातुशब्दप्रयोगाज् ज्ञेयम्। उक्तं हि,—"दोषा ह्यपि धातुसंज्ञां लभन्ते"—इति। शुक्रस्याप्योजःपोषकतया धारणपोषणयोगोऽस्तीति धातुत्वमखण्डितमेव। ओजस्तु यद्यपि न धातुषु नाप्युपधातुषु पठितं तथापि तत् सप्तधातुसाररूपतया सप्तधात्वन्तर्गतमेवेति ज्ञेयम्। अतएव तस्याग्निरपि पृथङ्नोक्तः" इति शिवदासव्याख्या।

तदनन्तरं ये षड्धातवः ते प्रत्येकं पञ्चभिरहोभिः संपद्यन्ते। यावता कालेन रसः शुक्रतां याति तावन्तं वक्तुमाह,—एवं मासेनेति। अत्र आर्तवशब्दोऽयं शुक्रे वर्तते न तु रजसि, रजो हि रसाद्रक्तवत् सप्तमेऽहनि जायते; यद्ययमार्तवशब्दः शुक्रे न वर्तते तदा अत्र शुक्रस्यानुक्तत्वात् षड्धातुत्वं स्यात्; तस्मात् आर्तवशब्दः शुक्रे वर्तते; अन्ये तु पुनरत्रार्तवशब्दं रजस्येव वर्तयन्ति चकारेण स्त्रीशुक्रं समुच्चिन्वन्तीति, शुक्रेऽपि गर्भजननशक्तिद्योतनार्थम्। तथाचोक्तं,—"यदा नार्यावुपेयातां वृषस्यन्त्यौ कथंचन। मुञ्चन्त्यौ शुक्रमन्योऽन्यमनस्थिस्तत्र जायते"—इति। अस्मिन् पक्षे मासेनार्तवस्य भवनमुपचयोऽभिप्रेतः प्रकाशश्च; यस्मादार्तवस्य रक्तवत् सप्ताहेनैवोत्पत्तिरिति। इदानीं समुदायसंख्यामाह,—अष्टादशेत्यादि। अष्टादशसहस्राणि इत्यादिना त्रिंशद्दिनानि कथितानि। स्वतन्त्रपरतन्त्रयोः इति समानतन्त्रासमानतन्त्रयोरित्यर्थः॥ १४॥ १५॥

**स शब्दार्चिर्जलसन्तानवदणुना विशेषेण अनुधावत्येव शरीरं केवलम्॥ १६॥**

दृष्टान्तत्रयेण शरीरे रसगतिं त्रिधा दर्शयन्नाह,—स शब्दार्चिर्जलसंतानवदिति। सः रसः, संतानशब्दः शब्दादिभिः सह प्रत्येकं संबध्यते। अणुना विशेषेण सूक्ष्मप्रकारेण। अनुधावति संचरति। एवशब्दो नियमार्थः। शरीरं केवलं सकलमित्यर्थः। तत्र शब्दसंतानवदित्यनेन तिर्यग्गामित्वं रसस्योक्तं, अर्चिःसंतानवदित्यनेन ऊर्ध्वगामित्वं, जलसंतानवदित्यनेनाधोगामित्वमिति। केचिदन्यथा व्याख्यानयन्ति दृष्टान्तत्रयेण तीक्ष्णमध्यमन्दाग्नयो निर्दिष्टाः। शब्दसंतानवत्तीक्ष्णाग्नीनां रसः संचरति, अर्चिःसंतानवन्मध्याग्नीनां, जलसंतानवन्मन्दाग्नीनामिति। तेन तीक्ष्णाग्नीनामष्टाहेनैव रसः शुक्रीभवति, मन्दाग्नेर्मासेनैव। अयमर्थः गयदासाचार्येण बहुधा दूषितः। दीप्ताग्नेस्तु किंचिन्न्यूनेन मासेन शुक्रं भवति, मन्दाग्नेस्तु किंचिदधिकेन मासेन इत्ययमर्थो न्याय्य इति॥ १६॥

**वाजीकरण्यस्तु ओषधयः स्वबलगुणोत्कर्षाद् विरेचनवदुपयुक्ताः शुक्रं शीघ्रं विरेचयन्ति॥ १७॥**

यदि मासेन रसः शुक्रीभवति तर्हि वाजीकरीणां महौषधीनां प्रयोगो निष्फलः स्यादित्याह,—वाजीकरण्य इति। वाजीकरण्यस्त्वोषधयः इति याभिरोषधिभिः स्त्रीषु नरो वाजीव समर्थो भवति ताः वाजीकरण्यः। स्वबलगुणोत्कर्षादिति स्वशब्दो बलगुणाभ्यां सह प्रत्येकं संबध्यते, उत्कर्षशब्दोऽपि। अत्र काश्चिदोषधयः स्वबलोत्कर्षात्, काश्चित् स्वगुणोत्कर्षात्, काश्चित् स्वबलगुणोत्कर्षात्। तत्र संकल्पपादलेपवि[illegible]क्रान्त[illegible]स्पर्शादयः स्वबलोत्कर्षात्, स्वप्रभावोत्कर्षादित्यर्थः; घृतक्षीरादयः स्वगुणोत्कर्षात्, स्वस्नेहाद्युत्कर्षादित्यर्थः; माषादयः स्वबलगुणोत्कर्षात्, स्वप्रभावस्नेहाद्युत्कर्षादित्यर्थः। उत्कर्षः आधिक्यम्। वाजीकरण्य इति बहुवचनं आद्यर्थे। तेन बल्यबृंहणीयजीवनसंग्रहणादयोऽपि तद्ग्राह्या इति॥ १७॥

**यथाहि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वा नैव अस्तीति; अथवा अस्ति, सतां भावानामभिव्यक्तिरिति ज्ञात्वा, केवलं सौक्ष्म्यान्नाभिव्यज्यते; स एव कुसुमे विवृतपत्रकेशरे कालान्तरेण अभिव्यक्तिं गच्छति; एवं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो भवति रोमराज्यादयश्च विशेषाः नारीणां। (रजसि च उपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति)॥ १८॥**

ननु, यदि मासेन रसः शुक्रीभवति तर्हि बालानामक्षतामपि तत् कथं न दृश्यते इति दृष्टान्तमाह,—यथेत्यादि। यथा हि इति दृष्टान्तताप्रतिपादनार्थम्। पुष्पमुकुलस्थः इति कुसुमकलिकामध्यस्थः। इहेति पुष्पमुकुले गन्धोऽस्त्येव नास्त्येव इति च वक्तुं न शक्यम्। पारमार्थिकं रूपमाह,—अथवा अस्तीति।—अथशब्दः संबोधने, वाशब्द एवार्थे, अस्त्येवेत्यर्थः। युक्तिमाह,—सतां भावानामभिव्यक्तिरिति ज्ञात्वेति पूर्वं सन्त एव भावाः पश्चाद्धेतुमासाद्याभिव्यज्यन्ते, यथा तिलेषु तैलमित्यादि। यद्यस्त्येवेति तत् किंमुकुलावस्थायामेव कथं नाभिव्यज्यत इत्याह,—केवलं सौक्ष्म्यान्नाभिव्यज्यते इति। स एवेत्यादि। स एव गन्धो विवृतपत्रकेशरे कुसुमे कालांतरेणोपचितोऽभिव्यक्तिं गच्छति। एवं बालानामित्यादि। इत्थं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो व्यक्तीभावो भवति। रोमराज्यादयश्च विशेषा भावाः वयःपरिणामान्नारीणामपि प्रादुर्भवन्ति, आदिशब्दात् स्तन्यार्तवादयः; रोमराज्यादयश्चेति चकारो नारीणां च इत्यत्र द्रष्टव्यः; तेन पुरुषाणामपि श्मश्रुप्रभृतयो गृह्यन्ते। अत्र केचित् 'रजसि चोपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति—' इति पठन्ति, न तु निबन्धकाराः, कुतः? आदिशब्दात्तदर्थस्य लब्धत्वादिति॥ १८॥

**स एव अन्नरसो वृद्धानां जरापरिपक्वशरीरत्वाद् न प्रीणनो भवति॥ १९॥**

ननु रसस्योपचयकरत्वाद् वृद्धानामपि वर्धितव्यमित्याह,—स एवान्नरस इति। स एवाशेषधातुपोषकोऽपि वृद्धानां अप्रीणनः ईषत् प्रीणनो भवति, जीवनमात्रं करोतीत्यर्थः। कुत इत्याह,—परिपक्वशरीरत्वात्॥ १९॥

**त एते शरीरधारणाद्धातव इत्युच्यन्ते॥ २०॥**

रसादिधातूनां निरुक्तिं कुर्वन्नाह,—त एते शरीरधारणादिति। यद्यपि क्वचिद्दुष्टा दोषा अपि देहधारणाद्धातुशब्देनोच्यन्ते तथाप्यत्र रसादीनामधिकृतत्वात्त एव धातवः कथ्यन्ते॥ २०॥

**तेषां क्षयवृद्धी शोणितनिमित्ते तस्मात् तदधिकृत्य वक्ष्यामः॥ २१॥**

प्रस्तुतं शोणितमेवाधिकर्तुमाह,—तेषामित्यादि। तेषामिति धातूनाम्। तदधिकृत्य इति शोणितमधिकृतं कृत्वेत्यर्थः॥ २१॥

**तत्र, फेनिलमरुणं कृष्णं परुषं तनु शीघ्रगमस्कन्दि च वातेन दुष्टं; नीलं पीतं हरितं श्यावं**

**विस्नमनिष्टं पिपीलिकामक्षिकाणामस्कन्दि च पित्त-दुष्टं; गैरिकोदकप्रतीकाशं स्निग्धं शीतलं बहलं पिच्छिलं चिरस्रावि मांसपेशीप्रभं च श्लेष्मदुष्टं; सर्वलक्षणसंयुक्तं काञ्जिकाभं विशेषतो दुर्गन्धि च सन्निपातदुष्टं; (पित्तवत् रक्तेन अतिकृष्णं च;) द्वि-दोषलिङ्गं संसृष्टम्। जीवशोणितमन्यत्र वक्ष्यामः २२**

तत्र फेनिलमित्यादि ।—फेनिलं फेनसहितम् । अरुणमीषद्रक्तम्। तदेव पाकाभिमुखं कृष्णम्। परुषं अपिच्छिलं, रुक्षमित्यन्ये। तनु अच्छम् । शीघ्रगं आशुप्रसृति। अस्कन्दि च इति स्त्यानत्वरहितम् । नीलमित्यादि ।—नीलं हरितं श्यावं सामपित्तदुष्टं, पीतं निरामपित्तदुष्टम् । श्यावं हरितकृष्णम्। विस्रं आमगन्धि। अनिष्टं पिपीलिकादीनामननुसरणादवगन्तव्यम् । अस्कन्दि च इति स्त्यानत्वरहितम्।गैरिकेत्यादि।—गैरिकोदकप्रकाशं पाण्डुलोहितम्। बहलं घनम्। मांसपेशीप्रभं स्त्यानत्वात्। सर्वेत्यादि।—सर्वलक्षणयुक्तं वातादियुक्तम् । अत्र क्वचित् 'पित्तवद्रक्तेनातिकृष्णं' इति पठन्ति न तु निबन्धकाराः । द्विदोषलिङ्गमित्यादि ।—संसृष्टं दोषद्वययुक्तमित्यर्थः । अत्र क्वचित् 'जीवशोणितमन्यत्रोपदेक्ष्यामः' इति पाठः, न तु निबन्धेषु ॥ २२ ॥

**इन्द्रगोपप्रतीकाशमसंहतमविवर्णं च प्रकृतिस्थं जानीयात् ॥ २३ ॥**

रक्तविकृतिमभिधाय प्रकृतिं वक्तुमाह,—इन्द्रगोपकप्रतीकाशमिति । इन्द्रगोपकः प्रावृट्कालज उद्भिज्जः 'इन्द्रवधूः' इति लोके, स चानेकप्रकारवर्णः, अत्र तु रक्त एव गृह्यते । असंहतं नात्यच्छं नातिघनं; नारुपायतीत्यन्ये(?)। अविवर्णं इति इन्द्रगोपकवर्णमपीषद् विविधवर्णं । एतेन तदेव पद्मालक्तकगुञ्जाफलवर्णमित्युक्तं, अथवा वस्त्रादिलग्नं सत् प्रक्षाल्यमानमपि न विवर्णतां यातीत्यविवर्णम् ॥ २३ ॥

**विस्राव्यानि अन्यत्र वक्ष्यामः ॥ २४ ॥**

शोणितस्य स्रावणविषयमतिदेशेन दर्शयन्नाह,—विस्राव्याणीत्यादि । अन्यत्र इति अष्टविधशस्त्रकर्माध्याये ॥ २४ ॥

**अथाऽविस्राव्याः—सर्वाङ्गशोफः क्षीणस्य च अम्लभोजननिमित्तः पाण्डुरोग्यर्शसोदरिशोषिगर्भिणीनां च श्वयथवः ॥ २५ ॥**

विस्राव्यनिषेधविषयं दर्शयन्नाह,—अथाविस्राव्या इति । क्षीणस्य पुंसः अम्लभोजननिमित्तो यः सोऽविस्राव्य इत्यर्थः । तथा पाण्डुरोग्यादीनां शोथा अविस्राव्या एतेषां व्रणशोथा एकाङ्गजा अपि न स्राव्याः ॥ २५ ॥

**तत्र शस्त्रविस्रावणं द्विविधं प्रच्छानं सिराव्यधनं च ॥ २६ ॥**

शस्त्रविस्रावणस्य द्वैविध्यमाह,—तत्र शस्त्रेत्यादि ॥ २६ ॥

**तत्र ऋजु असंकीर्णं सूक्ष्मं सममनवगाढमनुत्तानमाशु च शस्त्रं पातयेत् मर्मसिरास्नायुसन्धीनां च अनुपघाति ॥ २७ ॥**

अत्र प्रच्छानमधिकृत्याह,—तत्रेत्यादि । ऋजु प्राञ्जलम्। असंकीर्णं न संकटं, विशालमित्यर्थः; अन्ये परस्परासंसृष्टमित्याहुः। सूक्ष्मं नातिमहत् सुखशस्त्रकृतम् । समं तुल्यरेखम् । अनवगाढं अदूरगतिकम् । अनुत्तानं किंचिन्मांसस्पृगित्यर्थः । आशु अविलम्बितं यथा भवति एवं शस्त्रं पातयेत् ॥ २७ ॥

**तत्र दुर्दिने दुर्विद्धे शीतवातयोरस्विन्ने अभुक्तवतः स्कन्दत्वात् शोणितं न स्रवति अल्पं वा स्रवति ॥ २८ ॥**

**भवति चात्र ।**

**मदमूर्च्छाश्रमार्तानां वातविण्मूत्रसंगिनाम् ॥**
**निद्राभिभूतभीतानां नृणां नासृक् प्रवर्तते॥ २९॥**

रक्तस्यायोगं चिकित्सार्थमाह,—तत्र दुर्दिन इत्यादि । दुर्दिने इति नित्यगकालदोषः । केचिद् दुर्दिने न पठन्ति । दुर्विद्धे इति वैद्यक्रियादोषः । शीतवातयोः इति कालकृतो दोषः । भुक्तमात्रे इति आवस्थिककालदोषः; अभुक्तवत इत्यन्ये पठन्ति। स्कन्दत्वात् स्त्यानत्वात् । मदः विषमद्यजो विकारः, आर्तानां पीडितानाम् । वातविण्मूत्रसंगिनामिति संगोऽप्रवर्तनम् ॥ २८—२९ ॥

**तद्दुष्टं शोणितमनिर्ह्रियमाणं कण्डूशोफरागदाहपाकवेदना जनयेत् ॥ ३० ॥**

दुष्टरक्तस्य अस्रुतिदोषमुपदिशन्नाह,—तद्दुष्टमित्यादि ॥३०॥

**अत्युष्णातिस्विन्नातिविद्धेषु अज्ञैर्विस्रावितमतिप्रवर्तते । तदतिप्रवृत्तं शिरोऽभितापमान्ध्यमधिमन्थतिमिरप्रादुर्भावं धातुक्षयमाक्षेपकं पक्षाघातमेकाङ्गविकारं तृष्णादाहौ हिक्कां कासं श्वासं मरणं च आपादयति ॥ ३१ ॥**

अतियोगं व्यापदश्चोपदिशन्नाह,—अत्युष्ण इत्यादि । अत्युष्णे अत्युष्णकाले । अतिस्विन्ने अतिस्वेदिते । अतिविद्धेष्वज्ञैः इति अज्ञाः अदृष्टकर्माणः । शिरोऽभितापं शिरःशूलम् । आन्ध्यं अन्धताम्।अधिमन्थः चक्षूरोगः अभिष्यन्दपूर्वकः, तिमिरः लिङ्गनाशः, प्रादुर्भावशब्दो अधिमन्थतिमिराभ्यां संबध्यते । शिरोऽभितापादीन् शिरसि अतिहृतं रक्तं करोति, धातुक्षयं सर्वत्रैवातिहृतम्। एकाङ्गविकारः एकस्मिन्नङ्गे य उत्पद्यते स एकाङ्गविकारः, स चात्र वातजनितः ॥ ३१ ॥

**भवन्ति चात्र ।**

**तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते ॥**
**यवागूं प्रतिपीतस्य शोणितं मोक्षयेद्भिषक् ॥ ३२॥**
**सम्यग् गत्वा यदा रक्तं स्वयमेवावतिष्ठते ॥**
**शुद्धं तदा विजानीयात् सम्यग्विस्रावितं च तत्॥३३॥**

अयोगातियोगौ सहेतुकौ निर्दिश्य सम्यक्योगं सहेतुकं निर्दिशन्नाह,—तस्मादित्यादि । न शीते नात्युष्णे साधारणे काले । नास्विन्ने नातिस्वेदिते नातितापिते सूर्यतापादिभिः । यवागूः अत्र तिलयवागूस्तस्याः सद्यःस्नेहनीयत्वात् रक्तोत्क्लेशकारित्वाच । प्रतिपीतस्य

इति प्रतिशब्दोऽत्र पानान्तरं सूचयति; तेन द्वितीयपानानन्तरं तृतीयपानानन्तरं वेत्यर्थः; अन्ये तु यवागूर्विरलद्रवा बहुसिक्था, तां प्रतिपीतस्य, सा हि प्रायशः प्रक्लेदनात्मिका स्वेदलत्वात् द्रवोष्णत्वाच्च शोणितं विलाययति; प्रतिशब्दोऽत्र मात्रार्थः, तेन यवागूं मात्रया पीतवत इत्यर्थः। इदानीं सम्यग्योगस्य सुविशुद्धस्य चैकेनैव वाक्येन लक्षणं वक्तुमाह,—सम्यगित्यादि। गत्वा निःसृत्य यदा सम्यग्रक्तवर्णं शोणितं भवति तदा शुद्धं विजानीयात्; सम्यग्विस्रावितपक्षे त्वयमर्थः,—सम्यग्गत्वेति सम्यक् प्रवर्तनं कृत्वा यदा रक्तं रुधिरं स्वयमेवावतिष्ठते अवस्थितिं करोति तदा सम्यग्विस्रावितं च तद्रक्तं विजानीयात्। चकारेणैतल्लक्षणद्वयं लभ्यते। अन्ये तु सम्यग् गत्वेत्यादिश्लोकस्य व्याख्यानमन्यथा कृत्वा सार्धश्लोकेन व्याख्यानयन्ति। "न चातिवेगदुष्टानां सम्यग्गत्वा विनिःसृतम्। विहाय दुष्टतां स्वेन रूपेण ह्यवतिष्ठते। प्रयत्नमनपेक्ष्यासृक् तदा शुद्धं विनिर्दिशेत्" —इति॥ ३२॥ ३३॥

**लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः॥**
**सम्यग्विस्राविते लिङ्गं प्रसादो मनसस्तथा॥३४॥**
**त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये॥**
**रक्तमोक्षणशीलानां न भवन्ति कदाचन॥ ३५॥**

आभ्यन्तरमपरमपि रक्तशुद्धिस्रावणस्य लक्षणं दर्शयन्नाह,—लाघवमित्यादि। त्वग्दोषाः अष्टादश कुष्ठानि न्यच्छनीलिकादयश्च, ग्रन्थयः वातादिनिमित्ता शिराग्रन्थिश्च। शोणितजा रोगाः रक्तगुल्मविद्रधिविसर्पादयः। रक्तमोक्षणशीलानां रक्तस्रावणाभ्यासकारिणाम्॥ ३४॥ ३५॥

**अथ खलु अप्रवर्तमाने रक्ते एलाशीतशिवकुष्ठतगरपाठाभद्रदारुविडङ्गचित्रकत्रिकटुकागारधूमहरिद्रार्काङ्कुरनक्तमालफलैर्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैः लवणतैलप्रगाढैर्व्रणमुखमवघर्षयेदेवं सम्यक् प्रवर्तते॥ ३६॥**

इदानीमप्रवृत्तरक्तस्य प्रवर्तनायाह,—अथ खल्वित्यादि। शीतशिवः कर्पूरम्, नक्तमालः बृहत्करञ्जः। त्रिभिश्चतुर्भिः इति एतेनैकद्विद्रव्यनिषेधः कृतः। लवणतैलप्रगाढैः इति सैन्धवतिलतैलोत्कटैरित्यर्थः॥ ३६॥

**अथातिप्रवृत्ते रोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकसर्जरसरसाञ्जनशाल्मलीपुष्पशङ्खशुक्तिमाषयवगोधूमचूर्णैः शनैः शनैर्व्रणमुखमवचूर्ण्य अङ्गुल्यग्रेण अवपीडयेत्। सालसर्जार्जुनारिमेदमेषशृङ्गधवधन्वनत्वग्भिर्वा चूर्णिताभिः क्षौमेण वा ध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा यथोक्तैः व्रणबन्धनद्रव्यैर्गाढं बध्नीयात्। शीताच्छादनभोजनागारैः शीतैः परिषेकप्रदेहैश्च उपाचरेत् क्षारेण अग्निना वा दहेत् यथोक्तं व्यधनादनन्तरं वा तामेवातिप्रवृत्तां सिरां विध्येत्। काकोल्यादिक्वाथं वा शर्करामधुमधुरं पाययेत्; एणहरिणोरभ्रशशमहिषवराहाणां वा रुधिरम्। क्षीरयूषरसैः सुस्निग्धैश्च अश्नीयात्। उपद्रवांश्च यथास्वमुपाचरेत्॥ ३७॥**

**भवन्ति चात्र।**

**धातुक्षयात् स्रुते रक्ते मन्दः संजायतेऽनलः॥**
**पवनश्च परं कोपं याति तस्मात् प्रयत्नतः॥ ३८॥**
**तन्नातिशीतैर्लघुभिः स्निग्धैः शोणितवर्धनैः॥**
**ईषदम्लैरनम्लैर्वा भोजनैः समुपाचरेत्॥ ३९॥**

अतिप्रवृत्तौ रक्तस्थापनाय दर्शयन्नाह,—अथेत्यादि। पत्तङ्गं रक्तचन्दनं, सर्जरसः राला, शुक्तिः जलशुक्तिः। सर्जः शालभेदः, अर्जुनः ककुभः, अरिमेदः 'अरिमञ्ज' इति लोके प्रसिद्धः, मेषशृङ्गः कर्कटशृङ्गः, धन्वनः 'धामरण' इति 'धामन' इति च प्रसिद्धः। सालादित्वग्भिश्चूर्णीकृताभिर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणैवावपीडयेदित्यत्रापि संबन्धः। क्षौमेण ध्मापितेन अतसीवस्त्रेण दग्धेन व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेदित्यत्रापि संबन्धः। यथोक्तैर्वा व्रणबन्धनद्रव्यैरिति क्षौमकार्पासवस्त्रादिभिः। आच्छादनं वस्त्रादि। प्रदेहः। परिषेकः धारासेकः। यथोक्तं वलयबिन्द्वादिभेदेनेत्यर्थः। व्यधादनन्तरं प्राकृतव्यधनादधःस्थाने, तामेव पूर्वविद्धां सिरां विध्येद्रक्तगतिच्छेदनार्थम्। रक्तातिस्रुतौ आभ्यन्तरं भेषजं दर्शयन्नाह,—काकोल्यादीत्यादि। एणः कृष्णहरिणः, हरिणस्ताम्रवर्णः। एणादिरक्तं पाययेदिति संबन्धः, रक्ताप्यायनार्थं तच्चादुष्टमसंस्कृतं च। रक्तातिप्रवृत्तौ भोजनं नियमयन्नाह,—क्षीरेत्यादि। यूषः मुद्गयूषः, रसः मांसरसः। सुस्निग्धैः इति शोभनं कृत्वा घृतेन स्निग्धीकृतैः। अश्नीयात् इति क्षीरादिसिक्तमोदनं भुञ्जीत। पित्तदुष्टरक्तस्यैवातिप्रवृत्तौ अतिप्रवृत्तरक्तस्य क्षीरभोजनं अथवा पित्तप्रकृतिकस्यैव रक्तातिप्रवृत्तौ क्षीरभोजनं; कफदुष्टरक्तस्यैवातिप्रवृत्तौ अतिप्रवृत्तरक्तस्य यूषभोजनं, श्लेष्मप्रकृतिकस्यैव वा; वातदुष्टरक्तस्य वातिप्रवृत्तौ अतिप्रवृत्तरक्तस्य रसभोजनं वातप्रकृतिकस्यैव वा; अन्ये तु दीप्तमध्यमन्दाग्नीनां यथासंख्यं क्षीरादिसिक्तमोदनं भोजनमाहुः; सात्म्यापेक्षया इत्येके। अतिस्रुतरक्तस्योपद्रवान् चिकित्सितुमाह,—उपद्रवांश्चेत्यादि। उपद्रवान् शिरोऽभितापादीन्। यथास्वं इति स्वकीयेन स्वकीयेन उपचारेणेत्यर्थः। धातुक्षयादित्यादि। तस्मादनतिशीतादिभोजनैः प्रयत्नतस्तं पुरुषमुपाचरेदिति संबन्धः; अग्निसन्धुक्षणार्थं शोणिताप्यायनार्थं उपद्रवपरिहारार्थं च। ईषदम्लैः दाडिमामलकैः, तेषामेवाम्लेषु प्रधानत्वात्॥ ३७—३९॥

**चतुर्विधं यदेतद्धि रुधिरस्य निवारणम्॥**
**संधानं स्कन्दनं चैव पाचनं दहनं तथा॥ ४०॥**
**व्रणं कषायः संधत्ते रक्तं स्कन्दयते हिमम्॥**
**तथा संपाचयेद्भस्म दाहः संकोचयेत् सिराः॥४१॥**

चतुर्विधमित्यादि। संधानं शस्त्रपदस्य, स्कन्दनं शोणितस्य

स्त्यानीकरणं, पाचनं दहनं च शस्त्रपदस्य । व्रणमिति कषायः कषायरसद्रव्यं, तच्च लोध्रादिकम्; अन्ये तु हरीतक्यादिकं पञ्चवल्कलादिकं वाहुः। हिमं शीतम् । भस्म क्षौमादिजनितम् । दहनं शलाकाप्रभृतिभिः ॥ ४० ॥ ४१ ॥

**अस्कन्दमाने रुधिरे संधानानि प्रयोजयेत् ॥**
**संधाने भ्रश्यमाने तु पाचनैः समुपाचरेत् ॥ ४२ ॥**
**कल्पैरेतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि ॥**
**असिद्धिमत्सु चैतेषु दाहः परम इष्यते ॥ ४३ ॥**

इदानीं पूर्वपूर्वासिद्धौ उत्तरोत्तरं विद्धचवसरं प्रतिपादयन्नाह,—अस्कन्दमान इत्यादि ।—अस्कन्दमाने प्रथमं शीतोपचारादि कर्तव्यं, तेन यदा स्त्यानीभूय रक्तं न तिष्ठति तदा हरीतक्यादि पञ्चवल्कलादि वा प्रयोजयेत्, सन्धानेन चेन्न तिष्ठति रक्तं तदा पाचनं भस्म प्रयोजयेत्, एभिर्विधानैर्यदि न तिष्ठति रक्तं तदा दहनं शोणितस्थापनार्थं कर्तव्यमित्यर्थः ॥ ४२ ॥ ४३ ॥

**शेषदोषे यतो रक्ते न व्याधिरतिवर्तते ॥**
**सावशेषे ततः स्थेयं न तु कुर्यादतिक्रमम् ॥ ४४ ॥**

इदानीं रक्तातिस्रावदोषं दर्शयन्नाह,—शेषेत्यादि । न व्याधिरतिवर्तते न वृद्धिं याति । सावशेषे ततः स्थेयमिति सावशेषे दोषे रक्तं पुनः संशमनादिभिर्जयेत् ॥ ४४ ॥

**देहस्य रुधिरं मूलं रुधिरेणैव धार्यते ॥**
**तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः ॥ ४५ ॥**

कुतः पुनः शोणितस्रावणे अतिक्रमो न करणीय इत्याह,—देहस्येत्यादि । मूलमिति उत्पत्तिस्थितिप्रलयेषु शोणितमेव हेतुः, अनेनैव धार्यते स्थाप्यते ॥ ४५ ॥

**स्रुतरक्तस्य सेकाद्यैः शीतैः प्रकुपितेऽनिले ॥**
**शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत् ॥ ४६ ॥**

शोणितावशेषे पश्चात्कर्म दर्शयन्नाह,—स्रुतरक्तस्येत्यादि ॥ ॥ ४६ ॥

इति श्रीडह्लणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने चतुर्दशोऽध्यायः ।

---

## पञ्चदशोऽध्यायः।

**अथातो दोषधातुमलक्षयवृद्धिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥ २ ॥**

अथात इत्यादि। दोषाः वातादयः, धातवः रसादयः उपधातवश्च, मलाः पुरीषादयः, तेषां क्षयवृद्धिविज्ञान यस्मिन्नस्ति स तथा । अन्ये तु मलशब्दाग्रे आदिशब्दो लुप्तो द्रष्टव्यस्तेन स्तन्यार्तवगर्भादयोऽपि धातवो गृह्यन्ते इति वदन्ति ॥ १ ॥ २ ॥

**दोषधातुमलमूलं हि शरीरं तस्मादेतेषां लक्षणमुच्यमानमुपधारय ॥ ३ ॥**

कुतः पुनरेषां क्षयवृद्धी वक्तव्ये इत्याह,—दोषेत्यादि । हि यस्मादर्थे, यस्माच्छरीरं दोषादिमूलं यथा वृक्षादीनां संभवस्थितिप्रलयेषु मूलं प्रधानं तथा शरीरस्य वातादय इत्यर्थः । दोषधातुमलादीनां साम्यक्षयवृद्धयः स्वभावात् स्वलिङ्गेन कर्माख्यलिङ्गेन च ज्ञेयाः, तस्मात् साम्यादिज्ञाने एतल्लिङ्गद्वयं वाच्यम् । तदाह,—वातस्य स्वभावाख्यं लिङ्गं 'रूक्षः शीतः' इत्यादि वातव्याधौ वक्ष्यते; पित्तस्य तु 'पित्तं तीक्ष्णं द्रवम्' इत्यादि व्रणप्रश्ने; तथा कफस्य 'श्लेष्मा शीतो गुरुः' इत्यादि; एवं धातुमलयोरपि स्वभावाख्यं लिङ्गं दर्शनीयम् ॥ ३ ॥

**तत्र प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति ॥ ४ ॥**

इह तु दोषादीनां कर्माख्यं[1] लिङ्गं दर्शयन्नाह,—तत्र प्रस्पन्दनेत्यादि । प्रस्पन्दनं शरीरस्य चलनं, इदं व्यानस्य कर्म; उद्वहनं इन्द्रियार्थानां धारणं, उदानस्य कर्म; पूरणं आहारेण, प्राणस्य कर्म; विवेकः रसमूत्रपुरीषाणां पृथक्करणं, समानस्य कर्म; शुक्रमूत्रादीनां वेगकाले कर्मकरणं अवेगकाले धारणं, अपानस्य; पञ्चधा प्रविभक्तः इति प्राणोदानसमानव्यानापानभेदेन । अन्ये तु सामान्यं सर्ववायूनां प्रस्पन्दनादिकर्म आहुः; प्रस्पन्दनं श्वासप्रश्वासादिभावेन चलनं, उद्वहनं दोषधातुमलानामित इतोनयनं, पूरणमाहाररसादीनां स्वेषु स्वेषु आशयेषु नयनं, विवेकः पूर्ववदत्रापि, धारणं शरीरयन्त्रस्य । कथमित्याह,—पञ्चधा प्रविभक्त इत्यादि ॥ ४ ॥

**रागपक्त्योजस्तेजोमेधोष्मकृत्पित्तं पञ्चधा प्रविभक्तमग्निकर्मणा अनुग्रहं करोति ॥ ५ ॥**

प्रकृतिस्थस्य पित्तस्य कर्म निर्देष्टुमाह,—रागेत्यादि । कृत्शब्दो रागादिभिः प्रत्येकं संबध्यते । रागकृत् रसस्य रञ्जकाग्निसंज्ञं पित्तम्; पक्तिकृदाहारस्य पाचकाग्निसंज्ञं पित्तम्; ओजःकृत् साधकाग्निसंज्ञं पित्तं, ओजो हृदिस्थं सोमात्मकम्; तेजःकृदालोचकाग्निसंज्ञं पित्तं, तेजो दृष्टिः, तदुक्तं—"तेजो दृष्टिरिति ख्यातं तेजः शुक्रं प्रकीर्तितं"—इति; मेधाकृत् मेधा ग्रन्थाकर्षणसामर्थ्यं, तस्या अपि साधकाग्निसंज्ञमेव पित्तं कारकम्; ऊष्मकृत् त्वक्स्थं पित्तं भ्राजकाग्निसंज्ञं, ऊष्मा शरीरस्यौष्ण्यम् । पञ्चधा प्रविभक्तमिति पाचकरञ्जकसाधकालोचकभ्राजकभेदेन । अग्निकर्मणेति रागादि यदग्निकर्म तत् कृत्वेत्यर्थः । अनुग्रहं उपकारं करोति, शरीरस्येत्यनुवर्तते । अन्ये तु तेजःशब्देन वर्णप्रकाशिनीं त्वक्स्थां दीप्तिमाहुः । इदं च रागादिकर्म सामान्यं सर्वपित्तानामिति वदन्ति ॥ ५ ॥

**सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्यकृच्छ्लेष्मा पञ्चधा प्रविभक्त उदककर्मणा अनुग्रहं करोति ॥ ६ ॥**

---

[1] 'शरीरमात्रस्य' इति पाठान्तरम् ।

प्रकृतिस्थस्य कफस्य कर्म निर्दिशन्नाह,—सन्धीत्यादि। कृत्शब्दः सन्धिसंश्लेषणादिभिः प्रत्येकं संबध्यते। सन्धिसंश्लेषणकृत् सन्धिबन्धनं करोति; यद्यपि सन्धिसंश्लेषणं श्लेष्मकर्म व्रणप्रश्नेऽप्युक्तं, तथापीह तद्वचनं व्यानस्य सन्धिकारित्वात्तस्यापि सन्धिश्लेषणं कर्मेति शङ्कानिरासार्थम्। स्नेहनकृदिति शरीरस्य स्नैग्ध्यं करोति, स्निग्धत्वात्। रोपणकृत् व्रणस्य, सौम्यत्वात्। पूरणकृत् शरीरस्य, बहुत्वान्मूर्तत्वाच्च। बलकृत् पुष्टिकृत्। स्थैर्यकृत् त्रिकसन्धिदार्ढ्यकृत्, कफस्थानानां स्वकार्यसामर्थ्यं वा। पञ्चधा प्रविभक्तः आशयभेन आमाशयोरःशिरःकण्ठसन्धिभेदेनेत्यर्थः। अन्ये तु तस्यैव कफस्य आशयभेदेन पञ्चधाभिन्नस्य श्लेष्मकक्लेदकबोधकतर्पकावलम्बकनामान्याहुः। केचिदत्र कफकर्मसु बृंहणं तर्पणं च पठन्ति, व्याख्यानयन्ति च—बृंहणं शरीरस्य, द्रवत्वमूर्तिमत्त्वाभ्यां; तर्पणं तृप्तिजनकं धातूनाम्॥ ६॥

**रसस्तुष्टिं प्रीणनं रक्तपुष्टिं च करोति। रक्तं वर्णप्रसादं मांसपुष्टिं जीवयति च। मांसं शरीरपुष्टिं मेदसश्च। मेदः स्नेहस्वेदौ दृढत्वं पुष्टिमस्थ्नां च। अस्थि देहधारणं मज्ज्ञः पुष्टिं च। मज्जा प्रीतिं स्नेहं बलं शुक्रपुष्टिं पूरणमस्थ्नां च करोति। शुक्रं धैर्यं च्यवनं प्रीतिं देहबलं हर्षं बीजार्थं च॥ ७॥**

इदानीं धातूनां प्रकृतिस्थानां प्राकृतं कर्म निर्दिशन्नाह—रसस्तुष्टिमित्यादि। धैर्यं शौर्यं शूरत्वम्, अतएव क्लीबाः अधीराः। च्यवनं शीघ्रत्वेन विस्रंसनं, प्रीतिं स्नेहं प्रमदासु, देहबलं उत्साहोपचयलक्षणं, हर्षं पुनरुक्तं प्रमदास्वेव, बीजार्थं च इति बीजप्रयोजनम्। यथा ऋतुक्षेत्रादिसंपत्तौ बीजमङ्कुरजननं स्यात् एवं शुक्रमपि गर्भजनकमित्यर्थः। अन्ये त्वन्यथा पठन्ति—"रसः प्रीणयति। रक्तं जीवयति। मांसं लेपयति। मेदः स्नेहयति। अस्थि धारयति। मज्जा अस्थीनि पूरयति। शुक्रं धैर्यच्यवनं प्रीतिदेहबलहर्षबीजार्थकृत्"—इति; व्याख्यानयन्ति च—रसः प्रीणयति धातून् तर्पयतीत्यर्थः, रक्तं जीवयति प्राणानुवर्तनं करोति, मांसं लेपयति अस्थ्यादीन्, अस्थि धारयति शरीरमित्यर्थः, धैर्यच्यवनमिति धैर्यस्य च्यवनं धैर्यच्यवनं च्युतिः प्रमदासु विषये इत्यर्थः। अयं पाठो निबन्धकारैः सादरं पठितः॥ ७॥

**पुरीषमुपस्तम्भं वाय्वग्निधारणं च। बस्तिपूरणविक्लेदकृन्मूत्रम्। स्वेदः क्लेदत्वक्सौकुमार्यकृत्॥८॥**

अत ऊर्ध्वं मलानां प्राकृतं कर्मोच्यते—पुरीषमित्यादि। करोतीत्यनुवर्तते। उपस्तम्भः अवष्टम्भः शरीरधारणमित्यर्थः। केचित् पुरीषकर्मसु प्रीणनं पठन्ति न त्वाचार्याः। कश्चिदाचार्योऽत्र उपस्तम्भं न पठति। बस्तिः मूत्राशयः, तस्य पूरणं, विक्लेदमार्द्रत्वं च मूत्रं करोतीर्थः। अन्ये तु 'क्लेदविवेकजं बस्तिपूरणकृन्मूत्रं' इति पठन्ति, क्लेदविवेकजमिति क्लेद आर्द्रत्वं स चाहारस्य, तस्य विवेकत्वात् पृथक्त्वाज्जातं मूत्रम्। स्वेदः क्लेदत्वगिति केचित् स्वेदःक्लेदयतीति पठन्ति॥ ८॥

**रक्तलक्षणमार्तवं गर्भकृच्च। गर्भो गर्भलक्षणम्। स्तन्यं स्तनयोरापीनत्वजननं जीवनं चेति॥ ९॥**

अत उपधातूनां प्राकृतं कर्माह,—रक्तलक्षणमित्यादि। रक्तस्य यानि लक्षणानि तान्यस्य संभवन्तीति स्वभावकथनम्। गर्भकृच्चेति प्राकृतकर्मकथनम्। चकारात् रक्तकर्मापि जीवनं करोति। केचिदाचार्या 'रक्तलक्षणमार्तवं यथोक्तमकृत्रिमं गर्भकृच्च' इति पठन्ति, व्याख्यानयन्ति च—'यथोक्तमिति शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम्'—इत्याद्युक्तलक्षणं, अकृत्रिममिति वातपित्तकफैरधःप्रसृतैरष्टधा आर्तवदूषकैरसृग्दररूपतया वा कृतं कृत्रिमं, न कृत्रिमं अकृत्रिमं शुद्धं गर्भकृद्भवतीत्यर्थः। गर्भो गर्भलक्षणमिति अत्र स्तनयोः श्यावमुखत्वेत्यादिकं करोतीत्यध्याहारः। स्तन्यमिति आपीनत्वजननं मांसलत्वजननम्। जीवनं बालानां, तेषामेव स्त्रीक्षीरसात्म्यत्वात्॥ ९॥

**तत्र विधिवत्परिरक्षणं कुर्वीत॥ १०॥**

प्रकृतिस्थानां रक्षणमाह—तत्रेत्यादि। तत्र तेषु वातादिषु प्रकृतिस्थेषु, विधिवत् विधिनोपपन्नं विधिरत्र स्वास्थ्यवृत्तिकः, परिरक्षणं सर्वतो रक्षणम्॥ १०॥

**अत ऊर्ध्वमेषां क्षीणलक्षणं वक्ष्यामः। (क्षयः पुनरेषामतिसंशोधनातिसंशमनवेगविधारणासात्म्यान्नमनस्तापव्यायामानशनातिमैथुनैर्भवति) तत्र वातक्षये मन्दचेष्टता अल्पवाक्त्वमप्रहर्षो मूढसंज्ञता च। पित्तक्षये मन्दोष्माग्निता निष्प्रभत्वं च। श्लेष्मक्षये रूक्षता अन्तर्दाह आमाशयेतराशयश्लेष्माशयशून्यता सन्धिशैथिल्यं तृष्णादौर्बल्यं प्रजागरणं च॥ ११॥**

अत ऊर्ध्वमित्यादि। केचिदत्र "क्षयः पुनरेषामतिसंशोधनातिसंशमनवेगविधारणासात्म्यान्नमनस्तापव्यायामानशनातिमैथुनैर्भवति"—इति क्षयकारणानि पठन्ति। एतानि प्रायो वायोर्वृद्धिं कुर्वन्ति पित्तकफयोस्तु क्षयमिति; तस्माद् यथासंभवं कारणं ज्ञेयं; नास्मिन् पाठे प्रयोजनमित्याचार्या वदन्ति। तत्र वातक्षय इत्यादि। मन्दचेष्टता मन्दकायव्यापारता। अप्रहर्षः अतुष्टिः। मूढसंज्ञता नष्टसम्यग्ज्ञानता। चकारात् प्राकृतकर्महानिः तद्विरोधिनश्च श्लेष्मणः प्राकृतकर्मवृद्धिरिति चकारः समुच्चिनोति। एवं पित्तादिक्षयेष्वपि चकारे प्रयोजनं ज्ञेयम्। पित्तक्षय इत्यादि निष्प्रभता प्रभाहानिः। श्लेष्मक्षय इत्यादि आमाशयः यत्राशितादि पच्यते, इतराशयाः उरःकण्ठशिरःसन्धय इति; श्लेष्माशयशून्यतेति कृते सति आमाशयो लब्धः, यदामाशयस्य पृथगुपादानं तद्विशेषेण शून्यताख्यापनार्थम्। केचित् शिरःशब्दं सूत्रे पठन्ति, शिरसोऽपि सर्वेन्द्रियाधिष्ठानत्वेन प्राधान्यात् पृथगभिधानम्॥ ११॥

**तत्र स्वयोनिवर्धनान्येव प्रतीकारः॥ १२ ॥**

दोषक्षये चिकित्सामाह,—तत्रेत्यादि । स्वयोनिवर्धनान्येवेति शीतरूक्षादीनि । प्रतीकारः चिकित्सितम् । न पुनः स्वयोनिवर्धनान्यपि कटुकादीनि, कुतः ? भूयस्त्वेनान्यदोषप्रकोपणत्वात् । तथाचोक्तं,—"वातक्षये शीतरूक्षैर्न त्वन्यैः कटुकादिभिः । पित्तक्षयेऽपि कटुकैरुष्णैर्न लवणादिभिः । क्षीरादिभिः स्निग्धशीतैः प्रतिकुर्यात् कफक्षये"—इति। अन्ये तु व्याख्यानयन्ति—स्वयोनिवर्धनानि स्वयोनिरात्महेतुः; तत्र वायोर्वायुरेव हेतुः, पित्तस्याग्निर्हेतुः, कफस्य हेतुरापः; वातक्षये वातवर्धनानि पित्तक्षये पित्तवर्धनानि कफक्षये कफवर्धनानि । कफस्य योनी रसः, पित्तस्य रक्तमित्यपरे; रसरक्तयोरपि वर्धनानि आप्यतैजसद्रव्याणि इति स एवार्थः ॥ १२ ॥

**रसक्षये हृत्पीडाकम्पशोषशून्यतास्तृष्णा च । शोणितक्षये त्वक्पारुष्यमम्लशीतप्रार्थना सिराशैथिल्यं च । मांसक्षये स्फिग्गण्डौष्ठोपस्थोरुवक्षःकक्षापिण्डिकोदरग्रीवाशुष्कता रौक्ष्यतोदौ गात्राणां सदनं धमनीशैथिल्यं च । मेदःक्षये प्लीहाभिवृद्धिः सन्धिशून्यता रौक्ष्यं मेदुरमांसप्रार्थना च । अस्थिक्षये अस्थिशूलं दन्तनखभङ्गो रौक्ष्यं च । मज्जक्षये अल्पशुक्रता पर्वभेदोऽस्थिनिस्तोदोऽस्थिशून्यता च। शुक्रक्षये मेढ्रवृषणवेदना अशक्तिर्मैथुने चिराद्वा प्रसेकः, प्रसेके च अल्परक्तशुक्रदर्शनम् ॥ १३ ॥**

इदानीं धातुक्षयं दर्शयति—रसक्षय इत्यादि । हृच्छब्दः पीडादिभिः शून्यतान्तैः प्रत्येकं संबध्यते । तृष्णा उदकपानाभिलाषः । चकारप्रयोजनं दोषक्षयप्रस्तावे दर्शितम् । अन्ये तु 'रसक्षये हृत्पीडा कम्पः शोषः शून्यता तृष्णा च' इति पठन्ति व्याख्यानयन्ति च—शोषः शरीरस्य, शून्यता आमाशयस्य मनसो वा, शेषं समम् । शोणितक्षय इत्यादि। अम्लशीतप्रार्थनेति शोणितक्षये सति वातवृद्धौ तत्प्रत्यनीकाम्लरसेच्छा, तथा रक्तस्य द्रवत्वात् तत् क्षये तेजोवृद्धौ शीतप्रार्थनापि । केचिदग्नीषोमीयत्वाद्रक्तस्य तत्तुल्यगुणयोरम्लशीतयोरप्यत्र द्रष्टव्यम् । मांसक्षय इत्यादि । स्फिचौ कटिप्रोथौ, गण्डौ गल्लौ, उपस्थः योनिः, लोके जङ्घेति व्याख्याता, वक्षः उरः, पिण्डिका जानुगुल्फयोरन्तरम्; शुष्कशब्दः स्फिगादिभिः प्रत्येकं संबध्यते । मेदःक्षय इत्यादि । रौक्ष्यं त्वचि । मेदुरमांसप्रार्थनेति मेदुरं स्निग्धतमं, प्रार्थना अभिलाषः । अस्थिक्षय इत्यादि । रौक्ष्यं देहस्य दन्तनखानां वा । दन्तानामस्थिमयत्वाद्भङ्गः । मज्जक्षय इत्यादि । पर्वभेदः ग्रन्थिपीडा; अस्थिशून्यता रिक्तता, पूरणाभावात् । शुक्रक्षय इत्यादि । चिराद्वा प्रसेकः कथंचित् प्रवृत्तावपि चिरकालेन क्षरणम्; अल्परक्तशुक्रदर्शनं शुक्रं क्षीणं मज्जमिश्रमल्परक्तत्वमृच्छति; अन्ये तु अल्पशुक्रदूषणदर्शनं धातुक्षयात् कुपितो वायुः शोणितमल्पशुक्रमिश्रं निस्रावयति, शुक्रस्य सर्वशरीरव्यापिनोऽपि विशेषाधारत्वान्मेढ्रवृषणनिर्देशः ॥ १३ ॥

**तत्रापि स्वयोनिवर्धनद्रव्योपयोगः ॥ १४ ॥**

चिकित्सासूत्रं निर्दिशन्नाह,—तत्रापीत्यादि । स्वयोनिवर्धनमपि समानेन द्रव्येण समानगुणेन समानगुणभूयिष्ठेन वा । समानेन द्रव्येण यथा रक्तेन वर्धते मांसं, मांसेन मेदः, मेदसा अस्थि, तरुणसंज्ञकेनास्थ्ना मज्जा, मज्ज्ञा शुक्रं; समानगुणेन यथा—रक्तक्षये तैजसद्रव्योपयोगः, तेजोगुणभूयिष्ठद्रव्योपयोगो वेत्यादि बोद्धव्यम् । द्रव्यग्रहणमुपलक्षणं, तेन कर्मापि यद् यस्य धातोरभिवृद्धिकरं तत्क्षये तत् सेव्यम् । तत्र स्वयोनिद्रव्याणां अवबोधार्थं धातुमलोपधातुषु श्लोकाः कथ्यन्ते,—"यद्यपि पञ्चभूतानां वाच्यः पाको द्विधा पुनः । तथाप्यपां प्रधानत्वाद्रसः सौम्योऽभिधीयते ॥ अतिरिक्ता गुणा रक्ते वह्नेर्मांसे तु पार्थिवाः । मेदस्यम्बुभुवोरस्थ्नि पृथिव्यनिलतेजसाम् ॥ मज्ज्ञि शुक्रे वा सौम्यस्य मूत्रेऽम्बुशिखिनोर्गुणाः । भुवो विश्यार्तवे त्वग्नेः प्रस्वेदस्त्वन्ययोरपाम् ॥ इति धातुमलेषूक्ता गुणाः प्राधान्यतः स्थिताः । प्रायेण भूगुणा गर्भे स्तोकाद्यनुग्रहा इति" ॥ १४ ॥

**पुरीषक्षये हृदयपार्श्वपीडा सशब्दस्य च वायोरूर्ध्वगमनं कुक्षौ संचरणं च । मूत्रक्षये बस्तितोदोऽल्पमूत्रता च । अत्रापि स्वयोनिवर्धनद्रव्योपयोगः । स्वेदक्षये स्तब्धरोमकूपता त्वक्शोषः स्पर्शवैगुण्यं स्वेदनाशश्च; तत्राभ्यङ्गः स्वेदोपयोगश्च॥१५**

मलक्षयं दर्शयन्नाह,—पुरीषक्षय इत्यादि । कुक्षिरत्र जठरम् । अत्र चिकित्सासूत्रं निर्दिशन्नाह,—अत्रापीत्यादि । पुरीषक्षये माषकुल्माषादीनां, मूत्रक्षये इक्षुत्रपुसादीनामुपयोगः । स्वेदक्षय इति । स्पर्शवैगुण्यं स्पर्शहानिः । चिकित्सामाह,—तत्राभ्यङ्ग इत्यादि । चकारात् स्वेदजननकुक्कुटवराहादिमांसोपयोगश्चाभ्यन्तरो लभ्यते ॥ १५ ॥

**आर्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च; तत्र संशोधनमाग्नेयानां च द्रव्याणां विधिवदुपयोगः । स्तन्यक्षये स्तनयोर्म्लानता स्तन्यासंभवोऽल्पता वा; तत्र श्लेष्मवर्धनद्रव्योपयोगः । गर्भक्षये गर्भास्पन्दनमनुन्नतकुक्षिता च; तत्र प्राप्तबस्तिकालायाः क्षीरबस्तिप्रयोगो मेध्यान्नोपयोगश्चेति ॥ १६ ॥**

उपधातुक्षयमाह,—आर्तवक्षय इत्यादि । यथोचितकालो मासि मासि त्र्यहस्रवणम् । चिकित्सामाह,—तत्र संशोधनमिति संशोधनमिह सामान्यमिति केचित्; संशोधनमिह वमनं न विरेक इत्यपरे, कुतः ? विरेचनेन हि पित्तक्षयादार्तवस्य क्षय एव स्यादिति, वमनेन तु सौम्यधातौ निहृते आग्नेयधातौ वृद्धे आर्तवमाप्याय्यते । आग्नेयानां च द्रव्याणां इति तिलमाषसुरासुक्तादीनाम् । स्तन्यक्षय इति, म्लानता अनुन्नतिः । चिकित्सामाह,—तत्र श्ले-

ष्मवर्धनेति स्तन्यस्य रसजत्वात्। गर्भक्षय इत्यादि। अत्र चिकित्सामाह,—तत्रेति। प्राप्तबस्तिकालायाः प्राप्ताष्टममासाया इत्यर्थः। मेध्यान्नोपयोगः इति स्निग्धान्नोपयोगः, 'मेध्याण्डोपयोग' इत्यन्ये पठन्ति, मेध्याण्डानि वृष्याण्डानि, बस्तमत्स्याण्डादीनीति व्याख्यानयन्ति॥ १६॥

**अत ऊर्ध्वमतिवृद्धानां दोषधातुमलानां लक्षणं वक्ष्यामः। वृद्धिः पुनरेषां स्वयोनिवर्धनात्युपसेवनाद् भवति। तत्र वातवृद्धौ वाक्यपारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढवर्चस्त्वं च। पित्तवृद्धौ पीतावभासता संतापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्बल्यं पीतविण्मूत्रनेत्रत्वं च। श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्यं गौरवमवसादस्तन्द्रा निद्रा सन्ध्यस्थिविश्लेषश्च॥१७॥**

अत ऊर्ध्वमित्यादि। चकारोऽयं वातस्य प्रकृतिकर्मणोऽतिशयत्वं समुच्चिनोति, एवं पित्तकफरसादिष्वपि चकारप्रयोजनम्। वाक्पारुष्यं वचनकार्कश्यं, केचित् वाक्पारुष्यं न पठन्ति। कार्श्यं मांसक्षयः। कार्ष्ण्यं कृष्णत्वं शरीरे। अल्पबलत्वं उत्साहहानिः। पित्तवृद्धावित्यादि। अल्पनिद्रता किंचित्स्निग्धत्वात् पित्तस्य। मूर्च्छा सर्वेन्द्रियशक्तेस्तिरस्कारः। बलहानिः इह ओजोहानिः, संतापात्तत्क्षयोपपत्तेः। श्लेष्मवृद्धावित्यादि। शौक्ल्यशैत्ये त्वगादीनाम्। स्थैर्यं गात्राणां स्तम्भः। अवसादः चित्तदेहयोर्ग्लानिः। तन्द्रा निद्राभेदः। सन्धिविश्लेषः अत्यन्तवृद्धेन विघटनम्। 'सन्ध्यस्थिश्लिष्टता' इति केचित् पठन्ति व्याख्यानयन्ति च,—कफोपचितत्वात् सुष्ठु सङ्घट्टनं सन्ध्यस्थ्नोर्भवति। 'अध्यस्थिश्लिष्टता' इति क्वचित् पाठः॥ १७॥

**रसोऽतिवृद्धो हृदयोत्क्लेदं प्रसेकं च आपादयति। रक्तं रक्ताङ्गाक्षितां सिरापूर्णत्वं च। मांसं स्फिग्गण्डौष्ठोपस्थोरुबाहुजङ्घासु वृद्धिं गुरुगात्रतां च। मेदः स्निग्धाङ्गतामुदरपार्श्ववृद्धिं कासश्वासादीन् दौर्गन्ध्यं च। अस्थि अध्यस्थीनि अधिदन्तांश्च। मज्जा सर्वाङ्गनेत्रगौरवम्। शुक्रं शुक्राश्मरीमतिप्रादुर्भावं च॥१८॥**

धातूनामतिवृद्धिं दर्शयन्नाह,—रसोऽतिवृद्ध इत्यादि। हृदयोत्क्लेदं' हृल्लासं, अन्ये छर्दिमाहुः। प्रसेकं लालास्राव इत्यर्थः। आपादयतीति क्रियापदं गर्भो जठराभिवृद्धिं स्वेदं चेत्यन्तं यावदनुवर्तते। अध्यस्थि अधिकास्थीति। अधिदन्तान् इति अधिकान् दन्तान्, चकारात् केशनखयोरप्यतिवृद्धिर्ज्ञेया। शुक्रमिति। अतिप्रादुर्भावं इति अतिप्रवृत्तिं शुक्रस्येत्यर्थः॥ १८॥

**पुरीषमाटोपं कुक्षौ शूलं च। मूत्रं मुहुर्मुहुः प्रवृत्तिं बस्तितोदमाध्मानं च। स्वेदस्त्वचो दौर्गन्ध्यं कण्डूं च॥१९॥**

मलानामतिवृद्धिं दर्शयन्नाह,—पुरीषमित्यादि। आटोपं आध्मानं, क्षोभमित्यन्ये। मूत्रमित्यादि। आध्मानमिह बस्तेरेव॥१९॥

**आर्तवमङ्गमर्दमतिप्रवृत्तिं दौर्गन्ध्यं च। स्तन्यं स्तनयोरापीनत्वं मुहुर्मुहुः प्रवृत्तिं तोदं च। गर्भो जठराभिवृद्धिं स्वेदं च॥२०॥**

उपधातूनामतिवृद्धिं निर्देष्टुमाह,—आर्तवमित्यादि। अङ्गमर्दः वेदनाविशेषः। दौर्गन्ध्यं पित्तधर्मत्वादार्तवस्य। तदुक्तं—"इषत्कृष्णं विगन्धं च" इत्यादि। दौर्बल्यमित्यन्ये पठन्ति। चकाराद्रक्तगुल्मादीनपि॥ २०॥

**तेषां यथास्वं संशोधनं क्षपणं च क्षयादविरुद्धैः क्रियाविशेषैः कुर्वीत॥२१॥**

चिकित्सासूत्रं निर्दिशन्नाह,—तेषामित्यादि। यथास्वं यद्यदस्यात्मीयम्। क्षपणं अत्र संशमनम्। क्षयादविरुद्धैः क्रियाविशेषैः इति तन्त्रान्तरोक्तैः। तथाहि,—"छिन्नाविश्वादिभिर्वायुं पित्तं क्षौद्रफलत्रिकैः। कफं गुडार्द्रकाद्यैश्च जयेद्दोषाविरोधिभिः—" इति। अन्ये त्वेवं पठन्ति 'तेषां क्षपणमविरुद्धैः क्रियाविशेषैः कुर्वीत'। क्रियाविशेषैरिति क्रिया संशोधनसंशमनाहाराचाराख्या॥ २१॥

**पूर्वः पूर्वोऽतिवृद्धत्वाद्वर्धयेद्धि परं परम्॥**
**तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम्॥२२॥**

स्वयं तावदेते वृद्धाः अनर्थकराः, परम्परया वर्धिताः परधातुभिरपि महानर्थकारिण इति दर्शयन्नाह,—पूर्व इत्यादि। हिर्यस्मादर्थे। ह्रासनं इति ह्रासोऽत्र वृद्धेर्हानिः। पूर्वः पूर्व इत्याद्युपलक्षणम्। तेन परोऽपि वृद्धः पूर्वं वर्धयति, तथा परोऽपि क्षीणः पूर्वं क्षपयति। केचिदमुं श्लोकं यस्य धातुक्षयाद्वायुरित्यादिश्लोकस्याग्रे पठन्ति॥ २२॥

**बललक्षणं बलक्षयलक्षणं चात ऊर्ध्वमुपदेक्ष्यामः। तत्र रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत् खलु ओजस्तदेव बलमित्युच्यते स्वशास्त्रसिद्धान्तात्॥२३॥**

बललक्षणमित्यादि। परं उत्कृष्टं तेज इव तेजः, तेजो घृतं यथा कृत्स्नक्षीरस्नेहः तथैव ओजोऽपि कृत्स्नधातुस्नेह इत्यर्थः; यत् परं तेज इति यदुत्कृष्टं सार इत्यन्ये व्याख्यानयन्ति। तत् खल्वोजस्तदेव बलमिति। इयं विवादोक्तिः चिकित्सैक्यार्था, परमार्थतस्तु बलौजसोर्भेद एव, यथा भेदस्तदुच्यते—सर्वधातुस्नेहभूतस्योपचयलक्षणस्योजसो रूपरसौ वीर्यादि च विद्यते, बलस्य तु भारहरणादिशक्तिगम्यस्य रसवीर्यवर्णादिगुणा न विद्यन्ते, अतोऽनयोर्भेदोऽस्त्येवेति; तथाच बलौजसोर्भेदो वेदोत्पत्तावध्याये उक्तः,—"प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च"—इति। तन्त्रान्तरे तु ओजःशब्देन रसोऽप्युच्यते, जीवशोणितमपि ओजःशब्देनामनन्ति, ऊष्माणमपि ओजःशब्देनापरे वदन्ति॥ २३॥

**तत्र बलेन स्थिरोपचितमांसता सर्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो बाह्यानामाभ्यन्तराणां च करणानामात्मकार्यप्रतिपत्तिर्भवति ॥ २४ ॥**

बलस्य प्राकृतं कर्म निर्देष्टुमाह,—तत्र बलेनेति । स्थिरोपचितमांसतेति सर्वधातुसारोपचयलक्षणेन बलेन । सर्वचेष्टासु इति कायवाङ्मनोव्यापारेषु, अप्रतिघातः अप्रतिहतत्वम्; एतत् भारहरणादिशक्तिलक्षणेन बलेन । स्वरवर्णप्रसादः इति प्रसादो नैर्मल्यं; एतदुभयात्मकेन । बाह्यानामित्यादि । बाह्यानां करणानां कर्मेन्द्रियाणां, आभ्यन्तराणां बुद्धीन्द्रियाणाम् । आत्मकार्यप्रतिपत्तिः स्वकीयकार्यावबोधो भवति; प्रतिपत्तिरत्रानुष्ठानमित्यन्ये । तत्र बाह्यानां वाक्पाणिपादपायूपस्थानामात्मकार्याणि वचनादानगमनविसर्गानन्दनानि, आभ्यन्तराणां करणानां श्रोत्रत्वक्चक्षुर्जिह्वानासिकानामात्मकार्याणि शब्दस्पर्शरूपरसगन्धग्रहणानि, एतद्प्युभयात्मकेन बलेन । केचिदन्यथा व्याख्यानयन्ति—बाह्यानां श्रोत्रत्वक्चक्षुर्जिह्वानासिकावाक्पाणिपादपायूपस्थानां; आभ्यन्तराणां मनोबुद्धिप्रभृतीनाम् ॥ २४ ॥

**भवन्ति चात्र ।**

**ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम् ॥**
**विविक्तं मृदु मृत्स्नं च प्राणायतनमुत्तमम् ॥२५॥**
**देहस्यावयवस्तेन व्याप्तो भवति देहिनाम् ॥**
**तदभावाच्च शीर्यन्ते शरीराणि शरीरिणाम्॥२६॥**

बलकारणभूतमोजः, अतः बलचिकित्सार्थं स्वचिकित्सार्थं च प्राकृतैर्गुणैर्निर्दिशन्नाह,—ओज इत्यादि । सोमात्मकं सौम्यम् । स्निग्धं स्नेहगुणयुक्तम्, शुक्लं इति श्वेतम्, यत्तु चरके—"हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम्—" इत्यादिश्लोकेन ओजस्त्रिवर्णं पठितं । तत्र हि शुद्धग्रहणेन शुक्लमुक्तं, अतः शुक्लपीतरक्तवर्णास्त्रय उक्ताः; अत्राप्योजसस्त्रय एव वर्णाः, येनात्र 'शुक्लमोज' इति प्रोक्तं, शुक्रौजसोरभेदात् अपरं तैलक्षौद्रवर्णद्वयं प्राप्तं; तेनात्रापि शुक्लरक्तपीतवर्णास्त्रय एवौजस उक्ताः, न चात्र शुक्रौजसोर्भेदः स्वीकर्तव्यः, तस्मिन् सति अष्टधातुत्वं स्यात्, तस्मात् रसादिधातुस्नेहपरम्पराहेतुकः स्नेहः शुक्रं, शुक्रस्नेहात् क्षीरस्थघृतमिवाभिन्नमोजः शुक्रेण । अपरे शुक्लस्थाने शुक्रं पठन्ति, युक्तं चैतत् शुक्रवर्णेनैवोजोवर्णानां निर्दिष्टत्वात् । शीतं शीतवीर्यम् । स्थिरं शरीरावयवस्थैर्यकारि । सरं प्रसरणशीलम् । अन्ये त्वत्र रसमिति पठन्ति, प्रधानरसकल्पनया मधुरमिति व्याख्यानयन्ति । विविक्तं श्रेष्ठैर्गुणैर्युक्तं; अन्ये तु विविक्तं प्रत्यग्रमाहुः, ततः प्रत्यग्रैरेवान्नादिभिराप्यायनम् । मृदु कोमलम् । मृत्स्नं च इति पिच्छिलम् । चकाराद् गुर्वादयो गुणा अनुक्ताः समुच्चीयन्ते । प्राणानां अग्नीषोमादीनां आयतनं स्थानम् । उत्तमं श्रेष्ठम् । तत्र बलेनेत्यादिवाक्येन स्थितौ हेतुत्वं प्रतिपादयति । तेन ओजसा भवति उत्पद्यते । इदानीं प्रलये तस्यैव हेतुत्वं दर्शयन्नाह,—तदभावादित्यादि । शीर्यन्ते विनश्यन्ति । अयं पाठः अभावात् संमग्रो न लिखितः ॥ २५ ॥ २६ ॥

**अभिघातात्क्षयात्कोपाच्छोकाद्ध्यानाच्छ्रमात्क्षुधः ।**
**ओजः संक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् ॥**
**तेजः समीरितं तस्माद्विस्रंसयति देहिनः ॥ २७ ॥**

इदानीमभिघातादिभिः हेतुभिरोजसः क्षयं निर्दिशन्नाह,—अभिघातादित्यादि । एभ्य अभिघातादिहेतुभ्यः । धातुग्रहणमिति धातवो गृह्यन्ते यैस्तानीति धातुग्रहणानि धातुवाहीनि स्रोतांसि, तेभ्यो निःसृतं निर्गतं सर्वधातुस्नेहपरम्परारूपेण; अथवा धातुग्रहणं हृदयं धातुस्रोतसां स्थानत्वात्, तस्माद्धृदयान्निःसृतं, स्रोतसां मुखैरेव । अन्ये हृदयमेव धातून् गृह्णाति इति धातुग्रहणशब्देनैव हृदयमुच्यते । तेजः समीरितं सम्यक्प्रेरितं वातेनेति शेषः । तस्मात् हृदयात्; विस्रंसति च्यावयति ॥ २७ ॥

**तस्य विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य भवन्ति ॥ २८॥**

तस्योजसः क्षयभेदान् साध्यासाध्यज्ञानार्थं स्वलक्षणैर्निर्दिशन्नाह,—तस्येत्यादि । विस्रंसः स्थानात् च्युतिरभिघातादिभिरेव । व्यापत् अन्यथापत्तिः, सा दुष्टदोषदूष्यसंसर्गात् । क्षयः स्वप्रमाणात् शोकध्यानक्षयादिभिः । लिङ्गानि व्यापन्नस्य भवन्तीति केचित् पठन्ति; व्यापन्नस्य व्यापन्नदोषदूषितस्य ॥ २८ ॥

**सन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विस्रंसे । स्तब्धगुरुगात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने । मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति च क्षये॥२९**

विस्रंसादीनामोजःक्षयभेदानां किं लिङ्गमित्याह,—सन्धिविश्लेष इति । सन्धिविश्लेषः सन्धीनां विघट्टनम् । दोषच्यवनं स्वस्थानाद्वातादीनां भ्रंशः, अन्ये दोषैः कृत्वा च्यवनमोजस इति वदन्ति, दोषाणां च्यवनं मलानां च्यवनमिति केचित् । क्रियाणां कायवाङ्मानसीनां सन्निरोधः; क्रियाशब्दाग्रे नञ् लुप्तो द्रष्टव्यः, नञ् ईषदर्थे, तेन क्रियाणामीषत् सन्निरोध इत्यन्ये व्याचक्षते । चकारात् बलस्य प्राकृतकर्महानिः । एवं व्यापत्तौ क्षये च चकारप्रयोजनम् । एतानि लिङ्गानि विस्रंसे भवन्तीति योज्यम् । स्तब्धगुरुगात्रतेति स्तब्धगुरुभ्यां गात्रतेति संबध्यते । स्तब्धगात्रता जान्वादेरनमनसामर्थ्यम् । वर्णभेदः गौरादिवर्णान्यत्वम् । ग्लानिः अप्रहर्षः । तन्द्रा इन्द्रियार्थेऽकर्मण्यता । व्यापन्ने लिङ्गानि भवन्तीत्यनुवर्तते । मूर्च्छेति मूर्च्छा विज्ञानेन्द्रियनिरोधः । मोहः वैचित्त्यम् । प्रलापः असंबद्धभाषणम् । क्षये लिङ्गानि भवन्तीत्यनुवर्तते ॥ २९ ॥

**भवन्ति चात्र ।**

**त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः ॥**
**विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः ॥**
**अप्राचुर्यं क्रियाणां च बलविस्रंसलक्षणम् ॥ ३०॥**
**गुरुत्वं स्तब्धताऽङ्गेषु ग्लानिर्वर्णस्य भेदनम् ॥**
**तन्द्रा निद्रा वातशोफो बलव्यापदि लक्षणम्॥३१॥**

**मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च ॥**
**पूर्वोक्तानि च लिङ्गानि मरणं च बलक्षये ॥ ३२॥**

गद्योक्तमेवार्थं श्लोकैराह,—त्रय इत्यादि । त्रयो दोषाः तिस्रो विकृतयः । विश्लेषसादावित्यादि पूर्वोक्तानि विस्रंसादीनां लिङ्गानीत्यर्थः ॥ ३०-३२ ॥

**तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धैर्बलमास्थापयेत्; नष्टसंज्ञमितरं तु वर्जयेत् ॥ ३३ ॥**

**तेजोऽपि आग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं वसाख्यं स्त्रीणां विशेषतो भवति, तेन मार्दवसौकुमार्यमृद्वल्परोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति । तत् कषायतिक्तशीतरुक्षविष्टम्भिवेगविघातव्यवायव्यायामव्याधिकर्षणैश्च विक्रियते । तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभत्वानि विस्रंसने भवन्ति, कार्श्यं मन्दाग्निताधस्तिर्यक् च विच्युतिर्व्यापत्तौ, दृष्ट्यग्निबलहान्यनिलप्रकोपमरणानि क्षये; तत्रापि स्नेहपानाभ्यङ्गप्रदेहपरिषेकस्निग्धलघ्वान्नानि क्षये विदधीत ॥ ३४**

चिकित्सासूत्रं निर्दिशन्नाह, —तत्रेत्यादि । क्रियाविशेषैः रसायनवाजीकरणादिभिः । अविरुद्धैः अन्याय्यविरुद्धैः । बलं शक्त्युपचयलक्षणम् । आप्याययेत वर्धयेत । क्षीणस्यावस्थायां वर्जनमाह,—इतरं त्वित्यादि ।—इतरं क्षीणं, वर्जयेदित्याह, नष्टसंज्ञं मूढसंज्ञं, पूर्वं मोहस्योक्तत्वात् । नष्टसंज्ञं वर्जयेदित्येतस्याग्रे केचित् सुश्रुताध्यायिनः " तेजोऽप्याग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं वसाख्यं स्त्रीणां विशेषतो भवति । तेन मार्दवसौकुमार्यमृद्वल्परोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति, तत् कषायतिक्तशीतरुक्षविष्टम्भिवेगविघातव्यवायव्यायामव्याधिकर्षणैश्च विक्रियते । तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभत्वानि विस्रंसने भवन्ति, कार्श्यं मन्दाग्निताधस्तिर्यक्च विच्युतिर्व्यापत्तौ, दृष्ट्यग्निबलहान्यनिलप्रकोपमरणानि क्षये । तत्र स्नेहपानाभ्यङ्गप्रदेहपरिषेकस्निग्धलघ्वन्नानि क्षये विदधीत " इति । अमुं न पठन्ति । कुतः ? निबन्धकारैरनार्षीकृतत्वात् । इतरं तु इत्यादि पाठाग्रे असौ पठितव्यः ॥३३॥३४॥

**भवन्ति चात्र ।**

**दोषधातुमलक्षीणो बलक्षीणोऽपि वा नरः ॥**
**स्वयोनिवर्धनं यत्तदन्नपानं प्रकाङ्क्षति ॥ ३५ ॥**
**यद्यदाहारजातं तु क्षीणः प्रार्थयते नरः ॥**
**तस्य तस्य स लाभे तु तं तं क्षयमपोहति ॥ ३६ ॥**
**यस्य धातुक्षयाद्वायुः संज्ञां कर्म च नाशयेत् ॥**
**प्रक्षीणं च बलं यस्य नासौ शक्यश्चिकित्सितुम् ॥ ३७**

दोषेत्यादि । स्वयोनिवर्धनं आत्मकारणवर्धनं यदन्नपानं तदभिलषति । यद्यदित्यादि । आहारजातं आहारसमूहम् । केचिदाचार्या अमुं श्लोकं न पठन्ति । केचित् सुश्रुताध्यायिनोऽत्र दोषधात्वादिक्षयविनाशार्थं देयमन्नादिकं पठन्ति,— "मुद्गान् यवान् हरेणूंश्च रूक्षं च लघुभोजनम् । कषायकटुतिक्तं च वातक्षीणोऽभिकाङ्क्षति ॥ तिलमाषकुलत्थादि पिष्टान्नविकृतिं तथा । मस्तुसुक्ताम्लतक्राणि पित्तक्षीणस्तथा दधि ॥ मांसं माहिषवाराहमाजं गुडगुरूणि च । श्लेष्मक्षीणोऽभिलषति क्षीरस्वप्नदधीनि च ॥ इक्षुमांसरसं मन्थं मधुसर्पिर्गुडोदकम् । असृङ्मांसं यवागूं च रसक्षीणोऽभिवाञ्छति ॥ द्राक्षादाडिमयुक्तानि सस्नेहलवणानि च । रक्तसिद्धानि मांसानि रक्तक्षीणोऽभिकाङ्क्षति ॥ अम्लानि दधिसिद्धानि तथा खाडवकानि च । स्थूलक्रव्यादमांसानि मांसक्षीणोऽभिकाङ्क्षति ॥ मेदःसिद्धानि मांसानि ग्राम्यानूपौदकानि च । सक्षाराणि विशेषेण मेदःक्षीणोऽभिकाङ्क्षति ॥ रसान् सुसिद्धान् सास्थीनि मांसानीहाभिकाङ्क्षति । अस्थिक्षीणः श्लथं मांसं मज्जास्थिस्नेहसंयुतम् । स्वाद्वम्लसंयुतं द्रव्यं मज्जक्षीणोऽभिकाङ्क्षति ॥ मयूरकुक्कुटाण्डानि हंससारसयोस्तथा ॥ ग्राम्यानूपौदकानी च शुक्रक्षीणोऽभिकाङ्क्षति । यवानि यवकान्नानि शाकानि विविधानि च ॥ मायूरं माषयूषं च वर्चःक्षीणोऽभिकाङ्क्षति । पेयमिक्षुरसं क्षीरं सगुडं बदरोदकम् ॥ मूत्रक्षीणोऽभिलषति त्रपुसैर्वारुकाणि च । अभ्यङ्गो मर्दनं यच्च निवातशयनाशनम् ॥ गुरुप्रावरणं चैव स्वेदक्षीणोऽभिकाङ्क्षति । कट्वम्ललवणाम्लानि विदाहीनि गुरूणि च ॥ फलशाकानुपानानि स्त्री वाञ्छत्यार्तवक्षयात् । मृगाजाविवराहाणां गर्भान् वाञ्छति संस्कृतान् ॥ वसाशून्यप्रकारादीन् भोक्तुं गर्भपरिक्षये । यूषशाल्यन्नमांसानि गोक्षीरं शर्करां तथा ॥ आसवं दधि हव्यानि क्षये स्तन्यस्य वाञ्छति ।" यस्येत्यादि इतरं तु नष्टसंज्ञं वर्जयेदित्यन्तेनैवास्योक्तार्थत्वात् केचिदमुं न पठन्ति । सर्वधातुक्षयख्यापकत्वाद्भिन्नविषयोऽयं श्लोकस्तस्मात् पठनीय इत्यन्ये ॥३५-३७॥

**रसनिमित्तमेव स्थौल्यं कार्श्यं च । तत्र श्लेष्मलाहारसेविनोऽध्यशनशीलस्य अव्यायामिनो दिवास्वप्नरतस्य च आम एव अन्नरसो मधुरतरश्च शरीरमनुक्रमन् अतिस्नेहात् मेदो जनयति, तदतिस्थौल्यमापादयति; तमतिस्थूलं क्षुद्रश्वासपिपासाक्षुत्स्वप्नस्वेदगात्रदौर्गन्ध्यक्रथनगात्रसादगद्गदत्वानि क्षिप्रमेव आविशन्ति, सौकुमार्यान्मेदसः सर्वक्रियासु असमर्थः कफमेदोनिरुद्धमार्गत्वाच्च अल्पव्यवायो भवति, आवृतमार्गत्वादेव शेषा धातवो नाप्यायन्तेऽत्यर्थमतोऽल्पप्राणो भवति, प्रमेहपिडकाज्वरभगन्दरविद्रधिवातविकाराणामन्यतमं प्राप्य पञ्चत्वमुपयाति, सर्व एव चास्य रोगा बलवन्तो भवन्ति आवृतमार्गत्वात् स्रोतसां; अतस्तस्य उत्पत्तिहेतुं परिहरेत् । उत्पन्ने तु शिलाजतुगुग्गुलुगोमूत्रत्रिफलालोहरजोरसाञ्जनमधुयवमुद्गकोरदूषकश्यामाको-**

**द्दालकादीनां विरुक्षणच्छेदनीयानां च द्रव्याणां विधिवदुपयोगो व्यायामो लेखनबस्त्युपयोगश्चेति ३८**

रसनिमित्तमित्यादि । चकारान्मध्यशरीरत्वं च । ननु, कथमेक एव रसः परस्परविरुद्धयोः स्थौल्यकार्श्ययोर्हेतुरित्यत आह,—तत्रेत्यादि । अध्यशनशीलस्य इति अजीर्णभोजनाभ्यासिन इत्यर्थः । ननु, मेदस्विनो दीप्ताग्नित्वे कथमामरससंभवः? नैषः दोषः, दीप्ताग्नित्वेऽपि अध्यशनशीलत्वादामरसो भवति । तर्हि कथं रसश्चापक्वश्चेति विरोधीयवचनं? नह्यपक्वो रसव्यपदेशं लभते । सत्यं, जाठरेणाग्निना रसः कदभावेन कृत एव, किंतु धात्वग्निभिरपाकादाम इत्युच्यते । शरीरमनुक्रामन्निति मेदो जनयति विशिष्टाहारवशाददृष्टवशान्मेदसावृतमार्गत्वाच्च धातुद्वयमतिक्रम्य मेद एव वर्धयति । तदतिस्थौल्यमापादयतीति तन्मेद आपादयति करोति । क्रथनं स्वपतः कण्ठे घुर्घुरारवः, अन्ये तु अकस्मात् श्वासावरोधे क्रथनं कथयन्ति । गद्गदत्वं अव्यक्तवचनत्वम् । क्षिप्रमेवाविशन्ति इति एते क्षुद्रश्वासादयः स्थूलं शीघ्रमेव प्रविशन्ति, स्थूले भवन्तीत्यर्थः । शेषधातवो नाप्यायन्तेऽत्यर्थमिति शेषधातवः अस्थ्यादयः । वातविकाराणामित्यत्र वातविकाराः मेदःकृतमार्गावरणनिमित्तवातकोपविकारा इत्यर्थः । अन्यतमं इति एषामेकम् । पञ्चत्वमुपयाति इति मरणमुपगच्छतीत्यर्थः । तस्य चिकित्सामाह,—अत इत्यादि । तस्योत्पत्तिहेतुं परिहरेत् इत्यनेन निदानपरिवर्जनेनानागताबाधचिकित्सोक्ता । उत्पन्ने तु जाते पुनरित्यर्थः । उद्दालकादीनामिति उद्दालकः आरण्यकोद्रवः, आदिशब्दात् गवेधुकादीनां ग्रहणम् । विरुक्षणछेदनीयानामिति विरुक्षणं मेदोघ्नं, छेदनीयं स्रोतोविशोधनीयम् । विधिवदुपयोगः इति पुरुषाग्निबलमात्राविधानात् तेषामुपयोग इत्यर्थः । लेखनबस्त्युपयोगश्च लेखनबस्तयश्चिकित्सितोक्ताः । "त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमन्विताः । उषकादिप्रतिवापा बस्तयो लेखनाः स्मृताः" । चकाराद्व्यायामादयो मृदवः काङ्क्षायनशक्तवश्च ॥ ३८ ॥

**तत्र पुनर्वातलाहारसेविनोऽतिव्यायामव्यवायाध्ययनभयशोकध्यानरात्रिजागरणपिपासाक्षुत्कषायाल्पाशनप्रभृतिभिरुपशोषितो रसधातुः शरीरमननुक्रामन् अल्पत्वात् न प्रीणयति तस्मात् अतिकार्श्यं च भवति; सोऽतिकृशः क्षुत्पिपासाशीतोष्णवातवर्षभारादानेषु असहिष्णुः वातरोगप्रायोऽल्पप्राणश्च क्रियासु भवति, श्वासकासशोषप्लीहोदराग्निसादगुल्मरक्तपित्तानामन्यतमं प्राप्य मरणमुपयाति, सर्व एव चास्य रोगा बलवन्तो भवन्ति अल्पप्राणत्वात्; अतस्तस्य उत्पत्तिहेतुं परिहरेत् । उत्पन्ने तु पयस्याश्वगन्धाविदारीविदारीगन्धाशतावरीबलातिबलानागबलानां मधुराणामन्यासां च औषधीनामुपयोगः, क्षीरदधिघृतमांसशालिषष्टिकयवगोधूमानां च, दिवास्वप्नब्रह्मचर्याव्यायामबृंहणबस्त्युपयोगश्चेति ॥ ३९ ॥**

कार्श्यनिमित्तं दर्शयन्नाह,—तत्र पुनरित्यादि । वातलाहारसेविनः इति अतिरूक्षाहारसेविनः । अतिव्यायामेत्यादि अतिशब्दो व्यायामादिभिः प्रत्येकं संबध्यते । क्षयः धातुक्षयः । उपशोषितः अतिरूक्षीकृतः, अल्पीकृतश्च । न प्रीणाति ईषत्प्रीणातीत्यर्थः । सोऽतिकृश इत्यनेनोपचयलक्षणबलाभावो दर्शितः । वातरोगप्रायः इति वातरोगबहुल इत्यर्थः । अल्पप्राणश्च क्रियासु भवति इति कायवाङ्मानसीषु क्रियासु विषयेष्वल्पशक्तिर्भवति । एतेन शक्तिलक्षणबलाभाव उक्तः । शोषः राजयक्ष्मा । उत्पन्ने त्विति बृंहणबस्तिर्यथा,—"बृंहणद्रव्यतः क्वाथास्तत्कल्कस्नेहसैन्धवैः । युक्ताः खजप्रमथिता बस्तयो बृंहणा मताः"—इति । चकारात् संतर्पणमपि लघु कर्तव्यम् ॥ ३९ ॥

**यः पुनरुभयसाधारणानि उपसेवेत तस्य अन्नरसः शरीरमनुक्रामन् समान् धातून् उपचिनोति, समधातुत्वात् मध्यशरीरो भवति सर्वक्रियासु समर्थः क्षुत्पिपासाशीतोष्णवर्षातपसहो बलवांश्च, स सततमनुपालयितव्य इति ॥ ४० ॥**

मध्यशरीरस्य हेतुं गुणं च दर्शयन्नाह,—यः पुनरित्यादि । उभयसाधारणानि नातिस्निग्धरूक्षाणि स्वास्थ्यवृत्तिकानि द्रव्याणि षष्टिकरक्तशालिलावकदाडिमतण्डुलीयकादीनि, दिवाऽस्वप्नादींश्च विहारविशेषान् । सर्वक्रियासु समर्थ इत्यनेनैव बलवत्त्वे लब्धे यद्बलवांश्चेति करोति तन्नियमार्थं; एवंभूताहारविहारसेवी बलवानेव भवतीत्यर्थः । मध्यशरीरस्य चिकित्सामाह,—स सततमनुपालयितव्य इति स्वस्थवृत्तानुवर्तनेनेति शेषः ॥ ४० ॥

**भवन्ति चात्र ।**

**अत्यन्तगर्हितावेतौ सदा स्थूलकृशौ नरौ ॥**
**श्रेष्ठो मध्यशरीरस्तु कृशः स्थूलात्तु पूजितः ॥ ४१ ॥**

तयोर्द्वयोः कृशस्थूलयोर्दोषवत्त्वेऽपि स्थूलस्यातिशयदोषवत्त्वं मध्यशरीरस्य च गुणवत्त्वं निर्देष्टुमाह,—अत्यन्तेत्यादि । कुतः स्थूलात् कृशः पूजितः? उच्यते, स्थूलस्य क्रियाऽक्षमत्वात्, अतिशयेन व्याधिपीडनाच्च ॥ ४१ ॥

**दोषः प्रकुपितो धातून् क्षपयत्यात्मतेजसा ॥**
**इद्धः स्वतेजसा वह्निरुखागतमिवोदकम् ॥ ४२ ॥**

दोषादीनां क्षयवृद्ध्योरेकत्र निर्देशेऽपि दोषा एव धातुमलक्षयहेतव इति दर्शयन्नाह,—दोष इत्यादि । दोषः वातपित्तकफसंज्ञकः । धातूनिति धातुशब्दोऽत्र मलेष्वपि वर्तते, देहधारणसामर्थ्यात्; अथवा धातुशब्द उपलक्षणं, तेन मलाः प्राप्यन्ते । क्षपयति इति क्षपणं वृद्धिसाम्ययोः ह्रासः । आत्मतेजसा इति आत्मशक्त्या । तत्र पित्तं कटुकोष्णत्वात् धातून् क्षपयति, वायुश्च शोषणहेतुत्वात्, कफो मार्गावरोधकत्वात् । इद्धः दीप्तः । उखागतं स्थालीस्थम् ॥ ४२ ॥

**वैलक्षण्यात् शरीराणामस्थायित्वात्तथैव च ।**
**दोषधातुमलानां तु परिमाणं न विद्यते ॥ ४३ ॥**

कुतः पुनः पलादिमानेन दोषादीनां प्रमाणं न निर्दिष्टमि-

त्याह,—वैलक्षण्यादित्यादि। वैलक्षण्यात् विसदृशत्वात्, विसदृशत्वं चात्र वातादिप्रकृतिरसरक्तादिभारसहनदीर्घह्रस्वादिकायभेदेन। अस्थायित्वात्तथैव इति अनवस्थितत्वात्, अस्थायित्वं द्विविधेऽपि काले, नित्यगे आवस्थिकेऽपि च; तत्र नित्यगे प्रातः श्लेष्मोपचीयते मध्याह्ने पित्तमित्यादि प्रत्यहमाह्निकचयादिभेदेन, तथा हेमन्ते श्लेष्मोपचीयते ग्रीष्मे वायुरित्यादि आर्तवचयादिभेदेन; तथा आवस्थिकेऽपि बाले श्लेष्माभिवर्धते, तथा बाल्ये शुक्राल्पत्वं कन्यानामार्तवस्तन्याभावः, युवसु पित्तमुपचीयते, वृद्धेषु वायुरित्यादिना। परिमाणमिति सर्वतो मानं न विद्यते येन कस्यचिदेव मानं कर्तुं शक्यते न सर्वत इत्यर्थः ॥ ४३ ॥

**एषां समत्वं यच्चापि भिषग्भिरवधार्यते ॥**
**न तत् स्वास्थ्यादृते शक्यं वक्तुमन्येन हेतुना॥४४॥**

ननु, दोषादीनां पलादिमानं विना साम्यं कथं ज्ञेयमित्याह,—एषामित्यादि।—दोषधातुमलानाम्। न तदित्यादि तदपि साम्यम्। स्वास्थ्यादृते स्वास्थ्यं विना ॥ ४४ ॥

**दोषादीनां त्वसमतामनुमानेन लक्षयेत् ॥**
**अप्रसन्नेन्द्रियं वीक्ष्य पुरुषं कुशलो भिषक् ॥४५॥**

क्षयवृद्धिभेदात्मकमसाम्यमनुमानेन दर्शयन्नाह,—दोषादीनामिति। आदिशब्देन धातुमलानां ग्रहणम्। तुशब्दः पुनरर्थे। असमतां क्षयवृद्धिलक्षणाम्। अप्रसन्नेन्द्रियमित्यत्राप्रसन्नतनुमिति यन्न कृतं तदिन्द्रियाधिष्ठानानामिन्द्रियशक्तीनां च प्रसन्नत्वं बोधयति। वीक्ष्य इत्यनेन वर्णादि सर्वमुक्तं भवति। वीक्ष्येत्यत्र ज्ञात्वा इत्येके पठन्ति ॥ ४५ ॥

**स्वस्थस्य रक्षणं कुर्यादस्वस्थस्य तु बुद्धिमान्॥४६॥**
**क्षपयेद्बृंहयेच्चापि दोषधातुमलान् भिषक् ॥**
**तावद्यावदरोगः स्यान्नरो रोगसमन्वितः ॥ ४७ ॥**

असाम्यं वृद्धिक्षयात्मकमित्यनुमानेन प्रतिपाद्य किं कुर्यादित्याह—क्षपयेदित्यादि। क्षपयेत् वृद्धान् दोषधातुमलान् ह्रासयेदित्यर्थः। वृंहयेत् वर्धयेत्तानेव क्षीणान्। क्षपणबृंहणयोर्मात्रावधिं दर्शयन्नाह,—तावदित्यादि। कुतः पुनरारोग्ये अवधिरित्याह,—एतत् साम्यस्य लक्षणमित्यादि। अयं पाठः समग्रोऽभावान्न लिखितः ॥ ४६ ॥

**समदोषः समाग्निश्च समधातुमलक्रियः ॥ ४८ ॥**
**प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥**

दोषादिसाम्यं स्वास्थ्यं, तद्दर्शयितुमाह,—समदोष इत्यादि। ननु, द्विविधेऽपि काले नित्यं दोषचयाद्यनुबन्धात् कथं समदोषत्वं? तथाहि नित्यगे—आह्निके तावत् प्रातः कफः कुप्यति, मध्यान्हे पित्तमित्यादि; तथा आर्तवेऽपि हेमन्ते कफश्चीयते वसन्ते स एव कुप्यति इति; तथा आवस्थिके च काले बाले विवर्धते श्लेष्मा इत्याद्युक्तत्वात्। उच्यते, दोषचयादेरल्पत्वादतद्व्यपदेश इति, एकतण्डुलाभ्यवहारेऽनशनव्यपदेशवत्। अन्ये तु एवं वदन्ति, आर्तवे चयादौ स्वस्थवृत्तोक्तविधिभिराहोरात्रिके पुनरनागताबाधोक्तदन्तधावनादिविधानेन दोषाणां साम्यमुपपन्नमेवेति। समधातुमलक्रियः इति समा धातुमलानां क्रिया यस्य स तथा। क्रिया स्वप्नजागरणादिकेति केचिद्भिन्नं क्रियाशब्दं व्याख्यानयन्ति। प्रसन्नात्मेन्द्रियमनाः इति आत्मा देहः; अन्ये कर्मात्मवद्धपुरुषः; तस्य निर्विकारस्यापि शरीरगुणदोषाभ्यां बद्धत्वमाचार्यैर्बहुधोक्तं, अस्माभिर्ग्रन्थगौरवभयान्नोच्यते। इन्द्रियाणि भौतिकाधिष्ठानशक्तिरूपाणि, मनस्तु इन्द्रियानुग्राहकमन्तःकरणं, एवंभूतः पुरुषः स्वस्थ इत्यभिधीयते पूर्वाचार्यैरिति शेषः। दोषसाम्येनैवाग्न्यादिसाम्यं लब्धं तत् किं पृथक् आचार्यः प्राह? उच्यते, न दोषैः समा अग्न्यादयो भवितुमर्हन्तीति; कुतः? पृथक्चिकित्सितत्वात्; पित्तहरणमपि सर्पिरजापयश्चाग्निं वर्धयति। अत्र श्रीमाधवः प्राह,—"लब्धाश्च समदोषत्वे समाग्नित्वादयस्तदा। पृथगुक्ताः किमर्थं ते भक्तिरेषानिरर्थिका"—इति; समाधानमाह,—"दोषेऽभ्यस्ते यतो भिन्नाः पृथगुक्ता ह्यतस्तु ते। प्रकृत्या तादृशाः केचिदत्यर्थं वा न दूषणं"—इति। दोषादीनां त्वसमतामित्यादि श्लोकं वैलक्षण्याच्छरीराणामित्यादि श्लोकाग्रे केचिदन्यथा पठन्ति। तथाहि, पलादिमानाभावात् कथमेषां साम्यं ज्ञेयमित्याह,—"दोषादीनां त्वसमतामनुमानेन लक्षयेत्" इति श्लोकार्धमेव दोषसाम्यज्ञानार्थं पठन्ति। येनानुमानेन समता ज्ञेया तदेव दर्शयन्नाह,—एषां समत्वं यच्चापीत्यादि। एतेन साम्यकार्येण स्वास्थ्येन दोषाणां समता ज्ञातव्येत्यर्थः। अतोऽनन्तरं समदोषः समाग्निश्चेत्यादि पठन्ति। व्याख्यानं चास्य पूर्वमेवोक्तम्। इदानीं स्वस्थप्रतिपालनायास्वस्थस्य च स्वास्थ्यकरणाय आह,—'स्वस्थस्य रक्षणं कुर्यादस्वस्थस्य तु बुद्धिमान्। क्षपयेद् बृंहयेच्चापि' इत्यादीदृशं कृत्वा केचित् पाठक्रमं पठन्ति ॥ ३३—३५ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने पञ्चदशोऽध्यायः।

---

## षोडशोऽध्यायः।

**अथातः कर्णव्यधबन्धविधिमध्यायं व्याख्यास्यामः। यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

**रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते। तौ षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु कृतमङ्गलस्वस्तिवाचनं कुमारधराङ्के धात्र्यङ्के वा कुमारमुपवेश्य बालक्रीडनकैः प्रलोभ्याभिसान्त्वयन् भिषग् वामहस्तेन आकृष्य कर्णं दैवकृते छिद्रे आदित्यकरावभासिते शनैः शनैः दक्षिणहस्तेन ऋजु विध्येत्, प्रतनुकं सूच्या बहलमारया; पूर्वं दक्षिणं कुमारस्य, वामं कुमार्याः; ततः पिचुवर्तिं प्रवेशयेत् ॥ ३ ॥**

रक्षाभूषणनिमित्तमिति निमित्तशब्दो रक्षाभूषणाभ्यां सह प्रत्येकं संबध्यते; अन्ये तु रक्षणार्थं भूषणानि रक्षाभूषणानि तन्निमित्तमित्यर्थः । यद्यपि विद्धकर्णत्वाद् व्रणिनि बाले रक्तमांसप्रियत्वात् रक्षोभयमस्त्येव तथापि व्रणस्याल्पकालत्वाद्दैवकृतच्छिद्रत्वात् वा रक्षणार्थं भवति । कस्मिन् काले कर्णस्य व्यधः कर्तव्य इत्याह,—तौ षष्ठे मासे सप्तमे वा शुक्लपक्षे इति । तौ इति तौ कर्णौ, षष्ठे मासे सप्तमे वा इति नायं जन्मकालादूर्ध्वं किंतु संवत्सरादेः भाद्रपदात् यः षष्ठो मासः माघः सप्तमः फाल्गुनः तयोर्मध्ये एकस्मिन्निति । मङ्गलं गीतादि । स्वस्तिवाचनं आशीर्वादोच्चारणम् । धात्र्यङ्के इति धात्री कुमारपरिचारिका । कुमारधराङ्के वेति बालग्राहिपुरुषस्योत्सङ्गे । बालक्रीडनकैः इति कृत्रिमहस्त्यश्वबलीवर्दशुकादिभिः । अस्याग्रे भक्ष्यविशेषैर्वेति केचित् पठन्ति, भक्ष्यविशेषैः मोदकादिभिः । दैवकृते छिद्रे इति प्राक्तनजन्मकर्मकृत इत्यर्थः । ऋजु अवक्रम् । कर्णविशेषेण सूचीविशेषविषयं नियमयन्नाह,—प्रतनुकं सूच्या इति प्रकर्षेण तनुं कर्णं सूच्या विध्येदित्यर्थः; बहलमारया इति स्थूलकर्णमारया विध्येदित्यर्थः; आरा चर्मकाराणां चर्मभेदनं शस्त्रं, बहलं कठिनमिति लक्ष्मणटिप्पणकेनोक्तम् । पुरुषस्त्रीभेदेन प्राक् कर्णव्यधने प्रशस्तत्वेन विशेषमाह,—पूर्वं दक्षिणमिति । कर्णे विद्धे सति किं कार्यमित्याह,—ततो वर्तिं प्रवेश्य सम्यगिति । विद्ध्वा च पिचुवर्तिं प्रवेशयेत् ॥ १–३ ॥

**शोणितबहुत्वेन वेदनया च अन्यदेशविद्धमिति जानीयात्, निरुपद्रवतया तद्देशविद्धमिति ॥ ४ ॥**

अन्यदेशविद्धस्य विज्ञानोपायमाह,—शोणितबहुत्वेनेति । दैवकृतच्छिद्रविद्धस्य विज्ञानमाह,—निरुपद्रवतयेति । तद्देशविद्धमिति दैवकृतच्छिद्रविद्धं, जानीयादित्यनुवर्तते ॥ ४ ॥

**तत्र अज्ञेन यदृच्छया विद्धासु सिरासु कालिकामर्मरिकालोहितिकासु उपद्रवा भवन्ति । तत्र, कालिकायां ज्वरो दाहः श्वयथुर्वेदना च भवति; मर्मरिकायां वेदना ज्वरो ग्रन्थयश्च; लोहितिकायां मन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति । तेषु यथास्वं प्रतिकुर्वीत ॥ ५ ॥**

सिरासु दोषं वक्तुमाह,—तत्राज्ञेनेति । ज्ञेन तु कालिकालोहितिकयोर्वर्णेनैव परिहारः कर्तव्यः, मर्मरिकायास्तु वर्णानुक्तौ दैवकृतच्छिद्रव्यधनेनेति । प्रत्येकमुपद्रवान् वक्तुमाह,—तत्र कालिकायां ज्वर इति । कालिकादिव्यधोपद्रवचिकित्सामाह,—तेषु यथास्वमित्यादि । तेषु ज्वरादिषु व्याधिषु; यथास्वं प्रतिकुर्वीत इति यस्य ज्वरादिव्याधेर्यः प्रतीकारः तेन तं प्रतिकुर्वीतेत्यर्थः॥५॥

**क्लिष्टजिह्मप्रशस्तसूचीव्यधाद्गाढतरवर्तित्वात् दोषसमुदायात् अप्रशस्तव्यधाद् वा यत्र संरम्भो वेदना वा भवति तत्र वर्तिमुपहृत्याशु मधुकैरण्डमूलमञ्जिष्ठायवतिलकल्कैर्मधुघृतप्रगाढैरालेपयेत् तावद् यावत् सुरूढ इति । सुरूढं चैनं पुनर्विध्येत्; विधानं तु पूर्वोक्तमेव ॥ ६ ॥**

कालिकादिव्यधादन्यथापि व्यापदं चिकित्सां च निर्दिशन्नाह,—क्लिष्टजिह्माप्रशस्तेत्यादि । क्लिष्टा अमनोज्ञा, जिह्मा वक्रतमा, अप्रशस्ता यथोक्तगुणहीना । दोषसमुदायादिति दोषप्रकोपात् । अप्रशस्तव्यधाद् वा इति अदैवकृतच्छिद्रे व्यधाद्गर्हितशस्त्रादिव्यधाद्वा । संरम्भः श्वयथुः । केचित् 'क्लिष्टजिह्मप्रशस्तसूचीव्यधाद्गाढतरवर्तित्वात्' इति न पठन्ति, दोषसमुदायादित्यादि च पठन्ति । सुरूढं चैनं पुनर्विध्येदिति ॥ ६ ॥

**तत्र सम्यग्विद्धमामतैलेन परिषेचयेत् त्र्यहात् त्र्यहात् च वर्तिं च स्थूलतरां दद्यात् परिषेकं च तमेव ॥ ७ ॥**

दुर्विद्धे आपच्चिकित्सां प्रतिपाद्य सम्यग्विद्धे चिकित्सामाह,—तत्र सम्यग्विद्धमामतैलेन परिषेचयेत्; त्र्यहात् त्र्यहाच्च वर्तिं स्थूलतरां दद्यात् परिषेकं च तमेव; आमतैलेन इति अपक्वतैलेन तिलकल्कनिपीडनेन मुष्टितः परिस्रुतेनेत्यर्थः; तमेव इति आमतैलपरिषेकमेव इत्यर्थः ॥ ७ ॥

**अथ व्यपगतदोषोपद्रवे कर्णे वर्धनार्थं लघुवर्धनकं कुर्यात् ॥ ८ ॥**

गतोपद्रवे कर्णे वर्धनोपायमाह,—अथ व्यपगतदोषोपद्रवे इति । लघुवर्धनकमिति दोषविशेषादपामार्गनिम्बकार्पासादीनां काष्ठानामन्यतमस्य अथवा सीसकादिघटितां धत्तूरपुष्पाकृतिं[1] कुर्यात् ॥ ८ ॥

**भवति चात्र ।**

**एवं विवर्धितः कर्णश्छिद्यते तु द्विधा नृणाम् ॥**
**दोषतो वाभिघाताद्वा सन्धानं तस्य मे शृणु ॥९॥**

एवं विवर्धित इति । दोषत इति दोषशब्दो व्याधिष्वपि वर्तते, तेन दोषैः वातादिभिस्तज्जनितव्याधिभिरित्यर्थः । अभिघाताद् वा इति पतनपीडनादिभिः ॥ ९ ॥

**तत्र समासेन पञ्चदशकर्णबन्धाकृतयः । तद्यथा—नेमिसन्धानक उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्यो निर्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति । तेषु, पृथुलायतसमोभयपालिर्नेमिसन्धानकः; वृत्तायतसमोभयपालिरुत्पलभेद्यकः; ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः; अभ्यन्तरदीर्घैकपालिरासङ्गिमः; बाह्यदीर्घैकपालिर्गण्डकर्णः; अपालिरुभयतोऽपि आहार्यः; पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्वेधिमः; स्थूलाणुसमविषमपालिर्व्यायोजिमः; अभ्यन्तरदीर्घैकपालिरितराल्पपालिः**

१ 'धातुपुष्पाकृतिम्' इति पाठान्तरम् ।

**कपाटसन्धिकः; बाह्यदीर्घैकपालिरितराल्पपालिरर्धकपाटसन्धिकः। तत्र दशैते कर्णबन्धविकल्पाः साध्याः; तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः। संक्षिप्तादयः पञ्च असाध्याः। तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः; अनधिष्ठानपालिः पर्यन्तयोश्च क्षीणमांसो हीनकर्णः; तनुविषमाल्पपालिर्वल्लीकर्णः; ग्रथितमांसस्तब्धसिराततः सूक्ष्मपालिर्यष्टिकर्णः; निर्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठक इति। बद्धेष्वपि तु शोफदाहरागपाकपिडकास्रावयुक्ता न सिद्धिमुपयान्ति ॥ १० ॥**

इदानीं संवेधितस्य सन्धानाय संविध्यस्य[1] परिहाराय चाह,—तत्र समासेन पञ्चदशकर्णबन्धाकृतय इति। समासेन संक्षेपेण, विस्तरेण तु कर्णबन्धा अमिताः, यद्यपि पञ्चदशसु कर्णेषु मध्ये दश एव बन्धास्तथापि बन्धबाहुल्यादबन्धेष्वपि[2] बन्धशब्दो वर्तते; यथा छत्रिणो यान्तीत्यत्र छत्रिबाहुल्यादच्छत्रिष्वपि छत्रिव्यपदेशः। 'तत्र समासेन पञ्चदशकर्णाकृतय' इत्यन्ये पठन्ति। तानेव बन्धान्नामभिर्निर्दिशन्नाह—तद्यथा,—नेमिसंधानक इत्यादि। तद्यथा इति निदर्शने, तत्रामी बन्धविकल्पाः नित्यकर्मदर्शनादभ्यासाच्च सर्वे जायन्ते; यद्यपि एषां नामभिरेवाकृतयः प्रायेण व्याख्यातास्तथापि लक्षणसूत्रं निर्दिशन्नाह,—तेषु पृथुलायतेति। पृथुले विस्तीर्णे, आयते दीर्घे, समे तुल्ये, इत्थंभूते द्वे पाल्यौ यस्य सः तथा; पालिः कर्णलतिका। नेमिसंधानक इति नेमी चक्रधारा, तद्वत् सन्धानं यस्य सः नेमिसंधानकः। एतत् कर्णबन्धत्रयं समोभयपालिविषयतया ज्ञेयम्। अभ्यन्तरदीर्घैकेति यस्त्वभ्यन्तरदीर्घैकपालिः कथंचिच्छिन्नो भवति तस्येतरपाल्यभावाद्बाह्यपालिमूले व्यासङ्गः आसङ्गिमः। गण्डकर्ण इति सानुबन्धकपोलमांससमुत्कृत्य बाह्यदीर्घपाल्यग्रभागः संधीयते यस्मिन् स गण्डकर्णः। एतद् बन्धद्वयमेकपालिकम्। अपालिः इति ईषत्पालिः। उभयतो गण्डप्रदेशात् सानुबन्धमांसमाहृत्य पाल्याकारं कृत्वा संधानं यस्य क्रियते स आहार्यः। पीठोपमपालिरिति यस्य तु पालिद्वयं मूलत एव छिन्नं भवति स पीठोपमपालिः, निर्वेधिमः इति वेधेन निष्पन्न इत्यर्थः, पालिद्वयहीनं कर्णपुत्रिकाया उपरि विद्धा यो निष्पादनीय इत्यर्थः; इदमपालिकं कर्णबन्धद्वयम्। स्थूलाणुसमेति स्थूलाणुत्वाभ्यामेका पालिः समा अपरा विषमा ते उल्लिख्य नानाप्रकारयोजनात् व्यायोजिमः इति। अभ्यन्तरदीर्घैकपालिरिति अभ्यन्तरदीर्घैकपालिरितराल्पपाल्या सह बहिःसंधानात् कपाटवत्संधाने यत्र स कपाटसंधिकः। अर्धकपाटसंधिक इति बाह्यदीर्घैकपालिरितराल्पपाल्या सहाभ्यन्तरसंधानेन अर्धकपाटवत् यत्र सन्धीयते सः अर्धकपाटसन्धिकः। इदं कर्णवेधत्रयं विषमोभयपालिकम्। तत्र दशैते कर्णबन्धेति तत्र तेषु पञ्चदशसु कर्णबन्धविकल्पेषु मध्ये। तेषामाकारज्ञानमधिकृत्याह,—तेषां नामभिरेवेति। शेषाणां परिहारार्थमाह,—संक्षिप्तादयः पञ्चासाध्या इति। तेषां लक्षणमाह,—शुष्कशष्कुलिः इति शुष्कबाह्यपाल्यधिष्ठानः, इतराल्पपालिः इति इतरा गण्डदेशानुगता अल्पा पालिर्यस्य सः तथा। अनधिष्ठानपालिपर्यन्तयोश्च क्षीणमांसः हीनकर्णः; अनधिष्ठानपालिः इति अविद्यमानाऽधिष्ठानपालिर्यस्य सः तथा, पर्यन्तयोश्च गण्डबाह्यपार्श्वयोः। तनुविषमाल्पेति विषमास्तनुत्वस्थूलत्वाभ्याम्। त एते पञ्च कर्णबन्धाः सपाल्योऽथासाध्याः; असाध्या इति साधनाय अशक्याः; केचिदमुं पाठं न पठन्ति। एतेषां पञ्चानामसाध्यत्वे हेतुमाह,—बद्धेष्वपि तु शोफेत्यादि। अन्ये तु शोफाद्युपद्रवोपेतानां पूर्वेषां दशानां बन्धानां साध्यानामप्यसाध्यत्वमाहुः ॥ १० ॥

**भवति चात्र।**

**यस्य पालिद्वयमपि कर्णस्य न भवेदिह ॥**
**कर्णपीठं समे मध्ये तस्य विद्ध्वा विवर्धयेत् ॥११॥**

गद्योक्तानां कर्णबन्धानां मध्ये निर्वेधिमस्य संधानसूत्रमाह,—यस्य पालिद्वयमपीत्यादि। इह इति कर्णबन्धमध्ये। कर्णपीठं पुत्रिकोपरिप्रदेशम् ॥ ११ ॥

**बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत् ॥**
**आभ्यन्तरायां दीर्घायां बाह्यसन्धिरुदाहृतः ॥१२॥**

व्यायोजिमकपाटसन्धिकार्धकपाटसन्धिकानां संधानसूत्रमाह,—बाह्यायामिह दीर्घायामित्यादि। यदा पालिर्दीर्घा भवेत् तदा आभ्यन्तरः सन्धिः कर्तव्य इत्यर्थः, आभ्यन्तरा च पालिर्यदा दीर्घा स्यात् तदा बाह्यसन्धिर्विधेय इति; कपाटसन्धिकार्धकपाटसन्धिकयोरेवेदं संधानसूत्रं न तु व्यायोजिमस्येत्यन्ये ॥ १२ ॥

**एकैव तु भवेत् पालिः स्थूला पृथ्वी स्थिरा च या ॥**
**तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् १३**

इदानीमासङ्गिमस्य संधानसूत्रमाह,—एकैव तु भवेत् पालिरिति। वल्लूरकस्येदं संधानसूत्रं संभाव्यते इत्यन्ये वदन्ति ॥१३॥

**गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता ॥**
**कर्णपालीमपालेस्तु कुर्यान्निर्लिख्य शास्त्रवित् १४**

आहार्यस्य सन्धिसूत्रं निर्देष्टुमाह,—गण्डादुत्पाट्य मांसेनेत्यादि। सानुबन्धेन इति गण्डप्रदेशलग्नेनेत्यर्थः। जीवता इति शोणितसहितेनेत्यर्थः। अन्ये तु गण्डकर्णस्याप्येतत् संधानसूत्रमिति वदन्ति ॥ १४ ॥

**अतोऽन्यतमं बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसंभृतसंभारं विशेषतश्च अत्रोपहरेत् सुरां मण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णं च इति। ततोऽङ्गनां पुरुषं वा ग्रथितकेशान्तं लघु भुक्तवन्तमाप्तैः सुपरिगृहीतं च कृत्वा बन्धमुपधार्य छेद्यभेद्यले-**

१ 'संधेयस्य' इति पाठान्तरम्।

२ 'बन्ध्यबाहुल्यादबन्ध्येष्वपि' इति पाठान्तरम्।

**ख्यव्यधनैः उपपन्नैः उपपाद्य कर्णशोणितमवेक्ष्य दुष्टमदुष्टं वेति; तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां, पित्तदुष्टे शीतोदकपयोभ्यां, श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य, कर्णौ पुनरवलिख्य अनुन्नतं अहीनं विषमं च कर्णसन्धिं सन्निवेश्य स्थितरक्तं सन्दध्यात्। ततो मधुघृतेन अभ्यज्य पिचुप्लोतयोरन्यतरेण अवगुण्ठ्य सूत्रेण अनवगाढं अनतिशिथिलं च बद्ध्वा कपालचूर्णेन अवकीर्य आचारिकमुपदिशेद् द्विव्रणीयोक्तेन च विधानेन उपचरेत्॥ १५॥**

अतःपरं बन्धविधिः। अग्रोपहरणीयोक्तोपसंभृतसंभारं इति अग्रोपहरणीयोक्तो यन्त्रशस्त्रादिः उप समीपे संभृतः सम्यक् कृत्वा धृतः संभारः समूहो यत्र। सुरामण्डं मद्यस्योपरि अच्छभागं, कपालचूर्णनं च मृण्मयभाण्डखण्डचूर्णम्। ततोऽङ्गनां पुरुषं वा इति अङ्गनाया भूषणप्राधान्यात् प्राङ्निर्देशः। ग्रथितकेशान्तमिति ग्रथितकेशावयवं, अन्यथा केशव्याकुलतया कर्माभिघातः स्यात् बन्धविश्लेषो वा। लघुभुक्तवन्तमिति भुक्तवान् कर्मपीडां सहते, आहारलघुत्वात् वेदनया रात्रिजागरितवतोऽपि नाजीर्णबाधा स्यात्। आप्तैः सुपरिगृहीतं च कृत्वा इति आप्तैर्हितैः। बन्धमुपधार्येति अयं बन्धोऽत्र कर्तव्य इति निश्चित्य। छेद्यायैरुपपन्नैरिति युक्तैः। उपपाद्य इति संयोज्य, सन्निवेश्य आरोप्य, संदध्यात् संधानं कुर्यात्। पिचुप्लोतयोः इति तूलकर्पटयोरित्यर्थः। अवगुण्ठ्य इति आवेष्ट्य। आचारिकमिति आहारविहाराख्यम्। द्विव्रणीयोक्तेन च विधानेन इति आलेपनादिना॥ १५॥

**भवति चात्र।**

**विघट्टनं दिवास्वप्नं व्यायाममतिभोजनम्॥**
**व्यवायमग्निसंतापं वाक्श्रमं च विवर्जयेत्॥१६॥**

परिहार्याण्युपदिशन्नाह,—विघट्टनं दिवास्वप्नमित्यादि। विघट्टनं चालनम्॥ १६॥

**न चाशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा संनिदध्यात्। स हि वातदुष्टे रक्ते रूढोऽपि परिपुटनवान्, पित्तदुष्टे दाहपाकरागवेदनावान्, श्लेष्मदुष्टे स्तब्धः कण्डूमान्, अतिप्रवृत्तरक्ते श्यावशोफवान्, क्षीणोऽल्पमांसो न वृद्धिमुपैति॥ १७॥**

परिहार्यसामान्यादन्यमपि विरुद्धं प्रतिपादयन्नाह,—न चाशुद्धरक्तमित्यादि। अशुद्धरक्तमिति दुष्टरक्तं, अतिप्रवृत्तरक्तमिति शुद्धरक्तमपि यदातिप्रवृत्तं स्यात्तदा न सन्धेयम्। अशुद्धरक्तसन्धाने दोषमाह,—स हि वातदुष्ट इति। परिपुटनं त्वच उच्चटनम्, मिश्रकाध्यायोक्तः सशोफः कर्णलतिकारोगो वा। अतिप्रवृत्तरक्तस्य सन्धाने दोषमाह,—अतिप्रवृत्तरक्तो इति अतिस्रवद्रक्त इत्यर्थः। श्यावशोफोऽत्र वातकृतः। क्षीणकर्णस्य संधाने दोषमाह,—क्षीणोऽल्पमांस इति। क्षीणोऽत्र शुद्धरक्तातिप्रवृत्त्या; न तु दोषोपद्रवैः, सदोषोपद्रववर्धने छिद्यत एव॥ १७॥

**आमतैलेन त्रिरात्रं परिषेचयेत्, त्रिरात्राच्च पिचुं परिवर्तयेत्॥ १८॥**

द्विव्रणीयोक्तसामान्यविधिमुद्दिश्य विशेषविधिं निर्दिशन्नाह,—आमतैलेन त्रिरात्रमिति॥ १८॥

**स यदा सुरूढो निरुपद्रवः सवर्णो भवति तदा एनं शनैः शनैः अभिवर्धयेत्। अतोऽन्यथा संरम्भदाहपाकरागवेदनावान् पुनश्छिद्यते वा॥ १९॥**

**अथास्याप्रदुष्टस्य अभिवर्धनार्थमभ्यङ्गः। तद्यथा,—गोधाप्रतुदविष्किरानूपौदकवसामज्जानौ पयः सर्पिस्तैलं गौरसर्षपजं च यथालाभ संभृत्य अर्कालर्कबलातिबलानन्तापामार्गाश्वगन्धाविदारिगन्धाक्षीरशुक्लाजलशूकमधुरवर्गपयस्याप्रतिवापं तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात्॥ २०॥**

प्रतुदाः लावादयः पक्षिभेदाः श्रेष्ठत्वात्, विष्किराः लावादयः, आनूपाः वराहमहिषादयः, औदकाः रोहितमत्स्यादयः, एषां वसामज्जानौ, वसा मांसस्नेहः। गौरसर्षपजस्थाने राजसर्षपजमिति केचित् पठन्ति, राजसर्षपाः श्वेतसर्षपाः। वसामित्यग्रे 'वसामज्जासर्पिर्गौरसर्षपतैलमेतत् स्नेहचतुष्टयं अर्कादिकल्कमावाप्य चतुर्गुणेन दुग्धेनैव पचनीयं' इति। अन्ये तु सर्पिर्न पठन्ति। अपरे वसादिस्नेहचतुष्टयं परं पठन्ति नतु पयः। द्रवानुक्तौ च जलं चतुर्गुणं स्नेहपाके, यदान्यत्रापि केवलं दुग्धं स्यात् तदा स्नेहाच्चतुर्गुणं दुग्धं, यदा पुनरन्योऽपि द्रवो भवेत् तदा स्नेहसममेव दुग्धं कार्यमित्याचार्या भाषन्ते। यथालाभं संभृत्य इति यस्य यस्य लाभस्तं तमेकत्र कृत्वेत्यर्थः; एतेन द्वित्राणामपि ग्रहणमुक्तम्। अलर्कः मन्दारः, अनन्ता उत्पलसारिवा, विदारिगन्धा शालपर्णी, क्षीरशुक्ला क्षीरविदारी, जलशूकः जलनीलिका जलान्तर्वर्तिरोमयुक्तसविषप्राणी वा, जलशूको जलसंस्थस्तृणसक्तो जन्तुविरचितः शूकसंघातवान् निश्रामोड्डुक इत्यन्ये, जलचारी कृष्णकीट इति लक्ष्मणटीप्पणेनोक्तम्; मधुरवर्गः काकोल्यादिः, पयस्या विदारीभेदः, केचिदर्कपुष्पीत्याहुः; अन्ये मधुरवर्गं पयस्यां च न पठन्ति। तैलं वा इति तिलतैलं वा पचेत् एकैकम्। स्वनुगुप्तमिति निरुपद्रवस्थाने इत्यर्थः॥ १९—२०॥

**स्वेदितोन्मर्दितं कर्णं स्नेहेनैतेन योजयेत्॥**
**अथानुपद्रवः सम्यक् बलवांश्च विवर्धते॥ २१॥**

अस्य तैलस्यावचारणमाह,—स्वेदितोन्मर्दित इत्यादि॥२१॥

**यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्तनं हितम्॥**

अभ्यक्तस्योद्वर्तनमाह,—यवाश्वगन्धायष्ट्याह्वैरित्यादि॥२२॥

**शतावर्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः॥ २२॥**
**तैलं विपक्वं सक्षीरमभ्यङ्गात् पालिवर्धनम्॥**

कर्णपालिविवृद्ध्यर्थमपरं तैलमाह,—शतावर्यश्वगन्धाभ्यामि-

ति । शतावर्यादिकल्केन स्नेहचतुर्थांशेन केवलक्षीरेण चतुर्गुणेन तैलमत्र पचनीयम् । पयस्या अर्कपुष्पी । जीवनैः काकोल्यादिद्रव्यैः ॥ २२ ॥—

**ये तु कर्णा न वर्धन्ते स्वेदस्नेहोपपादिताः ॥ २३ ॥**
**तेषामपाङ्गदेशेषु कुर्यात् प्रच्छानमेव तु ॥**
**बाह्यच्छेदं न कुर्वीत व्यापदः स्युस्ततो ध्रुवाः॥२४**

एवमप्यवर्धमानानां कर्णानां वर्धनोपायं दर्शयन्नाह,—ये तु कर्णा न वर्धन्ते इति । उपपादिताः संयोजिताः । अपाङ्गदेशे तु इति कर्णपुत्रिकाया अधः । तुशब्दः एवार्थः । प्रच्छानमेव तु इति प्रशब्द ईषदर्थे ईषच्छेदनं, तुशब्दोऽयमप्यर्थः; तेन कर्णपुत्रिकाया अध एव छेदनं, तदपीषदेव कार्यमित्युक्तं भवति, 'तेषामपाङ्गच्छेद्यं हि कार्यमाभ्यन्तरं भवेत्' इति केचित् पठन्ति, अपाङ्गपुत्रिकायाः अधः कर्णानुकूलमाभ्यन्तरं छेद्यं प्रच्छयेद्वा । बाह्यच्छेदमिति बाह्यच्छेदं कर्णबाह्यलतिकाच्छेदम् । व्यापदः कर्णलतिकात्रुटनादयः; 'व्याधयः स्युः' इत्यन्ये पठन्ति २३–२४

**बद्धमात्रं तु यः कर्णं सहसैवाभिवर्धयेत् ॥**
**आमकोशी समाध्मातः क्षिप्रमेव विमुच्यते॥२५॥**

आरूढकर्णस्य वर्धने दोषमाह,—बद्धमात्रं तु यः कर्णमिति । आमकोशी इति असम्यग्रूढमध्यः । केचिदमुं न पठन्ति ॥ २५ ॥

**जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः॥**
**सुरूढोऽवेदनो यश्च तं कर्णं वर्धयेच्छनैः ॥ २६ ॥**

कीदृशः पुनर्वर्धनीयस्तमाह,—जातरोमा सुवर्त्मा चेति । सुवर्त्मा इति शोभनच्छिद्रः, श्लिष्टसन्धिः संलग्नसन्धिः, समः निम्नोन्नतलरहितः, स्थिरः दृढः ॥ २६ ॥

**अमिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह ॥**
**यो यथा सुविशिष्टः स्यात् तं तथा विनियोजयेत्२७**
**(कर्णपाल्यामयान्नॄणां पुनर्वक्ष्यामि सुश्रुत ! ॥**
**कर्णपाल्यां प्रकुपिता वातपित्तकफास्त्रयः ॥ १ ॥**
**द्विधा वाप्यथ संसृष्टाः कुर्वन्ति विविधा रुजः ॥**
**विस्फोटः स्तब्धता शोफः पाल्यां दोषे तु वातिके२**
**दाहविस्फोटजननं शोफः पाकश्च पैत्तिके ॥**
**कण्डूः सश्वयथुस्तम्भो गुरुत्वं च कफात्मके॥३॥**
**यथादोषं च संशोध्य कुर्यात्तेषां चिकित्सितम् ॥**
**स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः ॥ ४ ॥**
**मृद्वीं क्रियां बृंहणीयैर्यथास्वं भोजनैस्तथा ॥**
**य एवं वेत्ति दोषाणां चिकित्सां कर्तुमर्हति ॥ ५ ॥**
**अत ऊर्ध्वं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान् ॥**
**उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो भृशम् ॥६॥**
**अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा ॥**
**स्रावी च दाहवांश्चैव शृण्वेषां क्रमशः क्रियाम्॥७॥**
**अपामार्गः सर्जरसः पाटलालकुचत्वचौ ॥**
**उत्पाटके प्रलेपः स्यात्तैलमेभिश्च पाचयेत् ॥ ८ ॥**
**शम्पाकशिग्रुपूतीकगोधामेदोऽथ तद्वसा ॥**
**वाराहं गव्यमैणेयं पित्तं सर्पिश्च संसृजेत् ॥ ९ ॥**
**लेपमुत्पुटके दद्यात्तैलमेभिश्च साधितम् ॥**
**गौरीं सुगन्धां सश्यामामनन्तां तण्डुलीयकम् १०**
**श्यावे प्रलेपनं दद्यात्तैलमेभिश्च साधितम् ॥**
**पाठां रसाञ्जनं क्षौद्रं तथा स्यादुष्णकाञ्जिकम्॥११॥**
**दद्याल्लेपं सकण्डूके तैलमेभिश्च साधितम् ॥**
**व्रणीभूतस्य देयं स्यादिदं तैलं विजानता ॥ १२ ॥**
**मधुकं क्षीरकाकोलीजीवकाद्यैर्विपाचितम् ॥**
**गोधावराहसर्पाणां वसाः स्युः कृतबृंहणे ॥ १३ ॥**
**प्रलेपनमिदं दद्यादवलिख्यावमन्थके ॥**
**प्रपौण्डरीकं मधुकं समङ्गां धवमेव च ॥ १४ ॥**
**तैलमेभिश्च संपक्वं शृणु कण्डूमतः क्रियाम् ॥**
**सहदेवा विश्वदेवा अजाक्षीरं ससैन्धवम् ॥**
**एतैरालेपनं दद्यात्तैलमेभिश्च साधितम् ॥ १५ ॥**
**ग्रन्थिके गुटिकां पूर्वं स्रावयेदवपाट्य तु ॥**
**ततः सैन्धवचूर्णं तु घृष्ट्वा लेपं प्रदापयेत् ॥ १६ ॥**
**लिखित्वा तत् स्रुतं दृष्ट्वा चूर्णैर्लोध्रस्य जम्बुले ॥**
**क्षीरेण प्रतिसार्यैनं शुद्धं संरोपयेत्ततः ॥ १७ ॥**
**मधुपर्णी मधूकं च मधुकं मधुना सह ॥**
**लेपः स्राविणि दातव्यस्तैलमेभिश्च साधितम्॥१८**
**पञ्चवल्कैः समधुकैः पिष्टैस्तैश्च घृतान्वितैः ॥**
**जीवकाद्यैः ससर्पिष्कैर्दह्यमानं प्रलेपयेत् ॥ १९ ॥)**

कर्णपालिच्छेदविशेषकर्णसन्धिबन्धानामपरिमितत्वादनुक्तमपि प्रकारं दर्शयन्नाह,—अमिताः कर्णबन्धास्त्वित्यादि । सुविशिष्ट इत्यत्र केचित् सुनिविष्ट इति पठन्ति । केचिदत्रैवाध्याये कर्णपाल्यामयान् परिपोटादीन् पठन्ति, अन्ये तु चिकित्सिते मिश्रकलिङ्गचिकित्सितान् पठन्ति; तांश्च तत्रैव व्याख्यास्यामः । अन्ये तु सुश्रुताध्यायिनोऽत्र कर्णपाल्यामयानित्यादिकं ग्रन्थं सचिकित्सितं पठन्ति, स त्वाचार्यैरनार्षीकृतस्तस्मान्न पठनीयः । अपरे पुनरत्रैवोत्पावनादीन् सचिकित्सितान् पठन्ति, अमुमपि पाठमनार्षमाचार्या वर्णयन्ति, अतोऽयमपि न पठितव्यः ॥२७॥

**विश्लेषितायास्त्वथ नासिकाया**
**वक्ष्यामि सन्धानविधिं यथावत् ॥**
**नासाप्रमाणं पृथिवीरुहाणां**
**पत्रं गृहीत्वा त्ववलम्ब्य तस्य ॥ २८ ॥**
**तेन प्रमाणेन हि गण्डपार्श्वा-**
**दुत्कृत्य बद्धं त्वथ नासिकाग्रम् ॥**
**विलिख्य चाशु प्रतिसंदधीत**
**तत् साधुबन्धैर्भिषगप्रमत्तः ॥ २९ ॥**
**सुसंहितं सम्यगतो यथाव-**
**न्नाडीद्वयेनाभिसमीक्ष्य बद्ध्वा ॥**

**प्रोन्नम्य चैनामवचूर्णयेत्तु**
**पतङ्गयष्टीमधुकाञ्जनैश्च ॥ ३० ॥**
**संछाद्य सम्यक् पिचुना सितेन**
**तैलेन सिञ्चेदसकृत्तिलानाम् ॥**
**घृतं च पाय्यः स नरः सुजीर्णे**
**स्निग्धो विरेच्यः स यथोपदेशम् ॥ ३१ ॥**
**रूढं च सन्धानमुपागतं स्यात्**
**तदर्धशेषं तु पुनर्निकृन्तेत् ॥**
**हीनां पुनर्वर्धयितुं यतेत**
**समां च कुर्यादतिवृद्धमांसाम् ॥ ३२ ॥**

विश्लेषितायास्त्वथेत्यादि। विश्लेषितायाः इति छिन्नायाः। पृथिवीरुहाणां वृक्षाणाम्। तस्य इति छिन्ननासिकस्य पुरुषस्य। तेन प्रमाणेन इति वृक्षपत्रप्रमाणेन। उत्कृत्य इति ऊर्ध्वं छेदयित्वा। बद्धमिति संलग्नं यथा स्यात्, मांसमिति शेषः। तत् इति नासिकाग्रम्। साधुबन्धैः इति शोभनबन्धैः कृत्वा। अप्रमत्तः सावधानः। सुसंहितं सम्यगभिसमीक्ष्य नाडीद्वयेन यथावद्बद्ध्वा प्रोन्नम्य च प्रकृष्टं यथा स्यात् एवमुत्थाप्य, एनां नासिकामवचूर्णयेदिति संबन्धः। नाडीद्वयमत्र नलकृतं एरण्डपत्रनालकृतं वा न तु सीसकादिवटिका; कुतः? सा हि गुरुत्वादधो गच्छति। पत्तङ्गं रक्तचन्दनं, अञ्जनं रसाञ्जनं, सितेन शुक्लेन तैलेन इत्युक्ते तिलतैलं लब्धं तिलानामिति यत् कृतं तत् प्रतिनिधितैलनिषेधार्थम्। पाय्यः पायितव्यः। सुजीर्णे भोजने। अन्ये त्वेवं पठन्ति,—"छिन्नां तु नासिकां दृष्ट्वा वयःस्थस्य शरीरिणः। नासानुरूपं संच्छिद्य पत्रं गण्डे निवेशयेत्"—इत्यादि ॥ २८—३२ ॥

**नाडीयोगं विनौष्ठस्य नासासन्धानवद्विधिम् ॥**
**य एवमेव जानीयात् स राज्ञः कर्तुमर्हति ॥ ३३ ॥**

अतः छिन्नस्योष्ठस्य संधानमाह,—नाडीयोगं विनौष्ठस्येति। ओष्ठस्य संधानविधिः नासासन्धानवत् कर्तव्यः; परं नाडीयोगं विना। अर्हति योग्यो भवति। इदं नासासंन्धानौष्ठसंधानसूत्रं पूर्वाचार्यैरनार्षीकृतमपि जेज्झटगयदासादिभिरङ्गीकृतं सुबोधत्वेन व्याख्यातं, तैरङ्गीकृतत्वादस्माभिरपि संगृहीतं सुबोधमपि च वैद्यपुत्रबोधार्थं व्याख्यातम्। दाक्षिणात्यास्तु भिषजः कर्णस्योपरि कोटिव्यधमत्र पठन्ति। सोऽप्यत्राप्रसिद्धो नार्षः ॥ ३३ ॥

इति सूत्रस्थाने श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां षोडशोऽध्यायः।

---

## सप्तदशोऽध्यायः।

**अथात आमपक्वैषणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

आमशब्दात् पच्यमानोऽप्यत्र बोद्धव्यः। आमश्च पच्यमानश्च पक्वश्च तेषामेषणं विज्ञानं तद्विद्यते यस्मिन्नध्याये तं तथा ॥

**शोफसमुत्थाना ग्रन्थिविद्रध्यलजीप्रभृतयः प्रायेण व्याधयोऽभिहिता अनेकाकृतयस्तैर्विलक्षणः पृथुर्ग्रथितः समो विषमो वा त्वङ्मांसस्थायी दोषसंघातः शरीरैकदेशोत्थितः शोफ इत्युच्यते ॥ ३ ॥**

अथ शोफसमुत्थाना इत्यादि। शोफसमुत्थाना इति शोथकारणाः, शोफस्यैव समुत्थानं येषामित्यन्ये। प्रायेण इति बाहुल्येन, कदाचिद्भिन्नसमुत्थाना अपि भवन्ति। तैर्विलक्षणः इति तेभ्यो ग्रन्थ्यादिभ्यो व्याधिभ्यः पृथगित्यर्थः। तैर्ग्रन्थ्यादिव्याधिभिः कृत्वा विलक्षणो नानाप्रकार इत्यन्ये। पृथुः विस्तीर्णः। ग्रथितः ग्रन्थिरिवोन्नतः, जातबहुग्रन्थिरित्यन्ये। समः समसंस्थानः, विषमो वा इति विषमसंस्थानो वा, एतेन व्रणशोफस्याकृतेरनियम उक्तः। त्वङ्मांसस्थायी इति एतत्तु प्रायेण, कुतः? शेषव्रणवस्तुष्वपि व्रणशोफस्य संभवात्। दोषसंघातः इति एकस्य द्वयोर्वा बहूनां वा दोषाणां संघातः दोषसंघातः; संघात उच्छ्रायः। शरीरैकदेशोत्थितः इति, एतेन सर्वसराद्भिन्नत्वं प्रतिपादयति ॥ ३ ॥

**स षड्विधो वातपित्तकफशोणितसन्निपातागन्तुनिमित्तः। तस्य दोषरूपव्यञ्जकैर्लक्षणानि व्याख्यास्यामः। तत्र, वातशोफोऽरुणः कृष्णो वा परुषो मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषा भवन्ति; पित्तशोफः पीतो मृदुः सरक्तो वा शीघ्रानुसारी उषादयश्चात्रावेदनाविशेषा भवन्ति; श्लेष्मशोफः पाण्डुः शुक्लो वा कठिनः शीतः स्निग्धो मन्दानुसारी कण्ड्वादयश्च अत्र वेदनाविशेषा भवन्ति; सर्ववर्णवेदनः सन्निपातश्वयथुः; पित्तवत् शोणितजोऽतिकृष्णश्च; पित्तरक्तलक्षण आगन्तुर्लोहितावभासश्च ॥ ४ ॥**

स षड्विधो वातेत्यादि। तस्य व्रणशोफस्य दोषरूपव्यञ्जनैः इति वातादिरूपैर्वर्णादिभिः वातादिलक्षणैस्तोदादिभिश्चेत्यर्थः; दोषरूपव्यञ्जनैर्दोषाणां वातादीनां रूपाण्याकृतयो व्यज्यन्ते एभिरिति व्यञ्जनानीत्यन्ये। तत्र वातशोफ इत्यादि।—अनवस्थितः चलः। तोदादयश्च इत्यादि शब्दाद्भेदनछेदनादयः। पित्तशोफः पीत इत्यादि उषादयश्चेत्यादिशब्दात् चोषपरिदाहधूमायनानि गृह्यन्ते। श्लेष्मशोफः पाण्डुरित्यादि कण्ड्वादयश्चेत्यादिशब्दात् गुरुत्वसुप्तत्वादयः। आगन्तुः इति पातनपीडनादिकृतः ॥ ४ ॥

**स यदा बाह्याभ्यन्तरैः क्रियाविशेषैर्न संभावितः प्रशमयितुं क्रियाविपर्ययाद् बहुत्वाद् वा दोषाणां तदा पाकाभिमुखो भवति। तस्य आमस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमुपधारय। तत्र, मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्यं मन्दवेदनता अल्पशोफता च आमलक्षणमुद्दिष्टम्;**

**सूचिभिरिव निस्तुद्यते दश्यत इव पिपीलिकाभिस्ताभिश्च संसर्प्यत इव छिद्यत इव शस्त्रेण भिद्यत इव शक्तिभिस्ताड्यत इव दण्डेन पीड्यत इव पाणिना घट्ट्यत इव च अङ्गुल्या दह्यते पच्यत इव च अग्निक्षाराभ्यामोषचोषपरीदाहाश्च भवन्ति वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति आध्मातबस्तिरिवाततश्च शोफो भवति त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासाभक्तारुचिश्च पच्यमानलिङ्गम्; वेदनोपशान्तिः पाण्डुताल्पशोफता वलीप्रादुर्भावस्त्वक्परिपुटनं निम्नदर्शनमङ्गुल्यावपीडिते प्रत्युन्नमनं बस्तौ इव उदकसंचरणं पूयस्य प्रपीडयति एकमन्तमन्ते वा अवपीडिते मुहुर्मुहुस्तोदः कण्डूरुन्नतता च व्याधेरुपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्वलिङ्गम् ॥ ५ ॥**

बाह्याभ्यन्तरैरित्यादि । बाह्याः आलेपनादयः, आभ्यन्तराः क्वाथपानवमनविरेचनादयः, तैः प्रशमयितुं न संभावितः, न प्राप्त इत्यन्ये । क्रियाविपर्ययात् इति अतर्पणादीनां अन्यथाभावात् । हेत्वन्तरमाह,—बहुत्वाद्वा दोषाणामिति । न हि बहुदोषा विकारा शोणितावसेकादिभिरेव प्रशमं यान्ति; यदुक्तम्,—"आलेपनस्रावणशोधनैश्च सम्यक्प्रयुक्तैर्यदि नोपशाम्येत्—" इति । तत्र मन्दोष्मेत्यादि । स्थैर्यं काठिन्यम् । सूचीभिरिव निस्तुद्यते इत्यादि । निस्तुद्यते भृशं व्यथ्यते, निःशब्दोऽत्र भृशार्थे। ताभिः पिपीलिकाभिः । भिद्यते विदार्यत इव । शक्तिभिः आयुधविशेषैः। ताड्यते आहन्यत इव। दण्डः लगुडः। घट्यते चाल्यत इव । दह्यते पच्यते इव च तेन दह्यते भस्मसात् क्रियत इव अग्निना, पच्यत इव अङ्गारतापैरुपतप्यत इव क्षारेण । ओषः एकदेशिको दाहः, चोषः चूष्यत इव वेदनाविशेषः, परि समन्ताद्दाहः परिदाहः । आततः त्वक्संकोचरहितः । वेदनोपशान्तिरित्यादि । त्वक्परिपुटनं त्वच उच्चटनम् । प्रत्युन्नमनं आभिमुख्येनोर्ध्वं नमनम् । बस्ताविवेत्यादि यथा बस्तावुदकसंचरणं भवति तद्वद्वेवे एकमन्तमवयवं प्रपीडयति सति पूयस्य संचरणं शोफे भवतीत्यर्थः । मुहुर्मुहुस्तोदः वातवेदना; कण्डूः श्लेष्मवेदना । पक्वशोथे विदाहापगमेन पित्ताभावात्तल्लिङ्गाभावः । उन्नताव्याधेः उन्नतशोफः । उपद्रवाः ओषपरिदाहादयः ॥ ५ ॥

**कफजेषु तु रोगेषु[1] गम्भीरगतित्वात् अभिघातजेषु च केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो भिषङ्मोहमुपैति । तत्र हि त्वक्सवर्णता शीतशोफता स्थौल्यमल्परुजता अश्मवच्चघनता न मोहमुपेयादिति ॥ ६ ॥**

कफजेषु रोगेष्विति । रोगोऽत्र शोफः । तत्र विषये कफजेष्विति गम्भीरगतित्वात् अभिघातजेषु केषु या चिरानुप्रविष्टशल्यादिहेतुत्वात् । यत्र हि त्वक्सवर्णतेत्यादि । तत्र इति कफजेऽभिघातजे च शोफे । त्वक्सवर्णता न तु त्वग्वैवर्ण्यं, गम्भीरगतित्वादन्तः पाको बहिः पुनः त्वक्सावर्ण्यमेव । शीतशोफता बहिः, अन्तः पुनरुष्णत्वं, गम्भीरगतित्वात् कफारब्धत्वाच्च । अल्परुजता कफारब्धत्वात् । अश्मवद्घनता शिलावत् काठिन्यं, कफारब्धत्वाद्बहिः पाकत्वाच्चेति । तत्र न मोहमुपेयात् इति न तत्र मोहं गच्छेत्, एभिः पक्वलक्षणैः पक्वमेव जानीयादित्यर्थः । न मोहमुपेयात् यतस्तं रक्तपाकमाचक्षते वृद्धा इत्यन्ये ॥ ६ ॥

भवन्ति चात्र ।

**आमं विपच्यमानं च सम्यक् पक्वं च यो भिषक् ॥**
**जानीयात् स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥ ७॥**

आमादिलक्षणज्ञाने गुणमज्ञाने दोषं च दर्शयन्नाह,—आमं विपच्यमानं चेति । शेषाः अन्ये आमादिज्ञानवर्जिताः, तस्कराश्चौराः तेषामिव वृत्तिर्येषां ते, प्राणधनापहारित्वात् ॥ ७ ॥

**वातादृते नास्ति रुजा न पाकः**
**पित्तादृते नास्ति कफाच्च पूयः ॥**
**तस्मात् समस्तान् परिपाककाले**
**पचन्ति शोफांस्त्रय एव दोषाः ॥ ८ ॥**
**कालान्तरेणाभ्युदितं तु पित्तं**
**कृत्वा वशे वातकफौ प्रसह्य ॥**
**पचत्यतः शोणितमेव पाको**
**मतोऽपरेषां विदुषां द्वितीयः ॥ ९ ॥**

एकदोषारब्धा अपि पाककाले सर्वदोषाश्लिष्टा भवन्तीत्याह,—वातादृते नास्ति रुजेति । ऋतेशब्दः कफाच्चेत्यत्रापि संबध्यते। त्रिभिरेव शोणितचतुर्थैः शरीरमिदं धार्यत इति द्वितीयं दर्शनं दर्शयन्नाह,—कालान्तरेणेति । अन्तरशब्दोऽत्रावधिवाची प्रकोपप्रसरस्थानसंश्रयकालावधिना; अभ्युदितं तु पित्तमिति समन्ततो भावेन पुनरुद्गतं पित्तं कृत्वा वशे वातकफौ वातश्लेष्माणौ हीनौ कृत्वा । प्रसह्य बलात्कारेण वशे कृत्वा, क्रोडीकृत्येत्यन्ये । मतः संमतः ॥ ८ ॥ ९ ॥

**तत्र आमच्छेदे मांससिरास्नाय्वस्थिसन्धिव्यापादनमतिमात्रं शोणितातिप्रवृत्तिर्वेदनाप्रादुर्भावोऽवदरणमनेकोपद्रवदर्शनं क्षतविद्रधिर्वा भवति । स यदा भयमोहाभ्यां पक्वमपि अपक्वमिति मन्यमानश्चिरमुपेक्षते व्याधिं वैद्यस्तदा गम्भीरानुगतो द्वारमलभमानः पूयः स्वमाश्रयमवदार्य उत्सङ्गं महान्तमवकाशं कृत्वा नाडीं जनयित्वा कृच्छ्रसाध्यो भवति असाध्यो वेति ॥ १० ॥**

आमं न छिन्द्यात् पक्वं नोपेक्षेतेति दर्शयन्नाह,—तत्रामच्छेदे मांससिरेत्यादि। आमशब्दात् पच्यमानस्यापि ग्रहणात् तत्रापि एते दोषाः । व्यापादनं हिंसनं, अवदरणं विदरणं, क्षतविद्रधिः 'तैस्तै-

१ 'चिरानुप्रविष्टशल्यादिहेतुत्वात्' इति पाठान्तरम् ॥

भीवैरभिहते क्षते वा' इत्यादिविद्रधिनिदानोक्तः । स यदा भय-मोहाभ्यामित्यादि । मोहः अज्ञानं, चिरं प्रभूतकालम् । गम्भीरानुगतः दूरानुप्रविष्टः । उत्सङ्ग इवोत्सङ्गः, व्रणाशये हि चिरकालं पूयावस्थानेनावदारितमन्तःप्रदेशान्तरं निम्नमुत्सङ्गतुल्यलादुत्सङ्ग इत्युच्यते; उत् ऊर्ध्वं पूयस्य सङ्ग उत्सङ्ग इत्यन्ये । अवकाशमन्तरालं ॥ १० ॥

भवन्ति चात्र ।

**यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ॥**
**श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥ ११ ॥**

अस्यैवार्थस्य निदानार्थं चापरं श्लोकमाह—यश्छिनत्त्याममित्यादि । श्वपचाविव चण्डालाविव मन्तव्यौ ज्ञातव्यौ । तौ द्वौ । अनिश्चितकारिणौ आमच्छेदनपक्वोपेक्षणत्वात्; अन्ये तु तौ नरौ श्वपचतुल्यौ आतुरव्यापादनात् । तद्व्यापादनं तौ कुतो विधत्त इत्याह—अनिश्चितकारिणौ असमीक्ष्यविधायिनौ वैद्यौ । पक्वं शोफं शस्त्रकर्मार्हं ॥ ११ ॥

**प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदातुरं भिषक् ॥**
**मद्यपं पाययेन्मद्यं तीक्ष्णं योऽवेदनासहः ॥ १२ ॥**
**न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥**
**तस्मादवश्यं भोक्तव्यं रोगेषूक्तेषु कर्मणि ॥ १३ ॥**
**प्राणो ह्याभ्यन्तरो नृणां बाह्यप्राणगुणान्वितः ॥**
**धारयत्यविरोधेन शरीरं पाञ्चभौतिकम् ॥ १४ ॥**

पूर्वकर्माह,—प्राक् शस्त्रकर्मणश्चेष्टमिति । इष्टं हितं हितकारि; अन्ये तु इष्टमभिप्रेतमपथ्यमपि तद्बलाधानार्थं भोजयेत् । यो वेदनां न सहते तं तीक्ष्णं मद्यं पाययेत् परं मद्यपम् । अस्यैव फलमाह,—न मूर्च्छत्यन्नसंयोगादिति । शस्त्रं न बुध्यते शस्त्रवेदनां न जानातीत्यर्थः । रोगेषूक्तेषु इति मूढगर्भोदराशोंऽश्मर्यादिवर्जितेषु । कर्मणि शस्त्रप्रयोगे प्राप्ते अवश्यं ध्रुवं भोक्तव्यम् । कस्मादुक्तेषु रोगेषु भोजयेदित्याह,—प्राणो ह्याभ्यन्तर इति । अत्राभ्यन्तरः प्राणो बलं तच्चौजोजनितं भारहरणादिशक्तिलक्षणम् । बाह्यप्राणगुणान्वित इति बाह्यप्राणोऽत्र बाह्यं बलमुपचयलक्षणं पाञ्चभौतिकाहारजनितं, गुणाः शरीरदार्ढ्यादिकाः, तैरन्वितः सन् आभ्यन्तरः प्राणः शक्तिलक्षणः शरीरं धारयतीत्यर्थः । अन्ये त्वन्यथा व्याख्यानयन्ति,—प्राणो ह्याभ्यन्तर इति संपन्नो यव इतिवत् चातिविवक्षया इहैकवचनं, तेनात्र अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मा आभ्यन्तराः प्राणाः, बाह्यप्राणा आग्नेयसौम्यवायव्यद्रव्याणि दिवसो वायू रात्रिः शब्दस्पर्शरूपरसगन्धाश्चेति तेषां गुणास्तैरन्वितोऽनुगतः सन् आभ्यन्तरः प्राणः शरीरं धारयतीत्यर्थः । तत्र बाह्यप्राणस्य अग्नेर्गुणैः कट्वम्ललवणादिभिरनुगतः सन् अन्तरग्निः शरीरं धारयतीत्यादिना बाह्यप्राणगुणानुगतत्वेनाभ्यन्तरप्राणस्य शरीरधारकत्वं दर्शयन्ति, अस्माभिस्तु विस्तरभयान्न दर्शितम् । लक्ष्मणटीप्पनकारस्तु आभ्यन्तरः प्राणः अग्निषोमादिः, येन प्राणो जीवति, बाह्यप्राणोऽन्नं, तद्गुणाः प्रीणनादयः, तैरन्वितः सन् आभ्यन्तरः प्राणः शरीरं धारयतीत्यर्थः ॥ १२—१४ ॥

**अल्पो महान् वा क्रियया विना यः**
**समुच्छ्रितः पाकमुपैति शोफः ॥**
**विशालमूलो विषमं विदग्धः**
**स कृच्छ्रतां यात्यवगाढदोषः ॥ १५ ॥**

महति शोफेऽल्पे वा अप्रतिक्रियमाणे सति बहुं दोषमाह,—यः समुच्छ्रित इति । विषमं विदग्धः इति विषमो विपक्कः विषमपाक इत्यर्थः । अवगाढदोषः इति आभ्यन्तरपूय इत्यर्थः । 'यो ह्युत्थितोऽल्पो यदि वा महान्वा क्रियां विना पाकमुपैति शोथः' इति केचित् पठन्ति ॥ १५ ॥

**आलेपनस्रावणशोधनैस्तु**
**सम्यक् प्रयुक्तैर्यदि नोपशाम्येत् ॥**
**पच्येत शीघ्रं सममल्पमूलः**
**स पिण्डितश्चोपरि चोन्नतः स्यात् ॥ १६ ॥**

शोफानां आलेपनादिक्रियासमूहावचारणेऽपि पक्वानामुपक्रमसाफल्यं दर्शयन्नाह,—पच्येत शीघ्रं सममिति । एतेन समपाकत्वमुक्तं, सशोफः पिण्डितो वर्तुलीभूतः ॥ १६ ॥

**कक्षं समासाद्य यथैव वह्नि-**
**र्वातेरितः संदहति प्रसह्य ॥**
**तथैव पूयोऽप्यविनिःसृतो हि**
**मांसं शिराः स्नायु च खादतीह ॥ १७ ॥**

पक्वस्याप्युपेक्षणे शोफस्य प्रागुक्तमेव दोषं दृष्टान्तेन दर्शयन्नाह—कक्षं समासाद्येति । कक्षः तृणादिबहुलः प्रदेशः ॥ १७ ॥

**आदौ विम्लापनं कुर्याद् द्वितीयमवसेचनम् ॥**
**तृतीयमुपनाहं तु चतुर्थीं पाटनक्रियाम् ॥ १८ ॥**
**पञ्चमं शोधनं कुर्यात् षष्ठं रोपणमिष्यते ॥**
**एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥ १९ ॥**

पक्वशोफे व्रणस्य षष्ठे रूपक्रमाणां सूत्रस्थाने सूत्रणार्थं विम्लापनादीनुपक्रमान्निर्दिष्टुमाह,—आदौ विम्लापनं अङ्गुल्यादिमर्दनेन शोफविलयनं, अवसेचनं जलौकादिभिः रक्तविस्रावणं, उपनाहः बन्धनं पाचनाय, वैकृतापहमिति सवर्णकरणरोमसंजननमित्यादि । अन्ये त्वन्यथा आपातनिकां गृह्णन्ति, अन्यथैव च व्याख्यानयन्ति, अत्र व्रणस्य षष्ठे रूपक्रमाणां सुखबोधार्थं लक्षणान्तरेण सप्तत्वं दर्शयन्नाह,—आदौ विम्लापनमित्यादि । विम्लापनशब्दोऽत्र बहिःप्रमार्जने शोफविलयनकरलेपपरिषेकाभ्यङ्गस्वेदादौ वर्तते, न तु मन्दवेदनस्य शोफस्य द्विव्रणीयपठिते वेणुनलाङ्गुष्ठादिमर्दने; अवसेचनं विस्रावणं, अवसेचनशब्दोऽप्यत्र वमनविरेकशोणितविस्रावणाद्यन्तर्बहिःप्रमार्जने वर्तते, न तु केवल एव

१ 'योऽह्युत्थितोऽल्पो यदि वा महान्वा क्रियां विना पाकमुपैति शोथः' इति पाठान्तरम् ॥

विस्रावणे; एवं शेषेष्वपि उपक्रमेषु उपक्रमान्तराणि समानेषु समानानि अन्तर्भाव्यानि ॥ १८—१९ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने सप्तदशोऽध्यायः समाप्तः ।

## अष्टादशोऽध्यायः ।

**अथातो व्रणालेपनबन्धविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

**आलेप आद्य उपक्रम एष सर्वशोफानां सामान्यः प्रधानतमश्च । तं च प्रतिरोगं वक्ष्यामः । ततो बन्धः प्रधानं, तेन शुद्धिर्व्रणरोपणमस्थिसंधिस्थैर्यं च ॥ ३ ॥**

एष आलेप आद्य उपक्रमः कथं? द्विव्रणीयेऽपतर्पणस्य आद्यत्वेन पठितत्वात् । औषधद्रव्येभ्यो बहिरन्तःप्रमार्जनेभ्यः आलेपः आद्य इत्यर्थः; आद्यसमीपत्वात् श्रेष्ठत्वाद्वा आलेपस्त्वाद्य इत्युच्यते । सर्वशोफानां सामान्यः इति वातादिशोफानां तुल्यः, आलेपनाभेदात् । प्रधानतमश्च सर्वोपक्रमेभ्यः आशुपीडाहरत्वात् । तं च प्रतिरोगमिति तं आलेपं, प्रतिरोगं रोगे रोगे, वक्ष्यामः कथयिष्यामः, अस्मिन् स्थाने चिकित्सिते च । ततो बन्धः प्रधानं तेन शुद्धिर्व्रणरोपणमस्थिसन्धिस्थैर्यं चेति ततः तस्मादालेपात्, अस्थिसन्धिस्थैर्यं च इति अस्थ्नः सन्धेर्दार्ढ्यं भवतीत्यध्याहारः । केचिदाचार्या इमं न पठन्ति ॥ १—३ ॥

**तत्र प्रतिलोममालिम्पेत् न अनुलोमम् । प्रतिलोमे हि सम्यगौषधमवतिष्ठते अनुप्रविशति रोमकूपान् स्वेदवाहिभिश्च सिरामुखैर्वीर्यं प्राप्नोति ॥ ४ ॥**

इदानीमालेपावचारणं तत्फलं च निर्देष्टुमाह,—तत्र प्रतिलोममालिम्पेदिति प्रतिलोमं लोमाभिमुखमालिम्पेत् । हि यस्मादर्थे । अवतिष्ठते अवस्थितिं करोति, अनुप्रविशति च औषधमित्यनुवर्तते ॥ ४ ॥

**न च शुष्यमाणमुपेक्षेत, अन्यत्र पीडयितव्यात् । शुष्को हि अपार्थको रुक्करश्च ॥ ५ ॥**

आलेपस्यावस्थायां कर्तव्यतामाह,—न च शुष्यमाणमुपेक्षेतेति । पीडयितव्यात् इति पीडनद्रव्यैर्मिश्रकोक्तैर्यो व्रणः पीडनीयो भवति तस्मादन्यत्र शुष्यमाणं नोपेक्षेतेत्यर्थः । हि यस्मादर्थे । अपार्थकः निष्फलः ॥ ५ ॥

**स त्रिविधः—प्रलेपः, प्रदेह, आलेपश्च । प्रलेपप्रदेहयोरन्तरं—प्रलेपः शीतस्तनुरविशोषी विशोषी वा; प्रदेहस्तु उष्णः शीतो वा बहलो बहुरविशोषी च; मध्यमोऽत्रालेपः । तत्र, रक्तपित्तप्रसादकृदालेपः; प्रदेहो वातश्लेष्मप्रशमनः संधानः शोधनो रोपणः शोफवेदनापहश्च; तस्योपयोगः क्षताक्षतेषु, यस्तु क्षतेषु उपयुज्यते स भूयः कल्क इति संज्ञां लभते निरुद्धालेपनसंज्ञः; तेनास्रावसन्निरोधो मृदुता पूतिमांसापकर्षणमनन्तर्दोषता व्रणशुद्धिश्च भवति ॥ ६ ॥**



तद्भेदानाह—स त्रिविधः इत्यादि । प्रलेपप्रदेहयोर्वास्तवाभेदेऽपि व्यावहारिकं भेदं दर्शयन्नाह,—प्रलेपप्रदेहयोरन्तरमिति ।—अन्तरं भेदः, स्थानासनवत् । प्रलेपं लक्षणैर्निर्दिशन्नाह,—तत्र प्रलेपः शीतस्तनुरित्यादि ।—अविशोषी अपीडयितव्ये व्रणशोफे, विशोषी पीडयितव्ये; एतेन येन कल्केन चन्दनवल्लिप्यते स प्रलेपः; अन्ये शीतस्तनुरित्यादिलक्षणं प्रदेहस्येति वदन्ति । लक्षणैः प्रदेहं निर्दिशन्नाह,—प्रदेह इत्यादि ।—उष्णः शीतो वा इति विषयापेक्षया, तत्र वातकफबहुले उष्णः, पित्तरक्तबहुले शीतः । बहलः स्थूलः, एतेन यस्तु कल्कः पिण्डीकृत्य व्रणस्योपरि दीयते स प्रदेहः । उष्णः शीतो वेत्यादिलक्षणं प्रलेपस्येति केचिन्मन्यन्ते । लक्षणान्तरं निर्दिश्य कार्यभेदं निर्दिशन्नाह,—तत्रेत्यादि। तत्र रक्तपित्तेति तत्र तयोर्मध्ये । केचिदत्रालेपनस्थाने प्रदेह इति पठन्ति, प्रदेहो वातश्लेष्मणि; अन्ये तु प्रदेहस्थाने आलेपं पठन्ति । आलेपस्य सामान्यविषयं दर्शयन्नाह,—तस्योपयोग इति । क्षताक्षतेषु व्रणशोफेष्वित्यर्थः । विषयान्तरेणालेपस्य नामान्तरमाह,—यस्तु क्षतेषूपयुज्यते इति । तुशब्दोऽवधारणे, भूयःशब्दोऽत्र पुनरर्थे । निरुद्धा निषिद्धा । अन्ये त्वत्र निरोध्यालेपनसंज्ञमिति पठन्ति; तत्रापि स एवार्थः । कल्कसंज्ञस्यालेपस्य कर्म आह,—तेनास्रावसन्निरोध इति ।—आस्रावः रक्ताद्यास्रावः । अनन्तर्दोषता इति दोषोऽत्र पूयः, तेनाभ्यन्तरपूयवर्जितत्वम् । व्रणशुद्धिश्च इति दोषदुष्टिनिवृत्तिः; चकाराद् व्रणरोपणस्य ग्रहणम् ॥ ६ ॥

**अविदग्धेषु शोफेषु हितमालेपनं भवेत् ॥**
**यथास्वं दोषशमनं दाहकण्डूरुजापहम् ॥ ७ ॥**
**त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम् ॥**
**दाहप्रशमनं श्रेष्ठं तोदकण्डूविनाशनम् ॥ ८ ॥**
**मर्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम् ।**
**संशोधनाय तेषां हि कुर्यादालेपनं भिषक् ॥ ९ ॥**
**(षड्भागं पैत्तिके स्नेहं चतुर्भागं तु वातिके ॥**
**अष्टभागं तु कफजे स्नेहमात्रां प्रदापयेत् ॥ १० ॥)**

आलेपस्यात्मविषये कालावधिमाह;—अविदग्धेषु शोफेष्विति । अविदग्धेषु आलेपनं हितं, विदग्धेषु पुनः प्रदेह एव, यस्य उपनाह इति संज्ञान्तरम् । यथास्वं दोषशमनं इति दाहः पित्तस्य, कण्डूः कफस्य, रुजा वातस्य, एता अपहन्ति । 'रुजाकण्डूविनाशनम्' इत्यन्ये । दूष्यप्रसादनत्वमालेपस्य निर्देष्टुमाह,—त्वक्प्रसादनमेवाग्र्यमिति ।—अग्र्यं प्रधानं, दाहकण्डूरुजापहमिति पूर्वस्मिन्नेव श्लोके दाहादीनां पठितत्वादिह पुनः पाठो दूष्यकृता अपि दाहादयो भवन्तीति बोधनार्थम् ॥ ७—१० ॥

**तस्य प्रमाणं महिषार्द्रचर्मोच्छ्रायापेक्षयाऽस्थूल इति ॥ ११ ॥**

तनुत्वमालेपस्य गुणः, तनुत्वं किं प्रमाणमित्याह—तस्य प्रमाणं महिषार्द्रचर्मोच्छ्रायापेक्षयाऽस्थूल इति । ये तु तनुत्वं प्रदेहगुणं मन्यन्ते तेषां मते प्रदेहस्यैतत्प्रमाणम् ॥ ११ ॥

**न च आलेपं रात्रौ प्रयुञ्जीत, मा भूच्छैत्यपिहितोष्मणस्तदनिर्गमाद्विकारप्रवृत्तिरिति ॥ १२ ॥**
**प्रदेहसाध्ये व्याधौ तु हितमालेपनं दिवा ॥**
**पित्तरक्ताभिघातोत्थे सविषे च विशेषतः ॥१३॥**
**न च पर्युषितं लेपं कदाचिदवचारयेत् ॥**
**उपर्युपरि लेपं तु न कदाचित् प्रलेपयेत् ॥ १४ ॥**
**ऊष्माणं वेदनां दाहं घनत्वाज्जनयेत् स हि ॥**
**न च तेनैव लेपेन प्रदेहं दापयेत् पुनः ॥**
**शुष्कभावात्स निर्वीर्यो युक्तोऽपि स्यादपार्थकः ॥ १५ ॥**

विशिष्टे काले आलेपावचारणविधिनिषेधे, कथंचित् क्रियमाणे च दोषमाह,—न चालेपनं रात्राविति । शैत्यपिहितोष्मणः शोफस्येति शेषः, तदनिर्गमात् शोफोष्मानिःसरणात्, विकारप्रवृत्तिः विकाराभिवृद्धिः । शैत्यरुद्धरोमकूपत्वादनिर्गच्छन्नूष्मा आलेपनान्तरेणात्यर्थं शोफं पचतीत्यर्थः। स्वेदवाहिभिश्च शिरामुखैर्वीर्यं प्राप्नोतीत्यत ऊर्ध्वं बहुषु प्रतिषु निबन्धपाठक्रमाद् व्यतिक्रमेण पाठक्रमः अधिकश्च पाठः स उच्यते—"तस्य प्रमाणं महिषार्द्रचर्मोत्सेधमुपदिशन्ति[१] । न च शुष्यमाणमुपेक्षेताऽन्यत्र पीडयितव्यात् । शुष्को ह्यपार्थो रूक्षश्च । स त्रिविधः आलेपः प्रदेहो लेपश्च । तेषामन्तरं—आलेपः शीतस्तनुरविशोषी विशोषी च, प्रदेहस्तूष्णः शीतो वा बहुलो बहुरविशोषी च, मध्यमो लेपः इति। विशेषतो रक्तपित्तप्रसादकृदालेपः; प्रदेहो वातश्लेष्मप्रशमनः शोधनो रोपणः शोफवेदनापहश्च । तस्योपयोगः क्षताक्षतेषु; यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते निरुद्धालेपनसंज्ञः; तेनास्रावसंनिरोधो मृदुता पूतिमांसापकर्षणं अनन्तर्दोषता व्रणशुद्धिश्च भवति । उभयगुणो लेपः । न चालेपं रात्रौ प्रयुञ्जीत, माभूच्छैत्यविहतोष्मणस्तदनिर्गमाद्विकारप्रवृत्तिरिति । त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम्। दाहप्रशमनं श्रेष्ठं तोदकण्डुविनाशनम् ॥ मर्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम्। संशोधनाय तेषां हि कुर्यादालेपनं भिषक् ॥ अविदाहीषु शोथेषु हितमालेपनं भवेत्। यथास्वं दोषशमनं दाहकण्डुविनाशनम्॥ षड्भागं पैत्तिके स्नेहं चतुर्भागं तु वातिके। अष्टभागं तु कफजे स्नेहमात्रां प्रदापयेत्।" अयं पाठो वर्तमानेषु पुस्तकेषु सर्वेष्वेव पठ्यते इत्यस्माभिः क्रममात्रं दर्शितं, न त्वयं पठनीयः; पठनीयः पुनः प्राक्तनपाठ एव, सर्वपूर्वाचार्यसंमतत्वात् ॥ १२–१५ ॥

**अत ऊर्ध्वं व्रणबन्धनद्रव्याणि उपदेक्ष्यामः । तद्यथा—क्षौमकार्पासाविकदुकूलकौशेयपत्रोर्णचीनपट्टचर्मान्तर्वल्कलालाबूशकललताविदलरज्जुतूलफलसन्तानिकालौहानीति ॥ १६ ॥**

इदानीं व्रणबन्धविधिः प्रस्तूयते, स च द्रव्याधीनः, अतस्तान्येव प्रागुपदेष्टुमाह,—क्षौमकार्पासाविकेत्यादि । क्षौमं अतसीतन्तुभिर्व्यूतं, अन्ये वस्त्रान्तरमाहुः; कार्पासं कार्पासतन्तुरचितं; आविकं उरभ्ररोमव्यूतं; दुकूलं पट्टवस्त्रं, अन्ये वल्कमाहुः; कौशेयं कोशकारकृमिलालोद्भूतं, यत्रसरमिति लोके; पत्रोर्णः रल्लकाख्यः कम्बलः, अन्ये तु यैर्हरितादीनि देवाङ्गानि ऊच्यन्ते (?) ते पत्रोर्णाः, धौतकौशेयमित्यपरे, मागधपौण्ड्रकादिदेशेषु नागवृक्षादयश्चत्वारो वृक्षाः, तत्पत्रेभ्यो जातैः हरिततन्तुभिरूर्णारूपैरूयते यत् तत्पत्रोर्णमित्येके; चीनपट्टं चीनदेशे एवोत्पद्यते, तद्देशजातास्तु चीनयुगपट्टमिति वदन्ति, स च पत्रोर्णस्यैव भेदः, अन्ये नेत्रमाहुः; चर्म एणादीनां, अपरे चर्मवद्धं घनद्रव्यं अथवा सुवर्णपिष्टिकादिलिप्तचर्मतन्तुभिस्तुरुस्कैर्यानि व्यूयन्ते तानि चर्मशब्देनोच्यन्ते; बाह्यवल्कलमन्तस्त्वचं त्यक्त्वा मध्यं यद् गृह्यते तत् अन्तर्वल्कलं; अलाबुशकलं तुम्बीफलकर्परिका; लताविदलं श्यामलतादिपाटितार्धं; केचिद्विदलशब्दं चर्मादिभिः सह संबध्नन्ति, अन्ये तु विदलशब्देन वंशवेत्रादिकञ्चिकामाहुः, लताशब्देन च श्यामलतादीनां ग्रहणं; रज्जुः मुञ्जवल्वजादिवलितः; तूलफलं शाल्मलीफलादि; सन्तानिका क्षीरसन्तानिका, अन्ये कुशलसन्तानिकेति पठन्ति, कुशलसन्तानिका कोकिलवृत्तिः (?) द्वित्रितन्तुरचिता 'चय' इति लोके प्रसिद्धा; मर्कटीवासं केचिदाहुः; लोहानि सुवर्णत्रपुशीसादीनि ॥ १६ ॥

**तेषां व्याधिं कालं चावेक्ष्योपयोगः । प्रकरणतश्चैषामादेशः ॥ १७ ॥**

क्व पुनस्तेषामुपयोग इत्याह—तेषामित्यादि । तेषां क्षौमादीनाम्, व्याधिं कालं चावेक्ष्योपयोगः इति वातश्लैष्मिकं व्याधिमवेक्ष्य व्रणबन्धनद्रव्याणां घनानामुपयोगः, उष्णं च कालमवेक्ष्य तनूनामुपयोगः; चकाराद्गाढस्थानमवेक्ष्य घनानामुपयोगः, शिथिलस्थानमवेक्ष्य तनूनामुपयोग इति। वर्गोक्तानां व्रणबन्धनद्रव्याणां संक्षेपेणादेशमाह,—प्रकरणतश्चैषामिति ।—प्रकरणतः प्रकरणमवेक्ष्य, एषां व्रणबन्धनद्रव्याणां आदेशनं; तद्यथा—सर्पादिदष्टस्य अरिष्टाबन्धो रक्षादिभिः, रक्तातिप्रवृत्तौ रक्तनिवृत्त्यर्थं सन्तानिकया बध्नीयात्, पाटितश्यामलतायैर्भग्नसन्धानाय बन्धः कर्तव्यः, लौहैः सुवर्णादिभिः तान् बध्नीयात्, त्रप्वादिभिरर्बुदग्रन्थ्यादीन्; अलाबुशकलेन शिरोव्रणान् बध्नीयात्, एवमन्येषामपि यथार्हमादेशनम् ॥ १७ ॥

**तत्र कोशदामस्वस्तिकानुवेल्लितमुत्तोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणाः प-**

१ 'तस्य प्रमाणमार्द्रमाहिषचर्मोत्सेधमात्रमुपदिशन्ति' इति पाठान्तरम् ॥

**श्चाङ्गी चेति चतुर्दश बन्धविशेषाः। तेषां नामभिरेव आकृतयः प्रायेण व्याख्याताः॥ १८॥**

इदानीं बन्धविशेषान् संख्यया निर्देष्टुमाह,—तत्र कोशदामस्वस्तिकानुवेल्लितेत्यादि। एषामाकारं निर्देष्टुमाह,—तेषां नामभिरिति। प्रायोग्रहणान्नाम्नैव सर्वेषामाकृतीर्वक्तुं न शक्यते, तस्मात् परतन्त्रोक्तलक्षणमप्यत्रैव सम्यगाकृतिविज्ञानाय श्लोकैरुपदेक्ष्यामः। तद्यथा,—"पूरयित्वौषधैर्बन्धः क्रियते कोशकाकृतिः। कोशकाख्यः स विज्ञेयो, वैद्यैर्बन्धेन वर्जिताम्॥ दामाकृतिं चतुष्पादां दामाख्यं, स्वस्तिकं पुनः। स्वस्तिकाकृतिमासीव्य पश्चादावेष्ट्य बध्यते॥ अनुवेल्लितं तद्वियात्, मुत्तोलीलक्षणं शृणु। बह्वंघ्रिमुष्टिकाकारो (?) जालवद्वहुरन्ध्रकः॥ मुत्तोलीबन्ध एष स्यात् संज्ञान्तरमतः शृणु। गोतुण्डिकां चालनीं च तामेवाहुर्भिषग्वराः॥ मण्डलं वेष्टनाकारं विदध्यात् मण्डलाख्यके। भेषजादिभिरापूर्य स्थगिका पट्टकेन च॥ बध्यते मण्डलाकारो यमलव्रणयोस्तु सः। बन्धं यमकनामानं भिषजो वर्णयन्ति तम्॥" "खट्वा तु बहुभिर्वृत्ता" "चीनबन्धं विजानीयाच्चीराभिर्बहुभिर्वृतम्। विबन्धो विविधो बन्धः स च षड्ग्रन्थिकायुतः॥ ज्ञेयो वितानसंज्ञस्तु वितानाकारसंयुतः। पाषाणगुडकोत्क्षेपकाराणीं गोफणां विदुः॥ तदाकृतिं भिषक्कुर्यात् फलस्य पञ्चकं त्रिभिः (?)। पञ्चाङ्गीं तु वृतां कुर्यात् सन्धानाय चिकित्सकः"—इति॥ १८॥

**तत्र कोशमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्, दाम संबाधेऽङ्गे, सन्धिकूर्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकं, अनुवेल्लितं तु शाखासु, ग्रीवामेढ्रयोः मुत्तोलीं, वृत्तेऽङ्गे मण्डलं, अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकां, यमलव्रणयोर्यमकं, हनुशङ्खगण्डेषु खट्वां, अपाङ्गयोश्चीनं, पृष्ठोदरोरःसु विबन्धं, मूर्धनि वितानं, चिबुकनासौष्ठांसबस्तिषु गोफणां, जत्रुण ऊर्ध्वं पञ्चाङ्गीमिति; यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति तं तस्मिन् विदध्यात्।**

बन्धविषयमाह,—तत्रेत्यादि। तत्र इति चतुर्दशबन्धेषु मध्ये। पर्वशब्दोऽङ्गुष्ठाङ्गुलिभिः सह संबध्यते। दाम संबाधेऽङ्गे संबाधे अङ्गसंकटे। संधिकूर्चकभ्रूस्तनान्तरेति क्षिप्रमर्मोपरिष्टादुभयतः कूर्चकं, पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्र इति मर्म, भ्रूस्तनान्तरमिति अन्तरशब्दः प्रत्येकं संबध्यते; तलमिह हस्तपदतलम्। अनुवेल्लितं तु शाखास्विति शाखासु सक्थिबाहुषु। ग्रीवामेढ्रयोः मुत्तोलीम्। वृत्तेऽङ्गे मण्डलं बाहुपार्श्वोदरोरुपृष्ठादिकं वृत्तमङ्गम्। अग्रशब्दोऽत्राङ्गुष्ठादिभिः सह प्रत्येकं संबध्यते। हनुशङ्खेति हनुः मुखसन्धिः, शङ्खः भ्रूकर्णयोरन्तरं, गण्डः गल्लः। अपाङ्गयोश्चीनं अपाङ्गयोः नेत्रान्तप्रदेशयोः। पृष्ठोदरोरःसु विबन्धः हृदयोर्ध्वं स्तनयोर्मध्यं ग्रीवामूलादधस्तादुरः। मूर्द्धा मस्तकम्। चिबुकनासौष्ठांसबस्तिषु गोफणामिति चिबुकं ओष्ठाधः, नासा अस्थिपिण्डिका, अंसः बाहुशिरः, बस्तिः मूत्राशयः। उक्तं देशनियमं प्रयोजनवशेन व्यभिचारयन्नाह;—यो वा यस्मिन् शरीरप्रदेश इत्यादि। सुनिविष्टः शोभनाकारः।—

**यन्त्रणं ऊर्ध्वमधस्तिर्यक् च॥ १९॥**

बन्धो मृदुसमावगाढभेदात्त्रिविधः, स च यन्त्रणमन्तरेण न संभवति, अतो यन्त्रणं निर्देष्टुमाह,—यन्त्रणमूर्ध्वमधस्तिर्यक् चेति। यन्त्रणं पट्टग्रन्थैर्बन्धनं, तच्च ऊर्ध्वादिभेदेन त्रिप्रकारं, व्रणाकृतीनां नानाविधत्वात्। चकार ऊर्ध्वादिभेदानेव समुच्चिनोति॥ १९॥

**तत्र घनां कवलिकां दत्त्वा वामहस्तपरिक्षेपमृजुमनाविद्धमसंकुचितं मृदुपट्टं निवेश्य बध्नीयात्। न च व्रणस्योपरि कुर्याद्ग्रन्थिमाबाधकरं च।**

बन्धावचारणं निर्दिशन्नाह,—तत्रेत्यादि।—तत्र इति वाक्योपक्रमे। घनां कवलिकामिति औषधवस्त्रयोरन्तरे या दीयते औषधसंस्थापनार्थमौदम्बरादित्वक् पत्राणि वा सा कवलिकेत्युच्यते, अन्ये द्विगुणचतुर्गुणमृदुकर्पटविरचितां कवलिकामाहुः। वामहस्तपरिक्षेपमिति वामहस्तपरिक्षेपात् दृष्ट्वा रचितो बन्धो मङ्गलमावहति; अन्ये तु पट्टे वामहस्तपरिक्षिप्ते दक्षिणहस्तेन साधुबन्धो निष्पद्यते इत्याचक्षते; अन्ये तु वामदक्षिणपरिक्षेपावुभावपि विषये कर्तव्यौ। ऋजुलं सन्निवेशविशेषापेक्षम्। अनाविद्धं अनाकुलितम्, असंकीर्णमित्यपरे। असंकुचितं वलिवर्जितम्। मृदु कोमलम्। वामहस्तपरिक्षेपऋजुत्वादियुक्तं पट्टं निवेश्य संस्थाप्य बध्नीयादित्यर्थः। आबाधकारं च इति आ समन्ततः पीडाकरं ग्रन्थिं न कुर्यादित्यर्थः। स च वामदक्षिणपार्श्वयोस्तथा पृष्ठेऽपि क्रियमाणः स्वप्राबाधकरो भवेदिति॥—

**न च विकेशिकौषधे अतिस्निग्धे अतिरूक्षे विषमे वा कुर्वीत। यस्मात् अतिस्नेहात् क्लेदो, रौक्ष्याच्छेदो, दुर्न्यासाद् व्रणवर्त्मावघर्षणमिति॥ २०॥**

तत्रौषधकल्कव्रणवर्त्योः स्निग्धादिभावं नियमयन्नाह,—न च विकेशिकौषधे इति।—कल्कमधुघृताभ्यक्तवस्त्रस्य सूत्रस्य वा वर्तिः विकेशिका, सा च सपूतिमांसोत्सङ्गगतिपूयगर्भेषु व्रणेषु निक्षिप्यते; औषधमिह औषधकल्कः, स च केवलकल्कः पूतिमांसोत्सङ्गगत्यस्थ्यन्तरपूयवर्जितेषु व्रणेषु दीयते, पर्यायव्रणेषु पुनर्विकेशिकौषधकल्कयोरुभयोरप्युपयोगः। विषमे दुर्न्यस्ते, अन्ये विषम इति न पठन्ति। विकेशिकौषधयोरतिस्निग्धातिरूक्षदुर्न्यस्तयोर्दोषं वक्तुमाह,—यस्मादतिस्नेहात् क्लेद इति।—क्लेदः व्रणस्यार्द्रत्वं, छेदः संहतयोर्व्रणौष्ठयोर्द्विधाकरणं; दुर्न्यासात् दुष्प्रवेशात्, व्रणवर्त्म व्रणमुखम्। गयदासाचार्यास्तु अन्यथापातनिकां गृहीत्वा पाठमन्यथा पठन्ति—"अतिस्नेहातिरूक्षयोर्विकेशिकौषधयोर्दोषं युक्तियुक्तस्नेहतो गुणबहुत्वं चाह,—"कस्मादतिस्नेहात् क्लेदो रौक्ष्यात् छेदो युक्तस्नेहात् सम्यगुपरोह" इति॥ २०॥

**तत्र व्रणायतनविशेषाद्बन्धविशेषस्त्रिविधो भवति—गाढः, समः, शिथिल इति ॥ २१ ॥**

**पीडयन्नरुजो गाढः सोच्छ्वासः शिथिलः स्मृतः॥**
**नैव गाढो न शिथिलः समो बन्धः प्रकीर्तितः॥२२॥**

इदानीमुक्तसंख्यकमपि बन्धं व्रणाकृतिविशेषेण त्रिविधं दर्शयन्नाह,—तत्रेत्यादि । व्रणायतनविशेषादिति व्रणानामायतनं स्थानं अङ्गप्रत्यङ्गादिकं, तद्विशेषाद्गाढादयो बन्धविशेषा भवन्ति । ननु, दोषकालविशेषादप्यग्रे बन्धविशेषाणां दर्शितत्वाद्दोषकालावपि अत्र वाच्याविति? उच्यते, दोषकालौ हि व्रणायतौ भवतः शेषमात्रकरावेवेति (?) न पृथगुक्तौ ॥ २१ ॥ २२ ॥

**तत्र स्फिक्कुक्षिकक्षावङ्क्षणोरःशिरःसु गाढः, शाखावदनकर्णकण्ठमेढ्रमुष्कपृष्ठपार्श्वोदरोरःसु समः, अक्ष्णोः सन्धिषु च शिथिल इति ॥ २३ ॥**

व्रणायतनविशेषाद् बन्धविशेषं निर्दिशन्नाह—तत्र स्फिक्कुक्षीत्यादि । स्फिचौ कटिप्रोथौ, वङ्क्षणः ऊरुसन्धिः, मेढ्रः मेहनं, मुष्कः अण्डकोषः ॥ २३ ॥

**तत्र पैत्तिकं गाढस्थाने समं बध्नीयात्, समस्थाने शिथिलं, शिथिलस्थाने न; एवं शोणितदुष्टं च; श्लैष्मिकं शिथिलस्थाने समं, समस्थाने गाढं, गाढस्थाने गाढतरं; एवं वातदुष्टं च ॥ २४ ॥**

दोषविशेषाद् बन्धविशेषं निर्देष्टुमाह,—तत्र पैत्तिकमित्यादि ॥ २४ ॥

**तत्र पैत्तिकं शरदि ग्रीष्मे द्विरह्नो बध्नीयात्, रक्तोपद्रुतमप्येवं; श्लैष्मिकं हेमन्तवसन्तयोः त्र्यहात्, वातोपद्रुतमप्येवम् । एवमभ्यूह्य बन्धविपर्ययं च कुर्वीत ॥ २५ ॥**

कालविशेषादपि बन्धविशेषं दर्शयन्नाह,—तत्रेत्यादि । द्विरह्नोर्बध्नीयात् इति दिवसस्य मध्ये द्वौ वारौ बध्नीयादित्यर्थः । एवमभ्यूह्येति एवमनेन प्रकारेण, अभ्यूह्य स्वयमपि वितर्क्य, बन्धविपर्ययं बन्धस्यान्यथात्वमवस्थावशात् कुर्यात् इति । तद्यथा—पित्तश्लैष्मिकं बध्नीयात् प्रातर्ग्रीष्मशरदोः, हेमन्ते पैत्तिकमहरहः, वर्षादिष्वपि पित्तश्लैष्मिकं त्र्यहे सायमिति ॥२५॥

**तत्र, समशिथिलस्थानेषु गाढं बद्धे विकेशिकौषधनैरर्थक्यं शोफवेदनाप्रादुर्भावश्च, गाढसमस्थानेषु शिथिलं बद्धे विकेशिकौषधपतनं पट्टसंचाराद् व्रणवर्त्मावघर्षणमिति; गाढशिथिलस्थानेषु समं बद्धे च गुणाभाव इति ॥ २६ ॥**

गाढादिस्थानेऽप्यन्यथाकृतानां बन्धानां दोषं वक्तुमाह,—तत्र समशिथिलस्थानेष्विति । चकारोऽत्र रागं समुच्चिनोति । गाढबन्धदोषोऽयम् ॥ २६ ॥

**अविपरीतबन्धे वेदनोपशान्तिरसृक्प्रसादो मार्दवं च ॥ २७ ॥**

यथोचितबन्धगुणमाह,—अविपरीतबन्धे इत्यादि ॥ २७ ॥

**अबध्यमानो दंशमशकतृणकाष्ठोपलपांशुशीतवातातपप्रभृतिभिर्विशेषैरभिहन्यते व्रणो विविधवेदनोपद्रुतश्च दुष्टतामुपैति आलेपनादीनि चास्य विशोषमुपयान्ति ॥ २८ ॥**

बन्धव्यतिरेके दोषं वक्तुमाह,—अबध्यमानो दंशेत्यादि । दंशः वनमक्षिका, उपलः पाषाणः, पांशुः धूलिः, आतपः घर्मः, दुष्टतां वैकृतम् ॥ २८ ॥

**चूर्णितं मथितं भग्नं विश्लिष्टमतिपातितम् ॥**
**अस्थिस्नायुसिराच्छिन्नमाशु बन्धेन रोहति॥२९॥**
**सुखमेवं व्रणी शेते सुखं गच्छति तिष्ठति ॥**
**सुखं शय्यासनस्थस्य क्षिप्रं संरोहति व्रणः ॥३०॥**

अथ बन्धस्यात्यन्तगुणं दर्शयन्नाह,—चूर्णितं मथितमित्यादि । चूर्णितं बहुधा खण्डीकृतं, मथितं विलोडितं, भग्नं काण्डभग्नं, विश्लिष्टं सन्धिच्युतं, अतिपातितं स्थानाच्च्युतमवलम्बमानम् । छिन्नशब्दो अस्थ्यादिभिः प्रत्येकं संबध्यते । चूर्णितादिषु गमनागमनस्थानशयनेष्वपि चतुर्षु बन्धः प्रशस्त इत्याह,—सुखमेवं व्रणी शेते स्वपिति, तिष्ठति ऊर्ध्वीभूत आस्ते, शय्यासनस्थस्य सुखं भवतीत्यध्याहारः ॥ २९ ॥ ३० ॥

**अबन्ध्याः पित्तरक्ताभिघातविषनिमित्ता यदा च शोफदाहपाकरागतोदवेदनाभिभूताः क्षाराग्निदग्धाः पाकात् प्रकुपिताः प्रशीर्णमांसाश्च भवन्ति॥३१**

येषु बन्ध एवानर्थकरस्तान् दर्शयन्नाह,—अबन्ध्याः इत्यादि । निमित्तशब्दः पित्तादिभिः सह प्रत्येकं संबध्यते । कदा पुनरेते अबन्धनीया इत्याह,—यदेत्यादि । तोदाख्ययैव वेदनया अभिभूताः वातानुविद्धा इत्यर्थः । अत्र बन्धेनात्यर्थं तोदोत्पत्तिरेव स्यात् तस्मान्न बन्धः कर्तव्य इति । 'तोददाहाभिभूता' इत्यन्ये पठन्ति । 'यदा च शोफतोददाहरागपाकवेदनाभिभूता' इति केचित् पठन्ति । पाकात् प्रकुपिताः प्रशीर्णमांसाश्च भवन्ति इति ये व्रणाः पाकात् प्रतिस्रस्तमांसा भवन्ति तेऽपि न बन्ध्या इत्यर्थः ॥ ३१ ॥

**कुष्ठिनामग्निदग्धानां पिडका मधुमेहिनाम् ॥**
**कर्णिकाश्चोन्दुरुविषे विषजुष्टव्रणाश्च ये ॥ ३२ ॥**
**मांसपाके न बध्यन्ते गुदपाके च दारुणे ॥**

उक्तानुक्तमर्थं सुखपाठार्थं श्लोकैर्निर्दिशन्नाह,—कुष्ठिनामग्निदग्धानामित्यादि । कुष्ठिप्रभृतीनां मांसपाके सति व्रणा न बध्यन्ते । मधुमेहिनां पिडका इति । गुदपाके दारुणे इति बन्धो न कार्य इत्यर्थः ॥ ३२ ॥

**स्वबुद्ध्या चापि विभजेत्कृत्याकृत्यांश्च बुद्धिमान् ॥ ३३ ॥**

**देशं दोषं च विज्ञाय व्रणं च व्रणकोविदः ॥**
**ऋतूंश्च परिसंख्याय ततो बन्धान् निवेशयेत्॥३४॥**

कृत्याकृत्यान् साध्यासाध्यान्। देशं स्फिक्कुक्षिकक्षादिकम्। दोषं वातादिकम्। व्रणकोविदः व्रणविद्वान्। ऋतून् शीतोष्णसाधारणान्। परिसंख्याय बुद्ध्वा। निवेशयेत् कुर्यादित्यर्थः ॥ ३३ ॥ ३४ ॥

**ऊर्ध्वं तिर्यगधस्ताच्च यन्त्रणा त्रिविधा मता ॥**
**यथा च बध्यते बन्धस्तथा वक्ष्याम्यशेषतः ॥ ३५ ॥**
**घनां कवलिकां दत्त्वा मृदु चैवापि पट्टकम् ॥**
**विकेशिकामौषधं च नातिस्निग्धं समाचरेत् ॥ ३६ ॥**
**प्रक्लेदयत्यतिस्निग्धा तथा रूक्षा क्षिणोति च ॥**
**युक्तस्नेहा रोपयति दुर्न्यस्ता वर्त्म घर्षति ॥ ३७ ॥**
**विषमं च व्रणं कुर्यात् स्तम्भयेत् स्रावयेत्तथा ॥**
**यथाव्रणं विदित्वा तु योगं वैद्यः प्रयोजयेत् ॥ ३८ ॥**
**पित्तजे रक्तजे वापि सकृदेव परिक्षिपेत् ॥**
**असकृत् कफजे वापि वातजे च विचक्षणः ॥ ३९ ॥**
**तलेन प्रतिपीड्याथ स्रावयेदनुलोमतः ॥**
**सर्वांश्च बन्धान् गूढान्तान् सन्धींश्च विनिवेशयेत् ४०**

केचित् सुश्रुताध्यायिनो गद्योक्तस्यार्थस्य व्यक्त्यर्थं संग्रहश्लोकान् पठन्ति; "ऊर्ध्वं तिर्यगधस्ताच्च यन्त्रणा त्रिविधा मता। यथा च बध्यते बन्धस्तथा वक्ष्याम्यशेषतः" इत्यादि। विषमं च व्रणं कुर्यादिति वैषम्यमिह निम्नोन्नतत्वेन। स्तम्भयेत् स्रावयेत्तथेति स्तम्भनं स्रावणं चेह पूयस्यैवेति। सकृदेव परिक्षिपेत् इति एकवारमेव चेष्टयेदिति। सर्वांश्च बन्धानित्यादि सर्वान् बन्धान् सन्धींश्च सर्वान् गुप्तान्तान् विनिवेशयेत् विनियोजयेत् कुर्यादित्यर्थः ॥ ३५-४० ॥

**ओष्ठस्याप्येष सन्धाने यथोद्दिष्टो विधिः स्मृतः॥**
**बुद्ध्योत्प्रेक्ष्याभियुक्तेन तथा चास्थिषु जानता॥४१**
**उत्तिष्ठतो निषण्णस्य शयनं चापि गच्छतः ॥**
**गच्छतो विविधैर्यानैर्नास्य दुष्यति स व्रणः ॥४२॥**
**ये च स्युर्मांससंस्था वै त्वग्गताश्च तथा व्रणाः ॥**
**सन्ध्यस्थिकोष्ठप्राप्ताश्च सिरास्नायुगतास्तथा॥४३॥**
**तथावगाढगम्भीराः सर्वतो विषमस्थिताः ॥**
**नैते साधयितुं शक्या ऋते बन्धाद्भवन्ति हि॥४४॥**

ओष्ठस्येत्यादि।—एष यथोद्दिष्टो विधिरोष्ठस्यापि संधाने स्मृतः। बुद्ध्योत्प्रेक्ष्येत्यादि अभियुक्तेन जानता वैद्येन बुद्ध्या अभ्यूह्य अस्थिष्वपि सन्धानाय यथोद्दिष्टो विधिः कर्तव्य इति। तथेत्यादि अवगाढतया गम्भीर इत्यर्थः। गयदासाचार्येणायं पाठः अनार्ष एव कृतः, तन्मतानुसारिणा ब्रह्मदेवेन क्वचिद् व्याख्यातः, ताभ्यां गृहीतत्वात् अस्माभिर्लिखितो व्याख्यातश्च क्वचिदिति ॥ ४१-४४ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने अष्टादशोऽध्यायः समाप्तः।

---

# एकोनविंशोऽध्यायः

**अथातो व्रणितोपासनीयमध्यायं व्याख्यास्यामः१**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २॥**

व्रणितस्य संजातव्रणस्य, उपासनं सेवनं, तच्च गृहशय्यासनादिकं, तद्विद्यते यस्मिन् स तथा ॥ १ ॥ २ ॥

**व्रणितः प्रथममेवागारमन्विच्छेत्; तच्च आगारं प्रशस्तवास्त्वादिकं कार्यम् ॥ ३ ॥**

शय्यासनादिकं गृहस्थस्य कार्यमिति प्रागेव गृहं निर्देष्टुमाह,—व्रणितस्य प्रथममेवेति। व्रणिनः इत्यन्ये पठन्ति। तच्चागारं प्रशस्तवास्त्वादिकं कार्यम्॥ ३ ॥

**प्रशस्तवास्तुनि गृहे शुचावातपवर्जिते ॥**
**निवाते न च रोगाः स्युः शारीरागन्तुमानसाः॥४॥**

यतस्तस्मिन् तथा भूते स्थितस्य व्रणिनः शारीरादयो रोगा न भवेयुरिति दर्शयितुमाह,—प्रशस्तवास्तुनीत्यादि। प्रशस्तवास्तुनि गृहे इति वास्तुशब्देन प्रदेशः कथ्यते, तेन प्रशस्तदेशे गृहे इत्यर्थः, प्रशस्तत्वं देशस्य प्राङ्निम्नत्वं उदङ्निम्नत्वं कृष्णमृत्तिकत्वं सुवर्णमृत्तिकत्वं चेत्यादिकं; गृहसन्निवेशार्था भूमिस्तदधिष्ठातृपुरुषो वा वास्तुशब्देनोच्यते इति अन्ये; तस्य प्रशस्तत्वं हि मर्मादिरहितत्वं ॥ ४ ॥

**तस्मिन् शयनमसंबाधं स्वास्तीर्णं मनोज्ञं प्राक्शिरस्कं सशस्त्रं कुर्वीत ॥ ५ ॥**

शयनस्थस्य व्रणिनः सव्रणान्यङ्गानि सुखमासत इति तदेव निर्दिशन्नाह—तस्मिन् शयनमसंबाधमिति। तस्मिन् इति आगारे, असंबाधं असङ्कीर्णं, स्वास्तीर्णं शोभनैरास्तरणैस्तुलीगण्डोपधानैराच्छादनैश्चाच्छादितम्, मनोज्ञं रमणीयम्, सशस्त्रं शस्त्रसहितं हिंस्रनिवारणार्थम् ॥ ५ ॥

**सुखचेष्टाप्रचारः स्यात् स्वास्तीर्णे शयने व्रणी ॥**
**प्राच्यां दिशि स्थिता देवास्तत्पूजार्थं च तच्छिरः ६**

इत्थंभूतस्य शयनस्य गुणमाह,—सुखचेष्टाप्रचारः स्यादित्यादि। चेष्टाप्रचारः इति शयनपरिवर्तनादिगतिः ॥ ६ ॥

**तस्मिन् सुहृद्भिरनुकूलैः प्रियंवदैरुपास्यमानो यथेष्टमासीत ॥ ७ ॥**

तस्मिन् शयने यथा व्रणितेन स्थातव्यं तथोपदिशन्नाह,—तस्मिन् सुहृद्भिरित्यादि। सुहृद्भिः इति मित्रैः। अनुकूलैः इति आत्मनोऽनुमतवर्तिभिरित्यर्थः। उपास्यमानः सेव्यमानः ॥ ७ ॥

**सुहृदो विक्षिपन्त्याशु कथाभिर्व्रणवेदनाः ॥**
**आश्वासयन्तो बहुशस्त्वनुकूलाः प्रियंवदाः ॥ ८ ॥**

सुहृदुपासनफलमाह,—सुहृदो विक्षिपन्तीत्यादि। विक्षिपन्ति विशेषेण प्रेरयन्ति स्फुटयन्तीत्यर्थः; कथाः पूर्वपुरुषवृत्तान्तप्रबन्धरचनाः; आश्वासयन्तः आश्वासनं कुर्वन्तः ॥ ८ ॥

**न च दिवानिद्रावशगः स्यात् ॥ ९ ॥**

शयने दोषवन्तमाचारं परिहरन्नाह,—न च दिवानिद्रावशगः स्यात् ॥ ९ ॥

**दिवास्वप्नाद्व्रणे कण्डूर्गात्राणां गौरवं तथा ॥**
**श्वयथुर्वेदना रागः स्रावश्चैव भृशं भवेत् ॥ १० ॥**

कथंचिद्दिवास्वप्ने कृते दोषमाह—व्रणे कण्डूरित्यादि। अत्र कण्डूगौरवे कफकृते, श्वयथुवेदने वातकृते, रागः पित्तजनितः, स्रावो वा रक्तकृतः, एतेन दिवास्वप्नस्य अखिलदोषकर्तृत्वमुक्तम्॥१०॥

**उत्थानसंवेशनपरिवर्तनचङ्क्रमणोच्चैर्भाषणाद्यासु च आत्मचेष्टासु अप्रमत्तो व्रणं संरक्षेत् ॥ ११ ॥**

सर्वास्ववस्थासु व्रणसंरक्षा करणीयेति दर्शयन्नाह,—उत्थानसंवेशनपरिवर्तनेत्यादि । संवेशनं विस्रवणं, परिवर्तनं वामदक्षिणकट्योर्विलोटनं, चङ्क्रमणं गतागतं, आत्मचेष्टासु उत्थानादिकासु एव, अप्रमत्तः व्रणीति शेषः ॥ ११ ॥

**स्थानासनं चङ्क्रमणं दिवास्वप्नं तथैव च ॥**
**व्रणितो न निषेवेत शक्तिमानपि मानवः ॥ १२ ॥**

चतुर्विधामपि व्रणिनः कायचेष्टां नियमन्नाह,—स्थानासनेत्यादि। स्थानं ऊर्ध्वीभूतस्य स्थितिः, आसनं उपविष्टस्य स्थितिः । "स्थानासनं चङ्क्रमणं यानयानातिभाषणम् । व्रणवान्न निषेवेत शक्तिमानपि मानवः—" इति केचित् पठन्ति । यानयानं रथादिगमनम् ॥ १२ ॥

**उत्थानाद्यासनं स्थानं शय्या चातिनिषेविता ॥**
**प्राप्नुयान्मारुतादङ्गे रुजस्तस्माद्विवर्जयेत् ॥ १३ ॥**

उत्थानादीनामतिनिषेवणाद्दोषमाह,—उत्थानाद्यासनं स्थानमित्यादि ॥ १३ ॥

**गम्यानां च तथा स्त्रीणां संदर्शनसंभाषणसंस्पर्शनानि दूरतः परिहरेत् ॥ १४ ॥**

सामान्याकारं नियम्य विशिष्टं स्पर्शाश्रयं विहारमतिदोषकरं पृथगेव निर्दिशन्नाह—गम्यानां च तथा स्त्रीणामिति ।—गम्याः गमनार्हाः, ग्राम्यधर्मयोग्या इत्यर्थः, ताश्च भार्यावेश्याचेटीप्रभृतयः । संदर्शनादिषु संशब्दः आभिमुख्यार्थः ॥ १४॥

**स्त्रीदर्शनादिभिः शुक्रं कदाचिच्चलितं स्रवेत् ॥**
**ग्राम्यधर्मकृतान् दोषान् सोऽसंसर्गेऽप्यवाप्नुयात्॥ १५ ॥**

कस्माद्गम्यस्त्रीणां संदर्शनादि परिहर्तव्यमित्याह,—स्त्रीदर्शनादिभिरित्यादि ॥ १५ ॥

**नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाकाम्ललवणकटुकगुडपिष्टविकृतिवल्लूरशुष्कशाकाजाविकानूपौदकमांसवसाशीतोदककृशरापायसदधिदुग्धतक्रप्रभृतीन् परिहरेत् ॥ १६ ॥**

अतिदोषकरमाहारं नियमयन्नाह,—नवधान्यमाषेत्यादि । कलायोऽत्र त्रिपुटः, एतेन हरेणुसतीनकयोरप्रतिषेधः; निष्पावशब्देनात्र राजशिम्बी; हरितकमिति "कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणाः । चुक्राकच्छुक्रिका चेति वर्ये हरितकं विदुः"–इति । अत्राम्लादयस्त्रयो रसाः। गुडपिष्टविकृतिरिति विकृतिशब्दो गुडपिष्टाभ्यां सह संबध्यते । वल्लूरं शुष्कमांसम् । अजाविकानूपौदकमांसवसेति अजाविकौ प्रसिद्धौ; आनूपशब्दो द्विविधः—व्युत्पादितोऽव्युत्पादितश्च, तत्र व्युत्पादितः पञ्चसु कूलचरादिषु वर्तते, अत्र तु व्युत्पादित एव ग्राह्यः, तदेवाह,—अनुगता आपो यस्मिन् सोऽनूपो देशः, तच्चारिणस्तु आनूपाः; ते च कूलचराः प्लवाश्चेति । औदकशब्देन पुनरत्र कोशस्थाः पादिनो मत्स्याश्चोच्यन्ते । वसा शुद्धमांसस्नेहः, कृशरा तिलतण्डुलमाषकृता यवागूः, पायसं क्षीरसिद्धास्तण्डुलाः । अन्ये तु 'अजाजाङ्गलानूपौदकमांसं'इति पठन्ति । यद्यपि जाङ्गलवर्गोऽष्टविधस्तथाप्यत्र जङ्घालविष्किरौ जाङ्गलशब्देनोच्येते; कुतः? तयोः प्रधानतमत्वात्, यथा लवणशब्दस्याविशेषोक्तावपि प्रधानत्वात् सैन्धवं गृह्यते तद्वत्, तेनात्र जङ्घालविष्किरौ विहाय अन्येषां जाङ्गलानां प्रतिषेध इति । आनूपौदकयोरपि अजाङ्गलत्वादेव निषेधे सिद्धे पुनरुपादानं तन्मांसानामत्यर्थं दोषवत्त्वप्रतिपादनार्थं, अजाङ्गलमांसविकार इति निषेधमुखेन विधिप्रणयनं जङ्घालविष्किरयोरप्यवस्थायामुपयोगख्यापनार्थमिति । प्रभृतिग्रहणाद्वरकोद्दालकादीनां परिहारः ॥ १६ ॥

**तक्रान्तो नवधान्यादिर्योऽयं वर्ग उदाहृतः ॥**
**दोषसंजननो ह्येष विज्ञेयः पूयवर्धनः ॥ १७ ॥**

एषां भिन्नजातीयानामपि दोषकरत्वं प्रतिपादयन्नाह—तक्रान्तो नवेत्यादि । तक्रप्रभृतीनि परिहरेदित्यत्र प्रभृतिग्रहणाद्वरकोद्दालकादीनां ग्रहणं, अतस्तेषामपि दोषसंजननत्वम् । ननु नवधान्यादौ वर्गे केचिद्वातहराः, केचिच्च पित्तहराः, केचिच्च कफहरास्तत्कथमुच्यते दोषसंजनन इति? नैष दोषः, यतोऽत्र दोषशब्देन व्रणदुष्टिरेवोच्यते; यद्यपि व्रणदुष्टिरपि दुष्टैरेव दोषैः क्रियते तथापि न दोषः, कस्मात्? निदानद्रव्याणां त्रिविधत्वात्; तद्यथा—किंचित् द्रव्यं दोषकारि किंचित् व्याधिकारि किंचिदुभयकारि इति; किं बहुनोक्तेन, अत्र निबन्धनकारैर्बहुधा जल्पितं, तच्चास्माभिर्विस्तरभयान्न दर्शितमिति ॥ १७ ॥

**मद्यपश्च मैरेयारिष्टासवसीधुसुराविकारान् परिहरेत् ॥ १८ ॥**

तत्र विशिष्टविषयेऽतिदोषकरत्वाद्विशिष्टं पानद्रव्यं चाग्रीकृत्य निषेधार्थमाह,—मद्यपश्च मैरेयेत्यादि । शस्त्रकर्मादावेकवारं मद्यपस्य मद्यपानं अभिहितं अत्र तु व्रणे सति निषेध एव । मैरेयं सुरासवयोरेकस्मिन् भाजने संधानम् । अरिष्टमभयारिष्टादि । आसवाः पलासक्षारोदकासवादयो महाकुष्ठाद्यभिहिताः।

सीधुः सस्यकः, सोऽपि नानाकारः पक्वरसिकसितरसिकाकादिभेदेन। सुरा लोहितवर्णा पिष्टककल्केन किंचित् कलुषा। अत्र केचिदाचार्या एवं ब्रुवते—यानि मद्यानि अम्लादिगुणयुक्तानि भवन्ति तानि सर्वाण्येव व्रणिभिर्न पातव्यानि, यानि पुनर्द्राक्षारसोद्भवानि मद्यानि अम्लादिगुणविपरीतगुणानि रक्तपित्तादिष्वभिमतानि तानि च व्रणितस्यावस्थायां कदाचिद्दातव्यानीति ग्रन्थकर्तुरभिप्राय इति ॥ १८ ॥

**मद्यमम्लं तथा रूक्षं तीक्ष्णमुष्णं च वीर्यतः ॥**
**आशुकारि च तत् पीतं क्षिप्रं व्यापादयेद् व्रणम् १९**

कुतः पुनर्मैरेयादयः परिहरणीया इत्याह,—मद्यमम्लमित्यादि ॥ १९ ॥

**वातातपरजोधूमावश्यायातिसेवनातिभोजनानिष्टभोजनाश्रवणदर्शनेर्ष्यामर्षभयक्रोधशोकध्यानरात्रिजागरणविषमाशनानशनशयनोपवासवाग्व्यायामस्थानचङ्क्रमणशीतवातविरुद्धाशनाजीर्णमक्षिकाद्या बाधाः परिहरेत् ॥ २० ॥**

आभ्यन्तराश्रयाहारविहारौ नियम्य बाह्यानपि परिहरन्नाह,—वातातपरजोधूमेत्यादि। ईर्ष्या परसम्पत्त्यसहिष्णुता, अमर्षः क्रोधः, ध्यानं अनवरतकार्याकार्यचिन्तनम्; विषमाशनशयनमिति विषमशब्दः शयनासनाभ्यां सह प्रत्येकं संबध्यते; बहुस्तोकाकालभोजनं विषमाशनम्; रात्रिजागरणं दिवास्वप्नश्च विषमशयनं; तत्र विषमशयनं निषिद्धमपि पुनरत्यन्तापथ्यकारित्वेन नियमार्थम्, शीतो वातः; विरुद्धाशनं सममधुघृतादिकम् ॥ २० ॥

**व्रणिनः संप्रतप्तस्य कारणैरेवमादिभिः ॥**
**क्षीणशोणितमांसस्य भुक्तं सम्यङ्न जीर्यति ॥२१॥**
**अजीर्णात् पवनादीनां विभ्रमो बलवान् भवेत् ॥**
**ततः शोफरुजास्रावदाहपाकानवाप्नुयात् ॥ २२ ॥**

कुतः पुनरेते परिहार्या इत्याह—व्रणिनः संप्रतप्तस्येति। संप्रतप्तस्य इति सम्यक्प्रकारेण संतापितस्य। पवनादीनामिति वातपित्तकफानामित्यर्थः। विभ्रमः व्यापद्विशेषो वातादीनां, स्थानान्तरगमनं वा। शोफरुजे वातस्य, आस्रावः कफस्य, दाहपाकौ पित्तस्येति ॥ २१ ॥ २२ ॥

**सदा नीचनखरोम्णा शुचिना शुक्लवाससा शान्तिमङ्गलदेवताब्राह्मणगुरुपरेण भवितव्यमिति। तत् कस्य हेतोः? हिंसाविहाराणि हि महावीर्याणि रक्षांसि पशुपतिकुबेरकुमारानुचराणि मांसशोणितप्रियत्वात् क्षतजनिमित्तं व्रणिनमुपसर्पन्ति सत्कारार्थं जिघांसूनि वा कदाचित् ॥ २३ ॥**

आधिदैविकं विशिष्टमागन्तुबाधं परिजिहीर्षुराह,—सदा नीचनखेत्यादि। शान्त्यादिपरेण शान्त्यादिरतेनेत्यर्थः। शिष्यहितार्थं गुरुः स्वयमेव प्रश्नं कुर्वन्नाह,—तत् कस्य हेतोरित्यादि। तत् नीचनखरोमादिकरणम्। अन्ये 'अपि तत् कस्य हेतोः' इति पठन्ति। अपिशब्दोऽत्र सानुनयप्रश्ने इति च व्याख्यानयन्ति। शिष्यहितत्वेन स्वयमेव हेतुसाकाङ्क्षं प्रश्नं कृत्वा सहेतुमुत्तरमाह,—हिंसाविहाराणीत्यादि। हिंसाविहाराणि वधक्रीडनानि; अन्ये तु हिंसार्थं विहारश्चेष्टा येषां तानि हिंसाविहाराणि। हि यस्मादर्थे, यस्मात् क्षतजनिमित्तं व्रणिनमुपसर्पन्ति तस्मान्नीचनखादिना भवितव्यमिति। हिस्थाने अन्ये तुशब्दं यस्मादर्थे पठन्ति। रक्षांसि पशुपतिकुबेरकुमारानुचराणि महेश्वरधनदकार्तिकेयानुगानि तदादेशकारीणीत्यर्थः। क्षतजनिमित्तं शोणितार्थं, सत्कारार्थं जिघांसूनि वा कदाचित् सत्कारार्थं पूजार्थं सायुष्यं तं व्रणिनमुपसर्पन्ति; गतायुषं तु जिघांसूनीति; अन्ये त्वन्यथा व्याख्यानयन्ति, कदाचिद्वा जिघांसूनि हन्तुमिच्छूनि उपसर्पन्ति सत्कारार्थं ॥ २३ ॥

भवति चात्र।

**तेषां सत्कारकामानां प्रयतेतान्तरात्मना ॥**
**धूपबल्युपहारांश्च भक्ष्यांश्चैवोपहारयेत् ॥ २४ ॥**

तेषां सत्कारदानायाह—तेषां सत्कारकामानामित्यादि। तेषामनुचराणां पूजाभिलाषिणां, प्रयतेतान्तरात्मना विशिष्टो वैद्यो धूपादीन् उपहारयेत् दापयेदित्यर्थः। बलिः पशुवर्जिता पूजा, उपहारः सपशुर्बलिः ॥ २४ ॥

**ते तु संतर्पिता आत्मवन्तं न हिंस्युः। तस्मात् सततमतन्द्रितो जनपरिवृतो नित्यं दीपोदकशस्त्रस्रग्दामपुष्पलाजाद्यलङ्कृते वेश्मनि संपन्मङ्गलमनोऽनुकूलाः कथाः शृण्वन्नासीत ॥ २५ ॥**

**संपदाद्यनुकूलाभिः कथाभिः प्रीतमानसः ॥**
**आशावान् व्याधिमोक्षाय क्षिप्रं सुखमवाप्नुयात् २६॥**

तेषां तर्पणफलमाह,—ते तु संतर्पिता इति। आत्मवन्तं रक्षांसि हिंसितुं न शक्नुवन्ति। आत्मवांस्तु नीचनखरोमादिभिर्भवति, तस्मात् सततं अतन्द्रितः अनलसः। स्रक् मूर्धार्हा पुष्पमाला, दाम ग्रैवेयादिपुष्पाभरणं, पुष्पाणि अग्रथितानि, आदिशब्दाच्चन्दनादर्शवीणादयः। संपन्मङ्गलमनोनुकूला इति अनुकूलशब्दः संपदादिभिः प्रत्येकं संबध्यते। संपदाद्यनुकूलत्वात् श्रवणफलमाह,—संपदाद्यनुकूलाभिरिति ॥ २५ ॥ २६ ॥

**ऋग्यजुःसामाथर्ववेदाभिहितैरपरैश्चाशीर्विधानैरुपाध्याया भिषजश्च सन्ध्ययो रक्षां कुर्युः ॥ २७ ॥**

अपरामपि कर्तव्यतामाह,—ऋग्यजुरित्यादि। आशीर्विधानैः आशीःकरणैः आशीर्वादैरित्यर्थः। उपाध्यायाः पुरोहिताः ॥ २७ ॥

**सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च ॥**
**द्विरह्नः कारयेद्धूपं दशरात्रमतन्द्रितः ॥ २८ ॥**

मक्षिकादीनां रक्षादीनां च रक्षार्थं धूपमाह,—सर्षपारिष्टेत्यादि। अरिष्टपत्रं निम्बपत्रं, लवणेन सैन्धवेन, द्विरह्नः इति

**करोति रोगान् विविधान् यथोक्तान्**
**छिन्नासु भिन्नास्वथवा सिरासु ॥ ३६ ॥**
**कौब्ज्यं शरीरावयवावसादः**
**क्रियास्वशक्तिस्तुमुला रुजश्च ॥**
**चिराद् व्रणो रोहति यस्य चापि**
**तं स्नायुविद्धं मनुजं व्यवस्येत् ॥ ३७ ॥**
**शोफातिवृद्धिस्तुमुला रुजश्च**
**बलक्षयः पर्वसु भेदशोफौ ॥**
**क्षतेषु सन्धिष्वचलाचलेषु**
**स्यात् सन्धिकर्मोपरतिश्च लिङ्गम् ॥ ३८ ॥**
**घोरा रुजो यस्य निशादिनेषु**
**सर्वास्ववस्थासु न शान्तिरस्ति ॥**
**तृष्णाङ्गसादौ श्वयथुश्च रूक्षः**[1]
**तमस्थिविद्धं मनुजं व्यवस्येत् ॥ ३९ ॥**

अमर्मविद्धशिरादिलिङ्गं दर्शयन्नाह,—सुरेन्द्रेति । सुरेन्द्रगोपप्रतिममिति इन्द्रगोपकीटसन्निभमित्यर्थः । यथोक्तानिति शोणितवर्णनीयोक्तशिरोरोगाधिमन्थादीन् । कौब्ज्यं शरीरेत्यादि ।— कौब्ज्यं इति अन्तर्बहिरायामजं द्विधा । अवयवावसादः इति अवयवस्य स्वकर्मण्यसामर्थ्यम् । क्रियास्वशक्तिरिति सामान्येन सर्वशरीरस्य, क्रियाश्चात्रोत्क्षेपणावक्षेपणप्रसारणाकुञ्चनलक्षणाः । तुमुलाः गहनाः । अन्ये तु वातपित्तश्लेष्मजनिता एकत्र व्याकुलीभूतवेदना तुमुला उच्यन्ते इति वदन्ति । व्यवस्येत् जानीयादित्यर्थः । शोफातिवृद्धिरिति शोफः प्रसिद्धः । पर्वसु इति सन्धिषु । भेदः स्फुटनमिव । चलेति शाखाहनुकरग्रीवासु चलाः सन्धयः । घोरा रुजो यस्येति ॥ ३६—३९ ॥

**यथास्वमेतानि विभावयेत्तु-**
**लिङ्गानि मर्मस्वभिताडितेषु ॥**

शिरादीनां मर्मरहितानां विद्धलक्षणमभिधाय शिरादिमर्मविद्धलक्षणमतिदेशेन दर्शयन्नाह,—यथास्वमेतानीति । चकारोऽयं भिन्नक्रमे एतानि चेत्यत्र द्रष्टव्यः, तेन न केवलं भ्रमप्रलापादीनि पूर्वोक्तानि अमर्मविद्धशिरादिलिङ्गान्यपि यथास्वं बोद्धव्यानीत्यर्थः ॥—

**स्पर्शं न जानाति विपाण्डुवर्णो**
**यो मांसमर्मण्यभिताडितः स्यात् ॥ ४० ॥**

अनुक्तस्य मांसस्य मर्मविद्धलक्षणं दर्शयन्नाह,—स्पर्शं न जानातीति । शिरादिवत् मांसमपि पूर्वं कुतो न निर्दिष्टमिति चेत् ? न, केवलं मांसविद्धस्याव्यापकत्वात् । केचिदाचार्या भ्रमप्रलापादीनि लिङ्गानि सद्यःप्राणहरादीनां मर्मणां मन्यन्ते, अतएव तेषां मते दशार्धसंख्येष्वित्यत्र सद्यःप्राणहरकालान्तरप्राणहरविशल्यप्राणहरवैकल्यकररुजाकराख्येषु पञ्चसु मर्मस्विति व्याख्यानं, तथा तेषां मते यानि शिरादीनां सुरेन्द्रगोपप्रतिममित्यादिलक्षणान्युक्तानि तान्यपि शिरादिमर्मविद्धेषु ज्ञातव्यानि, न पुनर्मर्मरहितशिरादिविद्धेषु, अतएव तेषां मते यथास्वमेतानि विभावयेच्चेत्यत्र चकारार्थं कथयन्ति, किंतु सुरेन्द्रगोपप्रतिममित्याद्युक्तलक्षणेष्वन्तर्भावयन्ति यथास्वमित्यादिपाठम् ॥ ४० ॥

**आत्मानमेवाथ जघन्यकारी**
**शस्त्रेण यो हन्ति हि कर्म कुर्वन् ॥**
**तमात्मवानात्महनं कुवैद्यं**
**विवर्जयेदायुरभीप्समानः ॥ ४१ ॥**

अतिरिक्तशस्त्रव्यापदमभिधाय वैद्यस्यैवात्मगात्रच्छेदनव्यापदं दर्शयन्नाह,—आत्मानमेव इति ।—स्वाङ्गमेवेत्यर्थः; शस्त्रग्रहणधारणावचारणानभिज्ञत्वाद्धिनस्तीत्यर्थः । जघन्यकारी अतिहीनकर्मकारी । तथाविधं कुवैद्यम् । आत्मवान् बुद्धिमान्, आतुर इति शेषः । आत्महनं आत्मच्छेदिनं, आत्मतुदमिति केचित् पठन्ति । आयुः जीवितम् ॥ ४१ ॥

**तिर्यक् प्रणिहिते शस्त्रे दोषाः पूर्वमुदाहृताः ॥**
**तस्मात् परिहरन् दोषान् कुर्याच्छस्त्रनिपातनम् ४२**

तिर्यक्शस्त्रप्रणिधाने कर्मव्यापदं दर्शयन्नाह,—तिर्यक्प्रणिहिते इत्यादि । पूर्वमुदाहृता अग्रोपहरणीयाध्याये शिरास्नायुच्छेदनमित्यादयः दोषाः । दोषपरिहारं दर्शयन्नाह,—तस्मादिति ॥४२॥

**मातरं पितरं पुत्रान् बान्धवानपि चातुरः ॥**
**अप्येतानभिशङ्केत वैद्ये विश्वासमेति च ॥ ४३ ॥**
**विसृजत्यात्मनात्मानं न चैनं परिशङ्कते ॥**

इदानीं वैद्यं प्रत्यातुरेण किं कर्तव्यमित्याह,—मातरमिति । अत्र श्लोके प्रथमोऽपिशब्दः समुच्चये, द्वितीयस्तु संभावनायाम् । विसृजति ददाति । आत्मना स्वयमेव । आत्मानं शरीरम् । एनं वैद्यम् ॥ ४३ ॥—

**तस्मात् पुत्रवदेवैनं पालयेदातुरं भिषक् ॥ ४४ ॥**

वैद्येन एवंविधे आतुरे विश्वस्ते यत् कर्तव्यं तदाह,—तस्मात् पुत्रवदिति । एनं आतुरं पुत्रवत् पालयेदित्यर्थः ॥ ४४ ॥

**धर्मार्थौ कीर्तिमित्यर्थं सतां ग्रहणमुत्तमम् ॥**
**प्राप्नुयात् स्वर्गवासं च हितमारभ्य कर्मणा ॥४५॥**

सम्यक्पालने महदेव फलं भवतीति दर्शयन्नाह,—धर्मार्थाविति । सतां ग्रहणमुत्तममिति शिष्टानां ग्रहणमुपादानमुत्तमं भवतीत्यर्थः ॥ ४५ ॥

**कर्मणा कश्चिदेकेन द्वाभ्यां कश्चित्त्रिभिस्तथा ॥**
**विकारः साध्यते कश्चिच्चतुर्भिरपि कर्मभिः ॥४६॥**

साध्योऽपि व्याधिरनेककर्मसाध्यो भवतीति दर्शयन्नाह,— कर्मणा इति छेद्यादिकेन स्नेहादिकेन वा; अपिशब्दात् पञ्चादिभिरपि । केचिद्धर्मार्थावित्यादि श्लोकं अध्यायान्ते पठन्ति ॥ ४६ ॥

इति श्रीडल्हणविरचितायां निबंधसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने पञ्चविंशतितमोऽध्यायः ।

---

[1] 'रुक् च' इति पाठान्तरम् ।

## षड्विंशतितमोऽध्यायः ।

**अथातःप्रनष्टशल्यविज्ञानीयमध्यायं व्याख्यास्यामः॥ यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

अथातः प्रनष्टशल्येत्यादि ॥ १ ॥ २ ॥

**'शल' 'श्वल' आशुगमने धातुः; तस्य शल्यमिति रूपम् ॥ ३ ॥**

तत्र शल्यस्य स्वकीयलक्षणबोधार्थं निरुक्तिं दर्शयन्नाह,—'शल' 'श्वल' आशुगमन इति शल श्वल आशुगतौ धातू अनयोराशुगमनमित्यर्थः, तयोराद्यस्य शलधातोः शल्यमिति रूपं निरुच्यत इत्यर्थः; 'शल' हिंसायां धातुस्तस्य शल्यमिति रूपमिति केचित् पठन्ति; अपरे 'शल' रुजायामिति पठन्ति ॥ ३ ॥

**तद् द्विविधं शारीरमागन्तुकं च ॥ ४ ॥**

तस्य चिकित्सोपयोगिभेदं दर्शयन्नाह,—तद् द्विविधमिति॥४॥

**सर्वशरीराबाधकरं शल्यं,तदिहोपदिश्यते इत्यतः शल्यशास्त्रम् ॥ ५ ॥**

कथं पुनः शल्यशास्त्रमेतदुच्यते इत्याह,—सर्वशरीरेति ।—सर्वशरीरे येन बाधा भवति तत् शल्यमिहोपदिश्यते कथ्यते, तत् शल्यशास्त्रमेतदित्यर्थः ।—

**तत्र शारीरं रोमनखादि धातवोऽन्नमला दोषाश्च दुष्टाः; आगन्तु अपि शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्ति ॥ ६ ॥**

शारीरागन्तुकयोर्भेदमाह,—तत्रेति । आदिशब्दात् कैश्चित् श्मश्रुपूयपक्ष्माणि गृह्यन्ते । धातवः रसादयः, मलाः मूत्रपुरीषकर्णमलस्वेदनेत्रविट्प्रभृतयः, दोषाः वातादयः । परमेते धात्वन्नदोषा दुष्टाः सन्तः शल्यभूताः अमुमेवार्थं केचिद् दुष्टाश्चेति चकारात् कथयन्ति । धातवोऽन्नमला इत्यादि असमस्तानां पृथगुपादानं यत् कृतं तदुपधातुग्रहार्थम् । आगन्तुशल्यं प्रतिपादयन्नाह,—आगन्त्वपि शारीरशल्यव्यतिरेकेणेति । भावाः इति पदार्थाः तृणकाष्ठपाषाणलोहलोष्ट्रप्रभृतयः ॥ ५ ॥

**अधिकारो हि लोहवेणुवृक्षतृणशृङ्गास्थिमयेषु, तत्रापि विशेषतो लोहेष्वेव, विशसनार्थोपपन्नत्वाल्लोहस्य, लोहानामपि दुर्वारत्वादणुमुखत्वाद् दूरप्रयोजनकरत्वाच्च शर एवाधिकृतः । स द्विविधः कर्णी, श्लक्ष्णश्च । तत्र प्रायेण विविधवृक्षपत्रपुष्पफलतुल्याकृतयो व्याख्याता व्यालमृगपक्षिवक्त्रसदृशाश्च ॥ ७ ॥**

तत्रापि प्रसिद्धशल्यभेदान् दर्शयितुमाह,—अधिकारो हीत्यादि । अधिकारः योग्यत्वं शल्यत्वेन लोहादिषु । लोहादिभिर्मयशब्दः प्रत्येकं संबध्यते । तेषां मध्ये लौहस्य प्राधान्यं दर्शयन्नाह,—तत्रापि इति तेषामपि मध्ये । विशेषतः अतिशयेन । लोहेष्वेवेति अधिकार इत्यनुवर्तते । कथं पुनर्लोहेष्वेवाधिकार इत्यत्र हेतुमाह, विशसनार्थोपपन्नत्वात् इति मारणार्थयुक्तत्वात् लोहस्येत्यर्थः । लोहेष्वपि कान्तादिभेदेनानेकप्रकारेषु शरस्यैव प्राधान्यं दर्शयन्नाह,—लोहानामिति । लोहादीनामपि कान्तादीनामपि मध्ये इत्यर्थः । शरः काण्डः, अधिकृतः इति योग्य इत्यर्थः । अन्ये तु 'दुर्वारत्वात्' इत्यत्र 'निर्वाहित्वात्' इति पठन्ति, व्याख्यानयन्ति—देशाद्देशान्तरप्रापणशीलत्वादित्यर्थः । अन्ये तु 'अनिर्यासित्वात्' इति पठन्ति, तत्रापि स एवार्थः । तस्य शरस्यापहरणोपयोगिभेदं दर्शयन्नाह,—कर्णीत्यादि ।—कर्णी इति कर्णयुक्तः, श्लक्ष्णः अकर्ण इत्यर्थः । कर्णवानित्यन्ये पठन्ति, तत्रापि स एवार्थः । तदाकृतीनामानन्त्येन दर्शयितुमशक्यत्वात् संक्षेपेण सदृशनानाविधवस्त्वाकृतिसारूप्येण दर्शयन्नाह;—प्रायेण इति; बाहुल्येनेत्यर्थः । विविधवृक्षपत्राकृतयः पिप्पलपत्रकरवीरपत्राद्याकाराः,पुष्पाकृतयः मालतीकुमुदोत्पलपत्राद्याकाराः, वृक्षफलाकृतयः एलाद्याकाराः । स्थावैरराकृतिं प्रतिपाद्य जङ्गमैर्दर्शयन्नाह,—व्यालवक्त्रसदृशाः; सिंहव्याघ्रादिमुखसदृशाः सर्पफणाकारा वा; मृगवक्त्रसदृशाः शृगालमार्जारादिमुखसमानाः; पक्षिवक्त्रसदृशाः काककङ्कादिवक्त्रसदृशाः ॥ ७ ॥

**सर्वशल्यानां तु महतामणूनां वा पञ्चविधो गतिविशेष ऊर्ध्वमधोऽर्वाचीनस्तिर्यगृजुरिति ॥ ८ ॥**

शराणामाहरणोपयोगिगतिभेदान् दर्शयितुमाह,—सर्वशल्यानामिति । तत्र ऊर्ध्वगतिविशेषः अधस्तादागतस्य शरस्य, अधोगतिविशेषः उपरिष्टादागतस्य शरस्य, अर्वाचीनगतिविशेषः पश्चादागतस्य शरस्य, तिर्यग्गतिविशेषः पार्श्वाभ्यामागतस्य, ऋजुगतिविशेषः अग्रदेशादागतस्य शरस्य । अन्ये तु व्यत्ययेन पञ्चगतिपाठं पठन्ति, किंचिदन्यथा व्याख्यानयन्ति; तच्चास्माभिर्विस्तरभयान्न लिखितम् । अन्ये तु शरीरे सर्वशल्यानामित्यादिपाठं पठन्ति ॥ ८ ॥

**तानि वेगक्षयात् प्रतिघाताद्वा त्वगादिषु व्रणवस्तुषु अवतिष्ठन्ते, धमनीस्रोतोऽस्थिविवरपेशीप्रभृतिषु वा शरीरप्रदेशेषु ॥ ९ ॥**

यथा शल्यानि शरीरे स्थितिं कुर्वन्ति तथा हेतुं दर्शयन्नाह,—तानीति । तानि शल्यानि, प्रतिघातात् वेगनिवृत्तेरित्यर्थः । त्वगादिष्वित्यत्रादिशब्दान्मांससिरास्नायुसन्धिकोष्ठास्थिमर्माणि गृह्यन्ते अवतिष्ठन्ते इति शल्यानीति शेषः । शल्यावस्थाने त्वगादिभ्योऽधिकमपि स्थानं संभवतीति पक्षान्तरमाह,—धमनीत्यादि । धमन्यादिभिस्त्रिभिः सह विवरशब्दः प्रत्येकमभिसंबध्यते, विवरं छिद्रं, पेशी मांसखण्डः, वाशब्देन पक्षान्तरं सूचयति । शरीरप्रदेशेष्विति धमन्यादय एव शरीरप्रदेशाः तेष्वित्यर्थः । अवतिष्ठन्ते शल्यानीति संबध्यते ॥ ९ ॥

**तत्र शल्यलक्षणमुच्यमानमुपधारय । तत्तु द्विविधं सामान्यं वैशेषिकं च । श्यावं पिडकाचितं शोफवेदनावन्तं मुहुर्मुहुः शोणितास्राविणं बुद्बुदव-**

**दुन्नतं मृदुमांसं च व्रणं जानीयात् सशल्योऽयमिति सामान्यमेतल्लक्षणमुक्तम् ।**

त्वगादिशल्यानां लक्षणानि निर्दिशन्नाह,—तत्रेति । तत्र तेषु त्वगादिष्वित्यर्थः । लक्षणं चिह्नम् । तद् द्विविधमिति, उपधारय शृणु । तत्र प्रथमं सामान्यलक्षणमाह,—पिडकाचितमिति पिडकाव्याप्तम् ॥—

**वैशेषिकं तु त्वग्गते विवर्णः शोफो भवति आयतः कठिनश्च; मांसगते शोफाभिवृद्धिः शल्यमार्गानुपसंरोहः पीडनासहिष्णुता चोषपाकौ च; पेश्यन्तरस्थेऽपि एतदेव चोषशोफवर्जं; सिरागते सिराध्मानं सिराशूलं सिराशोफश्च; स्नायुगते स्नायुजालोत्क्षेपणं संरम्भश्चोग्रा रुक् च; स्रोतोगते स्रोतसां स्वकर्मगुणहानिः; धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छति अङ्गमर्दः पिपासा हृल्लासश्च; अस्थिगते विविधवेदनाप्रादुर्भावः शोफश्च; अस्थिविवरगतेऽस्थिपूर्णता अस्थितोदः संहर्षो बलवांश्च; सन्धिगतेऽस्थिवच्चेष्टोपरमश्च; कोष्ठगते आटोपानाहौ मूत्रपुरीषाहारदर्शनं च व्रणमुखात्; मर्मगते मर्मविद्धवच्चेष्टते । सूक्ष्मगतिषु शल्येषु एतान्येव लक्षणानि अस्पष्टानि भवन्ति ॥ १० ॥**

सामान्यमभिधाय वैशेषिकं लक्षणमाह,—वैशेषिकं त्विति । चोषः चुष्यत इव वेदनाविशेषः, पिपासेत्यन्ये । पेशीति पाकाभावात् । शिरागत इति । स्नायुजालोत्क्षेपणं स्नायुसमूहस्योर्ध्वं नयनं, संरम्भः श्वयथुः । स्रोतसां स्वकर्मगुणहानिः इति रसवहानां स्रोतसां रसादिवहनकर्मगुणाः पुनरेषां वातादिवहानां अरुणपीतसितरक्तादयो वर्णाः तेषां हानिरित्यर्थः । धमनीस्थ इति अङ्गमर्दः स्फुटनिका, हृल्लासः असकृत्ष्ठीवनम् । संहर्ष इति मारुतोपद्रवो रोमाञ्चप्रायो वेदनाविशेषः संहर्षः, संघटनमित्यन्ये । चेष्टोपरमः इति आकुञ्चनप्रसारणादिहानिः । कोष्ठगते इति आटोपः सतोदो वातसंक्षोभः, आनाहः वातमूत्रपुरीषादिनिरोधः । मर्मविद्धवत् चेष्टते इति शिरादिमर्मविद्धे यानि लिङ्गानि भवन्ति तानीत्यर्थः; चेष्टते चेष्टां कुरुते । स्थूलशल्यानां लक्षणमभिधाय सूक्ष्मशल्यलक्षणमाह,—सूक्ष्मगतिषु शल्येष्विति । अस्पष्टानि इति अस्फुटानीत्यर्थः ॥ १० ॥

**महान्ति अल्पानि वा शुद्धदेहानामनुलोमसन्निविष्टानि रोहन्ति विशेषतः कण्ठस्रोतःसिरात्वक्पेश्यस्थिविवरेषु । दोषप्रकोपव्यायामाभिघाताजीर्णेभ्यः प्रचलितानि पुनर्बाधन्ते ॥ ११ ॥**

इदानीं शल्यप्रनष्टस्य हेतुं दर्शयन्नाह,—महान्ति स्वल्पानि वा शुद्धदेहानामिति वाताद्यदूषितदेहानां पाकाभावाद्रोहन्तीत्यर्थः । अनुलोमसन्निविष्टानि इति रोममानुकूल्येन प्रविष्टानीत्यर्थः । विशेषतः इति अतिशयेन, कण्ठादिषु प्रविष्टानि शल्यानि रोहन्तीति शेषः । केचिन्महान्तीत्यत्र स्थाने मृदून्यल्पानीति पाठं पठन्ति । यदि रूढान्यप्यदोषकराणि तत् किं तेषां विज्ञानेनाहरणेन चेत्याह—दोषप्रकोपेति ॥ ११ ॥

**तत्र, त्वक्प्रनष्टे स्निग्धस्विन्नायां मृन्माषयवगोधूमगोमयमृदितायां त्वचि यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्, स्त्यानघृतमृच्चन्दनकल्कैर्वा प्रदिग्धायां शल्योष्मणा आशु विसरति घृतमुपशुष्यति वा लेपो यत्र तत्र शल्यं विजानीयात्; मांसप्रनष्टे स्नेहस्वेदादिभिः क्रियाविशेषैरविरुद्धैरातुरमुपपादयेत् कर्शितस्य तु शिथिलीभूतमनवबद्धं क्षुभ्यमाणं यत्र संरम्भं वेदनां वा जनयति तत्र शल्यं विजानीयात्; कोष्ठास्थिसन्धिपेशीविवरेषु अवस्थितमेवमेव परीक्षेत; सिराधमनीस्रोतःस्नायुप्रनष्टे खण्डचक्रसंयुक्ते याने व्याधितमारोप्य सुविषमेऽध्वनि यायाद् यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात्; अस्थिप्रनष्टे स्नेहस्वेदोपपन्नान्यस्थीनि बन्धनपीडनाभ्यां भृशमुपचरेद्यत्र संरम्भो वेदना भवति तत्र शल्यं जानीयात्; सन्धिप्रनष्टे स्नेहस्वेदोपपन्नान् सन्धीन् प्रसरणाकुञ्चनबन्धनपीडनैः भृशमुपाचरेत्, यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्; मर्मप्रनष्टे तु अनन्यभावात् मर्मणामुक्तं परीक्षणं भवति ॥ १२ ॥**

त्वगादिप्रविष्टानां विज्ञानोपायं दर्शयन्नाह,—तत्र त्वगिति । संरम्भः रागशोफाभिसंभवः । आशु विसरति इति शीघ्रं विलीयते । मांसेति क्रियाविशेषैः सह आतुरमुपपादयेत् योजयेदित्यर्थः । कर्शितस्य आतुरस्येत्यर्थः । शिथिलीभूतमनवबद्धं क्षुभ्यमाणं शल्यमिति शेषः, क्षुभ्यमाणं इति चलदित्यर्थः । एवमेव इति पूर्वोक्तन्यायेनेत्यर्थः । खण्डचक्रसंयुक्ते याने इति खण्डितचक्रसमन्विते रथे इत्यर्थः । आरोप्य इति आरुह्येत्यर्थः, विषमेऽध्वनि निम्नोन्नतमार्गे इत्यर्थः । स्वेदोपपन्नानि स्वेदयुक्तानीत्यर्थः । मर्मप्रनष्टे इत्यादि मर्माणि त्वगादिषु अष्टसु व्रणवास्तुष्वेव भवन्ति, नान्यत्र भवन्ति इति, अनन्यभावान्मर्मणां प्रनष्टशल्ये त्वगाद्युक्तमेव परीक्षणं कर्तव्यमित्यर्थः ॥ १२ ॥

**सामान्यलक्षमपि च हस्तिस्कन्धाश्वपृष्ठपर्वतद्रुमारोहणधनुर्व्यायामद्रुतयाननियुद्धाध्वगमनलङ्घनप्रतरणप्लवनव्यायामैः जृम्भोद्गारकासक्षवथुष्ठीवनहसनप्राणायामैर्वातमूत्रपुरीषशुक्रोत्सर्गैर्वा यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात् ॥ १३ ॥**

सामान्यविज्ञानोपायमपि दर्शयन्नाह,—सामान्यलक्षणमिति । अष्टस्वपि त्वगादिव्रणवस्तुषु अवस्थितशल्यस्य लक्षणं सामान्यलक्षणम् । हस्तिस्कन्धादिभिः सहारोहणशब्दः प्रत्येकं सं[illegible]बध्यते । धनुर्व्यायामः इति धनुराकर्षणजनितश्रमः, द्रुतयानमिति [illegible] शीघ्र-

गमनं, नियुद्धं बाहुयुद्धं, लङ्घनमिति कुड्यादीनामुत्प्लुत्यातिक्रमणं, प्रतरणं नद्यादौ, प्लवनं उत्पतनं, व्यायामः शरीरायासजनकं कर्म । जृम्भा इति पीतैकमारुतोच्छ्वासस्य व्यात्तमुखेन परिमोक्षणं, उद्गारेति उद्गतस्य वायोरुद्गिरणं उद्गारः, कासेति दोषदुष्टोदानानुगतप्राणवायोर्निर्गमनं भिन्नकांस्यध्वनिकं कासः, क्षवथुरिति ऊर्ध्वस्रोतोऽवस्थितप्राणोदानयोराकुलितयोर्नासाविवरतो निर्गमनं क्षवथुः, ष्ठीवनं कफादेः थुत्करणं, हसनं हासो विकृताङ्गवचःकृत्यजातस्य रसस्य स्थायीभावोऽङ्गकपोलनासौष्ठस्पन्दनलक्षणः, प्राणायाममिति प्राणवायोरायसनमवरोधनं प्राणायामः, उत्सर्गशब्दो वातादिभिः सह प्रत्येकं संबध्यते, उत्सर्गः प्रमोचनम् । केचिद् 'यत्र संरम्भो वेदना वा' इत्यत्र स्थाने 'उत्सर्गे वा यत्र तोदादयस्तत्र शल्यं विजानीयात्' इति पाठं पठन्ति, व्याख्यानयन्ति च—आदिशब्दात् पाकरागशोफादयः । श्यावं पिडकाचितमित्यादीनि पूर्वोक्तसामान्यलक्षणानि सन्निकृष्टानि; एतानि पुनर्हस्तिस्कन्धारोहणादीनि विप्रकृष्टानि; यत एतैरेव श्यावं पिडकाचितमित्यादि लक्षयितव्यमित्यनयोः सामान्यलक्षणपाठयोर्न पौनरुक्त्यम् ॥ १३ ॥

भवन्ति चात्र ।

**यस्मिंस्तोदादयो देशे सुप्तता गुरुतापि च ॥**
**घट्टते बहुशो यत्र स्रूयते तुद्यतेऽपि च ॥ १४ ॥**
**आतुरश्चापि यं देशमभीक्ष्णं परिरक्षति ॥**
**संवाह्यमानो बहुशस्तत्र शल्यं विनिर्दिशेत् ॥१५॥**

प्रनष्टशल्यविज्ञानोपायमुद्दिश्यापराण्यपि पुनर्लिङ्गानि निश्चयार्थमाह,—यस्मिन्निति । यस्मिन् देशे शरीरावयवे । तोदादयः भवन्तीत्यध्याहारः । आदिग्रहणात् रागपाकादयः । सुप्तता स्पर्शानानभिज्ञत्वम् । घट्टते बहुशो यत्र इति यस्मिन् प्रदेशे बहुशो वारंवारं पुरुषः स्वयमेव घट्टते चालयति । तुद्यतेऽपि च इत्यत्र पीडाया अतिशयख्यापनं न पुनरुक्तिः । आतुरश्चापि यं देशमित्यादि । आतुरो यं देशमभीक्ष्णं अनवरतं रक्षति, किंविशिष्टः संवाह्यमानः मृद्यमानः, कथं बहुशो वारंवारं; एतेन यदा यदा आतुरो मृद्यते तदा तदा तं देशं रक्षतीत्यर्थः ॥ १४ ॥ १५ ॥

**अल्पबाधमशूनं च निरुजं निरुपद्रवम् ॥**
**प्रसन्नं मृदुपर्यन्तं निराघट्टमनुन्नतम् ॥ १६ ॥**
**एषण्या सर्वतो दृष्ट्वा यथामार्गं चिकित्सकः ॥**
**प्रसाराकुञ्चनान्नूनं निःशल्यमिति निर्दिशेत् ॥१७॥**

निःशल्यस्य लक्षणं दर्शयन्नाह,—अल्पबाधमिति । अल्पबाधमल्पदुःखम् । निरुजं निर्गतशूलादिवेदनं, मृदुपर्यन्तं मृद्वन्तं, निराघट्टं अनिश्चलम् । अल्पापि यदि बाधा न भवतीत्यर्थः । अल्पबाधमित्यत्र अल्पतापमित्यन्ये पठन्ति । केचिदनुन्नतमिति न पठन्ति, अशूनमित्यनेनैव गतार्थत्वात् । एषण्येत्यादि । एषण्या लोहादिशलाकया, सर्वतः सर्वत्र, यथामार्गं मार्गानतिक्रमेण । चिकित्सकः वैद्यः निःशल्यमिति निर्दिशेत् कथयेत्, नूनं निश्चितं, कस्मात्? प्रसारणादाकुञ्चनाच्च ॥ १६ ॥ १७ ॥



**अस्थ्यात्मकं भज्यते तु शल्यमन्तश्च शीर्यते ॥**
**प्रायो निर्भुज्यते शार्ङ्गमायसं चेति निश्चयः ॥१८॥**

आहरणोपयोगिनीं हेतुभेदेनान्तस्थशल्यावस्थां दर्शयन्नाह,—अस्थ्यात्मकमिति । अस्थ्यात्मकं अस्थिजं; भज्यते इति स्वयं द्विधा त्रिधा वा भवतीत्यर्थः । एतेनैवास्याहरणेऽवयवान्तरं विचार्याहरणं कर्तव्यमित्यभिप्रायः । शीर्यते इति शटतीत्यर्थः । ननु, केशास्थिवेणुदारूपलानि तु न विशीर्यन्ते इत्यग्रे वक्ष्यति, अत्र तु अन्तश्च शीर्यत इति कथयति, तत्कथं न विरोधः? उच्यते अन्तश्च शीर्यत इति चकारो विषयभेदप्रतिपादनार्थः; तेन केषांचिदेवास्थ्नां शीर्णत्वं न सर्वेषामिति नास्ति विरोधः । निर्भुज्यते इति कुटिलीभवति । शार्ङ्गमिति शृङ्गमयम् । आयसं च इति लोहमयमपि निर्भुज्यत इत्यर्थः ॥ १८ ॥

**वार्क्ष्यवैणवतार्णानि निर्ह्रियन्ते तु नो यदि ॥**
**पचन्ति रक्तं मांसं च क्षिप्रमेतानि देहिनाम् ॥१९॥**

वार्क्ष्यादीनां विशल्यघ्ने मर्मणि पाकात् स्वयं पतितानामवश्यमनिर्हरणीयत्वं दर्शयन्नाह,—वार्क्ष्येति ।— वार्क्ष्यं वृक्षमयं, वैणवं वेणुमयं, तार्णं तृणमयम् । निर्ह्रियन्ते तु नो यदीति अनिर्हरणं च विशल्यप्राणहरप्रदेशे बोद्धव्यम् । पचन्ति रक्तं मांसं चेत्यादिना वार्क्ष्यादीनि शल्यानि पाकात् स्वयं पतन्तीत्युक्तं भवतीति ॥ १९ ॥

**कानकं राजतं ताम्रं रैतिकं त्रपु सीसकम् ॥**
**चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात् ॥२०॥**

विशल्यप्राणहरादिषु प्रदेशेषु कानकादीनामनाहरणे अदोषं दर्शयन्नाह,—कानकं राजतमिति । रैतिकमिति रीतिः पित्तलभेदः, तन्मयं रैतिकम् । केचिदत्र रैतिकमिति पदं विहाय कृष्णायस्त्रपुसीसकमिति पठन्ति ॥ २० ॥

**स्वभावशीता मृदवो ये चान्येऽपीदृशा मताः ॥**
**द्रवीभूताः शरीरेऽस्मिन्नेकत्वं यान्ति धातुभिः २१**

अन्येषामपि कांस्यप्रभृतीनां कानकादिधर्मं दर्शयन्नाह,—स्वभावेति ॥ २१॥

**विषाणदन्तकेशास्थिवेणुदारूपलानि तु ॥**
**शल्यानि न विशीर्यन्ते शरीरे मृण्मयानि च २२**

अपरेषां चिरकालस्थितावपि न शरीरधातुभिरेकत्वमिति दर्शयन्नाह,—विषाणेति ।—विषाणं शृङ्गं, दारु काष्ठं, उपलं पाषाणं, न विशीर्यन्ते इति न शटन्तीत्यर्थः । मृण्मयानि मृत्तिकामयानि ॥ २२ ॥

**द्विविधं पञ्चगतिमत् त्वगादिव्रणवस्तुषु ॥**
**विश्लिष्टं वेत्ति यः शल्यं स राज्ञः कर्तुमर्हति २३**

अध्यायपिण्डार्थज्ञानेन वैद्यः स्मृतिं दर्शयन्नाह,—द्विविधमिति ।—द्विविधं द्विप्रकारं कर्णि श्लक्ष्णं चेति; अन्ये शारीरागन्तुभेदेन द्वैविध्यं मन्यन्ते । पञ्चगतिमत् इति ऊर्ध्वाधोऽर्वाचीनतिर्यगृजुगतिकम् । त्वगादिव्रणवस्तुषु इति त्वगादिव्रणवस्तुष्वष्टासु

विश्लिष्टं विविधप्रकारं स्थितम् । राजग्रहणं प्रधानसंग्रहार्थम् । कर्तुमिति प्रतीकारं कर्तुमित्यर्थः, अर्हति योग्यो भवति । यो वेत्त्यधिष्ठितं शल्यमिति केचित् पठन्ति ॥ २३ ॥

इति श्रीडल्हणविरचितायां सुश्रुतव्याख्यायां निबंधसंग्रहाख्यायां सूत्रस्थाने षड्विंशतितमोऽध्यायः ।

---

## सप्तविंशतितमोऽध्यायः ।

**अथातः शल्यापनयनीयमध्यायं व्याख्यास्यामः ॥१॥ यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥२॥ शल्यं द्विविधमवबद्धमनवबद्धं च ॥ ३ ॥**

अववद्धमनववद्धं चेति तत्र अववद्धं विशेषेणासक्तं; अन्ये तु अस्थ्यादिप्रविष्टमवबद्धं, इतरदनवबद्धमिति मन्यन्ते ॥१-३॥

**तत्र समासेनानवबद्धशल्योद्धरणार्थं पञ्चदश हेतून् वक्ष्यामः । तद्यथा—स्वभावः, पाचनं, भेदनं, दारणं, पीडनं, प्रमार्जनं, निर्ध्मापनं, वमनं, विरेचनं, प्रक्षालनं, प्रतिमर्षः, प्रवाहणं, आचूषणं, अयस्कान्तो, हर्षश्चेति ॥ ४ ॥**

तत्रानवबद्धस्यैव प्रथममङ्गीकृत्य परिसंख्यां परिहरणे हेतून् दर्शयन्नाह,—तत्र इति । तयोर्मध्ये । स्वभावः प्रकृतिः; पाचनमिति अपक्वशल्यस्य पाचनद्रव्यैः पाकविधानं; भेदनमिति वृद्धिपत्रादिभिः शस्त्रैः स्फोटनं; दारणमिति चिरबिल्वादिभिर्मिश्रकोक्तैरौषधैर्विदारणं; पीडनमिति द्रव्याणां पिच्छिलानामित्यादिमिश्रकोक्तैर्द्रव्यैः कृत्वा पीड्यते यत्; प्रमार्जनमिति बालवस्त्राभिः प्रोञ्छनं; निर्ध्मापनमिति प्रधमनं, एतदुक्तं भवति पिप्पलीकट्फलादिचूर्णस्य नाड्या नासान्तःप्रापणं; प्रतिमर्षः अङ्गुल्यादिघर्षणं, प्रवाहणं विकुन्थनं; आचूषणं मुखशृङ्गैः कृत्वा यत् चूष्यते; अयस्कान्तः पाषाणविशेषः, यद्यप्ययस्कान्त इति सामान्येनोपात्तस्तथाप्यत्र कर्षको ग्राह्यः; हर्षः तुष्टिः ॥४॥

**तत्राश्रुक्षवथूद्गारकासमूत्रपुरीषानिलैः स्वभावबलप्रवृत्तैर्नयनादिभ्यः पतति; मांसावगाढं शल्यमविदह्यमानं पाचयित्वा प्रकोथात् तस्य पूयशोणितवेगात् गौरवात् वा पतति । पक्कमभिद्यमानं भेदयेद्दारयेत् वा । भिन्नमनिरस्यमानं पीडनीयैः पीडयेत् पाणिभिर्वा । अणूनि अक्षशल्यानि परिषेचनाध्मापनैर्बालवस्त्रपाणिभिः प्रमार्जयेत् । आहारशेषश्लेष्महीनाणुशल्यानि श्वसनोत्कासनप्रधमनैर्निर्धमेत् । अन्नशल्यानि वमनाङ्गुलिप्रतिमर्षप्रभृतिभिः । विरेचनैः पक्वाशयगतानि । व्रणदोषाशयगतानि प्रक्षालनैः । वातमूत्रपुरीषगर्भसङ्गेषु प्रवाहणमुक्तम् । मारुतोदकसविषरुधिरदुष्टस्तन्येषु आचूषणमास्येन विषाणैर्वा । अनुलोममनवबद्धमकर्णमनल्पव्रणमुखमयस्कान्तेन । हृद्यवस्थितमनेककारणोत्पन्नं शोकशल्यं हर्षेणेति ॥ ५ ॥**

स्वभावादिहेतोर्विषयमाह,—तत्राश्रुक्षवथूद्गारेत्यादि । तत्र तेषां पञ्चदशानां मध्ये । एतैरश्रुप्रभृतिभिः । स्वभावबलं स्वभाव आदि शक्तिः, ततः प्रवृत्तैः आगतैर्हेतुभिः नयनादिभ्यः शरीरप्रदेशेभ्यो रजःप्रभृतिशल्यं पततीत्यर्थः । पाचनविषयमाह,—सावगाढमिति । अवगाढं अभ्यन्तरगतम् । अविदह्यमानं अपच्यमानम् । प्रकोथात्तस्य इति पूतिभावान्मांसस्येत्यर्थः । भेदनदारणयोर्विषयमाह,—पक्कमभिद्यमानमिति । पीडनविषयमाह—भिन्नमनिरस्यमानमिति । अनिरस्यमानं अनिष्क्रामन्तम् । प्रमार्जनविषयमाह,—अणून्यक्षशल्यानीति । अक्षाणि इन्द्रियाणि । परिषेचनं धाराभिषेचनम् । आध्मापनं अक्षिषु मुखमारुतस्य प्रापणम् । निर्ध्मापनविषयमाह,—आहारशेषेति । भुञ्जानस्य नासान्तरादिस्थितमन्नं आहारशेषः । हीनानां पतितानां भ्रष्टानां शल्यानामल्पावयवादीनि अणुशल्यानि उच्यन्ते । श्वसनं श्वासः, उत्कासनं उत्कृष्टं कासनम् । निर्धमेत् निष्कासयेत् । वमनप्रतिमर्षयोर्विषयमाह,—अन्नशल्यानीति । अन्नशल्यं वमनेन पतति अङ्गुलिप्रतिमर्षेण च; अङ्गुलिप्रतिमर्षः अङ्गुल्यादिघर्षणम् । विरेचनविषयं दर्शयन्नाह,—विरेचनैः पक्वाशयगतानीति । पक्वाशयगतानि शल्यानीति शेषः । प्रक्षालनविषयमाह,—व्रणेति । व्रणदोषः पूयः, व्रणाशयगतान्यन्यान्यपि शल्यानीत्यर्थः । प्रवाहणविषयमाह,—वातेति । सङ्गः अप्रवृत्तिः । चूषणविषयमाह,—मारुतेति । अयस्कान्तविषयमाह,—अनुलोमेति । हर्षविषयमाह,—हृद्यवस्थितेति । केचिदनवबद्धशल्यमध्ये भेदनदारणपीडनवमनविरेचनप्रक्षालनानि न मन्यन्ते, तेषां मते भेदनदारणयोरवबद्धशल्यविषयत्वं, पीडनादीनां चतुर्णां यथासंभवमुक्तेष्वेवान्तर्भावः ॥ ५ ॥

**सर्वशल्यानां तु महतामणूनां वा द्वावेव आहरणहेतू भवतः–प्रतिलोमोऽनुलोमश्च ॥ ६ ॥**

पञ्चगतीनां शल्यानामपि सर्वेषाममार्गमार्गभेदेन द्विविधमाहरणं दर्शयन्नाह,—सर्वशल्यानामिति । प्रवेशमार्गेणैवाहरणं प्रतिलोमं, तद्विपरीतं चानुलोमम् ॥ ६ ॥

**तत्र प्रतिलोममर्वाचीनमानयेत्, अनुलोमं पराचीनम् ॥ ७ ॥**

प्रतिलोमानुलोमाहरणयोर्विषयमाह,—तत्र इति; तयोर्मध्ये । अर्वाचीनमिति नातिदूरप्रवेशात्, निविष्टशल्यद्वारापेक्षया कायस्य पूर्वार्धस्थितं शल्यं वा अर्वाचीनमुच्यते । तत्तु शल्यं प्रतिलोममानयेत् । कोऽर्थः ? अर्वाचीनदेशे आनयेत्, प्रवेशमार्गेणैवानयेत् । अनुलोमेन हि परार्धेन निह्रियमाणं अविद्धमपि बहुतरं प्रदेशं वेधयेत्; तत्र मरणमुपद्रवा वा भवन्ति । पराचीनमिति दूरप्रविष्टं; कायस्य परार्धनिर्गतं शल्यमुच्यते । तच्छल्यमनुलोममानयेत् । कोऽर्थः ? अग्रेतने पराचीने प्रदेशे आनयेत् ॥ ७ ॥

**उत्तुण्डितं छित्वा निर्घातयेच्छेदनीयमुखम् ॥ ८ ॥**

यदा तु अनतिवेगात् शल्यमग्रेतनप्रदेशेन निर्गतमुत्तुण्डितमुखं च भवति तदा तस्य शल्यस्य छेदनीयमुखस्य छेद्यप्रदेशजटितस्य पराचीनानुलोमहरणे कीदृशं विधानमिति दर्शयन्नाह, उत्तुण्डितमिति ऊर्ध्वे निःसरन्मुखमिव । निर्घातयेदिति इतस्ततश्चालयेत् हस्तेन मुद्गरादिना वा; ततश्चानुलोममाहरेत् । छेदनीयमुखमिति कण्टकखर्जूरीपत्रप्रभृतिकं, एतेन उत्तुण्डितं छेदनीयमुखं पराग्निर्गतमुखं छेद्यप्रदेशप्रकटितं च शल्यं पराचीनानुलोमाहरणविषय इत्युक्तं भवति ॥ ८ ॥

**छेदनीयमुखान्यपि कुक्षिवक्षःकक्षावंक्षणपर्शुकान्तरपतितानि च न निर्घातयेत् ॥ ९ ॥**

**(अनुत्तुण्डितशल्यानि छेदनीयमुखानि च ॥**
**अनिर्घात्यानि जानीयाद्भूयश्छेदानुबन्धतः॥१०॥)**

किं छेदनीयमुखस्य सर्वत्रायं विधिर्नेत्याह,—वक्षः इति हृदयं, अन्ये तु अच्छेदनीयमुखानि तु इत्यादि पाठं पठन्ति व्याख्यानयन्ति च—न केवलमनुत्तुण्डितान्यनिर्घात्यमुखान्यपीति समुच्चीयते तुशब्देन, तानि कुक्ष्यादिपतितानि सर्वाण्येवाच्छेद्यत्वादनिर्घात्याहरणीयानि । एतेनैतदुक्तं भवति पराचीनानामपि शल्यानामनुलोममाहरणीयानामपि प्रतिलोममेवाहरणं कर्तव्यं, अनुलोमाहरणे कुक्ष्यादिषु महान् छेदानुबन्धो भवेत्, पर्शुकान्तरपतितानि चेत्यस्याग्रे, "अनुत्तुण्डितशल्यानि छेदनीयमुखानि च । अनिर्घात्यानि जानीयाद् भूयश्छेदानुबन्धतः"—इति भोजसंहितोक्तं केचित्पाठं पठन्ति, स च प्रमादपाठः, निबन्धेष्वदर्शनात् ॥ ९ ॥ १० ॥

**हस्तशक्यं यथामार्गेण हस्तेनैवापहर्तुं प्रयतेत ११**

हस्तेनाहर्तुं यच्छक्यते शल्यं तत् हस्तशक्यम् । यथामार्गेण इति प्रवेशमार्गेणेत्यर्थः । हस्तेनैव इति हस्तेनैवोद्धरेत् न कदाचिन्मुद्गरादिभिश्चालयेत् । प्रयतेत इति प्रयत्नं कुर्वीत ॥ ११ ॥

**हस्तेनापहर्तुमशक्यं विशस्य शस्त्रेण यन्त्रेण वापहरेत् ॥ १२ ॥**

हस्तेनापहर्तुमशक्ये शल्ये किं विधानमिति दर्शयति,—हस्तेनेति । विशस्य छित्वा शस्त्रेणेत्यर्थः । केचित् 'हस्तेन चाहर्तुमशक्ये अविशस्य यन्त्रेणापहरेत्' इति पाठं मन्यन्ते । तेषां मते अविशस्य अच्छित्त्वेत्यर्थः, हस्तेन चेति चकारेण यन्त्राहरणाशक्यस्य विशस्येत्युपलभ्यते ॥ १२ ॥

**भवति चात्र ।**

**शीतलेन जलैनैनं मूर्च्छन्तमवसेचयेत् ॥**
**संरक्षेदस्य मर्माणि मुहुराश्वासयेच्च तम् ॥ १३ ॥**

शल्याहरणे उपद्रवचिकित्सासूत्रं निर्दिशन्नाह—शीतलेन जलेनेति । एनमिति शल्यातुरम् । अवसेचयेदिति सिञ्चेदित्यर्थः । आश्वासयेदिति क्षीरतर्पणादिदानेन । वाहुल्येनामुं केचिन्न पठन्ति । गयदासेन तु पठित्वाऽयं पाठोऽन्त्रान्तरे व्याख्यातः, युक्तश्चायं तस्मात् पठनीय एव ॥ १३ ॥

**ततः शल्यमुद्धृत्य निर्लोहितं व्रणं कृत्वा स्वेदार्हमग्निघृतप्रभृतिभिः संस्वेद्य विदह्य प्रदिह्य सर्पिर्मधुभ्यां बद्धाचारिकमुपदिशेत् । (सिरास्नायुविलग्नं शलाकादिभिर्विमोच्य अपनयेत्; श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं; दुर्बलवारङ्गं कुशादिभिर्बद्ध्वा ।)**

हृते शल्ये पश्चात् कर्म दर्शयन्नाह,—ततः शल्यमुद्धृत्य इति । निर्लोहितमिति रुधिरवन्तम् । संस्वेद्येति अतिनिःसृतशोणितमवेदनं सुखोष्णेन घृतेन, तदितरमग्निना संस्वेद्येति संबन्धः । विदह्य इति अग्निकृत्यान् व्रणान् दग्ध्वेत्यर्थः । प्रदिह्य इति लेपयित्वा, अस्वेद्यमतिस्रुतशोणितं च । अत्र केचिद्विदह्य न पठन्ति, प्रदिह्येत्यस्य स्थाने तर्पयित्वेति पठन्ति । अत्र केचिद्भट्टुरिकाप्रवाहेण भोजोक्तं 'शिरास्नायुविलग्नं शलाकाभिर्विमोच्यापनयेत्, श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं, दुर्बलवारङ्गं कुशादिभिर्बद्ध्वा' इति पाठं पठन्ति, प्रवाहपठिता व्याख्यानयन्ति· वारङ्गं शस्त्रनालं, अवपीड्य श्वयथुमिति संबन्धः; कुशादिभिः अपनयेदित्यत्रापि योज्यते; कुशवंशवेत्रादिकं वा; अयं च विधिस्तन्त्रान्तरादवसेयो न सुश्रुतसंहितायामस्ति, तन्त्रान्तरदर्शनालसैस्तु अत्रैवानीय लिखित इत्यत्र न पठनीय एवायम् ।

**हृदयमभितो वर्तमानं शल्यं शीतजलादिभिरुद्वेजितस्य अपहरेद्यथामार्गं; दुरुपहरमन्यतोऽपबाध्यमानं पाटयित्वोद्धरेत् ॥ १५ ॥**

वक्षःपतितेषु विशेषविधिमाह,—हृदयमभितो वर्तमानमिति हृदयसमीपे स्थितमित्यर्थः । उद्वेजितस्य उद्विग्नहृदयस्य, शीतजलादुद्वेजनं च क्लमपरिहाराय । यथामार्गमिति येनैव मार्गेण प्रविष्टं तेनैवापहरेदित्यर्थः । तेनाशक्ये उपायान्तरं दर्शयन्नाह,—अन्यतः इति अन्यस्मिन्नपि प्रदेशे । दुःखेन उपह्रियते तत् दुरुपहरम् । अपबाध्यमानमिति मर्मपीडाकरं, शल्यमिति शेषः । पाटयित्वा इति दारयित्वेत्यर्थः ॥ १५ ॥

**अस्थिविवरप्रविष्टमस्थिविदष्टं वा अवगृह्य पादाभ्यां यन्त्रेणापहरेदशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं प्रविभुज्य धनुर्गुणैर्बद्ध्वा एकतश्चास्य पञ्चाङ्ग्यामुपसंयतस्याश्ववक्त्रकटके वा बध्नीयात्, अथैनं कशया ताडयेद्यथोन्नामयन् शिरो वेगेन शल्यमुद्धरति; दृढां वा वृक्षशाखामवनम्य तस्यां पूर्ववद् बद्ध्वोद्धरेत् ॥ १६ ॥**

अवबद्धशल्यस्य हस्तेनापहर्तुमशक्यस्य निर्हरणोपायं दर्शयन्नाह,—अस्थिविवरप्रविष्टमिति अस्थिच्छिद्रान्तर्गतम् । विदष्टमिति अल्पासक्तम् । अशक्यमिति सुपरिगृहीतस्य आतुरस्येत्यर्थः । प्रविभुज्य वक्रीकृत्य । धनुर्गुणैः इति मूर्वार्कसूत्रमयैः । एकतः एकस्मिन् प्रदेशे । अस्य इति शल्यवतो नरस्य । पञ्चाङ्ग्यामिति बन्धविशेषे । उपसंयतस्य बद्धस्य । अश्वस्य घोटकस्य, वक्त्रं मुखं, तत्र कविका कटकं, तत्र बध्नीयात् शल्यमिति संबन्धः ।

एनं अश्वं, कशया सद्या, उन्नामयति उच्चैः कुर्वन्। पक्षान्तरमाह,—दृढां वा वृक्षशाखामित्यादि। अवनम्य नमयित्वा, तस्यामिति वृक्षशाखायाम्। अन्ये तु दृढामित्यस्य स्थाने पञ्चाङ्गीमिति मन्यन्ते; तत्र पञ्चाङ्गीं पञ्चभिः शाखान्तरैर्युतां शाखां वदन्ति। अपरे तु पञ्चाङ्गीं प्लक्षाश्वत्थोदुम्बरन्यग्रोधवेतसानामिति कथयन्ति। अन्ये त्वेवं पठन्ति 'अशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं प्रविभुज्य धनुर्गुणैर्बद्ध्वैकतः शाखाश्ववक्त्रकटके बध्नीयात्। अथैनं कशया ताडयेत् यथोन्नामयन् शिरो वेगेन शल्यमुद्धरति, नामितायां पञ्चाङ्ग्यां वृक्षशाखायां वा पूर्ववद् वक्त्रोद्धरेत्' इति ॥ १६॥

**अस्थिदेशोत्तुण्डितमष्ठीलाश्ममुद्गराणामन्यतमस्य प्रहारेण विचाल्य यथामार्गमेव यन्त्रेण ॥ १७॥**

कुक्ष्याद्यच्छेदनीयप्रदेशोत्तुण्डितानामस्थ्यादिविदष्टानां यथामार्गापहरणोपायं दर्शयन्नाह,—यथामार्गमेव यन्त्रेणेति। अपहरेदिति शेषः। अस्थिदेशोत्तुण्डितमित्यन्ये पठन्ति ॥ १७॥

**विमृदितकर्णानि कर्णवन्ति, अनाबाधकरदेशोत्तुण्डितानि पुरस्तादेव ॥ १८॥**

कर्णवतामाहरणं च दर्शयन्नाह,—यन्त्रेणेति। कर्णवत् यत् शल्यं तदनाबाधकरप्रदेशोत्तुण्डितं यदा भवति तदा विमृदितकर्णिकं कृत्वा कोऽर्थः? संकुचितकर्णिकं कृत्वा, पुरस्तादेव कोऽर्थः? अग्रेतने प्रदेशे एव, आकर्षयेदिति शेषः ॥ १८॥

**जातुषे कण्ठासक्ते कण्ठे नाडीं प्रवेश्याग्नितप्तां च शलाकां तयाऽवगृह्य शीताभिरद्भिः परिषिच्य स्थिरीभूतमुद्धरेत् ॥ १९॥**

जातुषशल्यस्य विधानं दर्शयन्नाह,—जातुष इति। जातुषे लाक्षामये। कण्ठासक्ते गललग्ने। नाडीमिति ताम्रादिरचितनलिकां, स्थिरीभूतासुत्पन्नगाढताम्। शिशवो जातुषैः शल्यैः क्रीडन्ति ते यदा प्रमादान्निगिलन्ति तदायं विधिर्वेदितव्यः। अन्ये तु जातुषाणि शिरादिष्वेव घटितानि मन्यन्ते ॥ १९॥

**अजातुषं जतुमधूच्छिष्टप्रलिप्तया शलाकया पूर्वकल्पनेत्येके ॥ २०॥**

अजातुषे कण्ठासक्ते विधिमाह,—अजातुषमिति। जतु लाक्षा, मधूच्छिष्टं सिक्थकं, पूर्वकल्पेन इति शीतोदकस्थिरीभूतमित्यर्थः ॥ २०॥

**अस्थिशल्यमन्यद्वा तिर्यक्कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकसूत्रबद्धं द्रवभक्तोपहितं पाययेदाकण्ठात् पूर्णकोष्ठं च वामयेद्वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्; मृदुना वा दन्तधावनकूर्चकेनापहरेत्, प्रणुदेद्वा अन्तः। क्षतकण्ठाय च मधुसर्पिषी लेढुं प्रयच्छेत्त्रिफलाचूर्णं वा मधुशर्करामिश्रम्।**

अस्थ्यादिशल्यस्यात्यन्तं कण्ठासक्तस्याहरणमुद्दिशन्नाह,—अस्थिशल्यमिति। केशोण्डुकं बालकृतं विदुकम्। उपहितं सहितम्। सहसा त्वाक्षिपेत् इति शल्यनिर्गमनार्थम्। दन्तधावनकूर्चकेन इति दन्तधावनानां करञ्जकादीनां कुट्टिताग्रं कूर्चकं, तेनापहरेदित्यर्थः। प्रणुदेद्वान्तः इति बहिरनिर्गच्छतः, प्रणुदेत् प्रवेशयेदित्यर्थः। केशोन्दुकमित्यादि केचित् पाठं पठन्ति। अपहृतकण्ठशल्यस्य पश्चात् कर्म दर्शयन्नाह,—क्षतकण्ठायेति ॥ २१॥

**उदकपूर्णोदरमवाक्शिरसमवपीडयेत् धुनीयात् वामयेद्वा भस्मराशौ वा निखनेदामुखात् ॥ २२॥**

उदकं यदान्तर्निविष्टं जलभृतादीनामुदरे भवति तदा तस्यापहरणोपायं दर्शयन्नाह,—उदकेति। अवाक्शिरसं अधोमुखीकृतम्, अवपीडयेत् उदरं, धुनीयात् कम्पयेत्, वामयेत् घर्षणैरवाक्शिरसमेव, निखनेत् प्रवेशयेत्, आमुखात् इति मुखपर्यन्तम् ॥ २२॥

**ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धं स्कन्धे मुष्टिनाभिहन्यात् मद्यं पानीयं वा पाययेत् ॥ २३॥**

कण्ठासक्तग्रासाहरणोपायमाह,—ग्रासशल्ये इति। अनवबुद्धमिति अज्ञातं यथा भवति। अभिहन्यात् इति प्रहारं दद्यादित्यर्थः ॥ २३॥

**बाहुरज्जुलतापाशैः कण्ठपीडनाद्वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि लालास्रावं फेनागमनं संज्ञानाशं चापादयति। तमभ्यज्य संस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं दद्याद्रसं च वातघ्नं विदध्यादिति ॥ २४॥**

बाहुरज्ज्वादिपीडितकण्ठप्रकुपितवायुश्लेष्मापहरणोपायमाह,—बाहुरज्जुलतापाशैरिति पाशशब्दो बाह्वादिभिः सह प्रत्येकं संबध्यते। केचिदमुं पाठं न पठन्ति ॥ २४॥

**भवन्ति चात्र।**

**शल्याकृतिविशेषांश्च स्थानान्यावेक्ष्य बुद्धिमान् ॥**
**तथा यन्त्रपृथक्त्वं च सम्यक् शल्यमथाहरेत् ॥ २५॥**
**कर्णवन्ति तु शल्यानि दुःखाहार्याणि यानि च ॥**
**आददीत भिषक् तस्मात्तानि युक्त्या समाहितः ॥ २६**
**एतैरुपायैः शल्यं तु नैव निर्घात्यते यदि ॥**
**मत्या निपुणया वैद्यो यन्त्रयोगैश्च निर्हरेत् ॥ २७॥**
**शोथपाकौ रुजश्चोग्राः कुर्याच्छल्यमनिर्हृतम् ॥**
**वैकल्यं मरणं वापि तस्माद् यत्नाद्विनिर्हरेत् ॥ २८॥**

शल्याकृतीनामानन्त्यादनुक्तमपि कर्तव्यं दर्शयन्नाह,—शल्याकृतीत्यादि। स्थानानि शिरोऽक्षिकर्णनासाहृदयादीनि। कर्णवतां दुराहरत्वं दर्शयन्नाह,—आददीत इति संगृह्णीयादित्यर्थः। युक्त्या इति योगेन न तु हीनयोगातियोगमिथ्यायोगैः। समाहितः सावधानः। अवश्यं निर्हरणीयस्य शल्यस्योक्तैः प्रकारैरनाहरणे अनुक्तोपायमनुक्तयन्त्रकरणे सूत्रमुद्दिशन्नाह,—एतैरिति। नैव निर्घात्यते यदि इति नैव निष्कास्यते यदीत्यर्थः। मत्या निपुणया वैद्य इति मत्या निपुणया स्वकर्मणि प्रवीणया बुद्ध्या युक्तः।

यन्त्रयोगैश्च निर्हरेदिति योगैः संयोगैः, योगैश्चेति चकारादनुक्तगुणातिबन्धनादि समुच्चीयते । शल्यस्यानाहरणे दोषं दर्शयन्नाह,—शोथपाकाविति । अमुं श्लोकं केचिदत्र न पठन्ति, न्यायचन्द्रिकायां तु पठितत्वादवश्यं पठनीय एव ॥ २५—२८ ॥

इति श्रीडल्हणविरचितायां निबंधसंग्रहाख्यायां सुश्रुतव्याख्यायां सूत्रस्थाने सप्तविंशतितमोऽध्यायः ।

---

## अष्टाविंशतितमोऽध्यायः ।

**अथातो विपरीताविपरीतव्रणविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

**फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा ॥**
**ख्यापयन्ति भविष्यत्त्वं तथा रिष्टानि पञ्चताम् ॥ ३ ॥**

नियतानियतभेदेन द्विविधमरिष्टं प्रकाशयितुमाह,—फलाग्नीति । अत्र यथा पुष्पं फलस्य भविष्यत्त्वं ख्यापयति, कोऽर्थः? पुष्पं फलं भविष्यतीति; यथा च धूमोऽग्निं ख्यापयति, यथाम्बुदो जलवृष्टिं, एवमरिष्टानि पञ्चतां मृत्युं ख्यापयन्ति; भाविनीमिति शेषः । अरिष्टान्यत्र मरणलक्षणानि । ननु, अत्र किमर्थं पुष्पधूमाम्बुदा इति बहवो दृष्टान्ता उक्ताः? एकेनैव गतार्थत्वात् । उच्यते, पुष्पाम्बुदौ हेतू फलजलवृष्ट्योर्ज्ञापकावनियतौ, न ह्यवश्यं कारणेन कार्यं कर्तव्यमेव इत्यनेनानियतदृष्टान्तेन हेत्वादिनिमित्तजमनियतमुक्तं; धूमात् कार्यादग्नेः कारणस्य यतो ज्ञानं तन्नियतं, एतेन नियतदृष्टान्तेन दोषजमरिष्टं नियतमुक्तमिति अनियतनियतभेदेन द्विविधमरिष्टं प्रकाशयन्ति बहवो दृष्टान्ता इति न दोषः ॥ १—३ ॥

**तानि सौक्ष्म्यात् प्रमादाद्वा तथैवाशु व्यतिक्रमात् ॥**
**गृह्यन्ते नोद्गतान्यज्ञैर्मुमूर्षोर्न त्वसंभवात् ॥ ४ ॥**
**ध्रुवं तु मरणं रिष्टे**

अवश्यमेवारिष्टस्य मरणभवनं दर्शयन्नाह,—तानीति । मुमूर्षोः मर्तुमिच्छोः प्राणिनः उद्गतान्यपि प्रकटितान्यपि अरिष्टानि अज्ञैर्मनुष्यैः न गृह्यन्ते न ज्ञायन्ते । कुतो हेतोरित्याह,—सौक्ष्म्यात् इति परमाणुत्वात् । प्रमादाद्वेति मदिरामदमत्तस्य वस्तुनि अविमर्शे इव । आशुव्यतिक्रमात् इति यदैवारिष्टमुत्पन्नं तदैव मरणादिति, उत्पलशतपत्रव्यतिभेदवत्; अन्ये त्वाशुव्यतिक्रमः यदैवारिष्टमुत्पन्नं तदैव निवर्तत इति मन्यन्ते । न त्वसंभवात् इति न पुनरसंभवान्न गृह्यन्ते, अपितु संभवन्त्यप्यरिष्टानि उक्तैः कारणैरज्ञैर्न गृह्यन्ते इत्यभिप्रायः । दोषजमरिष्टमधिकृत्य अरिष्टेन मरणस्य नियतत्वं दर्शयन्नाह,—ध्रुवमिति ॥ ४ ॥—

**ब्राह्मणैस्तत् किलामलैः ॥**
**रसायनतपोजप्यतत्परैर्वा निवार्यते ॥ ५ ॥**

रिष्टेऽपि मरणनिवृत्तिमुपायविशेषैराह,—ब्राह्मणैरिति । किलशब्दोऽत्रागमार्थं सूचयति; एवं किल आगमे प्रतिपादितमित्यर्थः । अमलैः इति रागादिदोषरहितैः । ब्राह्मणेभ्योऽपरानपि दर्शयन्नाह,—रसायनतपोजप्येत्यादि ।—रसायनपरा इति स्वभावव्याधिनिवारणविशिष्टौषधसेवकाः, ते रसवीर्यौषधप्रभावेण मरणं निवारयन्ति । एतच्च नियतानियतरिष्टविषयं ज्ञेयं ॥ ५ ॥

**नक्षत्रपीडा बहुधा यथा कालाद्विपच्यते ॥**
**तथैवारिष्टपाकं च ब्रुवते बहवो जनाः ॥ ६ ॥**

कथं पुनः कालान्तरे पञ्चविंशवर्षादावरिष्टपीडा भवतीत्याह,—नक्षत्रेति ।—विपच्यते फलतीत्यर्थः । पाकः फलम् ॥ ६ ॥

**असिद्धिमाप्नुयाल्लोके प्रतिकुर्वन् गतायुषः ॥**
**अतोऽरिष्टानि यत्नेन लक्षयेत् कुशलो भिषक् ॥ ७ ॥**

अरिष्टापरिज्ञानदोषं दर्शयन्नाह,—असिद्धिमिति ।—असिद्धिः धर्मार्थकामादीनां हानिः ॥ ७ ॥

**गन्धवर्णरसादीनां विशेषाणां समासतः ॥**
**वैकृतं यत् तदाचष्टे व्रणिनः पक्वलक्षणम् ॥ ८ ॥**

अस्य तन्त्रस्य शल्यत्वात्तत्र च व्रणस्य प्राधान्यात्तस्यैवारिष्टानि प्राक् निर्देष्टुमाह,—गन्धवर्णरसादीनामिति ।—आदिग्रहणेनैव शब्दस्पर्शयोरपि संग्रहः । एतेन पञ्चापीन्द्रियार्था उक्ता भवन्ति, रूपस्य वर्णग्रहणेन गृहीतत्वात् । स्वभावतः प्रकृतितः यत् वैकृतं अन्यथात्वं तदाचष्टे तत् कथयति, व्रणिनः पुरुषस्य, पक्वलक्षणं पातलक्षणं यथा पक्वफलं पतत्येव तथा स चापि व्रणी पतत्येवेत्यर्थः ॥ ८ ॥

**कटुस्तीक्ष्णश्च विस्रश्च गन्धस्तु पवनादिभिः ॥**
**लोहगन्धिस्तु रक्तेन व्यामिश्रः सान्निपातिकः ॥ ९ ॥**
**लाजातसीतैलसमाः किंचिद्विस्राश्च गन्धतः ॥**
**ज्ञेयाः प्रकृतिगन्धाः स्यु-**

तत्र प्राकृतं गन्धं दर्शयन्नाह,—अत्र लाजातसीतैलसमानाः त्रयो गन्धा यथासंख्येन वातपैत्तिकवातश्लैष्मिकपित्तश्लैष्मिका द्वन्द्वजा ज्ञेयाः । एते त्रयोऽपीषद्विस्रा स्वभावाज्ज्ञेयाः । अतसीशब्देनातसीतैलं ज्ञेयम् । प्रकृतिगन्धाः स्युः इति ज्ञातव्याः प्रकृतिगन्धा भवेयुरित्यर्थः । कटुस्तीव्रश्चेत्यादि इति केचित् पठन्ति ॥ ९ ॥—

**रतोऽन्यद्गन्धवैकृतम् ॥ १० ॥**

**मद्यागुर्वाज्यसुमनःपद्मचन्दनचम्पकैः ॥**
**सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ११॥**
**श्ववाजिमूषिकध्वाङ्क्षपूतिवल्लूरमत्कुणैः ॥**
**सगन्धाः पङ्कगन्धाश्च भूमिगन्धाश्च गर्हिताः ॥ १२ ॥**

विकृतिगन्धान् दर्शयन्नाह,—अत इति । अतोऽन्यद्गन्धवैकृतमिति अत एभ्यः पूर्वोक्तेभ्यः कट्वादिप्राकृतगन्धेभ्योऽन्यद् गन्धवैकृतम् । तानेव विकृतगन्धानाह,—मद्यमित्यादि । सुमनाः जाती, सगन्धाः समगन्धाः । दिव्यगन्धाः इति अपरोऽपि य उत्तमगन्धः । मुमूर्षूणामिति मर्तुमिच्छूनां प्राणिनाम् । श्वा कुक्कुरः,

---

१ 'स्वभावतः' इति पाठान्तरम् ॥

ध्वाङ्क्षः काकः, पूतिवल्लूरं पूयसहितं शुष्कमांसं, मत्कुणाः क्षुद्रकीटाः, एतैः समानगन्धा इत्यर्थः ॥ १०—१२ ॥

**ध्यामकुङ्कुमकङ्कुष्ठसवर्णाः पित्तकोपतः ॥**
**न दह्यन्ते न चूष्यन्ते भिषक् तान् परिवर्जयेत्॥१३॥**
**कण्डूमन्तः स्थिराः श्वेताः स्निग्धाः कफनिमित्ततः ॥**
**दूयन्ते वापि दह्यन्ते भिषक् तान् परिवर्जयेत् ॥ १४ ॥**
**कृष्णास्तु ये तनुस्रावा वातजा मर्मतापिनः ॥**
**स्वल्पामपि न कुर्वन्ति रुजं तान् परिवर्जयेत् ॥१५॥**

वर्णानिर्देष्टुमाह,—ध्यामेत्यादि। ध्यामः ईषत् कृष्णः। न दह्यन्ते न दाहयुक्ता भवन्ति । चूष्यन्ते इति चूषणमिव वेदनाविशेषः । पित्तवर्णेऽसति यत् पित्तवेदना दाहादिका भवन्ति तद्वैकृतं वर्णस्य । केचित् "श्यामाकुङ्कुमकङ्कुष्ठसवर्णाः पित्तदोषतः । न दह्यन्ते न चूष्यन्ते भिषक् तान् परिवर्जयेत्—" इति पाठं पठन्ति, व्याख्यानयन्ति च,—श्यामा प्रियङ्गुः, कङ्कुष्ठः सुवर्णक्षीरीनिर्यासः, न दह्यन्ते नातितप्यन्ते किंतु परितापभावयुक्ता भवन्तीति । स च निबन्धेषु न दृश्यते; यत्र तु दृश्यते, तत्र गड्डरिकाप्रवाहः, तस्मात् पूर्वः पाठो न्याय्यः । कण्डूमन्तः इत्यादिकाः कफेन, तेषां दाहरुजे वर्णवैकृतं; दूयन्ते इति पीडां कुर्वन्ति। कृष्णाश्चेति ये वातजा व्रणाः कृष्णास्तनुस्रावा मर्मतापिनश्च यदा स्वल्पामपि पीडां न कुर्वन्ति तदा वातजे वर्णवैकृतम् । अत्र रसवैकृतं यद्यपि नोक्तं तथापि वातपित्तकफव्रणेषु यथाक्रमं कषायकटुमधुरेषु पिपीलिकाद्युपसर्पणादनुक्तमपि ज्ञेयं, गन्धवर्णरसादीनामित्यत्रोद्देशसूत्रे रसस्योक्तत्वात् ॥ १३—१५ ॥

**क्ष्वेडन्ति घुर्घुरायन्ते ज्वलन्तीव च ये व्रणाः ॥**
**त्वङ्मांसस्थाश्च पवनं सशब्दं विसृजन्ति ये ॥ १६ ॥**
**ये च मर्मस्वसंभूता भवन्त्यत्यर्थवेदनाः ॥**

शब्दवैकृतं दर्शयन्नाह,—क्ष्वेडन्ति इति खटखटाशब्दं कुर्वन्ति । घुर्घुरायन्ते इति श्वमार्जारादीनां कोपादन्तर्गतशब्दो घुर्घुराशब्द उच्यते । ज्वलन्तीव इति ज्वलन्त इव दृश्यन्ते । त्वङ्मांसस्थानां व्रणानां सशब्दपवनवाहित्वं शब्दवैकृतं, कोष्ठगतानां तु सशब्दपवनवाहित्वं प्रकृतिरेव ॥ १६ ॥—

**दह्यन्ते चान्तरत्यर्थं बहिः शीताश्च ये व्रणाः ॥ १७ ॥**
**दह्यन्ते बहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥**

स्पर्शवैकृतमधिकृत्याह,—दह्यन्ते इति ॥ १७ ॥—

**शक्तिकुन्तध्वजरथा वाजिवारणगोवृषाः ॥ १८ ॥**
**येषु चाप्यवभासेरन् प्रासादाकृतयस्तथा ॥**
**चूर्णावकीर्णा इव ये भान्ति वा न च चूर्णिताः॥१९॥**

आकृतिविशेषवैकृतमधिकृत्याह,—शक्तीति । शक्तिः आयुधविशेषः, ध्वजः पताकादण्डः। येषु व्रणेषु, अवभासेरन् शोभन्ते, प्रासादः देवतानरेन्द्राणामधिष्ठानं, आकृतिः अत्र रूपमेव । रूपं च पञ्चेन्द्रियार्थमाह। अपरमपि रूपविशेषमाह,—चूर्णावकीर्णाः इति अत्रापि सामान्याकारेण रूपमेव बोद्धव्यम् ॥ १८ ॥ १९ ॥

**प्राणमांसक्षयश्वासकासारोचकपीडिताः ॥**
**प्रवृद्धपूयरुधिरा व्रणा येषां च मर्मसु ॥ २० ॥**

गन्धादिवैकृतं समाप्य उपद्रवासाध्यत्वं प्रसङ्गतो युक्त्यागतं दर्शयन्नाह,—प्राणेत्यादि । प्राणक्षयः शक्तिलक्षणबलक्षयः, मांसक्षयः उपचयलक्षणबलक्षयः ॥ २० ॥

**क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ॥**
**वर्जयेत्तान् भिषक् प्राज्ञः संरक्षन्नात्मनो यशः ॥२१॥**

अनुक्तमप्यशेषारिष्टमुपगृह्णन्नाह–क्रियाभिरित्यादि ॥ २१ ॥

इति श्रीडल्हणविरचितायां सुश्रुतव्याख्यायां निबन्धसंग्रहाख्यायां सूत्रस्थाने अष्टाविंशतितमोऽध्यायः ।

---

## एकोनत्रिंशत्तमोऽध्यायः ।

**अथातो विपरीताविपरीतदूतशकुनस्वप्ननिदर्शनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**

अथात इति । स्वप्नशब्दनिर्देशान्नक्षत्रवेलातिथिनिमित्तशकुनानिलदेशवैद्यवाग्देहमनश्चेष्टा अपि गृह्यन्ते ॥ १ ॥ २ ॥

**दूतदर्शनसंभाषा वेशाश्चेष्टितमेव च ॥**
**ऋक्षं वेला तिथिश्चैव निमित्तं शकुनोऽनिलः ॥ ३ ॥**
**देशो वैद्यस्य वाग्देहमनसां च विचेष्टितम् ।**
**कथयन्त्यातुरगतं शुभं वा यदि वाऽशुभम् ॥ ४ ॥**

अत्राध्याये निर्देश्यान् दूतादीनुपदर्शयन्नाह,—दूतदर्शनेति । दूतशब्दोऽत्र दर्शनसंभाषणवेशचेष्टितैः सह संबध्यते । गमनाय प्रश्नाय वा आगतः पुरुषः दूतः। चेष्टा चात्र कायकृतो व्यापारः, ऋक्षाणि आर्द्रादीनि; वेलाः मध्याह्नादिकाः, तिथयः चतुर्थ्यादयः, निमित्तं सर्पादिदर्शनं, देशः वैद्यस्य भूमिभागः, वाग्देहमनसां च चेष्टितमपि वैद्यस्यैव, आतुरगतमिति आतुराश्रितमित्यर्थः । स्वप्नाः पश्चान्निर्देश्याः ॥ ३ ॥ ४ ॥

**पाषण्डाश्रमवर्णानां स्वपक्षाः कर्मसिद्धये ॥**
**त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ ५ ॥**
**नपुंसकं स्त्री बहवो नैककार्या असूयकाः ॥**
**गर्दभोष्ट्ररथप्राप्ताः प्राप्ता वा स्युः परम्पराः ॥ ६ ॥**
**वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥**

प्रथमं दूतदर्शनमधिकृत्याह,—पाषण्डाश्रमवर्णानामिति ।—पाषण्डाः कापालिकादयः, आश्रमाः ब्रह्मचारिगृहस्थवानप्रस्थयतयः, वर्णाः ब्राह्मणादयः । सपक्षाः इति तद्यथा—कापाली कापालिकस्य, ब्रह्मचारी ब्रह्मचारिणः, विप्रो विप्रस्येत्यादयः । कर्मसिद्धये कार्यसिद्ध्यर्थम् । त एव विपरीताः इति कापालिकस्य ब्रह्मचारी, ब्रह्मचारिणः कापालीति । कर्मविपत्तये इति चिकित्सितनाशाय। नपुंसकमिति न पुमान् न च स्त्री, स्त्री इति योषिदित्यर्थः, बहवः इति प्रभूता इत्यर्थः, नैककार्याः इति न एक-

स्मिन् कार्ये ये दूताः समागता इत्यर्थः, असूयकाः इति परस्परं कलहं कुर्वाणाः, गर्दभोष्ट्ररथप्राप्ताः इति गर्दभोष्ट्रयुक्तेन रथेनागता इत्यर्थः, प्राप्ता वा स्युः परम्पराः इति आगता वा भवेयुः, परम्परा पङ्क्तिः, एतेन पङ्क्तिं कृत्वा यदा आगता भवन्तीत्युक्तम्। वैद्यं य उपसर्पन्ति इत्यादि ये दूता एवंगुणविशिष्टाः वैद्यमुपसर्पन्ति समीपमागच्छन्ति ते गर्हिता एवेति संभावनीयाः। अत्र चशब्द एवकारार्थः, अपिशब्दः संभावनायाम् ॥ ५ ॥ ६ ॥—

**पाशदण्डायुधधराः पाण्डुरेतरवाससः ॥ ७ ॥**
**आर्द्रजीर्णापसव्यैकमलिनध्वस्तवाससः ॥**
**न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः ॥ ८ ॥**

वेषमधिकृत्याह,—पाशेत्यादि। पाशः दीर्घः पशूनां बन्धनो रज्जुवलयः, दण्डः लौहादिवलयैर्निबद्धो दीर्घनिष्ठुरकाष्ठयष्टिः, आयुधानि खड्गशक्त्यादीनि। पाण्डुरेतरवाससः इति कृष्णपीतरक्तवस्त्राः। आर्द्रजीर्णापसव्यैकमलिनध्वस्तवाससः इति आर्द्रं स्तिमितं, जीर्णं पुरातनं, अपसव्यं दक्षिणाश्रितमुत्तरीयं, वासः एकमेव वस्त्रधारिणः, मलिनं अधौतं, ध्वस्तं पाटितं वस्त्रं। न्यूनाधिकाङ्गाः इति हस्ताद्यवयवैर्हीनाः, अधिकाङ्गाः इति एकविंशत्यङ्गुलादियुक्ताः; उद्विग्नाः इति भीताः, विकृताः इति पङ्गुकुष्ठवामनादयः, रौद्ररूपिणः इति भैरवोद्धतकर्कशाः ॥ ७ ॥ ८ ॥

**रूक्षनिष्ठुरवादाश्चाप्यमाङ्गल्याभिधायिनः ॥**

दूतसंभाषमधिकुर्वन्नाह,—रूक्षेत्यादि। रूक्षं मैत्रीरहितं वचः, निष्ठुरं कठोरवचनं, अमाङ्गल्याभिधायिनः इति गतमृतनष्टरुदितेत्यादि वचनमङ्गलम् ॥—

**छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम् ९**
**वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः ॥**
**स्रोतोऽवरोधहृद्गण्डमूर्द्धोरःकुक्षिपाणयः ॥ १० ॥**
**कपालोपलभस्मास्थितुषाङ्गारकराश्च ये ॥**
**विलिखन्तो महीं किंचिन्मुञ्चन्तो लोष्टभेदिनः ॥ ११॥**
**तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः ॥**
**फलं पक्कमसारं वा गृहीत्वाऽन्यच्च तद्विधम् ॥ १२ ॥**
**नखैर्नखान्तरं वापि करेण चरणं तथा ॥**
**उपानच्चर्महस्ता वा विकृतव्याधिपीडिताः ॥ १३ ॥**
**वामाचारा रुदन्तश्च श्वासिनो विकृतेक्षणाः ॥**
**याम्यां दिशं प्राञ्जलयो विषमैकपदे स्थिताः ॥ १४ ॥**
**वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥**

चेष्टितमधिकृत्याह,—छिन्दत इत्यादि। वस्त्रान्तः दशाहीनस्य वस्त्रस्यान्तम्, अनामिका पवित्राङ्गुलिः, केशाः मस्तकबालाः, रोमाणि शरीरोद्भवा बालाः, दशाः सदशस्य वस्त्रस्य प्रान्ताः। स्रोतोऽवरोधेत्यादि स्रोतः कर्णादिछिद्रं, अवरोधः स्कन्धदेशः, हृत् कमलमुकुलाकारमधोमुखं, गण्डः गल्लः, मूर्धा मस्तकं, उरः कण्ठहृदयान्तरालः, कुक्षिः वङ्क्षणपार्श्वान्तरालः। कपालोपलेत्यादि करशब्दः कपालादिभिः प्रत्येकं संबध्यते, तेन कपालकरा इत्यादि बोद्धव्यं; कपालः मूर्धास्थिखण्डः, उपलः पाषाणः, भस्म इति दग्धकाष्ठादिक्षारः, अस्थि हड्डुः, तुषं धान्यादित्वचः, अङ्गारः अर्धभस्मीकृतकाष्ठखण्डः। विलिखन्तो महीमित्यादि।—विलिखन्तः नखादिना विदारयन्तः पृथिवीमित्यर्थः, किंचिन्मुञ्चन्तः इति किंचिद्वस्तु हस्तेन गृहीतं मुञ्चन्तः, लोष्ट्रभेदिनः इति मृत्पिण्डस्फोटनशीला इत्यर्थः। दिग्धाङ्गाः इति लिप्ताङ्गा इत्यर्थः। रक्तस्रगनुलेपनाः रक्तमालाधारिणो रक्तविलेपनाश्चेत्यर्थः। फलमित्यादि।—असारमिति अभ्यन्तरसारवर्जितम्। अन्यच्च तद्विधमिति अन्यदपि वस्तु पक्कमसारं च। नखैर्नखान्तरं वापि करेण चरणं तथा इत्यत्र गृहीत्वा इति संवन्धः। उपानदित्यादि।—उपानत् पादहिता, चर्महस्ता वा इति चर्ममयदत्यादिधारिणः। विकृतव्याधिपीडिताः इति गलत्कुष्ठादिविकृतव्याधिपीडिताः। वामाचाराः इति विपरीतव्यवहाराः। श्वासिनः इति श्रमजनितश्वासयुक्ताः। विकृतेक्षणाः इति पुष्पितनेत्रादयः, याम्यां दिशि दक्षिणस्यां दिशि, प्राञ्जलयः प्रसारिताञ्जलयः। विषमैकपदे स्थिताः इति विषमे एकस्मिन् स्थाने ऊर्ध्वीभूताः। उपसर्पन्ति समीपं गच्छन्ति। चेष्टितमेव चेति चकारेणानुक्तापि वैद्यचेष्टा समुच्चीयते ॥ ९—१४ ॥

**दक्षिणाभिमुखं देशे त्वशुचौ वा हुताशनम् ॥—**
**ज्वलयन्तं पचन्तं वा क्रूरकर्मणि चोद्यतम् ॥ १५ ॥**
**नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाऽशुचिम् ॥**
**प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव वा ॥ १६ ॥**
**वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥**

तां दूतदर्शने निर्दिशन्नाह,—दक्षिणाभिमुखमिति दक्षिणदिङ्मुखं, देशे प्रदेशे। अशुचौ अपवित्रे। हुताशनं ज्वलयन्तं अग्निं ज्वालयन्तम्। पचन्तमिति पाकं कुर्वाणम्। क्रूरकर्मणि पशुवधादिके। उद्यन्तं उद्यमं कुर्वाणम्। क्षुरकर्मणि इत्येके पठन्ति, तत्र मुण्डनादिकर्मणि उद्यमं कुर्वाणमित्यर्थः। वेगोत्सर्गेषु इति मूत्रपूरीषोत्सर्गेषु। अशुचिमिति अपवित्रम्। प्रकीर्णकेशं विमुक्तकेशम्। अभ्यक्तं तैलादिना। स्विन्नं प्रस्वेदसहितम्। विक्लवं विह्वलम्। वैद्यं ये उपसर्पन्ति इत्यादि इत्थंभूतं वैद्यं ये दूता उपसर्पन्ति ते गर्हिताः निन्दिता भवन्तीत्यर्थः ॥ १५ ॥ १६ ॥—

**वैद्यस्य पैत्रे दैवे वा कार्ये चोत्पातदर्शने ॥ १७ ॥**
**मध्याह्ने चार्धरात्रे वा सन्ध्ययोः**

वेलामधिकृत्याह—वैद्यस्येति। पैत्र्ये पितृकार्ये, दैवे देवकार्ये, उत्पातदर्शने इति उत्पातानां भूमिदिव्यान्तरीक्षाणां दर्शने ॥ १७ ॥—

**कृत्तिकासु च ॥**
**आर्द्राश्लेषामघामूलपूर्वासु भरणीषु च ॥ १८ ॥**

नक्षत्रमधिकृत्याह,—कृत्तिकास्विति ॥ १८ ॥

**चतुर्थ्यां वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ॥**
**वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ १९ ॥**

तिथिमधिकृत्याह,—चतुर्थ्यामिति। सन्धिदिनेषु देवप्रेतकार्येषु ॥ १९ ॥

**खिन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः ॥**
**गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः ॥ २० ॥**
**त एव कफरोगेषु कर्मसिद्धिकराः स्मृताः ।**
**एतेन शेषं व्याख्यातं बुद्ध्वा संविभजेत्तु तत् ॥ २१ ॥**
**रक्तपित्तातिसारेषु प्रमेहेषु तथैव च ।**
**प्रशस्तो जलरोधेषु दूतवैद्यसमागमः ॥ २२ ॥**
**विज्ञायैवं विभागं तु शेषं बुध्येत पण्डितः ॥**

विशिष्टरोगेषु विशिष्टवेलादि दर्शयन्नाह,—खिन्नेति । खिन्नाभितप्ताः दूताः ज्वलनस्य समीपतः सन्निधानात् यदा वैद्यं मध्याह्ने उपसर्पन्ति तदा गर्हिता इति संबन्धः । एतेन शेषमित्यादि वातरोगे शीतप्रवातादिष्विति ज्ञेयं अशुभमित्यर्थः । रक्तपित्तेत्यादि । जलरोधेषु जलनिरोधयुक्तप्रदेशेषु । विज्ञायेत्यादि । शेषं बुध्येत इति उदावर्तमूत्रकृच्छ्रादौ जलवेगदर्शनादिकं प्रशस्तमिति जानीयात् ॥ २०—२२ ॥—

**शुक्लवासाः शुचिर्गौरः श्यामो वा प्रियदर्शनः॥२३॥**
**स्वस्यां जातौ स्वगोत्रो वा दूतः कार्यकरः स्मृतः ॥**
**गोयानेनागतस्तुष्टः पादाभ्यां शुभचेष्टितः ॥ २४ ॥**
**स्मृतिमान् विधिकालज्ञः स्वतन्त्रः प्रतिपत्तिमान् ॥**
**अलङ्कृतो मङ्गलवान् दूतः कार्यकरः स्मृतः ॥२५॥**
**स्वस्थं प्राङ्मुखमासीनं समे देशे शुचौ शुचिम् ॥**
**उपसर्पति यो वैद्यं स च कार्यकरः स्मृतः ॥ २६ ॥**

तथाऽविपरीतदूतदर्शनादिकं निर्दिशन्नाह,—शुक्लवासा इति । गोयानेन इति वृषभारूढो वृषभयुक्तयानारूढो वेत्यर्थः; अन्ये तु गोयानेन पशुयानेनेत्यर्थमाहुः, गोशब्दस्य पशुवाचित्वात्; एतेन याम्यादियानखरोष्ट्रादिकवर्जमश्वादियानमुक्तम् । स्वतन्त्रः स्वप्रधानः । प्रतिपत्तिमानिति प्रतिपत्तिः अत्र ज्ञानं प्रगल्भता वा । शुक्लवासाः शुचिर्गौर इत्यादिदर्शनमुक्तम् । शुभचेष्टित इत्यनेन चेष्टा उक्ता । अलङ्कृत इति वेश उक्तः । संभाषश्चात्र विपरीतसंभाषविषयोऽनुक्तोऽपि ज्ञेयः । तथाहि, तत्र रूक्षनिष्ठुरवक्तारं इत्युक्तं, अत्र तु तद्विपर्ययेण स्निग्धकोमलाभिधायिनमित्यविपरीतसंभाषो ज्ञेयः । तथा वेलानक्षत्रतिथीनामुक्तानामेव विपरीतत्वं ततोऽन्यदविपरीतत्वमिति । कथंभूतं वैद्यं उपसर्पन् दूतः कार्यकारी भवति इत्याह,—स्वस्थमिति । स्वस्थं आधिव्याधिवर्जितं, आसीनं उपविष्टं, शुचौ पवित्रे देशे, शुचिं वैद्यं, इत्थंभूतं वैद्यं यो दूत उपसर्पति स कार्यकारी । केचिन्निबन्धकारा अमुं पाठं न पठन्ति ॥ २३—२६ ॥

**मांसोदकुम्भातपत्रविप्रवारणगोवृषाः ॥**
**शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः ॥ २७ ॥**
**स्त्री पुत्रिणी सवत्सा गौर्वर्धमानमलङ्कृता ॥**
**कन्या मत्स्याः फलं चामं स्वस्तिकं मोदका दधि॥२८॥**
**हिरण्याक्षतपात्रं वा रत्नानि सुमनो नृपः ॥**
**अप्रशान्तोऽनलो वाजी हंसश्चाषः शिखी तथा॥२९॥**
**ब्रह्मदुन्दुभिजीमूतशङ्खवेणुरथस्वनाः ॥**
**सिंहगोवृषनादाश्च ह्रेषितं गजबृंहितम् ॥ ३० ॥**
**शस्तं हंसरुतं नृणां कौशिकं चैव वामतः ॥**
**प्रस्थाने यायिनः श्रेष्ठा वाचश्च हृदयङ्गमाः ॥ ३१ ॥**
**पत्रपुष्पफलोपेतान् सक्षीरान्निरुजो द्रुमान् ॥**
**आश्रिता वा नभोवेश्मध्वजतोरणवेदिकाः ॥ ३२ ॥**
**दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः ॥**
**वामा वा दक्षिणा वापि शकुनाः कर्मसिद्धये ॥ ३३ ॥**
**शुष्केऽशनिहते पत्रे वल्लीनद्धे सकण्टके ॥**
**वृक्षेऽथवाऽश्मभस्मास्थिविट्तुषाङ्गारपांशुषु ॥ ३४ ॥**
**चैत्यवल्मीकविषमस्थिता दीप्तखरस्वराः ॥**
**पुरतो दिक्षु दीप्तासु वक्तारो नार्थसाधकाः ॥ ३५ ॥**
**पुन्नामानः खगा वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ॥**
**दक्षिणाद्वामगमनं प्रशस्तं श्वशृगालयोः ॥**
**वामं नकुलचाषाणां नोभयं शशसर्पयोः ॥ ३६ ॥**
**भासकौशिकयोश्चैव न प्रशस्तं किलोभयम् ॥**
**दर्शनं वा रुतं चापि न गोधाकृकलासयोः ॥ ३७ ॥**
**दूतैरनिष्टैस्तुल्यानामशस्तं दर्शनं नृणाम् ॥**
**कुलत्थतिलकार्पासतुषपाषाणभस्मनाम् ॥ ३८ ॥**
**पात्रं नेष्टं तथाऽङ्गारतैलकर्दमपूरितम् ॥**
**प्रसन्नेतरमद्यानां पूर्णं वा रक्तसर्षपैः ॥ ३९ ॥**
**शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः ॥**
**नेष्यन्ते पतितान्तस्थदीनान्धरिपवस्तथा ॥ ४० ॥**

शकुनान् शुभाशुभानाह,—मांसेति । मांसमाममत्र । उदकुम्भ इति अत्रोदकुम्भशब्देन पूर्णो रिक्तश्च घटो गृह्यते; तत्रातुरगृहे प्रविशन् पूर्णः, आतुरगृहान्निःसरन् रिक्त इति गृह्यते । आतपत्रं छत्रं, वृषः वृषभः, शुक्लवर्णाः पदार्थाः कार्पासास्थितक्रभस्मक्षारादिव्यतिरिक्ताः सुमनोदध्यक्षतमौक्तिकादयः । पूज्यन्ते श्लाघ्यन्ते । गताः प्राप्ताः । वर्धमानं शरावं, अन्ये तु विशिष्टमेव दर्पणं मङ्गल्यार्थं चषकं वर्धमानमाचक्षते । अलङ्कृता कन्या भूषणवती कन्या । केचित् 'वर्धमाना स्वलङ्कृता' इति पठन्ति व्याख्यानयन्ति च, आलेपनधवलत्वादिस्वलङ्कृता तथा वर्धमाना इति । स्वस्तिकं मुक्तादामविशेषः, अन्ये स्वस्तिकं स्वस्तिकाकारं दूर्वाशकलमण्डितं धवलापर्णसिक्तं (?) मृण्मयं गोमयकृतं वा मङ्गल्यमवतारणकार्थं कुर्वते माङ्गलिकक्रियः । मोदकाः लड्डुकाः; हिरण्यं स्वर्णं, अन्ये कपर्दकान्याहुः; अक्षतं लाजाः, अन्ये अक्षतानि यवधान्यान्याहुः; पात्रं तण्डुलभृतशरावमिच्छन्ति । रत्नानि माणिक्यादीनि । सुमनः इति शोभनमानसमित्यर्थः, वैद्यस्येति शेषः । नृपः पृथ्वीपतिः, अन्ये तु शोभनचित्तो राजेति आहुः । अप्रशान्तोऽनलः प्रज्वलितवैश्वानरः । वाजी घोटकः । [illegible]षः करटासः । शिखी मयूरः । ब्रह्मदुन्दुभीत्यादि ।—ब्रह्म इति [illegible]दः, दुन्दुभिः निःस्वातः, जीमूतः मेघः, एतेषां स्वनाः शब्दाः । सिंहेत्यादि । ह्रेषितं वाजिध्वनिः । गजबृंहितं हस्तिस्वनः । रुतं

**समास्त्रिवृन्नागरकाभयास्यु-**
**र्भागार्धकं पूगफलं सुपक्वम् ॥**
**विडङ्गसारो मरिचं सदारु**
**योगः ससिन्धूद्भवमूत्रयुक्तः ॥ ९ ॥**
**विरेचनद्रव्यभवं तु चूर्णं**
**रसेन तेषां भिषजा विमृद्य ॥**
**तन्मूलसिद्धेन च सर्पिषाक्तं**
**सेव्यं तदाज्ये गुटिकीकृतं च ॥ १० ॥**
**गुडे च पाकाभिमुखे निधाय**
**चूर्णीकृतं सम्यगिदं विपाच्य ॥**
**शीतं त्रिजाताक्तमथो विमृद्य**
**योगानुरूपा गुटिकाःप्रयोज्याः ॥ ११ ॥**

सर्वविषयकान् योगानाह,—समा इति । भागार्धकमिति आदिद्रव्यापेक्षया पूगादिकं प्रत्येकं अर्धभागिकं ग्राह्यम् । विडङ्गसारः विडङ्गबीजानि, सिन्धूद्भवं सैन्धवं, तदप्यर्धभागेन ग्राह्यम् । ससैन्धवमूत्रयुक्तो योगः पेय इति संबन्धः । समे त्रिवृन्नागरे इति केचित् पठन्ति । अत्र केचित्पठन्ति, विरेचनेत्यादि । विरेचनद्रव्यभवं चूर्णं यदृच्छया ग्राह्यम् । रसेन तेषां विमृद्य तेषां वैरेचनद्रव्याणां रसेन भावना कार्येत्यर्थः, यावता चूर्णमार्द्रीभवति तावद्रसो देयः । भिषजा वैद्येन योगानुरूपा वटकाः प्रयोज्या इति संबन्धः । तन्मूलसिद्धेन च सर्पिषाक्तमिति विरेचनद्रव्यजटापक्केन घृतेन पुनरपि भावना कार्येत्यर्थः, यावता स्नैग्ध्यमुत्पद्यते तावन्मात्रं घृतं देयमित्यर्थः । सेव्यं सेवनीयं, तदाज्ये तस्मिन्नेव घृते, गुटिकीकृतं गुटिकारूपं कृतम् । निधाय निक्षिप्य, गुडोऽत्र द्विगुणो देयः, त्रिजातकमत्र यावता सौगन्ध्यं भवति ॥ ९—११ ॥

**वैरेकीयद्रव्यचूर्णस्य भागं**
**सिद्धं सार्धं क्वाथभागैश्चतुर्भिः ॥**
**आमृद्नीयात् सर्पिषा तच्छृतेन**
**तत्क्वाथोष्मस्वेदितं सामितं च ॥ १२ ॥**
**पाकप्राप्ते फाणिते चूर्णितं तत्**
**क्षिप्तं पक्कं चावतार्य प्रयत्नात् ॥**
**शीतीभूता मोदका हृद्यगन्धाः**
**कार्यास्त्वेते भक्ष्यकल्पाः समासात्॥१३**

मोदकभक्ष्यान्निर्दिशन्नाह,—वैरेकीयेति । वैरेकीयद्रव्याणां त्रिवृच्छयामादीनां ग्रहणम् । क्वाथभागैरिति विरेचनद्रव्यक्वाथभागैश्चतुर्भिर्मर्दयेदग्नौ, घृतेन विरेचनद्रव्यसिद्धेन, सामिताभागं गोधूमचूर्णं तुल्यभागं प्रक्षिप्य मर्दयित्वा ऊष्मणा स्वेदयित्वान्यस्मिन् फाणिते पाकप्राप्ते प्रक्षिप्य मोदकाः कार्याः ॥ १२ ॥ १३ ॥

**रसेन तेषां परिभाव्य मुद्गान्**
**यूषः ससिन्धूद्भवसर्पिरिष्टः ॥**
**वैरेचनेऽन्यैरपि वैदलैः स्या-**
**देवं विदध्याद्वमनौषधैश्च ॥ १४ ॥**

यूषकल्पं निर्दिशन्नाह,—रसेनेति । तेषामिति तेषां विरेचनद्रव्याणाम् । अन्ये त्वेवं पठन्ति—'मुद्गानां वा तद्रसे भावितानां यूषो कल्प्यः सघृतः सैन्धवाढ्यः' इति । तद्रसे प्रधानकल्पनया त्रिवृतारसे । वैरेचने इति विरेचनद्रव्यभावितैरन्यैरपि वैदलैः मसूरादिभिः यूषः स्यात् भवेदित्यर्थः । एष एव वमनीयादियूषाणां कर्ममार्गः ॥ १४ ॥

**भित्त्वा द्विधेक्षुं परिलिप्य कल्कै-**
**स्त्रिभण्डिजातैः प्रतिबध्य रज्ज्वा ॥**
**पक्कं च सम्यक् पुटपाकयुक्त्या**
**खादेत्तु तं पित्तगदी सुशीतम् ॥ १५ ॥**

पुटपाकक्रमविरेचनं निर्दिशन्नाह,—भित्त्वेति । भित्त्वा विदार्य । त्रिभण्डी शुक्ला त्रिवृत् । पुटपाकयुक्त्या पुटपाकक्रमेण शालाक्योक्तक्रियाकल्पनिर्दिष्टपुटपाकविधिना; तेन काश्मर्यादिपत्राच्छादनकुशपरिवेष्टनं मृदावलेपनं निर्धूमाङ्गारान्तरुपस्वेदनादि सर्वमतिदेशेन लभ्यते । अन्ये त्वेवं पठन्ति—"इक्षुं द्विधा पाटयित्वावलिप्य त्रिवृत्कल्कैः प्रतिसन्धाय वापि । पक्कं सम्यक् पुटपाकक्रमेण खादेच्छीतं पित्तरोगाभिभूतः ॥" व्याख्यानयन्ति च,—त्रिवृत्कल्कैरिति बहुवचनात् त्रिवृदादिकल्कैरिति आदिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः, तेनान्येषां वैरेचनिकानामयमेव पुटपाकविधिरिति द्योतयति ॥ १५ ॥

**सिताजगन्धात्वक्क्षीरीविदारीत्रिवृतः समाः ॥**
**लिह्यान्मधुघृताभ्यां तु तृड्दाहज्वरशान्तये॥१६॥**
**शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ॥**
**रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥ १७ ॥**
**पचेल्लेहं सिताक्षौद्रपलार्धकुडवोन्मितम् ॥**
**त्रिवृच्चूर्णयुतं शीतं पित्तघ्नं तद्विरेचनम् ॥ १८ ॥**
**त्रिवृच्छयामाक्षारशुण्ठीपिप्पलीर्मधुनाप्नुयात् ॥**
**सर्वश्लेष्मविकाराणां श्रेष्ठमेतद्विरेचनम् ॥ १९ ॥**
**बीजाढ्यपथ्याकाश्मर्यधात्रीदाडिमकोलजान् ॥**
**तैलभृष्टान् रसानम्लफलैरावाप्य साधयेत् ॥ २०**
**घनीभूतं त्रिसौगन्ध्यं त्रिवृत्क्षौद्रसमन्वितम् ॥**
**लेह्यमेतत्कफप्रायैः सुकुमारैर्विरेचनम् ॥ २१ ॥**
**नीलीतुल्यं त्वगेलं च तैस्त्रिवृत्ससितोपला ॥**
**चूर्णं संतर्पणं क्षौद्रफलाम्लं सन्निपातनुत् ॥२२॥**

इदानीं वैरेचनलेहानाह,—सितेत्यादि।सिता शर्करा;अजगन्धा जवानिका,बोथई इत्यन्ये; त्वक्क्षीरी वंशलोचना; विदारी बिडाली; त्रिवृत् 'निशोतर' इति लोके । शर्करेत्यादि । मरिचांशमिति अंशः चतुर्थो भागः । पचेदिति । सिता शर्करा तस्याः पलं, क्षौद्रं मधु, तस्यार्धकुडवः चत्वारि पलानि; त्रिवृल्लेहस्य चतुर्थांशेन अत्र मधुनोऽग्निसंयोगो न विरुध्यते अनवस्थानाच्च । त्रिवृदिति । श्यामा वृद्धदारकः, क्षारः यवक्षारः, आप्नुयात् लिह्यात् । बीजाढ्येति बीजाढ्यान् सुपक्वान् पथ्यादीन् सहैव बीजैः साधयेत्, तान् रसान् पथ्याधात्रीदाडिमकोमलजान्, एरण्डतै-

लमृष्टान् पुनः फलैः बीजपूरादिभिः सह आवाप्य प्रक्षिप्य साधयेत्; पथ्यादीनां यदृच्छया मात्रा, जले तु षोडशगुणे तेषां क्वाथः कर्तव्यः, एरण्डतैलमात्रा तु यावता तस्य भर्जनं संभवति, अम्लफलं तु क्वाथस्य चतुर्थांशेन, त्रिसौगन्ध्यमात्रा तु यावता सौगन्ध्यं भवति, त्रिवृत् क्षौद्रं तु प्रत्येकं लेहस्य चतुर्थांशेन। कफप्रायैः भूयिष्ठकफैः पुरुषैः सेव्यम्। नीलीतुल्यमिति नीलीफलतुल्यं त्वगेलं, नीली श्रीफलिका तैः नील्यादिभिः सह तुल्या त्रिवृत्, ससितोपला शर्करायुक्ता, सन्तर्पणं प्रीणनम्। केचित् सतर्पणमिति पठन्ति, व्याख्यानयन्ति च—तर्पणाः शक्तवः तैः सह युक्तं, क्षौद्रफलाम्लं मधुबीजपूराम्लरसेन सह चूर्णं देयम्। सन्निपातनुत् प्रशान्ते सन्निपाते अनुबन्धपरिरक्षणार्थमित्यर्थः ॥ १६—२२ ॥

**त्रिवृच्छ्यामासिताकृष्णात्रिफलामाक्षिकैः समैः॥**
**मोदकाः सन्निपातोर्ध्वरक्तपित्तज्वरापहाः॥ २३॥**

वैरेचनिकमोदकमाह,—त्रिवृदिति । श्यामा वृद्धदारकः । त्रिफलायाः प्रत्येकं भागाः समाः । यद्यप्यत्र भागश्रुतिर्नास्ति तथापि सितामाक्षिके पक्त्वा गुटिका कार्याः, सितामाक्षिके समस्तद्रव्येभ्यो द्विगुणे ग्राह्ये ॥ २३ ॥

**त्रिवृद्भागास्त्रयः प्रोक्तास्त्रिफला तत्समा तथा ॥**
**क्षारकृष्णाविडङ्गानि संचूर्ण्य मधुसर्पिषा ॥२४॥**
**लिह्याद्गुडेन गुटिकां कृत्वा वाप्यथ भक्षयेत् ॥**
**कफवातकृतान् गुल्मान् प्लीहोदरहलीमकान् २५**
**हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ॥**

लेहगुटिकयोः प्रयोगमाह,—त्रिवृदिति । त्रिफलाया अपि त्रयो भागाः, क्षारकृष्णाविडङ्गानामपि त्रयो भागा ग्राह्याः । निरपायं व्यापद्रहितम् ॥ २४ ॥ २५ ॥—

**चूर्णं श्यामात्रिवृन्नीली कट्वी मुस्ता दुरालभा २६**
**चव्येन्द्रबीजं त्रिफला सर्पिर्मांसरसाम्बुभिः॥**
**पीतं विरेचनं तद्धि रूक्षाणामपि शस्यते ॥ २७॥**

चूर्णमाह—चूर्णमिति । नीली निलिनी श्रीफलिकेति लोके । कट्वी कटुरोहिणी। रूक्षाणां सर्पिषा मांसरसेन च, स्निग्धानां पुनरपि शब्दसमुदितानामम्बुना पानीयेन सह योगो देयः ॥२६॥२७॥

**वैरेचनिकनिःक्काथभागाः शीतास्त्रयो मताः ॥**
**द्वौ फाणितस्य तच्चापि पुनरग्नावधिश्रयेत् ॥२८॥**
**तत् साधुसिद्धं विज्ञाय शीतं कृत्वा निधापयेत्॥**
**कलसे कृतसंस्कारे विभज्यर्तू हिमाहिमौ ॥२९॥**
**मासादूर्ध्वं जातरसमासवं मधुगन्धिकम् ॥**
**पिबेदसावेव विधिः क्षारमूत्रासवेष्वपि ॥ ३० ॥**

वैरेचनिकं गौडमासवं निर्दिशन्नाह,—वैरेचनिकेति । वैरेचनिकं द्रव्यं सेहुण्डवर्जितं ग्राह्यं, एकैव त्रिवृदित्येके । शीता इत्यनेन वैरेचनिकक्वाथे उष्णे फाणितं न योजयेदित्युक्तं भवति। द्वौ फाणितस्येति फाणितं काकवी । एतेन पञ्च भागाः क्वथनीया इत्यर्थः। साधुसिद्धमिति अर्धावशिष्टम्। पुनः शीतग्रहणेनोष्णं न सन्धातव्यमित्युक्तम्। त्रिवृदधिकारे वैरेचनिकक्वाथभागा इति सामान्यशब्दप्रयोगादपरवैरेचनिकानामप्येवमेवासव इति बोधयति । निधापयेत् क इत्याह,—कलसे । कथंभूते ? कृतसंस्कारे अन्तःक्षालितशुष्कस्य मधुपिप्पलीलेपोऽगुरुधूपनं चेति संस्कारः । विभज्यर्तू हिमाहिमौ इति हिमे मासं धान्यराशौ स्थाप्यं, अहिमे पुनरुष्णे पक्षमिति । जातरसं उत्पन्नरसं वरासवं पिबेदिति संबन्धः। जातरसस्य लक्षणमाह,—मधुगन्धिकमिति । असावेव विधिः क्षारमूत्रासवेषु इति अयमेव विधिश्चिकित्सितादौ वक्ष्यमाणक्षारोदकासवादिषु गुडमधुयोनिष्वन्येष्वप्यवलिप्तेष्विति हिमाहिमकालस्थापनस्य च पाकप्राप्तिलक्षणस्य चेति ॥ २८—३० ॥

**वैरेचनिकमूलानां क्वाथे माषान् सुभावितान् ॥**
**सुधौतांस्तत्कषायेण शालीनां चापि तण्डुलान् ॥३१**
**अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान्॥**
**शालितण्डुलचूर्णं च तत्कषायोष्मसाधितम् ॥ ३२ ॥**
**तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान् ॥**
**मण्डोदकार्थं क्वाथं च दद्यात्तत्सर्वमेकतः ॥ ३३ ॥**
**निदध्यात्कलसे तां तु सुरां जातरसां पिबेत् ॥**
**एष एव सुराकल्पो वमनेष्वपि कीर्तितः ॥ ३४ ॥**

पैष्टीं सुरां वैरेचनीं दर्शयन्नाह,—वैरेचनिकेति । त्रिवृदादिक्वाथेन माषविदलानि विभावयेदित्यर्थः। तत्कषायेण इति तेनैव वैरेचनिकक्वाथेन, अवक्षुद्यैकतः एकीकृत्य कुट्टयित्वेत्यर्थः । पिण्डान्कृत्वा इति किण्वनिमित्तं पिण्डं कृत्वेत्यर्थः। तत्कषायोष्मसाधितमिति त्रिवृदादिक्वाथोष्मस्वेदितम् । तस्य पिष्टस्य इत्यादि पिष्टपाचनिकायां शीतलीकृत्य पिष्टस्य भागांस्त्रीन् पूर्वकिण्वभागेनैकेन मिश्रितान् कृत्वेत्यर्थः। क्वाथं दद्यादिति त्रिवृदादेः। एतस्यैव योगस्यान्यत्राप्यतिदेशं निर्दिशन्नाह,—एष एवेत्यादि । एष एव सर्वपिष्टसुराणां विधिः, तथा वामनीयेषु मदनफलादिष्वपीत्यर्थः ॥ ३१—३४ ॥

**मूलानि त्रिवृतादीनां प्रथमस्य गणस्य च ॥**
**महतः पञ्चमूलस्य मूर्वाशार्ङ्गेष्टयोरपि ॥ ३५ ॥**
**सुधां हैमवतीं चैव त्रिफलातिविषे वचाम् ॥**
**संहृत्यैतानि भागौ द्वौ कारयेदेकमेतयोः ॥ ३६ ॥**
**कुर्यान्निःक्वाथमेकस्मिन्नेकस्मिन् चूर्णमेव तु ॥**
**क्षुण्णांस्तस्मिंस्तु निःक्काथे भावयेद् बहुशो यवान् ३७**
**शुष्काणां मृदुभृष्टानां तेषां भागास्त्रयो मताः ॥**
**चतुर्थं भागमावाप्य चूर्णानामनुकीर्तितम् ॥ ३८ ॥**
**प्रक्षिप्य कलसे सम्यक् समस्तं तदनन्तरम् ॥**
**तेषामेव कषायेण शीतलेन सुयोजितम् ॥**
**पूर्ववत्सन्निदध्यात्तु ज्ञेयं सौवीरकं हि तत् ॥ ३९ ॥**

सौवीरकं वैरेचनमम्लसन्धानं निर्दिशन्नाह,—मूलानीति । त्रिवृदादीनां संशोधनसंशमनीयोक्तानां ग्रहणम् । प्रथमो गणः विदारिगन्धादिः; मूर्वा चोरस्नायुः; शार्ङ्गेष्टा कोठकरञ्जः, विरापा-

टिकेत्यन्ये, अपरे तु काकजङ्घामाहुः; सुधा सेहुण्डः; हैमवती श्वेतवचा । एतानि सर्वाण्यपि त्रिवृदादीनि संहृत्य एकीकृत्य द्वौ भागौ कारयेत् । ततश्च एतयोः द्वयोर्भागयोर्मध्ये एकस्मिन् भागे एकं निःक्वाथं कुर्यात्, एकस्मिंस्तु भागे चूर्णं कुर्यात्।क्षुण्णान् कुट्टितान्। पूर्वोक्ते निःक्वाथे सप्ताहं यावत् भावयेत्। तेषां यवानाम्। आवाप्य निक्षिप्य। चूर्णानां पूर्वोक्तोद्धरितत्रिवृदादिद्रव्यैकभागचूर्णानाम्।अत्र अस्मिन् शास्त्रे। कीर्तितं कथितम्। सौवीरकं हितं ज्ञेयमिति संबन्धः। ततः तस्मात् चूर्णभागनिक्षेपणादनन्तरं कलसे प्रक्षिप्य तत् सौवीरकं तदनन्तरं तेषामेव त्रिवृदादीनां अन्यतमस्य कषायेण क्वाथेन शीतलेन सुयोजितं पूर्ववत् संनिदध्यादिति संबन्धः। सौवीरकं सौवीरकसंज्ञम् ॥ ३५—३९ ॥

**पूर्वोक्तं वर्गमाहृत्य द्विधा कृत्वैकमेतयोः ॥**
**भागं संक्षुद्य संसृज्य यवान् स्थाल्यामधिश्रयेत् ४०**
**अजशृङ्ग्याः कषायेण तानभ्यासिच्य साधयेत् ॥**
**सुसिद्धांश्चावतार्यैतानौषधिभ्यो विवेचयेत् ॥ ४१ ॥**
**विसृद्य सतुषान् सम्यक् ततस्तान् पूर्ववन्मितान् ॥**
**पूर्वोक्तौषधभागस्य चूर्णं दत्त्वा तु पूर्ववत् ॥ ४२ ॥**
**तेनैव सह यूषेण कलसे पूर्ववत्क्षिपेत् ॥**
**ज्ञात्वा जातरसं चापि तत्तुषोदकमादिशेत्॥४३॥**
**तुषाम्बुसौवीरकयोर्विधिरेष प्रकीर्तितः ॥**
**षड्रात्रात् सप्तरात्राद्वा ते च पेये प्रकीर्तिते॥४४॥**

तुषोदककल्पं निर्दिशन्नाह,—पूर्वोक्तमिति । त्रिवृदादिमूलं विदारिगन्धादिस्तथा महत् पञ्चमूलं मूर्वा शार्ङ्गेष्ठा चेति पूर्वोक्तो वर्गः । द्विधा कृत्वा द्वौ भागौ कृत्वेत्यर्थः। एतयोः भागयोर्मध्ये एकं भागं संक्षुद्य कुट्टयित्वा, सतुषैर्यवैः सह संसृज्य संबद्धीकृत्य, स्थाल्यां अधिश्रयेत् निक्षिपेत् । यवानामेको भागः । अजशृङ्गी विषाणिकेत्यपरे । तं पूर्वोक्तं सयवं भागं, साधयेत् रन्धयेत् । सुसिद्धान् सुखिन्नान्, एतान् यवान् औषधेभ्यो विवेचयेद् पृथक् कुर्यात् । तान् यवान् । पूर्ववन्मितान् भागद्वयं परिमितान्, पूर्वोक्तौषधभागस्योद्धरितस्य इति शेषः, पूर्ववच्चतुर्थभागप्रमाणमित्यर्थः। तेनैव सह यूषेण इति प्रोक्तखिन्नौषधवर्गयवाजशृङ्गीकषायेणोद्धृतौषधयवेन; स पुनरौषधसंसर्गेण घनत्वाद् यूष इव जातः । जातरसं व्यक्ताम्लम् । तयोः सौवीरकतुषोदकयोः व्यक्ताम्लत्वे कालावधिं दर्शयन्नाह,—षड्रात्रात् सप्तरात्राद्वा; षड्रात्रसप्तरात्रविकल्पोऽप्युष्णशीतकालापेक्षः ॥ ४०—४४ ॥

**वैरेचनेषु द्रव्येषु त्रिवृन्मूलविधिः स्मृतः ॥**

सौवीरकतुषोदके त्रिवृद्विधानं सप्रपञ्चमुद्दिश्य त्रिवृद्विधानप्रकारातिदेशेनावशिष्टवैरेचनमूलानि निर्देष्टुमाह,—वैरेचनेष्विति । वैरेचनेषु सर्वेषु इति अवशिष्टेषु श्यामादन्तीद्रवन्तीसप्तलादिषु । त्रिवृन्मूलविधिः स्मृतः इति यादृशस्त्रिवृन्मूले विधिरुक्तस्तादृशस्तेष्वपि ज्ञेय इत्यर्थः । तद्यथा—श्यामामूलं श्यामास्वरसभावितं वा चूर्णितं सैन्धवनागरयुक्तं अम्लैः अनिलव्याधौ, मधुरक्वाथसहितं शर्करादिभिस्तुल्यभागं गोक्षीरयुक्तं पित्ते इत्यादि यावत् सौवीरकतुषोदकविधिः; एवं प्रतिशेषं वैरेचनिकमेवेहोदाहार्यं । विषयोऽपि तेषां वैरेचनिकमूलकल्पानां प्रतित्रिवृत्कल्पविषय एवेति ॥—

**दन्तीद्रवन्त्योर्मूलानि विशेषान्मृत्कुशान्तरे॥४५॥**
**पिप्पलीक्षौद्रयुक्तानि खिन्नान्युद्धृत्य शोषयेत् ॥**
**ततस्त्रिवृद्विधानेन योजयेत् श्लेष्मपित्तयोः॥ ४६॥**

सामान्यातिदेशं निर्दिश्य दन्तीद्रवन्त्योर्विशिष्टं कल्पनमाह-दन्तीत्यादि । दन्तीद्रवन्त्योर्मूलान्युद्धृत्य शोषयेदिति संबन्धः । किंविशिष्टानि ? खिन्नानि, कस्मात् विशेषात् अतिशयेन । क्वेत्याह,—मृत्कुशान्तरे मृत्तिकादर्भमध्ये पुटपाकविधानेन इत्यर्थः । पिप्पलीक्षौद्रयुक्तानि खिन्नानीति संबन्धः । दन्ती प्रसिद्धा । द्रवन्ती चीरितपत्रा संबरीति लोके ॥४५॥४६॥

**तयोः कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ॥**
**सर्पिश्च पक्वं वीसर्पकक्षादाहालजीर्जयेत् ॥ ४७ ॥**
**मेहगुल्मानिलश्लेष्मविबन्धांस्तैलमेव च ॥**
**चतुःस्नेहं शकृच्छुक्रवातसंरोधजा रुजः ॥ ४८ ॥**

तयोरिति । तयोः दन्तीद्रवन्त्योः । कल्ककषायमात्रायाः परिभाषा स्मरणीया तामाश्रित्य कल्पनोच्यते—तैलपलानि द्वात्रिंशत्, दन्तीकल्कपलान्यष्टौ, दन्तीद्रवन्तीक्वाथस्य पलानि शतमेकमष्टाविंशत्यधिकं, तावत् क्वाथ्यं यावत्तैलपाकलक्षणम्। दन्तीद्रवन्तीक्वाथस्यायं विधिः—पानीयपलानि पञ्चशतानि द्वादशाधिकानि, दन्तीद्रवन्तीपलानि शतमेकं, क्वाथशेषमेकशतमष्टाविंशत्यधिकं, इति क्वाथकल्पना । अन्यत्राप्यनुक्ततैलादिमाने इयमेव कल्पना ज्ञेया । चक्रतैलमिति चक्रपीडितं तिलतैलं हस्तादियन्त्रपीडननिषेधार्थं, चक्रे ह्यभृष्टा एव तिलादयः पीड्यन्ते ते पुनर्गुणवत्तरा भवन्ति, यन्त्रेण भर्जनरूक्षितानां तिलानां स्नेहगुरुत्वादयो गुणा हीयन्ते इति । सर्पिश्चेति ताभ्यां दन्तीद्रवन्तीमूलकल्ककषायाभ्यां प्रत्येकं पक्वं सिद्धं सर्पिर्विसर्पादीन् जयेत् । पुनर्दन्त्याः कल्कं द्रवन्त्यास्तु कषाय इति बोद्धव्यम् । तैलमेव चेति चक्रतैलं पुनर्मेहगुल्मादीन् जयेत् । चतुरिति चतुःस्नेहमिति घृततैलवसामज्जानश्चत्वारः स्नेहाः । शकृत् पुरीषम् । चतुःस्नेहं दन्तीद्रवन्तीसाधितं वातसंरोधजा रुजा जयेदिति संबन्धः । अत्र द्रवस्यानुक्तत्वाच्चतुर्गुणं जलं देयम् ॥ ४७ ॥ ४८ ॥

**दन्तीद्रवन्तीमरिचकनकाह्वयवासकैः ॥**
**विश्वभेषजमृद्वीकाचित्रकैर्मूत्रभावितम् ॥ ४९ ॥**
**सप्ताहं सर्पिषा चूर्णं योज्यमेतद्विरेचनम् ॥**
**जीर्णे सन्तर्पणं क्षौद्रं पित्तश्लेष्मरुजापहम् ॥**
**अजीर्णपार्श्वरुक्पाण्डुप्लीहोदरनिबर्हणम् ॥ ५० ॥**

दन्तीत्यादि । दन्ती सम्बरी; कनकाह्वयं कङ्कुष्ठं, नागकेसरमित्यन्ये; यवासः दुरालभा; विश्वभेषजं शुण्ठी । सप्ताहं मूत्र-

भावितमिति संबन्धः । सर्पिषा इति अस्य चूर्णस्य घृतेन वा लेहः कार्य इत्यर्थः । अस्यैव प्रयोगस्य यौगिकमनुसंग्रहमाह,—जीर्णेत्यादि । जीर्णे तस्मिन्नौषधे, सन्तर्पणं क्षौद्रमिति लाजशक्तुसहितं मधु देयम् ॥ ४९ ॥ ५० ॥

**गुडस्याष्टपले पथ्या विंशतिः स्युः पलं पलम् ॥**
**दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ५१॥**
**कृत्वैतान्मोदकानेकं दशमे दशमेऽहनि ॥**
**ततः खादेदुष्णतोयसेवी निर्यन्त्रणास्त्विमे॥५२॥**
**दोषघ्ना ग्रहणीपाण्डुरोगार्शःकुष्ठनाशनाः ॥**

मोदकस्य प्रयोगमाह,—गुडस्येति । अष्टौ पलानि गुडस्य, विंशतिर्हरीतकीफलानि, दन्तीमूलचूर्णपलं, चित्रकमूलचूर्णपलं च, पिप्पलीकर्षः, त्रिवृत्कर्षश्च । अत्र तु सप्तगुञ्जाफलपरिमितमाषकप्रमाणेन पलादिमानं ग्राह्यम् । दश कृत्वैतान्मोदकानित्यादि दश मोदकान् कृत्वा एकं मोदकं दशमे दशमेऽहनि खादेदिति संबन्धः । निर्यन्त्रणा वातातपादिनिषेधरहिता । इमे मोदकाः ॥ ५१ ॥ ५२ ॥—

**व्योषं त्रिजातकं मुस्ता विडङ्गामलके तथा ॥५३॥**
**नवैतानि समांशानि त्रिवृदष्टगुणानि वै ॥**
**श्लक्ष्णचूर्णीकृतानीह दन्तीभागद्वयं तथा ॥ ५४॥**
**सर्वाणि चूर्णितानीह गालितानि विमिश्रयेत् ॥**
**षड्भिश्च शर्कराभागैरीषत्सैन्धवमाक्षिकैः ॥५५॥**
**पिण्डितं भक्षयित्वा तु ततः शीताम्बु पाययेत् ॥**
**बस्तिरुक्तृड्ज्वरच्छर्दिशोषपाण्डुभ्रमापहम् ५६**
**निर्यन्त्रणमिदं सर्वं विषघ्नं तु विरेचनम् ॥**
**त्रिवृदष्टकसंज्ञोऽयं प्रशस्तः पित्तरोगिणाम् ५७**
**भक्ष्यः क्षीरानुपानो वा पित्तश्लेष्मातुरैर्नरैः ॥**
**भक्ष्यरूपसधर्मत्वादाढ्येष्वेव विधीयते ॥ ५८ ॥**

व्योषादिशीतविरेचनं दर्शयन्नाह,—व्योषमिति । व्योषादीनि प्रसिद्धानि । त्रिवृदष्टगुणानि इति त्रिवृदष्टगुणा येषु तानि । ईषत् सैन्धवमाक्षिकैः इति ईषच्छब्दश्चतुर्थांशवाचकः । भक्ष्यः भक्षणीयः । भक्ष्यरूपसधर्मत्वात् भक्ष्यरूपतुल्यादित्यर्थः । वातश्लेष्मातुरैर्नरैरिति केचित् पठन्ति ॥ ५३—५८ ॥

**तिल्वकस्य त्वचं बाह्यामन्तर्वल्कविवर्जिताम् ॥**
**चूर्णयित्वा तु द्वौ भागौ तत्कषायेण गालयेत्५९**
**तृतीयं भावितं तेन भागं शुष्कं तु भावितम् ॥**
**दशमूलकषायेण त्रिवृद्वत्संप्रयोजयेत् ॥ ६० ॥**

त्वक्प्रसाधनकस्य तिल्वकस्य प्रयोगं निर्दिदिक्षुः प्रथमं तस्य संस्कारमेव सर्वप्रयोगविषयमाह,—तिल्वकस्येति । अन्तर्वल्कविवर्जितामिति अभ्यन्तरकठिनत्वग्विवर्जिताम् । भागौ इति द्वौ भागावित्यर्थः । तत्कषायेण तिल्वककषायेण । गालयेत् क्षारकल्पेन, गालनं पुनरिहैकविंशतिवारान् पारम्पर्यात् । तृतीयं भावितं तेन भागमिति अपरं चूर्णस्य स्थापितं तृतीयं भागं तेनैव तिल्वककषायजलेन चतुर्थभागद्वयगालनलब्धगुणातिशयेन भावितमित्यर्थः । शुष्कं तु भावितं दशमूलकषायेण इति तृतीयं भागं शुष्कं पुनः संतं दशमूलीकषायेण भावितं त्रिवृद्वत् संप्रयोजयेदिति संबन्धः ॥ ५९—६० ॥

**विधानं त्वक्षु निर्दिष्टं फलानामथ वक्ष्यते ॥**
**हरीतक्याः फलं त्वस्थिविमुक्तं दोषवर्जितम् ॥६१॥**
**योज्यं त्रिवृद्विधानेन सर्वव्याधिनिबर्हणम् ॥**
**रसायनं परं मेध्यं दुष्टान्तर्व्रणशोधनम् ॥ ६२ ॥**
**हरीतकीविडङ्गानि सैन्धवं नागरं त्रिवृत् ॥**
**मरिचानि च तत्सर्वं गोमूत्रेण विरेचनम् ॥६३॥**
**हरीतकी भद्रदारु कुष्ठं पूगफलं तथा ॥**
**सैन्धवं शृङ्गवेरं च गोमूत्रेण विरेचनम् ॥ ६४ ॥**
**नीलिनीफलचूर्णं च नागराऽभययोस्तथा ॥**
**लिह्याद् गुडेन सलिलं पश्चादुष्णं पिबेन्नरः ॥६५॥**
**पिप्पल्यादिकषायेण पिबेत्पिष्टां हरीतकीम् ॥**
**सैन्धवोपहितः सद्य एष योगो विरेचयेत् ॥६६॥**
**हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ॥**
**सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ६७ ॥**
**वातानुलोमनी वृष्या चेन्द्रियाणां प्रसादनी ॥**
**सन्तर्पणकृतान् रोगान् प्रायो हन्ति हरीतकी६८॥**

फलप्रधानहरीतकीकल्पेनाशेषवैरेचनिकफलकल्पं निर्दिशन्नाह,—हरीतक्या इति । अधिशब्दोऽयं दोषेषु व्याधिषु च वर्तते । सर्वेषां हरीतकीयोगानां सामान्यं फलं दर्शयन्नाह,—हरीतकीति । मात्राप्रमाणं मध्येषु कोष्ठवयोबलेषु चूर्णकर्षः, उत्तमाधमयोर्बुद्ध्या विकल्पनीयः । हरीतकीति सातत्येन निरन्तरोपयोगेन, सन्तर्पणकृता रोगाः तृष्यादयः, तानुष्णत्वाद्दीपनत्वाच्च शमयतीति । अत्र नागरगुडसैन्धवादीनां भिन्नकार्याणां दोषदेहधातुबलकालवयोऽवस्थान्तरविकारापेक्षया व्यवस्थितविकल्पः ॥ ६१—६८ ॥

**शीतमामलकं रूक्षं पित्तमेदःकफापहम् ॥**
**विभीतकमनुष्णं तु कफपित्तनिबर्हणम् ॥ ६९ ॥**
**त्रीण्यप्यम्लकषायाणि सतिक्तमधुराणि च ॥**

हरीतकीनिर्देशानन्तरमामलकविभीतकयोरपि गुणनिर्देशमाह,—शीतमिति । सतिक्तमधुराणि च इति प्रत्येकं हरीतक्यादिमुक्ता शक्तिर्गुणतः संयोगतः प्रभावतश्च ॥ ६९ ॥—

**त्रिफला सर्वरोगघ्नी त्रिभागघृतमूर्च्छिता ॥ ७० ॥**
**वयसः स्थापनं चापि कुर्यात् सततसेविता ॥**

इदानीं त्रिफलायाः प्रयोगमाह,—त्रिफलेति । दोषशब्दोऽत्र त्रिदोषवचनो व्याधिवचनो वा । मूर्च्छिता संयुक्ता ॥ ७० ॥—

**हरीतकीविधानेन फलान्येवं प्रयोजयेत् ॥ ७१ ॥**
**विरेचनानि सर्वाणि**

विरेचनानि सर्वाणीत्यादि ॥ ७१ ॥—

**विशेषाच्चतुरङ्गुलात् ॥**
**फलकाले समुद्धृत्य सिकतायां निधापयेत् ॥७२॥**

**सप्ताहमातपे शुष्कं ततो मज्जानमुद्धरेत् ॥**
**तैलं ग्राह्यं जले पक्त्वा तिलवद्वा प्रपीड्य च॥७३॥**
**तस्योपयोगो बालानां यावद्वर्षाणि द्वादश ॥**
**लिह्यादेरण्डतैलेन कुष्ठं त्रिकटुकान्वितम् ॥ ७४ ॥**
**सुखोदकं चानुपिबेदेष योगो विरेचयेत् ॥**

चतुरङ्गुलात् किरमालकात्, समुद्धृत्य फलमिति शेषः । सिकतायां वालुकायां, निधापयेत् निक्षिपेत्, सप्ताहमिति संबन्धः । ततः तस्मात् चतुरङ्गुलफलात् । लिह्यादिति । एष योगः वातकफप्रशमनः ॥ ७२—७४ ॥—

**एरण्डतैलं त्रिफलाक्काथेन त्रिगुणेन तु ॥ ७५ ॥**
**युक्तं पीतं तथा क्षीररसाभ्यां तु विरेचयेत् ॥**
**बालवृद्धक्षतक्षीणसुकुमारेषु योजितम् ॥ ७६ ॥**

एरण्डतैलमिति । त्रिगुणेन त्रिफलाक्काथेन युक्तं तथा क्षीररसाभ्यां युक्तमिति संबन्धः । रसः मांसरसः । बालादिषु योजितमेरण्डतैलं विरेचयेदिति संबन्धः ॥ ७५ ॥ ७६ ॥

**फलानां विधिरुद्दिष्टः क्षीराणां शृणु सुश्रुत ! ॥**
**विरेचनानां तीक्ष्णानां पयः सौधं परं मतम्॥७७॥**
**अज्ञप्रयुक्तं तद्धन्ति विषवत् कर्मविभ्रमात् ॥**
**विजानता प्रयुक्तं तु महान्तमपि संचयम् ॥७८॥**
**भिनत्त्याश्वेव दोषाणां रोगान् हन्ति च दुस्तरान्**

फलानामित्यादि । सौधं सेहुण्डभवम् । कर्मविभ्रमात् कर्माविज्ञानात्, दोषाणां संचयमिति संबन्धः । आश्वेव शीघ्रमेव ॥ ७७ ॥ ७८ ॥—

**महत्याः पञ्चमूल्यास्तु बृहत्योश्चैकशः पृथक् ७९**
**कषायैः समभागं तु तदङ्गारैर्विशोषितम् ॥**
**अम्लादिभिः पूर्ववत् प्रयोज्यं कोलसंमितम्॥८०॥**
**महावृक्षपयःपीतैर्यवागूस्तण्डुलैः कृता ॥**
**पीता विरेचयत्याशु गुडेनोत्कारिका कृता ॥८१॥**
**लेहो वा साधितः सम्यक् स्नुहीक्षीरपयोघृतैः ॥**
**भावितास्तु स्नुहीक्षीरे पिप्पल्यो लवणान्विताः८२**
**चूर्णं काम्पिल्लकं वापि तत्पीतं गुटिकीकृतम् ॥**

महत्या इत्यादि । महती पञ्चमूली बिल्वादिका । बृहत्योरिति स्थूलबृहती लघुबृहती चेति द्वे बृहत्यौ । एकशः इत्यादि एकीकृत्य अङ्गारेषु विशोषयेत्, न ज्वलदग्नौ पाकखरताभयात् । तत् सेहुण्डदुग्धं पृथक् कषायैः समभागं ग्राह्यम् । एतेन पञ्चमूलीबृहतीकषायाणां सप्त भागाः, अष्टमस्तु सेहुण्डदुग्धस्य । अम्लादिभिः काञ्जिकमस्तुसुरादिभिः; पूर्ववत् त्रिवृद्वत्, कोलसंमितं कर्षप्रमाणम् । महावृक्षेति महावृक्षः सेहुण्डः । पीतैः भावितैः । गुडे चेत्यादि गुडे च कृता उत्कारिका विरेचयतीति संबन्धः । उत्कारिका लप्सिका । तस्याः कल्पना—गोधूमान् भावयित्वा स्नुहीक्षीरेण चूर्णीकृत्य घृतक्षीरादिभिः संयोवे उत्कारिका पचनीया गुडेन । लेह इति लेहस्य कल्पना कथ्यते—स्नुहीक्षीरभावितस्य गोधूमचूर्णस्य लेहः साध्यः । अन्ये तु स्नुहीक्षीरसिताघृतैरिति पठन्ति । तन्मते पयोऽप्युत्कारिकायामिवानुक्तमपि लेहे देयम् । लेहो विरेचयतीत्यत्राप्यनुवर्तते । भाविताः इति विरेचयन्तीत्यत्राप्यनुवर्तते । चूर्णमिति । तत्पीतं स्नुहीक्षीरभावितम् । अत्रापि विरेचयतीत्यनुवर्तते ॥ ७९—८२ ॥—

**सप्तला शङ्खिनी दन्ती त्रिवृदारग्वधं गवाम्॥८३॥**
**मूत्रेणाप्लाव्य सप्ताहं स्नुहीक्षीरे ततः परम् ॥**
**कीर्णं तेनैव चूर्णेन माल्यं वसनमेव च ॥ ८४ ॥**
**आघ्रायावृत्य वा सम्यक् मृदुकोष्ठो विरिच्यते ॥**

सप्तलेति । सप्तला सेहुण्डभेदः, शङ्खिनी यवतिक्ता तस्याः फलं मूलं च विरेचकं, अन्ये शङ्खिनी यवतिक्ताभेद इत्याहुः; अपरे तु श्वेतबुझामाहुः । दन्ती दन्तिनी, आरग्वधः किरमालकः । आप्लाव्य भावयित्वा । कीर्णं अवचूर्णितं, तेनैव सप्तलादिचूर्णेन, माल्यं पुष्पं, आघ्राय शिङ्घित्वा, तेनैव चूर्णेन कीर्णं भावितं वसनं वस्त्रमावृत्य परिधाय, मृदुकोष्ठो विरिच्यते नान्य इत्यर्थः ॥ ८३ ॥ ८४ ॥—

**क्षीरत्वक्फलमूलानां विधानैः परिकीर्तितैः ॥**
**अवेक्ष्य सम्यग्रोगादीन् यथावदुपयोजयेत् ॥८५॥**
**त्रिवृच्छाणमितास्तिस्रस्तिस्रश्च त्रिफलात्वचः ॥**
**विडङ्गपिप्पलीक्षारशाणास्तिस्रश्च चूर्णिताः॥८६॥**
**लिह्यात् सर्पिर्मधुभ्यां च मोदकं वा गुडेन वा ॥**
**भक्षयेन्निष्परीहारमेतत् श्रेष्ठं विरेचनम् ॥ ८७ ॥**
**गुल्मान् प्लीहोदरं कासं हलीमकमरोचकम् ॥**
**कफवातकृतांश्चान्यान् व्याधीनेतद् व्यपोहति८८**

क्षीरत्वगिति । शाणः कर्षचतुर्थो भागः ॥ ८५—८८ ॥

**घृतेषु तैलेषु पयःसु चापि**
**मद्येषु मूत्रेषु तथा रसेषु ॥**
**भक्ष्यान्नलेह्येषु च तेषु तेषु**
**विरेचनान्यग्रमतिर्विदध्यात् ॥ ८९ ॥**

अनुक्तान्नपानेषु प्रयोगकल्पान्निर्दिशन्नाह,—घृतेष्विति । भक्ष्यं मोदकशष्कुल्यादि, अन्नं भक्तादि, अग्र्यमतिः अतिप्रधानबुद्धिः ॥ ८९ ॥

**क्षीरं रसः कल्कमथो कषायः**
**शृतश्च शीतश्च तथैव चूर्णम् ॥**
**कल्पाः षडेते खलु भेषजानां**
**यथोत्तरं ते लघवः प्रदिष्टाः ॥ ९० ॥**

क्षीरमिति । "यन्त्रादिपीडितद्रव्यरसः स्वरस उच्यते । यः पिण्डश्चार्द्रपिष्टानां स कल्कः परिकीर्तितः ॥ वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः । उपोषितं निशायां तु तोयस्थं शीतमुच्यते ॥ चूर्णमुष्णेन संपृक्तं तत् फाण्टमभिधीयते । अभिभूयाम्बुनोष्णेन क्षणात् पूतमितीतरे ॥" फाण्टलक्षणं प्रसङ्गादुक्तम् । कषायो द्विविधः—शृतकषायः, शीतकषायश्च । ते तु षट्कल्पा भवन्ति । कल्पः विधेयः । अन्ये त्वेवं पठन्ति "चूर्णं कषायः शिशिरः शृतश्च फाण्टं च कल्कः स्वरसस्तथैव ।

पञ्चैव कल्पाः खलु भेषजानां यथोत्तरं ते गुरवः प्रदिष्टाः" इति। ते तु स्वरस एव क्षीरमन्तर्भावयन्ति, फाण्टं शीतकषायेऽन्तर्भावयन्ति ॥ १० ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतटीकायां सूत्रस्थाने चतुश्चत्वारिंशत्तमोऽध्यायः। ✓

## पञ्चचत्वारिंशत्तमोऽध्यायः।

**अथातो द्रवद्रव्यविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

द्रवद्रव्याणीति। द्रवद्रव्याणि पानीयक्षीरादीनि, तेषां विधिः विधानं भेद इत्यर्थः ॥ १ ॥ २ ॥

**पानीयमान्तरीक्षमनिर्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमक्लमपिपासामदमूर्च्छातन्द्रानिद्रादाहप्रशमनमेकान्ततः पथ्यतमं च ॥ ३ ॥**

पानीयमिति। अन्तरीक्षादागतं आन्तरीक्षं, न तु तत्र भवं, कुतः? मेघजत्वात्; तत्र जातं चेत्येके। अनिर्देश्यरसं अव्यक्तरसं अप्रकटरसमित्यर्थः, अल्पल्परसत्वात्; न पुनस्तस्य रसो नास्ति। अमृतमिति अमृतमिवेत्यर्थः, अमृतत्वं पुनरस्य दोषप्रकोपस्याकरणात्; अमृतं ब्रह्मरूपमित्यन्ये। जीवनं प्राणधारणम्। सौम्यं धातुवृद्धिकरमिति केचित्, ओजोवृद्धिकरमित्यन्ये। तर्पणं तृप्तिजनकम्। धारणमिति शस्त्रपातादिव्यथासु मूर्च्छतां शरीरं दधातीति धारणम्। आश्वासजननमिति मार्गादिशुष्कदेहानां प्राणजननम्। श्रमेत्यादि प्रशमनशब्दः श्रमादिभिः सह प्रत्येकमभिसंबध्यते; श्रमादीनां प्रशमनमित्यर्थः; बह्वायासकृतं कष्टं श्रमः; अल्पायासकृतः श्रम एव क्लमः; मदः पूगफलेनेव मत्तता, स च विषमद्यशोणितोत्थो विकारः; तन्द्रानिद्रयोः कफवातकृतयोरपि प्रशमनं स्पर्शेन, या तु स्वाभाविका निद्रा तां करोत्येव पीतं सत्, तन्द्रा निद्राभेदः, निद्रा प्रसिद्धैव। एकान्ततः पथ्यतममिति एकान्ततः अतिशयेनेत्यर्थः, तर्हि तमप्प्रत्ययः कथं? उच्यते स्वार्थिकत्वात्; एतेनातिशयेन पथ्यमित्यर्थः; अन्येषामाकाशगुणभूयिष्ठभूमिसलिलानां पथ्यानां प्रकृष्टं पथ्यं पथ्यतमं; एकान्तग्रहणेन सर्वकालदेशपुरुषव्याधिषु प्रयोगोऽस्य द्योत्यत इत्येके; तमप्प्रत्ययेन स्वस्थस्यातिशयेन हितमित्यभिहितमित्यपरे ॥ ३ ॥

**तदेवावनिपतितमन्यतमं रसमुपलभते स्थानविशेषान्नदीनदसरस्तडागवापीकूपचुण्टीप्रस्रवणोद्भिदविकिरकेदारपल्वलादिषु स्थानेषु अवस्थितमिति ॥ ४ ॥**

तस्यानिर्देश्यरसस्यापि निर्देश्यरसत्वे कारणं निर्दिशन्नाह,—तदिति। तदेवावनिपतितं आन्तरिक्षं जलं भूमिप्राप्तं; अन्यतमं मधुरादिष्वेकतमं; उपलभते प्राप्नोतीत्यर्थः; स्थानविशेषात् देशभेदादित्यर्थः। के पुनस्ते स्थानविशेषा इत्याह,—नदीत्यादि। नद्यः गङ्गाद्याः; नदाः सिन्धुशोणादयः; सरः दिव्यख्यातं पुरुषव्यापारं विना; पुरुषव्यापारकृतः तडागः, 'तलाव' इति लोके, केचिद्विपर्ययेणार्थमाहुः; वापी इष्टकादिभिर्बद्धा ससोपानतीर्था, पुष्करिणीति लोके; कूपः मृत्तिकेष्टकादिभिर्बद्धोऽसोपानः; चुण्टी अबद्धकूपः; प्रस्रवणं उच्चप्रदेशात् प्रस्रवज्जलस्थानं पर्वताश्रितं; उद्भिदं पुनर्निम्नप्रदेशादूर्ध्वोत्तिष्ठज्जलस्थानं; विकिरं वालुकादि विकीर्य गृह्यमाणोदकस्थानं; केदारः प्रसिद्धः; पल्वलं आनूपदेशजं तृणादिच्छन्नं सरः। आदिग्रहणात् ह्रदसमुद्रादिग्रहणम् ॥ ४ ॥

**तत्र, लोहितकपिलपाण्डुनीलपीतशुक्लेषु अवनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासङ्ख्यमुदकानि संभवन्तीत्येके भाषन्ते ॥ ५ ॥**

परमतमाह,—तत्रेति ॥ ५ ॥

**तत्तु न सम्यक्। तत्र पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलरसो भवत्युत्कर्षापकर्षेण। तत्र, स्वगुणभूयिष्ठायां भूमावम्लं लवणं च; अम्बुगुणभूयिष्ठायां मधुरं; तेजोगुणभूयिष्ठायां कटुकं तिक्तं च; वायुगुणभूयिष्ठायां कषायं; आकाशगुणभूयिष्ठायामव्यक्तरसं, अव्यक्तं ह्याकाशमित्यतः; तत् प्रधानमव्यक्तरसत्वात्, तत्पेयमान्तरीक्षालाभे ॥ ६ ॥**

तन्निराकृत्य स्वमतमाह,—तत्त्विति। कृतः इति जनितः। उत्कर्षापकर्षेण इति वृद्धिह्रासाभ्याम्। स्वलक्षणभूयिष्ठायां पृथिव्यंशगुणबहुलायाम्। "तत्र पृथिव्यम्बुगुणबाहुल्यान्मधुर" इति रसविज्ञानीये उक्तस्य सामान्यविधेरुत्सर्गाख्यस्य 'तत्र स्वलक्षणभूयिष्ठायां भूमावम्लं'इत्यादिको विशेषविधिरपवादाख्योऽत्र प्रोक्तः। अन्ये तु भूतद्वयगुणसंयोगं रसविशेषहेतुमाहुः। तथाहि,—तत्र स्वलक्षणोदकभूयिष्ठायां भूमौ मधुरं, पृथिव्यनिलभूयिष्ठायामम्लं, जलाग्निगुणभूयिष्ठायां लवणं, वाय्वग्निगुणभूयिष्ठायां कटुकं, पृथिव्यनिलगुणभूयिष्ठायां कषायं, आकाशगुणभूयिष्ठायामव्यक्तरसं' इति ॥ ६ ॥

**तत्र आन्तरीक्षं चतुर्विधम्। तद्यथा—धारं, कारं, तौषरं, हैममिति। तेषां धारं प्रधानं, लघुत्वात्। तत् पुनर्द्विविधं गाङ्गं सामुद्रं चेति। तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति। तयोर्द्वयोरपि परीक्षणं कुर्वीत—शाल्योदनपिण्डमकुथितमविदग्धं रजतभाजनोपहितं वर्षति देवे बहिष्कुर्वीत, स यदि मुहूर्तं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यं; वर्णान्यत्वे सिक्थप्रक्लेदे च सामुद्रमिति विद्यात्; तन्नोपादेयम्। सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद्भवति। गाङ्गं पुनः प्रधानं, तदुपाददीताश्वयुजे मासि शुचिशुक्लविततपटैकदेशाच्युत-**

**मथवा हर्म्यतलपरिभ्रष्टमन्यैर्वा शुचिभिर्भाजनैर्गृहीतं सौवर्णे राजते मृण्मये वा पात्रे निदध्यात्। तत्सर्वकालमुपयुञ्जीत, तस्यालाभे भौमम्। तच्चाकाशगुणबहुलम्। तत् पुनः सप्तविधम्। तद्यथा—कौपं, नादेयं, सारसं, ताडागं, प्रास्रवणं, औद्भिदं चौण्ट्यमिति॥ ७॥**

तत्रेति। धाराभिः पततीति धारम्। करः वर्षोपलास्तेषां तोयं कारम्। तौषारं यत् अवश्यायजं निशाजलम्। तदेव संहतावयववत्त्वेन स्फटिकशिलाशकलसदृशावयवं हिमं तद्भवं हैमम्। तदित्यादि गाङ्गं आकाशाधिष्ठानं, सामुद्रं पुनरवन्यधिष्ठानम्। तत्रेत्यादि एतेन गाङ्गमाश्वयुज एव ग्रहीतव्यं न भाद्रपदे मासीत्युक्तं भवति। तयोरिति तयोः गाङ्गसामुद्रयोरित्यर्थः। कथं परीक्षणमित्याह,—शाल्योदनेत्यादि। अविदग्धं अविवर्णम्। रूप्यमये भाजने अम्लरसे सामुद्रतोयं विना शाल्यन्नं न क्लेदमेति। दिनस्य रात्रेश्च पञ्चदशो भागः मुहूर्तः। अवगन्तव्यं ज्ञातव्यमित्यर्थः। वर्णान्यत्वे इत्यादि। प्रक्लेदः कोथः। तन्नोपादेयमिति दोषलत्वात्। सामुद्रमिति एतेन सामुद्रस्यानुपादेयस्यापि कदाचिदेवोपादेयता दर्शिता। आन्तरीक्षस्य ग्रहणोपायं दर्शयन्नाह,—शुचीत्यादि। शुचिः अनुपहतः। हर्म्यतलपरिभ्रष्टमिति धवलगृहोपरिभूमिकायाः सकाशादधः पतद्गृहीतम्। तत् इति कौपमित्यादिकं सर्वं प्रागेव व्याख्यातम्॥ ७॥

**तत्र वर्षास्वान्तरिक्षमौद्भिदं वा सेवेत, महागुणत्वात्; शरदि सर्वं प्रसन्नत्वात्; हेमन्ते सारसं ताडागं वा; वसन्ते कौपं प्रास्रवणं वा; ग्रीष्मेऽप्येवं; प्रावृषि चौण्ट्यमनवमनभिवृष्टं सर्वं चेति॥ ८॥**

तत्रेति। अत्र वर्षाशब्दो वर्षान्ते आश्वयुजे वर्तते न तु भाद्रपदे, तत्रान्तरिक्षजलस्य निषिद्धत्वात्; तदुक्तं,—"बलाहकायाः समदाः कीटा लूताश्च खेचराः। तद्विषोत्सर्गसंसर्गादग्राह्यं तत्तदा जलम्॥" तर्हि भाद्रपदे किं पातव्यम्? अत्रोच्यते,—भाद्रपदे मासि आकाशगुणभूयिष्ठभूम्याश्रितमान्तरिक्षवद्भवतीति तत्पयः पेयमिति। अन्ये पुनस्तत्रानवरतमम्भो भाद्रपदे पाययन्ति, खस्थापितं माहेन्द्रं वा; अन्ये तु 'वर्षास्वान्तरिक्षमौद्भिदं कौपं वा' इति पठन्ति, तच्च कौपं विदाहपरिहारार्थं सक्षौद्रं पेयमिति व्याख्यानयन्ति। शरदि सर्वं पातव्यमिति शेषः। प्रसन्नत्वादिति प्रसन्नत्वं निर्दोषत्वमगस्त्योदयात्। प्रावृषि चौण्ट्यमनवमनभिवृष्टं सर्वं चेति अनवं पुरातनं तच्च सारसं ताडागं वा, अनभिवृष्टं अनाभसं तच्च कौपम्। परं यदि वर्षति देवः तदा सर्वमेव वा पातव्यं यदि संस्कृतं भवेत् क्वथनादिभिः, सर्वत्रैवाभिनवस्य जलस्य प्रविष्टत्वात्। अन्ये तु अनवमित्यस्य स्थाने अनभिनवमिति पठन्ति। अत्रापि स एवार्थः॥ ८॥

**कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम्॥**
**तृणपर्णोत्करयुतं कलुषं विषसंयुतम्॥ ९॥**
**योऽवगाहेत वर्षासु पिबेद्वापि नवं जलम्॥**
**स बाह्याभ्यन्तरान् रोगान् प्राप्नुयात् क्षिप्रमेव तु॥१०**

इदानीं नवस्य सलिलस्य बाह्याभ्यन्तरप्रयोगे बाह्याभ्यन्तरानेव च रोगान्निर्दिशन्नाह,—कीटेति। कीटादिभिः सह कोथशब्दः प्रत्येकमभिसंबध्यते, कोथः शटितत्वं, कीटाः सविषा वृश्चिकादयः, शवः मृतप्राणिशरीरं, प्रदूषितं विकृतीकृतम्। तृणपर्णोत्करयुतमिति तृणपर्णानामुत्करः समूहस्तेन युतम्। कलुषं मलिनम्। विषसंयुतमिति स्थावरजङ्गमविषयुक्तमित्यर्थः। वर्षास्विति आश्वयुजं विहाय आषाढश्रावणभाद्रपदा गृह्यन्ते। वर्षाशब्दोऽयं प्रावृषि वर्षासु च वर्तते। तदाह,—"वर्षासु चतुरो मासान् मात्रावदुदकं पिबेत्।" बाह्याभ्यन्तरान् रोगानिति बाह्याः कुष्ठादयः, आभ्यन्तरास्तु उदरामयादयः। ते च यथासंख्यमवगाहपानाभ्यां ज्ञेयाः॥ ९॥ १०॥

**तत्र यत् पङ्कशैवलहटतृणपद्मपत्रप्रभृतिभिरवच्छन्नं शशिसूर्यकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टं च तद्व्यापन्नमिति विद्यात्। तस्य स्पर्शरूपरसगन्धवीर्यविपाकदोषाः षट् संभवन्ति। तत्र, खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषः; पङ्कसिकताशैवालबहुवर्णता रूपदोषः; व्यक्तरसता रसदोषः; अनिष्टगन्धता गन्धदोषः; यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्यदोषः; यदुपयुक्तं चिराद्विपच्यते विष्टम्भयति वा स विपाकदोष इति। त एते आन्तरिक्षे न सन्ति॥ ११॥**

व्यापन्नलक्षणमाह,—तत्रेति शैवालं शैवलं; पङ्कः कर्दमः; हटः जलकुम्भिका, अभूमिलग्नमूलस्तृणविशेष इत्येके। अवच्छन्नं आच्छादितम्। नाभिजुष्टं न स्पृष्टम्। उपसृष्टं संयुतम्। व्यापन्नं दोषाक्रान्तम्। तानेव षड्दोषान्निर्दिशन्नाह,—तत्रेति। औष्ण्यं भूबाष्पजनितं, न पुनरग्न्यातपकृतम्। दन्तग्राहिता अतिशीतताभिप्रेता। पङ्केति सिकता वालुका। अनिष्टेति अनिष्टगन्धता विस्रादिगन्धता। व्यक्तेति व्यक्तरसता रसनेन्द्रियग्राह्यमधुरादिरसता। यदुपयुक्तमिति कफप्रसेकः श्लेष्मस्रवणम्। वीर्यं चाचिन्त्यक्रियाहेतुः। यदुपयुक्तमिति विष्टम्भः गुड्गुडाशब्दः। त एते इति एते पूर्वोक्ताः षड्दोषाः आन्तरिक्षे इत्यस्योपलक्षणत्वादाकाशगुणभूयिष्ठेऽपि न संभवन्ति॥ ११॥

**व्यापन्नस्य चाग्निक्वथनं सूर्यातपप्रतापनं तप्तायःपिण्डसिकतालोष्ट्राणां वा निर्वापणं प्रसादनं च कर्तव्यं नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति॥ १२॥**

व्यापन्नानां प्रसन्नतोपायं दर्शयन्नाह,—व्यापन्नानामिति। अग्निक्कथनं महादोषदुष्टस्य, सूर्यातपप्रतापनं अल्पदोषे, तप्तायःपिण्डादिनिर्वापणं मध्यदोषे। लोष्ट्रः कठिनो मृन्मयः। निर्वापणं जलनिःक्षेपणमित्यर्थः। प्रसादनं च कर्तव्यमिति अग्निक्कथनादिस्वरूपं प्रसादनं नान्यत्। गन्धापनयने उपायमाह,—नागेत्यादि। नागः नागकेशरः, चम्पकः राजचम्पकः, उत्पलं सौगन्धिकम्। प्रभृतिग्रहणात् केतकीमल्लिकादिपुष्पाणि ॥ १२ ॥

**सौवर्णे राजते ताम्रे कांस्ये मणिमयेऽपि वा ॥**
**पुष्पावतंसं भौमे वा सुगन्धि सलिलं पिबेत्॥१३**

तदुदकं गुणवदपि किंमयपात्रस्थं पेयमित्याह,—सौवर्णे इत्यादि। पुष्पावतंसं पुष्पसुगन्धीकृतम् ॥ १३ ॥

**व्यापन्नं वर्जयेन्नित्यं तोयं यच्चाप्यनार्तवम् ॥**
**दोषसंजननं ह्येतन्नाददीताहितं तु तत् ॥ १४ ॥**
**व्यापन्नं सलिलं यस्तु पिबतीहाप्रसाधितम् ॥**
**श्वयथुं पाण्डुरोगं च त्वग्दोषमविपाकताम् ॥१५**
**श्वासकासप्रतिश्यायशूलगुल्मोदराणि च ॥**
**अन्यान् वा विषमान् रोगान् प्राप्नुयादचिरेण सः ॥ १६ ॥**

व्यापन्नादिवर्जनमाह,—व्यापन्नमिति। अनार्तवमिति ऋतुविशेषानुपयोग्यं, अनृतुवृष्टमिति केचित्। अप्रसाधितमिति क्वथनाद्यसंस्कृतम् ॥ १४—१६ ॥

**तत्र सप्त कलुषस्य प्रसादनानि भवन्ति। तद्यथा—कतकगोमेदकबिसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति ॥ १७ ॥**

तत्र सप्त कलुषस्येति। कतकं शशकपुरीषप्रतिमं फलं; गोमेदकः पुष्परागाभो मणिः मत्कोलमिति केचित्, बिसग्रन्थिः पद्ममूलं; शैवालमूलं प्रसिद्धम्; मुक्ता मौक्तिकं; मणिः स्फटिकादिः। एतेन रूपदोषापनयनोपायो दर्शितः। अन्ये तु बिसग्रन्थीत्यस्याग्रे पर्णीमूलमिति पठन्ति; तत्र पर्णी पानीयपृष्ठजा तस्या मूलं जटा ॥ १७ ॥

**पञ्च निक्षेपणानि भवन्ति। तद्यथा—फलकं, त्र्यष्टकं, मुञ्जवलय, उदकमञ्चिका, शिक्यं चेति॥१८**

पञ्चनिक्षेपणानीति। निक्षेपणं यत्र जलं निक्षिप्यते स्थाप्यते, तेन भूम्यादिस्पर्शाभावाद्दोषान्तरानुदयः। फलकं शाल्मलीकाष्ठादिविरचितं, त्र्यष्टकं अष्टास्रदण्डत्रयसंयोगः, मुञ्जवलयः मुञ्जादिविरचितो वलयाकारः, उदकमञ्चिका आकाशान्तराले निरन्तरनिहितवेत्रवैणवादिविरचिता वेत्रगृहाद्यभिधाना, शिक्यं मुञ्जादिविरचितं प्रसिद्धम् ॥ १८ ॥

**सप्त शीतीकरणानि भवन्ति—प्रवातस्थापनं, उदकप्रक्षेपणं, यष्टिकाभ्रामणं, व्यजनं, वस्त्रोद्धरणं, वालुकाप्रक्षेपणं, शिक्यावलम्बनं चेति ॥ १९ ॥**

सप्तेत्यादि। उदकप्रक्षेपणमिति सलिलपूर्णे भाजने वस्त्रादिपीडिते आकण्ठमपरशीतसलिलनिक्षेपः। यष्टिकाभ्रामणं यन्त्रयष्ट्यादिभ्रामणम्। व्यजनमिति व्यजनादिना वातलीकरणम्। वस्त्रोद्धरणं वस्त्रेण गालनम्। वालुकाप्रक्षेपणं उदकपात्रस्य वालुकामध्ये निक्षेपणम्। शिक्यावलम्बनं प्रसिद्धम् ॥ १९ ॥

**निर्गन्धमव्यक्तरसं तृष्णाघ्नं शुचि शीतलम् ॥**
**अच्छं लघु च हृद्यं च तोयं गुणवदुच्यते ॥२०॥**

कीदृशं पुनरुपादेयं भौममित्याह,—निर्गन्धमित्यादि। शुचि अनुपहतम्। लघु चेति चकारः समस्तगुणवत्त्वे अत्यन्तगुणकारि, अल्पगुणत्वे तु अल्पगुणकारीति तारतम्यसूचकः। हृद्यं चेत्यत्र तु क्वथितजलस्य हृदयाप्रियत्वेऽप्युपग्रहणार्थः। गुणवद् प्रशस्तगुणोपेतम् ॥ २० ॥

**तत्र नद्यः पश्चिमाभिमुखाः पथ्या, लघूदकत्वात्; पूर्वाभिमुखास्तु न प्रशस्यन्ते, गुरूदकत्वात्; दक्षिणाभिमुखा नाऽतिदोषलाः, साधारणत्वात्। तत्र सह्यप्रभवाः कुष्ठं जनयन्ति, विन्ध्यप्रभवाः कुष्ठं पाण्डुरोगं च, मलयप्रभवाः क्रमीन्, महेन्द्रप्रभवाः श्लीपदोदराणि, हिमवत्प्रभवा हृद्रोगश्वयथुशिरोरोगश्लीपदगलगण्डान्, प्राच्यावन्त्या अपरावन्त्याश्चार्शांसि उपजनयन्ति, पारियात्रप्रभवाः पथ्या बलारोग्यकर्य इति ॥ २१ ॥**

इदानीं जाङ्गलपश्चिमदेशस्थानूपपूर्वदेशस्थसाधारणमध्यदेशस्थानां नदीनां गुणान्निर्दिशन्नाह;—तत्र नद्य इति। पश्चिमाभिमुखाः जाङ्गलपश्चिमदेशस्थाः पश्चिमसमुद्रगाः, पूर्वाभिमुखाः आनूपदेशस्थाः पूर्वसमुद्रगाः, दक्षिणाभिमुखाः मध्यदेशस्थाः। शैलादिभेदेन गुणान्निर्दिशन्नाह,—कुष्ठमिति। मलयप्रभवा इति मलयपर्वतवाहिन्यो द्विविधा भवन्ति—पाषाणसिकतावाहिन्यः, अपाषाणसिकतावाहिन्यश्च। तत्र पाषाणसिकतावाहिन्यश्च पथ्याः, अपाषाणसिकतावाहिन्यः क्रमीन् जनयन्ति। हिमवत्प्रभवा इति ता अपि द्विविधाः—हिमवदुपरिभागप्रभवाः पथ्याः, अधोभागप्रभवास्तु हृद्रोगादिहेतवः। विशिष्टदेशाश्रितपर्वतप्रभवाणां नदीनां सलिलगुणं दर्शयन्नाह—प्राच्येति। अवन्ती उज्जयिनी तयोपलक्षितो देशः तस्य पूर्वस्यां जाताः प्राच्यावन्त्याः, पश्चिमस्यां जाताः अपरावन्त्याः शैलास्तेषु या नद्यः; एतेन विशिष्टदेशाश्रितपर्वतप्रभवाणां नदीनां सलिलगुण उक्तः। उज्जयिन्युपलक्षिते देशे याः प्राचीं पश्चिमां चाभिमुखं यान्ति ताः प्राच्यावन्त्याः अपरावन्त्याश्च, न तु उज्जयिनीप्रभवेषु पर्वतेष्वित्यन्ये। अयमर्थो गयदासेन दूषितः। पारियात्रेति पारियात्रः पर्वतभेदः, तत्र प्रभवा नद्यो द्विविधाः—तडागजाः पथ्याः, दरीजा दोषलाः ॥ २१ ॥

**नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः ॥**
**गुर्व्यः शैवालसंछन्नाः कलुषा मन्दगाश्च याः २२**

**प्रायेण नद्यो मरुषु सतिक्ता लवणान्विताः ॥**
**ईषत्कषाया मधुरा लघुपाका बले हिताः ॥ २३ ॥**

नदीनां धन्वानूपसाधारणशैलाश्रयाणां सर्वासामेव शेषी भूतं विशेषं दर्शयन्नाह,—नद्य इति । इदानीं विशिष्टदेशप्रभवाणां नदीनां गुणविशेषं दर्शयन्नाह,—प्रायेणेति । मरुषु प्रसिद्धेषु मरुदेशेषु, नतु जाङ्गलशब्दाभिहितेषु । पौरुषेया वृष्या इत्यर्थः। अन्ये तु ईषदित्यादि पठन्ति ॥ २२ ॥ २३ ॥

**तत्र सर्वेषां भौमानां ग्रहणं प्रत्यूषसि, तत्र हि अमलत्वं शैत्यं चाधिकं भवति, स एव चापां परो गुण इति ॥ २४ ॥**

भौमानां दिनापेक्षं ग्रहणकालं नियमयन्नाह,—तत्रेति । प्रत्यूषसि प्रभाते । स एव चापां परो गुणः इति स च शैत्यामलत्वलक्षणोऽपां परमो गुण इत्यर्थः । अन्ये तु शैत्यं चापां परो गुण इति पठन्ति । तत्र चकारोऽमलसूचनार्थः ॥ २४ ॥

**दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः ॥**
**अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना ॥ २५ ॥**

तत्र भौमानामर्कसोमकरसंस्कारजगुणेनान्तरिक्षतुल्यत्वं तदलाभे उपादानायाह,—दिवार्ककिरणैरिति। अर्कग्रहणे सिद्धे दिवाग्रहणं समस्तदिनप्राप्त्यर्थं, किरणग्रहणं दुर्दिनव्युदासार्थम् । दिवानिशीतिवचनात् सरोऽपि चन्द्रार्ककरसंबन्धम् । सत्यप्यर्के चन्द्रसंबन्धादरूक्षं, सत्यपि चन्द्रेऽर्कसंबन्धादनभिष्यन्दि । दोषान् व्याधीन् झटिति यदभिष्यन्दते उत्पादयति तदभिष्यन्दि, विपर्ययेणानभिष्यन्दि। निशाग्रहणं समस्तरात्रिप्राप्त्यर्थम्। यद्यपि पौर्णमास्यामेव सकलरात्रौ संबन्धो नान्यासु तथापि एकयापि पौर्णमास्या रात्र्यातिशायी संस्कारः कृतः अन्यास्वप्यनुवर्तते । एतेनातिशीतोष्णस्निग्धरूक्षं निन्दितमित्युक्तं भवति ॥ २५ ॥

**गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने ॥**
**बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम् ॥ २६ ॥**

किंगुणं पुनर्गगनाम्बु येनैतत् तुल्यमुच्यते इत्याह,—गगनाम्बु त्रिदोषघ्नमिति । बल्यं उपचयौजःशक्तिकरत्वात् । विशिष्टरसाद्युत्पादनात् रसायनं स्वस्थातुरोपयोगि । मेध्यं पवित्रम् । पात्रापेक्षि ततः परमिति अतिश्रेष्ठभाजने गृहीतमधिकं गुणं करोतीत्यर्थः । अन्ये तु मेध्यस्थाने शीतमिति पठन्ति । पूर्वं दोषशमनादि नोक्तमधुना अगस्त्योदयदर्शनविशेषप्रभावादुक्तम् ॥ २६ ॥

**रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम् ॥**
**चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् ॥२७॥**

चन्द्रकान्तमणिप्रभवजलस्य गुणमाह,—रक्षोघ्नमिति। रक्षोघ्नं राक्षसभयहरं, ह्लादि सुखावहं,चन्द्रकान्तोद्भवमिति चन्द्रकान्तमणिप्रभवं; इदं तु चन्द्रकिरणानुप्रवेशात् नाभसं, मणिप्रादुर्भूतत्वाद्भौममित्युभयात्मकम् ॥ २७ ॥

**मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ॥**
**भ्रमक्लमपरीतेषु तमके वमथौ तथा ॥ २८ ॥**
**ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥**

शीतोष्णविषयमाह,—मूर्च्छेति । पित्तोष्णदाहेष्विति उष्णे शरदि, ग्रीष्मे च । मदात्यये मद्यविकारे । भ्रमः चक्रारूढस्येव, परीतेषु युक्तेषु । तमकः श्वासो मोहो वा । वमथौ छर्दिरोगे ॥ २८ ॥—

**पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ॥ २९ ॥**
**आध्माने स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे ॥**
**हिक्कायां स्नेहपीते च शीताम्बु परिवर्जयेत् ॥ ३० ॥**

पार्श्वेत्यादि । स्तिमिते कोष्ठे आमकोष्ठे इत्यर्थः । सद्यःशुद्धे इति यस्मिन् दिने शोधनं कृतं तत्रेत्येके, अपरे तु सप्ताहमित्याहुः । यद्यप्यौष्ण्यं स्पर्शदोष उक्तः तथाऽप्यवस्थया व्यवहारार्थत्वेनोपादेयं; अन्ये तु पूर्वमौष्ण्यं भूबाष्पजनितमेव दोषत्वेनोक्तं, इदं लग्न्यातपकृतमिति समादधति ॥ २९ ॥ ३० ॥

**नादेयं वातलं रूक्षं दीपनं लघु लेखनम् ॥**
**तदभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम् ॥ ३१ ॥**
**तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु ॥**
**ताडागं वातलं स्वादु कषायं कटुपाकि च ॥ ३२ ॥**
**वातश्लेष्महरं वाप्यं सक्षारं कटु पित्तलम् ॥**
**सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु ३३ ॥**
**चौण्ड्यमग्निकरं रूक्षं मधुरं कफकृन्न च ॥**
**कफघ्नं दीपनं हृद्यं लघु प्रस्रवणोद्भवम् ॥ ३४ ॥**
**सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु॥**
**मधुरं पित्तशमनमविदाह्यौद्भिदं स्मृतम् ॥**
**वैकिरं कटु सक्षारं श्लेष्मघ्नं लघु दीपनम् ॥ ३५ ॥**
**कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् ॥**
**तद्वत्पाल्वलमुद्दिष्टं विशेषाद्दोषलं तु तत् ॥ ३६ ॥**
**सामुद्रमुदकं विस्रं लवणं सर्वदोषकृत् ॥**

समस्तनदीनां शेषगुणमाह,—नादेयमिति । द्विविधं कौपं सक्षारमव्यक्तरसं च । यत् सक्षारं तत्पित्तलं, इतरं पित्तघ्नं मधुरमिति ॥ ३१–३६ ॥—

**अनेकदोषमानूपं वार्यभिष्यन्दि गर्हितम् ॥ ३७ ॥**
**एभिर्दोषैरसंयुक्तं निरवद्यं तु जाङ्गलम् ॥**
**पाकेऽविदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्धनम् ॥३८॥**
**दीपनं स्वादु शीतं च तोयं साधारणं लघु ॥**

आनूपधन्वसाधारणगुणैर्निर्दिशन्नाह,—अनेकेति । अत्र स्पर्शरूपरसगन्धवीर्यविपाकाः प्रागुक्ता दोषा ज्ञेयाः । एभिरिति एभिः पूर्वोक्तैः स्पर्शादिभिरित्यर्थः । पाके इति अविदाहि अदाहकारीत्यर्थः ॥ ३७–३८ ॥—

१ "लघ्व्यः समधुराश्चैव पौरुषेया बले हिताः" इति पाठान्तरम् ॥

**कफमेदोऽनिलामघ्नं दीपनं बस्तिशोधनम् ॥ ३९ ॥**
**श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ॥**

उष्णोदकगुणमाह,—कफेति । पथ्यं हितम्, उष्णोदकं अर्धावशिष्टमुदकम् ॥ ३९ ॥—

**यत् क्वाथ्यमानं निर्वेगं निःफेनं निर्मलं लघु ॥ ४० ॥**
**चतुर्भागावशेषं तु तत्तोयं गुणवत् स्मृतम् ॥**

उष्णोदकभेदमाह,—यदिति । निर्वेगं निश्चलम् ॥ ४० ॥—

**न च पर्युषितं देयं कदाचिद्वारि जानता ॥ ४१ ॥**
**अम्लीभूतं कफोत्क्लेशि न हितं तत् पिपासवे ॥**

पर्युषितमुष्णोदकं न दातव्यमित्याह,— न चेति । पर्युषितं रात्र्युषितम् ॥ ४१ ॥—

**मद्यपानात्समुद्भूते रोगे पित्तोत्थिते तथा ॥ ४२ ॥**
**सन्निपातसमुत्थे च शृतशीतं प्रशस्यते ॥**

शृतशीतविषयमाह,—मद्यपानादिति । पूर्वं मदात्यये शीतं, अत्र तु मदात्ययसमुत्थे रोगे शृतशीतं, मदात्यये मदात्ययसमुद्भूते रोगे चोभयस्मिन्नपि शृतशीतं प्रयोक्तव्यमित्यर्थः ॥ ४२ ॥—

**स्निग्धं स्वादु हिमं हृद्यं दीपनं बस्तिशोधनम् ॥ ४३ ॥**
**वृष्यं पित्तपिपासाघ्नं नारिकेलोदकं गुरु ॥**

उदकप्रसङ्गेन नारिकेलफलसलिलस्यापि गुणं निदर्शयन्नाह,—स्निग्धमिति । नारिकेलोदकं ईषत्पक्वार्द्रनारिकेलफलान्तर्वर्ति सलिलमित्यर्थः । जेज्झटस्तु लध्विति पठति, लघुत्वं च शीघ्रपरिणामित्वमिच्छति ॥ ४३ ॥—

**दाहातीसारपित्तासृङ्मूर्च्छामद्यविषार्तिषु ॥ ४४ ॥**
**शृतशीतं जलं शस्तं तृष्णाच्छर्दिभ्रमेषु च ॥**

अधुना शृतशीतस्य शेषविषयमाह,—दाहेति ॥ ४४ ॥—

**अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥ ४५ ॥**
**मन्देऽग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ॥**
**व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ ४६ ॥**

**इति जलवर्गः ।**

केषु रोगेषु जलं मन्दं पेयमित्याह,—अरोचके इति । यावत् प्रतिषेधयितुमशक्यं तावदाचरेदिति मन्दार्थः । अयं पानीयवर्गो निबन्धकारैर्विपरीतक्रमेण पठितः । अस्माभिस्तु यथैव गुरुभिः कथितस्तथैव क्रमेण व्याख्यातः । इति पानीयवर्गः ॥ ४५ ॥ ४६ ॥

### अथ क्षीरवर्गः ।

**गव्यमाजं तथा चौष्ट्रमाविकं माहिषं च यत् ॥**
**अश्वायाश्चैव नार्याश्च करेणूनां च यत्पयः ॥ ४७ ॥**

इदानीं क्षीरस्याष्टविधां योनिमाह,—गव्यमित्यादि । करेणुः हस्तिनी । अश्वायाश्च नार्याश्च करेणूनां च इति चकारत्रयमनुक्तसमानजातीयक्षीराणां समुच्चयार्थं, तेनाश्वतरीखरीमृगीखड्गिनीक्षीराणामपि ग्रहणम् । तत् पुनर्भूयसा [1] लेपे युज्यते इति न कृतं साक्षात्तद्ग्रहणम् ॥ ४७ ॥

**तत्त्वनेकौषधिरसप्रसादं प्राणदं गुरु ॥**
**मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु ॥**
**सर्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते ॥ ४८ ॥**

सर्वेषामेव क्षीराणां दशविधं गुणं निर्दिशन्नाह,—तत्त्विति । तत्त्वनेकौषधिरसप्रसादमिति तुशब्दः पुनरर्थे, ओषधिशब्देन सर्वद्रव्याणि न तु फलपाकावसानाः, रसः सारः किट्टभावरहितः ओजःशुक्रादिवत्, एतेन शुक्लं द्योत्यते । प्राणदं अग्निसोमादिधारणादुपचयादिकरणाद्वा । पिच्छिलं विशदविपरीतं, श्लक्ष्णं खरविपर्ययः । एवमिद क्षीरं दशगुणयुक्तं भवति । जेज्झटस्तु "तत्त्वनेकौषधिरसप्रसादः क्षीरतां गतः । सर्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते ॥" इति ॥ ४८ ॥

**तत्र सर्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात्, वातपित्तशोणितमानसेष्वपि विकारेषु अविरुद्धं जीर्णज्वरकासश्वासशोषक्षयगुल्मोन्मादोदरमूर्च्छाभ्रममददाहपिपासाहृद्बस्तिदोषपाण्डुरोगग्रहणीदोषार्शःशूलोदावर्तातिसारप्रवाहिकायोनिरोगगर्भास्रावरक्तपित्तश्रमक्लमहरं पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं सन्धानमास्थापनं वयःस्थापनमायुष्यं जीवनं बृंहणं वमनविरेचनास्थापनं तुल्यगुणत्वाच्चौजसो वर्धनं बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्शितानां च पथ्यतमम् ॥ ४९ ॥**

सर्वेषामेव समानगुणानां क्षीराणां समानकर्म निर्देष्टुमाह—तत्रेत्यादि । सर्वं अष्टविधमपीत्यर्थः । प्राणिनां जरायुजानाम् । जातिसात्म्यात् मनुष्यादिजातिसुखकरत्वात् । मानसेषु विकारेषु रजस्तमःसंसर्गजेषु । जीर्णज्वरेति जीर्णशब्दमेके ज्वरेण सह संबध्नन्ति, अन्ये तु क्रमान्तैर्ज्वरादिभिः सह, जीर्णत्वेनैतेषु प्रायेण वातपित्तानुबन्धो भवतीत्याहुः । हरशब्दो ज्वरादिभिः सह सर्वैः क्रमान्तैः प्रत्येकमभिसंबध्यते । कासेति, कासः अत्र कफकासं त्यक्त्वा, शोषः अत्र मुखकण्ठतालूनां क्षयः राजयक्ष्मा, गुल्मोदरयोः वातपैत्तिकयोः, मूर्च्छाभ्रममदपिपासासु कफामरहितासु, हृदयदोषाणां वातपित्तप्रायाणां, पाण्डुरोगे वातपित्तप्राये, ग्रहणीप्रदोषे जीर्णावस्थायाम् [2] । गर्भस्रावे आमान्वयादिना, रक्तपित्ते कफप्रधाने, अग्निमान्द्ये च न देयम् । बल्यं मांसोपचयकरं, अन्ये ओजसो वर्धनमिति;

---

१. 'नोपयुज्यते' इति पाठान्तरम्.

२ "अर्शस्सु रक्तपित्तप्रबलेषु, अतिसारे वातपित्तशोणितप्राये पक्वावस्थायां, प्रवाहिकायां वातपित्तप्रबलायां" इति हस्तलिखितपुस्तकेऽधिकः पाठो दृश्यते ॥

तन्मते ओजसो वर्धनमिति पाठोऽग्रे न भवति। वृष्यं शुक्रजनकं, वाजीकरणं शुक्रप्रवर्तनं, एतेन जनकप्रवर्तकमित्युक्तम्। रसायनं सततोपयोगात्। मेध्यं मेधाजनकं पवित्रं वा। पाप्मापहं पापोपशमनं विशेषतो गव्यम्, वयःस्थापनं जरया विना। आयुष्यं आयुषे हितम्, सन्धानं भग्नस्य। वमनविरेचनास्थापनमिति वमनं वमनद्रव्यसंयोगि, विरेचनं सरत्वान्मृदुकोष्ठस्य, रेचनद्रव्यसंयोगाद्विरेचनमित्यन्ये; आस्थापनं आस्थापनद्रव्यसंयोगि, आस्थापनं निरूहमित्यनर्थान्तरम्। तुल्यगुणत्वाच्चौजसो वर्धनमिति यावन्त एवौजसो गुणास्तावन्त एव क्षीरस्यापि, तेन तैस्तैरेवात्मगुणैस्तेषां समानानामोजसो गुणानामभिवर्धनम्। जेज्झटस्तु गव्यं तु शीतं स्निग्धमधुरमविदाहीति पठति, शेषं तु समं, तन्मते गोक्षीरस्यैव गुणाः ॥ ४९ ॥

**गोक्षीरमनभिष्यन्दि[1] स्निग्धं गुरु रसायनम् ॥**
**रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥ ५० ॥**
**जीवनीयं तथा वातपित्तघ्नं परमं स्मृतम् ॥**

सामान्येन क्षीरस्य गुणमभिधाय गव्यस्यैव विशिष्टं गुणकर्म निर्दिशन्नाह,—गोक्षीरमित्यादि। दोषधातुमलस्रोतसां मन्दक्लेदप्राप्तिजनकं अल्पाभिष्यन्दि ॥ ५० ॥—

**गव्यतुल्यगुणं त्वाजं विशेषाच्छोषिणां हितम् ॥५१**
**दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् ॥**
**अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ॥५२॥**
**नात्यम्बुपानाद् व्यायामात्सर्वव्याधिहरं पयः ॥**

अजाक्षीरगुणमाह—गव्यतुल्यगुणमिति। गुणशब्दस्तत्कार्ये फले वर्तते। अत्राल्पकायत्वादयः स्वरूपविशेषेण न क्षीरपथ्यत्वे हेतवः, तेषामल्पकायत्वादीनामन्यादिष्वपि संभवात्; अतो द्वयमेव क्षीरपथ्यापथ्यविभागे हेतुर्जातिविशेषो भ्रमणविशेषश्च। सर्वव्याधिहरं सर्वदोषहरम् ॥ ५१ ॥ ५२ ॥—

**रूक्षोष्णं लवणं किंचिदौष्ट्रं स्वादुरसं लघु ॥ ५३ ॥**
**शोफगुल्मोदरार्शोघ्नं कृमिकुष्ठविषापहम् ॥**

इदानीमौष्ट्रक्षीरगुणमाह,—रूक्षेत्यादि ॥ ५३ ॥—

**आविकं मधुरं स्निग्धं गुरु पित्तकफावहम् ॥ ५४ ॥**
**पथ्यं केवलवातेषु कासे चानिलसंभवे ॥**

आविकक्षीरगुणमाह,—आविकमिति। कफावहं कफकरम्। केवलवातेष्विति केवलेषु अनावृतेषु असंयुक्तेष्वपीत्यर्थः। अन्ये त्वेवं पठन्ति—"आविकं मधुरं स्निग्धमुष्णं पित्तकफावहम्। गुरु शुद्धेऽनिले पथ्यं सेकश्चानिलशोणिते॥" शुद्धेऽनिले अनावृते, अनिलशोणिते रक्तवाते वा, सेकः परिषेकः ॥ ५४ ॥—

**महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् ॥ ५५ ॥**
**निद्राकरं शीततरं गव्यात् स्निग्धतरं गुरु ॥**

महिषीक्षीरमाह,—महेत्यादि। दोषधातुमलस्रोतसामतिशयेन क्लेदप्राप्तिजनकं महाभिष्यन्दि। गव्यात् स्निग्धतरं गोक्षीरात् स्निग्धतरमित्यर्थः ॥ ५५ ॥—

**उष्णं चैकशफं बल्यं शाखावातहरं पयः ॥ ५६ ॥**
**मधुराम्लरसं रूक्षं लवणानुरसं लघु ॥**

अश्वादिक्षीरमाह,—उष्णमिति। एकशफाः अश्वादयः, शफः खुरः। शाखा बाहुजङ्घे, तद्वातहरमित्येके, शाखा रक्तादयो धातव इत्येके। काञ्चिकस्येव प्रभावादाधारप्रभावाच्च शाखायां हन्ति, कोष्ठे करोतीत्यामनन्ति ॥ ५६ ॥—

**नार्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् ॥ ५७॥**
**नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम् ॥**

मानुषं क्षीरमाह,—नार्यास्त्विति। आश्चोतनं अक्षिपूरणम् ॥ ५७ ॥—

**हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु ॥ ५८ ॥**
**स्निग्धं स्थैर्यकरं शीतं चक्षुष्यं बलवर्धनम् ॥**

हस्तिनीक्षीरमाह,—हस्तिन्या इति। स्थैर्यकरं शरीरदार्ढ्यकरम्, अन्ये तारुण्यस्थापकमित्याहुः ॥ ५८ ॥—

**प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम् ५९**
**रात्र्याः सोमगुणत्वाच्च व्यायामाभावतस्तथा ॥**

प्राभातिकं क्षीरमाह,—प्राय इति। विष्टम्भः गुडगुडाशब्दः ॥ ५९ ॥—

**दिवाकराभितप्तानां व्यायामानिलसेवनात् ॥ ६० ॥**
**वातानुलोमि श्रान्तिघ्नं[2] चक्षुष्यं चापराह्णिकम् ॥**

आपराह्णिकक्षीरमाह,—दिवाकरेति। अपराह्णः दिवान्तभागः। वृद्धानुमतौ पाठाविमौ ॥ ६० ॥—

**पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्तितम् ॥६१॥**

आमक्षीरमाह,—पय इति ॥ ६१ ॥

**तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम् ॥**

पक्वस्य गुणमाह,—तदिति। शृतं पक्वं, आवर्तितमित्यर्थः। अनभिष्यन्दि किंचिदभिष्यन्दि इत्यर्थः।—

**वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ॥६२**

स्त्रीक्षीरे पाकनिषेधमाह,—वर्जयित्वेति। स्त्रियाः स्तन्यं वर्जयित्वा अन्यदुग्धानि शृतान्येव हितानि भवन्ति इत्यर्थः। तत् स्त्रीभवं स्तन्यमाममक्वथितमेव हितम् ॥ ६२ ॥

**धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा ॥**

तेषां सर्वक्षीराणामेव दोहनकालधारापातोष्णानां गुणविशेषं निर्दिशन्नाह,—धारोष्णमिति। गुणवत् गुणान्वितं, विपरीतं अगुणवत्, अतोऽन्यथा इति धारोष्णं यन्न भवति।—

**तदेवातिशृतं शीतं गुरु बृंहणमुच्यते ॥ ६३ ॥**

अतिपक्वमाह,—तदिति। बृंहणं देहवृद्धिकरम् ॥ ६३ ॥

१ 'अल्पाभिष्यन्दि गोक्षीरं' इति पाठान्तरम्।

२ 'श्रमघ्नं वातनुच्चैव' इति पाठान्तरम्।

**यन्मांसमुद्धृतरसं न तत् पुष्टिबलावहम् ॥ ३६३ ॥**
**विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् ॥**

मांसरसप्रसङ्गेनोद्धृतरसमांसस्य गुणमाह,—यदिति । यतः पिष्टक्वथितगलितमांसाद्रसो गृहीतः स निःसारत्वादुक्तगुणः ३६३

**दीप्ताग्नीनां सदा पथ्यः खानिष्कस्तु परं गुरुः॥३६४॥**
**मांसं निरस्थि सुस्विन्नं पुनर्दृषदि चूर्णितम् ॥**

केचिदत्र खानिष्कगुणं पठन्ति—दीप्ताग्नीनामित्यादि; तमन्ये परिशुष्कभेदं मन्यन्ते, अन्ये वेसवारभेदं खानिष्कमाहुः॥३६४॥

**पिप्पलीशुण्ठिमरिचगुडसर्पिःसमन्वितम् ॥ ३६५ ॥**
**ऐकध्यं पाचयेत्सम्यक् वेसवार इति स्मृतः ॥**
**वेसवारो गुरुः स्निग्धो बल्यो वातरुजापहः ॥**

वेसवारगुणमाह,—मांसमिति । अत्र गुडं विहाय हिङ्गु-सर्पिःसमन्वितमिति केचित्पठन्ति, तन्न सर्वैराचार्यैर्निषिद्धत्वात् । वेसवारमप्यन्ये परिशुष्कं मन्यन्ते ॥ ३६५ ॥—

**कफघ्नो दीपनो हृद्यः शुद्धानां व्रणिनामपि ॥ ३६६ ॥**
**ज्ञेयः पथ्यतमश्चैव मुद्गयूषः कृताकृतः ॥**

रसकस्य प्रसङ्गेन मुद्गयूषस्य गुणमाह,—कफघ्न इति । कृतयूषस्य व्यवहारार्थं स्वयमेव लक्षणं वक्ष्यति, कफघ्नस्थाने केचिद् ज्वरघ्न इति पठन्ति ॥ ३६६ ॥—

**स तु दाडिममृद्वीकायुक्तः स्याद्रागखाडवः ॥३६७॥**
**रुचिष्यो लघुपाकश्च दोषाणां चाविरोधकृत् ॥**

मुद्गयूषस्य संयोगान्तरेण नामान्तरं दर्शयन्नाह,—स त्विति । सः इति मुद्गयूषः । दोषाणां चाविरोधकृदिति वातादीनां ईषद्विरोधकृद्वातादीनामीषच्छमन इत्यर्थः ॥ ३६७ ॥

**मसूरमुद्गगोधूमकुलत्थलवणैः कृतः ॥ ३६८ ॥**
**कफपित्ताविरोधी स्याद्वातव्याधौ च शस्यते ॥**

मसूरादिपञ्चकयूषमाह,—मसूरेति । वातव्याधौ च शस्यते इति कथं मुद्गमसूरयोर्यूषो वाते शस्तः, कथं कुलत्थलवण-योर्योगे पित्ताविरोधीति ? उच्यते,—मसूरादित्रयाणां शैत्यात् कुलत्थलवणयोश्चापि पित्ताविरोधित्वम् । कुलत्थलवणयोगादेव च वाते शस्तः; संयोगशक्तेर्वा अचिन्त्यत्वात् ॥ ३६८ ॥—

**मृद्वीकादाडिमैर्युक्तः स एवोक्तोऽनिलार्दिते ॥ ३६९॥**
**रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते ॥**

तस्य पञ्चकयूषस्य संयोगान्तरेण गुणान्तरमाह,—मृद्वीकेति । मसूरादियूषो मृद्वीकादाडिमाभ्यां संयुक्तोऽतीव वातहरः॥३६९॥

**पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ॥ ३७० ॥**
**पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ ॥**

अन्ययूषानाह,—पटोलेति । पटोलादिषु च यूषस्य सूपयो-नित्वात् मुद्गादिकं त्रिगुणमिच्छन्ति । इमौ द्वावपि यूषौ भिन्नौ ज्ञेयौ, न तु द्वयोरप्येकः ॥ ३७० ॥—

**श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ॥ ३७१ ॥**
**हन्ति मूलकयूषस्तु कफमेदोगलामयान् ॥**

कासेति । मूलकयूषः बालशुष्कमूलकयूषः, जेज्झटस्तु य-द्यपि बालमूलकं त्रिदोषघ्नं तथापि तस्य न यूषकरणे श्रुतिरस्ती-त्याह । अयमपि मुद्गादिसहितो ज्ञेयः ॥ ३७१ ॥—

**कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः ॥ ३७२ ॥**
**तूणीप्रतूणीकासार्शोगुल्मोदावर्तनाशनः ॥**

कुलत्थयूषः इति ॥ ३७२ ॥—

**दाडिमामलकैर्यूषो हृद्यः संशमनो लघुः ॥ ३७३ ॥**
**प्राणाग्निजननो मूर्च्छामेदोघ्नः पित्तवातजित् ॥**

दाडिमेत्यादि अयमेक एव समुद्रश्च । न विरेकं करोति नापि वमनं किंतु तत्स्थमेव दोषं शमयतीति संशमनः । प्राणः भारहरणादिशक्तिः ॥ ३७३ ॥—

**मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ॥ ३७४ ॥**

मुद्गेति । ग्राही अतिसारादीनां संग्राही । अयमप्येकः ॥३७४॥

**यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥**

यवकोलेति अयमप्येकः ॥—

**सर्वधान्यकृतस्तद्वद् बृंहणः प्राणवर्धनः ॥ ३७५ ॥**

सर्वधान्येति । सर्वधान्यकृतः इत्यभिधानेऽपि सदोषयोनि-त्वाच्छूकधान्यान् विहाय मुद्गादिशमीधान्यानामपथ्यवर्ज्यं यूषः। अयं तन्त्रान्तरे नवमुष्टिनाम्नाभिहितः ॥ ३७५ ॥

**खडकाम्बलिकौ हृद्यौ तथा वातकफे हितौ ॥**

खलेत्यादि । खलकाम्बलिकौ यूषविशेषौ । तत्र खलो द्विविधः । सतक्रशमीधान्यः सतक्रशाकश्च । तथाहि,'—सत-क्राणि शमीधान्यानि स्निग्धानि संग्राहकाणि खलानि' इति, सत-क्रशाकस्तु "कपित्थतक्रचाङ्गेरीमरिचाजाजीचित्रकैः । सुपक्वः खडयूषोऽयमथ काम्बलिकोऽपरः ॥ दध्यम्लवणस्नेहतिलमाषस-न्वितः ।" तक्राम्ल इति तक्राम्लसिद्धः काम्बलिकः, अम्लानां बहुत्वात् । जेज्झटमते तु "दधिदाडिममाषशाकस्नेहयुक्तं व्यञ्जनं खड इत्युच्यते" नलमते तु "तिलं सुलुञ्चितं कृत्वा पिष्टं क्षीरे त्र्यहोषितम् । पटे पूतं पचेद्धीमानार्द्रकोत्थापिते ततः । मरिचाजाजीसामुद्रैर्युक्तैस्तिलखडो भवेत्" । काम्ब-लिकलक्षणमत्रैवोक्तं "दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः । पुनः सौवर्चलाजाजीबीजपूरकसौरभैः ॥ संयोज्य मथितः स्वच्छ एष काम्बलिको भवेत्" ॥—

**बल्यः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः३७६**
**दध्यम्लः कफकृद् बल्यः स्निग्धो वातहरो गुरुः ॥**
**तक्राम्लः पित्तकृत् प्रोक्तो विषरक्तप्रदूषणः ॥ ३७७॥**

येन येनाम्लेन सिद्धो यूषो यं यं गुणं करोति तं तं गुणं दर्शय-न्नाह,—बल्य इति । दाडिमैः क्रियते योऽम्लो यूषः स दाडि-माम्लः । दध्यम्ल इति दध्ना क्रियते योऽम्लो यूषः सः दध्यम्लः। तक्राम्लोऽप्येवम् । प्रदूषणः प्रकोपनः । दाडिमधान्याम्लदधि-तक्रैरम्लत्वं काम्बलिकस्यैवेत्येके ॥ ३७६ ॥ ३७७ ॥

**खडाः खडयवाग्वश्च षाडवाः पानकानि च ॥**
**एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः ॥३७८॥**

खडा इति खडाः पूर्वोक्ताः, खडयवाग्वः इति खडैरुक्तलक्षणैः सिद्धाः यवाग्वः खडयवाग्वः । षाडवलक्षणमुच्यते,—"सष्टाम्लमधुरोऽसष्टकषायलवणोषणः। अतिक्तः खाडवः कोलकपित्थाद्युपबृंहितः"—इति; खाडवा इति बहुवचनं खाडवभूयस्त्वप्राप्तये, तच्च विस्तरभयान्न लिखितम् । पानकानि अम्लिकाद्राक्षादिकृतानि, एवमादिग्रहणात्सट्टकप्रभृतीनि ॥ ३७८ ॥

**अस्नेहलवणं सर्वमकृतं कटुकैर्विना ॥**
**विज्ञेयं लवणस्नेहकटुकैः संयुतं कृतम् ॥ ३७९ ॥**

व्यवहारार्थं कृताकृतयूषयोः परिभाषां दर्शयन्नाह,—अस्नेहलवणमिति । कटुकैः शुण्ठ्यादिभिः ॥ ३७९ ॥

**अथ गोरसधान्याम्लफलाम्लैरन्वितं च यत् ॥**
**यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसे ॥ ३८० ॥**

तयोर्यूषयोरम्लान्तरसंयोगेन संस्कृतासंस्कृतयोरपि गुरुलाघवं दर्शयन्नाह,—अथेति । नपुंसकनिर्देशाद्रसमिति सामान्येनाभीष्टं, तेन यूषरसयोरुभयोरपि गुरुलाघवमुक्तं भवति, संस्कृतादसंस्कृतं लघ्विति संबध्यते, रसः अत्र मांसरसः ॥ ३८० ॥

**दधिमत्स्याम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः ॥**

यूषकाम्बलिकलक्षणमुच्यते,—दधीति ॥—

**तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥३८१॥**
**सिण्डाकी च गुरूणि स्युः कफपित्तकराणि च ॥**

शुष्कशाकविशेषाणां कृतान्नानां गुणं निर्दिशन्नाह,—तिलेति। तिलविकृतिः मोदकादिः, पिण्याकविकृतिः न सुदृढ़कल्कादिः । तिलपिण्याकस्य शुष्कशाकस्य विरूढकस्य व्यञ्जनानि देशपुरुषविशेषतो ज्ञेयानि । विरूढं अङ्कुरितं विगतरोहं वा, अन्ये शाकमेवात्यन्तरूढं विरूढमाहुः । सिण्डाकी अनासुताद्रार्शुक्तेषु मूलादिष्वासुतसिण्डकी शुक्तगुणा नोक्तगुणा इत्येके, अनासुतसिण्डाकीशाकवर्गे उक्तगुणेति आसुतसिण्डाक्यां एवायं गुण इत्येके, मूलकादिशाकमेव किंचित् खिन्नं क्षुण्णं सुगन्धिकटुकद्रव्यान्वितं वटकीकृतं ब्रह्मसु सिण्डाकीत्युच्यते, अन्ये तु शाकसिक्थमण्डासुतिः सिण्डाकीत्याहुः ॥ ३८१ ॥—

**तद्वच्च वटकान्याहुर्विदाहीनि गुरूणि च ॥ ३८२ ॥**

तद्वदिति वटकानि इति सिण्डाकीवटकानि ॥ ३८२ ॥

**लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः॥**
**तृष्णामूर्च्छाभ्रमच्छर्दिश्रमघ्ना रागषाडवाः॥३८३॥**

रागषाडवगुणमाह,—लघव इति । तत्र रागः—"सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकया कृतः" । षाडवाः पुनर्मधुराम्ललवणसंयोगजा नानाविधाः ॥ ३८३ ॥

**रसाला बृंहणी बल्या स्निग्धा वृष्या च रोचनी ॥**

रसालागुणमाह,—रसालेति । रसाला शिखरिणी ॥—

**स्नेहनं गुडसंयुक्तं हृद्यं दध्यनिलापहम् ॥ ३८४ ॥**

सगुडदधिगुणमाह,—स्नेहनमिति ॥ ३८४ ॥

**सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः ॥**
**नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते ॥ ३८५॥**
**मन्थः सद्योबलकरः पिपासाश्रमनाशनः ॥**

मन्थमाह,—मन्थः सद्योबलकर इति सद्योबलकरोऽयं नोत्तरकाले बलकरो रूक्षत्वात्; अविशेषोक्तावपि यवादिशक्तवो ग्राह्याः ॥ ३८५ ॥—

**साम्लस्नेहगुडो मूत्रकृच्छ्रोदावर्तनाशनः ॥ ३८६ ॥**
**शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत् ॥**
**द्राक्षामधूकसंयुक्तः कफरोगनिबर्हणः ॥ ३८७ ॥**
**वर्गत्रयेणोपहितो मलदोषानुलोमनः ॥**

मन्थस्यैव द्रव्यान्तरसंयुक्तस्य गुणान्तरमाह,—साम्लस्नेहेत्यादि । उदावर्तनाशनत्वेनास्य वातहरत्वमुक्तम् ॥ ३८६ ॥ ॥ ३८७ ॥—

**गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम् ॥ ३८८ ॥**
**तदेव खण्डमृद्वीकाशर्करासहितं पुनः ॥**
**साम्लं सतीक्ष्णं सहिमं पानकं स्यान्निरत्ययम् ॥३८९॥**
**मार्द्वीकं तु श्रमहरं मूर्च्छादाहतृषापहम् ॥**
**परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ॥३९०॥**
**द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्रां च सर्वतः ॥**
**पानकानां यथायोगं गुरुलाघवमादिशेत् ॥ ३९१ ॥**

**इति कृतान्नवर्गः ।**

पानकगुणमाह,—गौडमिति । गुडशब्दोपलक्षणत्वात् सर्वेक्षुविकारपानकगुण उक्तः । अनम्लं ईषदम्लम् । पानकस्य नानाद्रव्यपरिभाषामाह,—तदेवेति । तदेव गौडमेव, साम्लं सतिन्तिडीकादिद्रव्यं, सतीक्ष्णमिति मरिचादितीक्ष्णद्रव्यसहितं, सहिमं सकर्पूरं, पानकं स्याद्भवेत्, निरत्ययं श्रेष्ठं, एवं खण्डमृद्वीकाशर्करापानकेष्वम्लादिद्रव्यसंस्कारो ज्ञेयः, मृद्वीकाग्रहणं पानकयोनिफलोपलक्षणम् । द्राक्षापानकगुणमाह,—मार्द्वीकमिति । परूषककोलपानकयोर्गुणमाह,—परूषकाणामिति । सर्वतः सर्वस्मिन् पानके, उक्तानुक्तपानकगुणोऽयमित्येके । इति कृतान्नवर्गः ॥ ३८८—३९१ ॥

**वक्ष्याम्यतः परं भक्ष्यान् रसवीर्यविपाकतः ॥३९२॥**

भक्ष्यान्निर्देष्टुमाह,—भक्ष्यानिति । भक्ष्याः लड्डुकादयः । रसवीर्यविपाकतः इति रसादिभिः कृत्वेत्यर्थः ॥ ३९२ ॥

**भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः ॥**
**अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥ ३९३ ॥**

भक्ष्याणां योनिविशेषेण गुणविशेषं निर्दिशन्नाह,—भक्ष्या इति । गोधूमपिष्टविकृतिं क्षीरेणालोड्य ये क्रियन्ते ते क्षीरकृता

भक्ष्याः । बल्याः इति उत्साहकराः, अदाहिनः इति ईषद्दाहिनः, दीपनाः पुनः स्ववर्गापेक्षया वातोपहताग्नेः संस्कारप्रभावाद्वा ॥ ३९३ ॥

**तेषां प्राणकरा हृद्या घृतपूराः कफावहाः ॥**
**वातपित्तहरा वृष्या गुरवो रक्तमांसलाः ॥ ३९४ ॥**

क्षीरभक्ष्यविशेषमाह,—तेषामिति । "मर्दिताः सामिताः क्षीरनालिकेरसितादिभिः । अवगाह्य घृते पक्वो घृतपूरोऽयमुच्यते" 'घेवर' इति लोके ॥ ३९४ ॥

**बृंहणा गौडिका भक्ष्या गुरवोऽनिलनाशनाः ॥**
**अदाहिनः पित्तहराः शुक्रलाः कफवर्धनाः ॥ ३९५ ॥**

गुडकृतान् भक्ष्यानाह,—बृंहणा त्यादि । गौडिका इति समितावेष्टिता गुडप्रधानोदरा गौडिका इत्युच्यन्ते ॥ ३९५ ॥

**मधुमस्तकसंयावाः पूपा ये ते विशेषतः ॥**
**गुरवो बृंहणाश्चैव मोदकास्तु सुदुर्जराः ॥ ३९६ ॥**

मध्विति समितावेष्टिताः पाकघनीभूता मधुरा घृतोदरा मधुमस्तकाः, त एव मधुशीर्षका उच्यन्ते, केचिन्मधुमस्तकशब्देन खज्जकमाहुः । संयावाः पुनः—"समितां मधुदुग्धेन मोदयित्वा सुशोभनः । पचेद् घृतोत्तरे खण्डे क्षिपेद्द्राण्डे नवे ततः । संयावोऽसौ युतश्चूर्णैः खण्डैलामरिचार्द्रकैः" इति । पूपाः 'पूआ' इति लोके । मोदकाः लड्डुकाः ॥ ३९६ ॥

**रोचनो दीपनः स्वर्यः पित्तघ्नः पवनापहः ॥**
**गुरुर्मृष्टतमश्चैव सट्टकः प्राणवर्धनः ॥ ३९७ ॥**

सट्टकगुणमाह,—दीपन इति । मिष्टतमः अतिशयेन स्वादुः । सट्टकभेदा बहवः । तत्रैक एव लिख्यते,—"लवङ्गव्योषखण्डैस्तु दधि निर्मथ्य गालितं । दाडिमबीजसंयुक्तं चन्द्रचूर्णावचूर्णितम् । सट्टकं सुप्रमोदाख्यं नलादिभिरुदाहृतम् ॥" अपरे विस्तरभयान्न लिखिताः ॥ ३९७ ॥

**हृद्यः सुगन्धिर्मधुरः स्निग्धः कफकरो गुरुः ॥**
**वातापहस्तृप्तिकरो बल्यो विष्यन्दनः स्मृतः ॥ ३९८ ॥**

विष्यन्दगुणमाह,—हृद्य इति । "आमगोधूमचूर्णं च सर्पिःक्षीरगुणान्वितम् । नातिसान्द्रो नातिघनो विष्यन्दो नाम नामतः" । अन्ये तु घृतभृष्टतण्डुलान् विष्यन्दशब्देनाहुः, तन्नेच्छति गयी । ॥ ३९८ ॥

**बृंहणा वातपित्तघ्ना भक्ष्या बल्यास्तु सामिताः ॥**
**हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः ॥ ३९९ ॥**

समिताकृतं सामान्यगुणं क्वचित् किंचिन्निराकुर्वन्नाह,—बृंहणा इति । सामिताः इति फेनकादिविशेषणं, समिता गोधूमचूर्णं, तया कृताः सामिताः; अन्ये बृंहणा इत्यादयः समिताकृतभक्ष्याणां सामान्यगुणाः, हृद्या इत्यादयस्तु समिताकृतभक्ष्यविशेषफेनकादिगुणा इत्याहुः । तत्र फेनकाः "विमर्द्य विमलां शुक्लां समितां नातिशर्करां । संवेष्टनाय गर्भार्थं खरपाकं घृते पचेत् ॥ फेनकं फेनसङ्काशं संपूर्णशशिसन्निभम्"—इति ॥ ३९९ ॥

**मुद्गादिवेसवाराणां पूर्णा विष्टम्भिनो मताः ॥**
**वेसवारैः सपिशितैः संपूर्णा गुरुबृंहणाः ॥ ४०० ॥**

त एव सामितादयो मुद्गादिन्यस्तगर्भा भवन्ति तदा तद्गुणं निर्दिशन्नाह,—मुद्गादीति । खिन्नपिष्टमुद्गादिकल्को वेसवारः, पूर्णा भरिताः । पिशितवेसवारैः भरितगुणमाह,—सपिशितैः इति पिशितवेसवारैरित्यर्थः, अपरे वेसवारं शुण्ठ्यादिमाहुः । संपूर्णा भरिता । इमेऽपि सामिताः ॥ ४०० ॥

**पाललाः श्लेष्मजननाः, शष्कुल्यः कफपित्तलाः ॥**

पालला इति पललं तिलपिष्टं गुडाद्युपेतं तेन कृताः पाललाः; इमेऽपि सामिताः । शष्कुल्य इति शष्कुल्यः शांकुलीति लोके ।

**वीर्योष्णाः पैष्टिका भक्ष्याः कफपित्तप्रकोपणाः ॥ ४०१**

सामिततान् भक्ष्यानभिधाय पिष्टभक्ष्यान्निर्दिशन्नाह,—वीर्योष्णा इति । पैष्टिकाः तण्डुलपिष्टकृताः ॥ ४०१ ॥

**विदाहिनो नातिबला गुरवश्च विशेषतः ॥**
**वैदला लघवो भक्ष्या कषायाः सृष्टमारुताः ॥ ४०२ ॥**
**विष्टम्भिनः पित्तसमाः श्लेष्मघ्ना भिन्नवर्चसः ॥**
**बल्या वृष्यास्तु गुरवो विज्ञेया माषसाधिताः ॥ ४०३ ॥**

वैदलाः मुद्गादिकृताः इति ॥ ४०२ ॥ ४०३ ॥

**कूर्चिकाविकृता भक्ष्या गुरवो नातिपित्तलाः ॥**

विग्रथितं क्षीरं घनत्वमापन्नं कूर्चिका, तया विविधप्रकाराः कृताः कूर्चिकाविकृताः ॥—

**विरूढककृता भक्ष्या गुरवोऽनिलपित्तलाः ॥ ४०४ ॥**

विरूढककृता इति विरूढककृताः अङ्कुरितमुद्गादिकृताः ॥ ४०४ ॥

**विदाहोत्क्लेशजनना रूक्षा दृष्टिप्रदूषणाः ॥**
**हृद्याः सुगन्धिनो भक्ष्या लघवो घृतपाचिताः ॥ ४०५ ॥**
**वातपित्तहरा बल्या वर्णदृष्टिप्रसादनाः ॥**
**विदाहिनस्तैलकृता गुरवः कटुपाकिनः ॥ ४०६ ॥**
**उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः ॥**

घृततैलपक्वभक्ष्यस्य गुणविशेषमाह,—हृद्या इति ॥ ४०५ ॥ ॥ ४०६ ॥—

**फलमांसेक्षुविकृतितिलमाषोपसंस्कृताः ॥ ४०७ ॥**
**भक्ष्या बल्याश्च गुरवो बृंहणा हृदयप्रियाः ॥**

योनिविशेषेण भक्ष्याणां गुणागुणविशेषं दर्शयन्नाह,—फलेत्यादि । फलानि तालादीनि ॥ ४०७ ॥—

**कपालाङ्गारपक्वास्तु लघवो वातकोपनाः ॥ ४०८ ॥**
**सुपक्वास्तनवश्चैव भूयिष्ठं लघवो मताः ॥—**

कपालाङ्गारपक्वानां स्नेहसिद्धाल्लघुत्वं दर्शयन्नाह,—कपालाङ्गारपक्वास्त्विति कपालं कर्परः, तत्र पक्वा मण्डकादयः, अङ्गारपक्वाः अङ्गारकर्कटीप्रभृतयः ॥ ४०८ ॥

**सकिलाटादयो भक्ष्या गुरवः कफवर्धनाः ॥ ४०९ ॥**

सकिलाटादय इति किलाटः क्षीरकूर्चिकापिण्डः, आदिशब्दात्तक्रपिण्डकादयः ॥ ४०९ ॥

**कुल्माषा वातला रूक्षा गुरवो भिन्नवर्चसः ॥**

कुल्माषा इति । यवपिष्टमुष्णोदके सिक्तमीषत् स्विन्नमृदितं शृङ्गाटादिप्रकारं कुल्माषमाहुः, यवादयः स्विन्ना इत्येके । भिन्नवर्चसः द्रवमलाः, उदावर्तहराः उदावर्तनाशकाः ॥—

**उदावर्तहरो वाट्यः कासपीनसमेहनुत् ॥**

वाट्येति वाट्यः यवगोधूमादिभिर्दलितैः कृतः; अन्ये तु भृष्टयवकृतो भक्ष्य इत्याहुः ॥—

**धानोलुम्बास्तु लघवः कफमेदोविशोषणाः ॥४१०॥**

धाना इति धानाः भृष्टयवाः; उलुम्बाः होलकाः, अत्र मुद्गकलायादिसिम्बा अग्निपक्का 'होलका' इत्युच्यन्ते ॥ ४१० ॥

**शक्तवो बृंहणा वृष्यास्तृष्णापित्तकफापहाः ॥**
**पीताः सद्योबलकरा भेदिनः पवनापहाः ॥ ४११ ॥**
**गुर्वी पिण्डी खरात्यर्थं लघ्वी पिण्डी विपर्ययात् ॥**
**शक्तूनामाशु जीर्येत मृदुत्वादवलेहिका ॥ ४१२ ॥**

वाट्यधानाप्रसङ्गेन यवशक्तूनाह,—शक्तव इति । शक्तवः यवशक्तवः, बृंहणाः न लेखना मांसकरा इत्यर्थः । तृष्णापित्तकफापहा इत्यत्र तृष्णापित्तमलापहा इति क्वचित्, तत्र मलापहत्वमल्पमलकर्तृत्वात् । सद्योबलकरत्वं रौक्ष्यान्नोत्तरकालम् । खरार्द्रभेदेन गुरुलाघवमाह,—गुर्वीत्यादि । खरा कठिनेत्यर्थः । विपर्ययात् इति मृद्वित्यर्थः । पिण्डीमभिधायावलेहिकामाह,—शक्तूनामित्यादि । शक्तूनामवलेहिका इति संबन्धः॥४११॥४१२॥

**लाजाश्छर्द्यतिसारघ्ना दीपनाः कफनाशनाः ॥**
**बल्याः कषायमधुरा लघवस्तृण्मलापहाः ॥ ४१३ ॥**

अधुना लाजगुणमाह,—लाजेति । मलापहत्वमल्पकर्तृत्वात् ॥ ४१३ ॥

**तृट्छर्दिदाहघर्मार्तिनुदस्तत्सक्तवो मताः ॥**
**रक्तपित्तहराश्चैव दाहज्वरविनाशनाः ॥ ४१४ ॥**

लाजशक्तुगुणमाह,—तृडिति । तत्सक्तवः लाजशक्तवः ॥ ४१४ ॥

**पृथुका गुरवः स्निग्धा बृंहणाः कफवर्धनाः ॥**
**बल्याः सक्षीरभावात्तु वातघ्ना भिन्नवर्चसः ॥४१५॥**

पृथुकगुणमाह,—पृथुका इति । आर्द्रशालिधान्यं मृदुभृष्टं मुषलाघातचिप्पटीभूतावयवं पृथुकाः इत्युच्यते ॥ ४१५ ॥

**संधानकृत्पिष्टमामं**

धान्यपिष्टगुणमाह,—सन्धानकृदिति । सन्धानं भग्नस्य, नवं आममपक्वमित्यर्थः ॥—

**तण्डुलः क्रिमिमेहनुत् ॥**

तण्डुलगुणमाह,—तण्डुल इति ॥—

**सुदुर्जरः स्वादुरसो बृंहणस्तण्डुलो नवः ॥**
**सन्धानकृन्मेहहरः पुराणस्तण्डुलः स्मृतः ॥ ४१६ ॥**

नवानवतण्डुलगुणमाह,—सुदुर्जर इति ॥ ४१६ ॥

**द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य तु ॥**
**यथाकारणमासाद्य भोक्तॄणां छन्दतोऽपि वा ॥**
**अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत्॥४१७**

किं बहुना आनन्त्यादन्नसंयोगसंस्काराणां न शक्यते सर्वोपसंग्रहः कर्तुं तस्मादुक्तानुक्तसंग्रहायाह,—द्रव्येति । विकारान् भक्ष्यविशेषान्, कारणमासाद्य इति दोषादिप्रकोपं प्राप्येत्यर्थः । भोक्तॄणां छन्दतोऽपि वेति पुरुषाभिलाषत इत्यर्थः । इति भक्ष्यवर्गः ॥ ४१७ ॥

**अतः सर्वानुपानानि उपदेक्ष्यामः ।—**
**अम्लेन केचिद्विहता मनुष्या**
**माधुर्ययोगे प्रणयीभवन्ति ॥**
**तथाम्लयोगे मधुरेण तृप्ता-**
**स्तेषां यथेष्टं प्रवदन्ति पथ्यम् ॥ ४१८ ॥**

अनुपानं निर्देष्टुमाह—अनुपानानीति । अन्नादनु पश्चात्पीयत इति अनुपानम् । कुत्र हितावहमित्याह,—अम्लेनेति । विहताः उद्वेजिताः, माधुर्ययोगे इति माधुर्योपयोगे इत्यर्थः । प्रणयी-प्रणयीभवन्ति सुखीभवन्तीति, तथा अम्लयोगे इत्यत्रापि प्रणयीभवन्तीति सुखीभवन्ति संबन्धनीयम् । तेषामुभयेषामपि अम्लतृप्तानां मधुरतृप्तानां चेत्यर्थः, यथेष्टं यथाभिलषितं; अम्लतृप्तस्य मधुरं पथ्यं, मधुरतृप्तस्य चाम्लमित्यर्थः । तस्मात्तद्रसषट्केऽपि परस्परविरुद्धमनुपानं ज्ञेयं, रसद्वयस्योपलक्षणत्वात्; अथवा शेषरसानां तृप्त्या भोक्तुमशक्यत्वाच्छेषरसानामनुक्तिः ॥४१८॥

**शीतोष्णतोयासवमद्ययूष-**
**फलाम्लधान्याम्लपयोरसानाम् ॥**
**यस्यानुपानं तु हितं भवेद्य-**
**त्तस्मै प्रदेयं त्विह मात्रया तत् ॥ ४१९ ॥**
**व्याधिं च कालं च विभाव्य धीरै-**
**र्द्रव्याणि भोज्यानि च तानि तानि ॥**
**सर्वानुपानेषु वरं वदन्ति**
**मेध्यं यदम्भः शुचिभाजनस्थम् ॥ ४२० ॥**
**लोकस्य जन्मप्रभृति प्रशस्तं**
**तोयात्मकाः सर्वरसाश्च दृष्टाः ॥**
**सङ्क्षेप एषोऽभिहितोऽनुपाने-**
**ष्वतः परं विस्तरतोऽभिधास्ये ॥ ४२१ ॥**

अनुपानद्रव्याणि सङ्कलय्याह,—शीतोष्णेत्यादि । द्रवप्रधान आसवः, द्रवप्रधानं द्रव्यप्रधानं च मद्यमुच्यते । यूषः मुद्गादीनां, फलाम्लानि वीजपूरादीनि, धान्याम्लं काञ्जिकं, पयः दुग्धं, रसः मांसरसः, यस्य पुरुषस्य, व्याधिं व्रणज्वरादिकं, कालं आवस्थिकं आर्तवं च, विभाव्य विशेषेण ज्ञात्वा, द्रव्याणि तैलादीनि, भोज्यानि रक्तशाल्यादीनि, एतत्सर्वमूहापोहविदा ज्ञात्वा अनुपानं विधेयमिति, किं बहुना सर्वानुपानेष्वपि मेध्यमान्तरिक्षं जलम् । ॥ ४१९—४२१ ॥

उष्णोदकानुपानं तु स्नेहानामथ शस्यते ॥
ऋते भल्लातकस्नेहात् स्नेहात् तौवरकात्तथा ॥४२२॥
अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिकम् ॥
शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः ॥४२३॥
दधिपायसमद्यार्तिविषजुष्टे तथैव च ॥
केचित् पिष्टमयस्याहुरनुपानं सुखोदकम् ॥ ४२४ ॥
पयो मांसरसो वापि शालिमुद्गादिभोजिनाम् ॥
युद्धाध्वातपसन्तापविषमद्यरुजासु च ॥ ४२५ ॥
माषादेरनुपानं तु धान्याम्लं दधि मस्तु वा ॥
मद्यं मद्योचितानां तु सर्वमांसेषु पूजितम् ॥ ४२६ ॥
अमद्यपानामुदकं फलाम्लं वा प्रशस्यते ॥
क्षीरं घर्माध्वभाष्यस्त्रीक्लान्तानाममृतोपमम् ॥४२७॥
सुरा कृशानां स्थूलानामनुपानं मधूदकम् ॥
निरामयानां चित्रं तु भुक्तमध्ये प्रकीर्तितम् ॥४२८॥
स्निग्धोष्णं मारुते पथ्यं कफे रूक्षोष्णमिष्यते ॥
अनुपानं हितं चापि पित्ते मधुरशीतलम् ॥ ४२९ ॥
हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ॥
अर्कसेलुशिरीषाणामासवास्तु विषार्तिषु ॥ ४३० ॥
अतः परं तु वर्गाणामनुपानं पृथक् पृथक् ॥
प्रवक्ष्याम्यनुपूर्वेण सर्वेषामेव मे शृणु ॥ ४३१ ॥

संक्षेपमभिधाय विस्तरमाह,—अतःपरमिति । ऋते विना इत्यर्थः । भल्लातकस्यात्यन्तोष्णत्वाच्छीतजलम् । तौवरकादिति "पत्रैस्तु केशराकारैः कलायसदृशैः फलैः । वृक्षास्तुवरनामानः पश्चिमार्णवतीरजाः" इति, तद्भवः तौवरकः । स्नेहप्रसङ्गेन एकीयमतं तैलानुपाने निर्दिशन्नाह,—अनुपानमिति । उष्णकाले यूषं, शीतकाले काञ्जिकम् । शीतोदकमिति माक्षिकस्येति माक्षिकस्य मधुनः, पिष्टान्नस्य तण्डुलपिष्टस्य, दधि प्रसिद्धं, पायसं क्षीरसिद्धास्तण्डुलाः, पायसस्य गुरुत्वेन विदाहसंभवाच्छीतोदकं पेयं, मद्यार्तिः मद्यविदाहः, विषजुष्टे विषव्यामोहे, तथैव च इति शीतोदकमेव । केचिदिति सुखोदकं ईषदुष्णमुदकम् । पय इति युद्धं संग्रामः, आतपः घर्मः, सन्तापः अग्न्यादीनाम् । विषमद्यरुजासु इति विषरोगेष्वित्यर्थः । शालिषु पयोऽनुपानं समानमप्यचित्यत्वात् संयोगशक्तीनां, जेज्झटस्तु पयःस्थाने मस्तु इच्छति, पयोग्रहणस्य गोरसोपलक्षणत्वात् तदपि लभ्यत एवेत्यन्ये । माषादेरिति धान्याम्लं काञ्जिकम् । मद्यमिति मद्योचितानां मद्ययोग्यानां, पूजितं प्रशस्तम् । अमद्येति । फलाम्लं दाडिमादि । क्षीरमिति । भाष्यादिक्लान्तानां अध्ययनादिपीडितानाम् । सुरा कृशानामिति कृशानां दुर्बलानां, सुरा अनुशस्तेति संबन्धः । मधूदकं मधुमिश्रजलम् । निरामयानामिति निरामयानां स्वस्थानां, चित्रं नानाप्रकारम् । स्निग्धोष्णमिति अनुपानमिति संबन्धः । शोणितपित्तिभ्य रक्तपित्तिभ्य इत्यर्थः । अत्रापि अनुपानमित्यनुवर्तते । अर्कसेल्विति विषार्तिषु विषपीडासु, अर्कादीनामासवा अनुपानादि; सेलुः श्लेष्मान्तकः । अत इति । अनुपूर्वेण यथाक्रमेण, सर्वेषामेव शाल्यादिवर्गाणामित्यर्थः । मे मत्सकाशात् ॥ ४२२—४३१ ॥

तत्र पूर्वशस्यजातीनां बदराम्लं, वैदलानां धान्याम्लं, जङ्गालानां धन्वजानां पिप्पल्यासवः, विष्किराणां कोलबदरासवः, प्रतुदानां क्षीरवृक्षासवः, गुहाशयानां खर्जूरनालिकेरासवः, प्रसहानामश्वगन्धासवः, पर्णमृगाणां कृष्णगन्धासवः, बिलेशयानां फलसारासवः, एकशफानां त्रिफलासवः, अनेकशफानां खदिरासवः, कूलचराणां शृङ्गाटककशेरुकासवः, कोशवासिनां पादिनां च तदेव, प्लवानामिक्षुरसासवः, नादेयानां मत्स्यानां मृणालासवः, सामुद्राणां तु मातुलुङ्गासवः, अम्लानां फलानां पद्मोत्पलकन्दासवः, कषायाणां दाडिमवेत्रासवः, मधुराणां त्रिकटुकयुक्तः खण्डासवः, तालफलादीनां धान्याम्लं, कटुकानां दूर्वानलवेत्रासवः, पिप्पल्यादीनां श्वदंष्ट्रावसुकासवः, कुष्माण्डादीनां दार्वीकरीरासवः, चुचुप्रभृतीनां लोध्रासवः, जीवन्त्यादीनां त्रिफलासवः, कुसुम्भशाकस्य स एव, मण्डूकपर्ण्यादीनां महापञ्चमूलासवः, तालमस्तकादीनामम्लफलासवः, सैन्धवादीनां सुरासव आरनालं च, तोयं वा सर्वेषामिति ॥ ४३२ ॥

तत्रेति। पूर्वशस्यजातीनां प्रागुक्तान्नसमूहानां, तानि च शूकधान्यकुधान्यशमीधान्यानि । जङ्गालानामेणादीनाम् । धन्वजानां वर्तकादीनां पक्षिणाम् । विष्किराणामिति विष्किराणां तेषामेव वर्तकादीनां; एतेन विष्किराणां पिप्पलीकोलबदरासवौ द्वावप्यनुपानं, कोलं स्वल्पबदरं, बदरं मध्यमप्रमाणं बदरम् । प्रतुदानामिति कृष्णगन्धः शोभाञ्जनकः । बिलेशयानामिति । एकशफानां अश्वादीनाम् । अनेकशफानामिति अनेकशफाः छागादयः । एवमयं मांसवर्गो जङ्गालादिभेदेनाष्टविधोऽनुपानेनोक्तः । अनूपवर्गस्य पञ्चविधस्यानुपानं निर्दिशन्नाह,—कूलचराणामिति । तदेव इति शृङ्गाटककशेरुकासवौऽनुपानमित्यर्थः । प्लवानामिति अनूपवर्गमपि पञ्चविधमभिधाय फलानामनुपानं निर्दिशन्नाह,—अम्लानामिति । अम्लफलानां दाडिमादीनाम् । कषायाणामिति कषायाणां क्षीरवृक्षादिफलानाम् । मधुराणामिति मधुराणां द्राक्षादीनां, वातामाभिषुकादीनां च । कटुकानां फलानामित्यर्थः । पिप्पल्यादीनामिति । श्वदंष्ट्रा गोक्षुरकः, वसुकः बुकः, केदारगिरौ 'बगहुल' इति प्रसिद्धः । शाकानामनुपानं निर्दिशन्नाह,—कुष्माण्डादीनामिति । जीवन्त्यादीनामिति जीवन्ती डोडी । कुसुम्भेति । स एव त्रिफलासवः । मण्डूकेति मण्डूकपर्णी ब्राह्मी । तालमस्तकादीनामनुपानमाह,—

तालमस्तकादीनामिति । तालमस्तकादीनां तालमस्तकमज्जादीनाम् । सैन्धवादीनामिति सर्वत्र सर्ववर्गेषु ॥ ४३२ ॥

**भवन्ति चात्र ।**

**सर्वेषामनुपानानां माहेन्द्रं तोयमुत्तमम् ॥**

सर्वेष्वेवानुपानेषु तोयस्य प्राधान्यं दर्शयन्नाह,—सर्वेषामिति। माहेन्द्रतोयं आन्तरिक्षमुदकम् ॥—

**सात्म्यं यस्य तु यत् तोयं तत् तस्मै हितमुच्यते४३३**

शेषमपि भौममुदकं नियमयन्नाह,—सात्म्यं चेत्यादि। यत्तोयमिति नदीनदसरस्तडागाद्युदकमित्यर्थः ॥ ४३३ ॥

**उष्णं वाते कफे तोयं पित्ते रक्ते च शीतलम् ॥**

उष्णशीतभेदेनानुपानमाह,—उष्णमिति ॥—

**दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा ॥ ४३४ ॥**
**यथोक्तेनानुपानेन सुखमन्नं प्रजीर्यति ॥**
**रोचनं बृंहणं वृष्यं दोषसंघातभेदनम् ॥ ४३५ ॥**
**तर्पणं मार्दवकरं श्रमक्लमहरं सुखम् ॥**
**दीपनं दोषशमनं पिपासाच्छेदनं परम् ॥ ४३६ ॥**
**बल्यं वर्णकरं सम्यगनुपानं सदोच्यते ॥**

सर्वेषामेवानुपानानामुक्तानां गुणं निर्दिशन्नाह,—दोषवत् इति वातादिदोषकरम् । सुखमिति अदोषमित्यर्थः । दोषसंघातभेदनं दोषसमूहपृथक्करणं, तर्पणं तृप्तिजनकं, मार्दवकरं शरीरकोमलतोत्पादकं, सुखं स्वास्थ्योपपादकं, दोषशमनं वातादिशमनं, पिपासाच्छेदनं पिपासाविनाशकं, परं अतिशयेन, सदोच्यते इति एवंविधमनुपानं सर्वदा कथ्यते; अन्ये दोषवदित्याद्यनुपानस्य फलं, रोचनमित्यादयस्तु सामान्यानुपानगुणा इत्याहुः ॥ ४३४—४३६ ॥—

**तदादौ कर्शयेत्पीतं स्थापयेन्मध्यसेवितम् ॥ ४३७ ॥**
**पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥**

तदनुपानं भोजनादिमध्यान्तविभागेन गुणविशेषं करोतीति दर्शयन्नाह—तदादाविति । तत् अनुपानं, आदौ भोजनस्य, कर्शयेत् अतिशयेन शरीरस्य कृशत्वमापादयेत्; स्थापयेत् न न कर्शयति नापि स्थूलयति अपि तु मध्यं करोतीत्यर्थः । पश्चात् पीतं बृंहयति पुष्टिमापादयति; तस्माद्वीक्ष्य प्रयोजयेदिति कार्श्यमिच्छन्नादौ, मध्यवपुरिच्छन् मध्य एव, पुष्टिमिच्छन्नन्त इति । अनुपानमिति अनुशब्दं लक्ष्यार्थमाहुः, आहारं लक्ष्यीकृत्य पानमिति आहारमाश्रित्य यत्पीयत इत्यर्थः, तेन मध्याद्योरप्यनुपानशब्दः प्रयुक्तो भवति ॥ ४३७ ॥—

**स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम् ॥ ४३८ ॥**
**भवत्याबाधजननमनुपानमतः पिबेत् ॥**

अनुपानव्यतिरेके दोषं दर्शयन्नाह,—स्थिरतामिति । स्थिरतामचलतां, अक्लिन्नं शुष्कमित्यर्थः, अद्रवपायिनां अनुपानमपिबतां, आबाधजननं पीडाकरम् ॥ ४३८ ॥—

**न पिबेच्छ्वासकासार्तो रोगे चाप्यूर्ध्वजत्रुगे ॥४३९॥**
**क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥**

कस्यचित् पुरुषविशेषस्यानुपाननिषेधमाह,—न पिबेदिति । आर्तः पीडितः, ऊर्ध्वजत्रुगे इति जत्रुर्ग्रीवामूलं तस्योर्ध्वभागे, क्षतोरस्कः इति उरःक्षतरोगवान् इत्यर्थः, प्रसेकी लालास्रावी, उपहत इति वातादिभिरित्यर्थः ॥ ४३९ ॥—

**पीत्वाऽध्वभाष्याध्ययनगेयस्वप्नान्न शीलयेत् ॥४४०॥**
**प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम् ॥**
**स्यन्दाग्निसादच्छर्द्यादीनामयान् जनयेद् बहून् ॥४४१॥**

अनुपाने पीते सति यद्वर्जनीयं तदाह,—पीत्वेति । अध्वा मार्गः, भाष्यं बहुभाषणं, अध्ययनं पठनं, गेयं गीतं, न शीलयेत् इति न सेवेतेत्यर्थः । कस्मादेतान्न शीलयेदित्याह,—प्रदूष्यामाशयमिति । प्रदूष्य वातादीनां प्रकोपं कृत्वा । तद्धीति तत् अनुपानं, हि यस्मादर्थे । तस्य पुरुषस्य, स्यन्दं श्लेष्मस्रवणम् ॥ ४४०—४४१ ॥

**गुरुलाघवचिन्तेयं स्वभावं नातिवर्तते ॥**
**तथा संस्कारमात्रान्नकालांश्चाप्युत्तरोत्तरम् ॥४४२॥**

गुरुलाघवस्य द्रव्यरसवीर्यविपाकाश्रयस्य च शरीरादिभेदेनोक्तस्य यथास्वातिशयेन व्यवस्थां कुर्वन्नाह—गुर्विति । नातिवर्तते न त्यजति, जङ्घाला जाङ्गलचारिणः कुतो लघव इत्युक्त अवश्यमेव स्वभावो वाच्यः, एवं शरीरधात्वपचयादिष्वपि वाच्यं; तथा संस्कारं नातिवर्तते, यथा—स्वभावाद्गुरोरपि व्रीहेर्लाजा लघवः, लघोरपि शालेः संस्कारात् पिष्टमेव गुरु; तथा मात्रां नातिवर्तते, यथा—"गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते"—इति; अन्नं च नातिवर्तते, तद्यथा—मण्डपेयाविलेपीभक्तापूपादि यथोत्तरं गुरु, यथापूर्वं लघु इति; कालं च नातिवर्तते, यथा—"नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम्"। उत्तरोत्तरमिति स्वभावात् संस्कारं संस्कारान्मात्रां मात्रातोऽन्नं अन्नात्कालं गुरुलाघवचिन्ता नातिवर्तत इत्यर्थः, चकारादिहापि चराद्याश्चानुक्ता अपि समुच्चीयन्ते ॥ ४४२ ॥

**मन्दकर्मानलारोग्याः सुकुमाराः सुखोचिताः ॥**
**जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्तिता ॥४४३॥**

इयं गुरुलाघवचिन्ता विशिष्टपुरुषाश्रयेति ज्ञापनायाह,—मन्दकर्मेति । मन्दकर्माणः अलसाः, मन्दानलाः मन्दाग्नयः, मन्दारोग्याः रोगिणः, सुकुमाराः मृदुदेहाः, सुखोचिताः सुखिनः, जन्तवः प्राणिनः, चिन्तेयमिति गुरुलाघवलक्षणा, परिकीर्त्यते कथ्यते इत्यर्थः ॥ ४४३ ॥

**बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः ॥**
**कर्मनित्याश्च ये तेषां नावश्यं परिकीर्त्यते ॥ ४४४ ॥**

**इति सर्वानुपानवर्गः ।**

यान् प्रति नेयं चिन्ता तानपि दर्शयन्नाह,—बलिन इति । बलिनः शक्त्युपचययुक्ताः, एतेनैवारोग्यत्वमुक्तं, खरभक्ष्याः अमृदुभोजनाः, कर्मनित्याः सदा कर्मकारिणः । परिकीर्त्यते इति गुरुलाघवचिन्तेयमिति शेषः । इति सर्वानुपानवर्गः ॥४४४॥

**अथाहारविधिं वत्स ! विस्तरेणाखिलं शृणु ॥**

अथाहारविधिमाह,—अथाहारविधिमिति । अखिलं समस्तं, शृणु आकर्णय ॥—

**आप्ताश्रितमसंकीर्णं शुचि कार्यं महानसम् ॥ ४४५ ॥**

पाकस्थानं कीदृक्कार्यमित्याह,—आप्तान्वितमिति । आप्ताः अव्यभिचारिणः, तैः अन्वितं आश्रितं; असंकीर्णं असंकटं; महानसमिति पाकस्थानं रसवतीति लोके ॥ ४४५ ॥

**तत्राप्तैर्गुणसंपन्नमन्नं भक्ष्यं सुसंस्कृतम् ॥**
**शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक् ॥ ४४६ ॥**

सुसंस्कृतस्यान्नस्य स्थानमाह,—तत्रेति । आप्तैः सुसंस्कृतमिति संबन्धः । गुणसंपन्नमिति गुणसंपन्नं इष्टरसगन्धस्पर्शवर्णोपेतं, भक्ष्यं अन्नं अभ्यवहरणीयं, सुसंगुप्तं अतिशयेनादृश्यं, समुपस्थापयेत् निवेशयेत्, शुचौ प्रदेशे इति संबन्धः, भिषक् वैद्यः ॥ ४४६ ॥

**विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः ॥**
**सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् ॥ ४४७ ॥**

तस्याहारस्यैवंगुणस्य दूषणकरविषनाशनं निर्दिशन्नाह,—विषघ्नैरिति । विषघ्नैर्विषहारिभिः, अगदैः औषधैः, स्पृष्टं छुप्तं, प्रोक्षितं व्यजनोदकैः इति अथर्वमन्त्रैरभिमन्त्रितं, अन्ये तु व्यजनोदकैरिति अगदस्यैव विशेषणं कथयन्ति, तेषां मते अगदोदकक्षालितव्यजनैर्वीजितमविषीभवत्यन्नम् । तन्नमभिधाय मन्त्रमपि निर्दिशन्नाह,—सिद्धैः अव्यभिचारिभिः, कुरुकुल्लाफेरण्डाप्रभृतिभिर्हतविषमन्नमिति संबन्धः । निवेदयेत् नृपतये इति शेषः ॥ ४४७ ॥

**वक्ष्याम्यतः परं कृत्स्नामाहारस्योपकल्पनाम् ॥**
**घृतं कार्ष्णायसे देयं पेया देया तु राजते ॥ ४४८ ॥**
**फलानि सर्वभक्ष्यांश्च प्रदद्याद्वै दलेषु च ॥**
**परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥ ४४९ ॥**
**प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ॥**
**कट्वराणि खडांश्चैव सर्वान् शैलेषु दापयेत् ॥ ४५० ॥**
**दद्यात् ताम्रमये पात्रे सुशीतं सुशृतं पयः ॥**
**पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत् ॥ ४५१ ॥**
**काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ॥**
**दद्याद्वैदूर्यचित्रेषु रागषाडवसट्टकान् ॥ ४५२ ॥**
**पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ॥**
**सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् ॥ ४५३ ॥**
**फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च ॥**
**तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥ ४५४ ॥**
**प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ॥**
**खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥ ४५५ ॥**
**सर्वान् गुडविकारांश्च रागषाडवसट्टकान् ॥**
**पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः ॥ ४५६ ॥**

वक्ष्यामीति कृत्स्नां समस्तां, उपकल्पनां समीपढौकनाम् । आधारप्रेक्षणीयमेव प्रथमं कल्पनं निर्दिशन्नाह—घृतमिति । कार्ष्णायसे कृष्णलोहपात्रे, कान्तलोहपात्रे इत्यन्ये । पेयेति राजते रौप्यमये । भक्ष्याः लड्डुकादयः । वैशब्दः पादपूरणे, दलेषु पत्रेषु, अन्ये तु वैदलेषु चेत्यत्र वेत्रवंशादित्वक्कृग्रथितेषु पर्णमयेष्विति मन्यन्ते । परिशुष्केति । "सिक्तं बहुघृते भृष्टं मुहुरुष्णाम्बुना मृदु । जीरकाद्यैर्घनं मांसं परिशुष्कं तदुच्यते । तदेव गोरसादानं प्रदिग्धमिति विश्रुतम्"—। प्रद्रवाणीति प्रद्रवाणि प्रकृष्टद्रवाणि मण्डादीनि, रसः मांसरसः, उपहारयेद्दद्यात् । कट्वरं तक्रं, अन्ये तु,—"सौवीराम्लमथात्यम्लं काञ्जिकं कट्वरं विदुः । अन्ये तु तदधोभागं तक्रं वा ह्यम्लतां गतं । सस्नेहं दधिजं तक्रमाहुरन्ये तु कट्वरम्" । खडः यूषविशेषः, सतक्रशमीधान्यः सतक्रशाकश्च, शैलेषु पाषाणमयेषु । दद्यादिति पयः क्षीरम् । पानीयमिति । मृण्मयेषु मृत्तिकामयेषु शरावादिषु । काचेति । शुभेषु भव्येषु, वैदूर्यं रत्नविशेषः, चित्रेषु विचित्रेषु; तत्र रागः "सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकया कृतः" । षाडवाः पुनर्मधुराम्ललवणसंयोगजा नानाविधाः, विशेषतः सूदेभ्यो ज्ञेयाः । सट्टकस्तु "लवङ्गव्योषखण्डैस्तु दधि निर्मथ्य गालितं । दाडिमबीजसंयुक्तं चन्द्रचूर्णावचूर्णितम् । सट्टकं तु प्रमोदाख्यं नलादिभिरुदाहृतम्" दद्याद्वैदूर्यचित्रेष्वित्यस्य स्थाने वज्रवैदूर्यचित्रेष्विति केचित् पठन्ति, तत्र वज्रं शतकोटिकं रत्नं हीरक इत्यर्थः । एष्वाधारेषु दीयमानानामेषां हितकारित्वम् । आधारविशेषमभिधाय देशविशेषेण आहारविशेषं दर्शयन्नाह,—पुरस्तादिति । पुरस्तात् अग्रतः, पुरौदनं हि ग्रहणसौकर्यात् । पात्रे स्थाल्यादिके । सुविस्तीर्णे बहुले । मनोरमे रुचिजनके । सूदः सूपकारः । सूपप्रहितं ओदनं भक्तं, प्रदेहांश्च प्रलेह्यांश्च; फलानि इति परिशुष्काणि पूर्ववत्, दक्षिणपार्श्वे दक्षिणभागे, भुञ्जानस्य भोजनं कुर्वतः, उपकल्पयेत् समीपं ढौकयेत् । प्रद्रवाणीति प्रद्रवादयः पूर्ववत्सव्ये पार्श्वे वामभागे । सर्वानिति । रागषाडवसट्टकाः पूर्ववत्, पुरस्तात् अग्रत इत्यर्थः । न केवलं पुरस्तात् द्वयोरपि च मध्यतः द्वयोः त्युक्तं भवति ॥ ४४८ पक्षे दद्यात् । एतेन [illegible] दातव्यमि-

**एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ॥**
**भोक्तारं विजने रम्ये निःसंबाधे शुभे शुचौ ॥ ४५७ ॥**
**सुगन्धपुष्परचिते समे देशेऽथ भोजयेत् ॥**

एवमिति । एवमुक्तप्रकारेण भोजनस्योपकल्पनां विज्ञाय भोक्तारं च विज्ञायेति संबन्धः । विजने एकान्ते, विजने हि भुञ्जानस्य दुष्टदृष्टिनिपातादिदोषो न भवति । रम्ये मनोहरे । निःसंबाधे [illegible]ल्लोठरहिते, तत्र भुञ्जानस्य पांशुप्रक्षेपादिदोषो न भवति । [illegible]भे वास्तुदोषरहिते । शुचौ पवित्रे, तत्र न भूताद्यावेशः । समे [illegible]म्नोन्नतत्वरहिते ॥ ४५७ ॥—

**विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः ॥ ४५८ ॥**
**मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् ॥**

कीदृगशनं हितमित्याह,—विशिष्टमिति । कैः कृत्वा? इष्टसंस्कारैः । पथ्यैरिष्टैः रसादिभिरिति पथ्यैः हितैः, इष्टैः प्रियैः, आदिशब्दात् गन्धवर्णस्पर्शा गृह्यन्ते । प्रत्यग्रं अभिनवं, अशनं भोजनम् ॥ ४५८ ॥—

**पूर्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ ॥ ४५९ ॥**
**पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत् ॥**
**आदौ फलानि भुञ्जीत दाडिमादीनि बुद्धिमान् ४६०॥**
**ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम् ॥**
**घनं पूर्वं समश्नीयात् केचिदाहुर्विपर्ययम् ॥ ४६१ ॥**
**आदावन्ते च मध्ये च भोजनस्य तु शस्यते ॥**
**निरत्ययं दोषहरं फलेष्वामलकं नृणाम् ॥ ४६२ ॥**
**मृणालबिसशालूककन्देक्षुप्रभृतीनि च ॥**
**पूर्वं योज्यानि भिषजा न तु भुक्ते कदाचन ॥ ४६३ ॥**

कालभेदेनाप्याहारविधिं निर्दिशन्नाह,—पूर्वमिति । बुभुक्षिते पुरुषे वातपित्तप्रशमनाय प्रथमं मधुरो रसः पक्वाशयगतं वायुं जयति, अम्ललवणौ मध्यभोजनस्थौ पित्ताशये अग्निदीप्तिं कुरुतः, अन्ते कफजयाय कट्वादयः । आदाविति आदौ फलानि भुञ्जीत, वातजयार्थं दाडिमाद्यम्लोपयोगः; आदाविति मतान्तरे इत्यन्ये । ततः पेयान् पातव्यान् दाडिमादिकठिनाहारमृदुकरणार्थं, ततो भोज्यं रक्तशाल्यादि, चित्रान् नानाप्रकारान् । घनमिति घनं भोज्यं भक्ष्यादि कठिनं, विपर्ययं उक्तविपर्ययं पूर्वं द्रवं पश्चात् कठिनमिति, घृतं पूर्वं समश्नीयादिति केचित् पठन्ति । अम्लफलस्यादावेव नियतस्य कस्यचिदेव फलस्य आदिमध्यान्तेषु प्रयोगं दर्शयन्नाह,—आदाविति । निरत्ययं अबाधम् । मृणालेति मृणालं पद्मनालं, बिसं भिसण्डकः, शालूकं प्रसिद्धम् । ॥ ४५९—४६३ ॥

**सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः ॥**
**काले सात्म्यं लघु स्निग्धं क्षिप्रमुष्णं द्रवोत्तरम् ४६४॥**
**बुभुक्षितोऽन्नमश्नीयात् मात्रावद्विदितागमः ॥**

भुञ्जानः कथं भुञ्जीतेत्याह,—सुखमुच्चैरिति । समासीनः इति सम्यगासीनः उपविष्टः । अन्नतत्परः इति न कामादिव्यग्रमनाः भुञ्जानः । किम्भूतः कदा कीदृशं भुञ्जीतेत्याह,—काले सात्म्यमित्यादि । कालो द्विविधः नित्यग आवस्थिकश्च, तत्र नित्यग आर्तवः, स पुनरतीवायतयामा इत्यादिना नियमितः; आवस्थिकः पुनर्जीर्णलक्षणापेक्षः, आमे त्वन्नाकालः । सात्म्यं देशामयादिभेदेनानेकविधं, असात्म्यं पुनर्दोषकारि, क्षिप्रं नातिद्रुतं नातिविलम्बितं, अतिद्रुतातिविलम्बितयोर्दोषकारित्वात्, द्रवोत्तरं द्रवप्रधानम् । बुभुक्षितग्रहणं अकालबुभुक्षानिषेधाय, वक्ष्यति च,—"भवत्यकालेऽपि तदा बुभुक्षा या मन्दबुद्धिं विषवन्निहन्ति" । मात्रालक्षणमाह,—"अपीडनं भवेत् कुक्षेः पार्श्वयोरविपाटनम् । अन्नेन हृदयाबाधो जठरस्य तु गौरवम् । प्रीणनं चक्षुरादीनां शमनं क्षुत्पिपासयोः । उच्छ्वासश्वासहास्यादिकथासु सुखवर्तनम् । सुखेन परिणामः स्यादन्ने भुक्ते दिवानिशि" । विदितागम इति हेयोपादेयविवेकार्थं विदितं हिताहितं येन सः विदितागमः ॥ ४६४ ॥—

**काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते ॥ ४६५ ॥**
**लघु शीघ्रं व्रजेत् पाकं स्निग्धोष्णं बलवह्निदम् ॥**
**क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम् ॥ ४६६ ॥**
**सुखं जीर्यति मात्रावद्धातुसाम्यं करोति च ॥**

एषां कालादिभोजनानां फलानुशंसां दर्शयन्नाह,—काले भुक्तमिति । प्रीणयति तृप्तिं जनयति, सात्म्यमन्नं भुक्तं न बाधते न पीडां जनयति । लघु इत्यादि लघ्वन्नं भुक्तमिति संबन्धः । स्निग्धोष्णं [illegible], उष्णं [illegible] क्षिप्रमित्यादि । समं एककालं, अदोषं द्रवोत्तरमिति द्रवोत्तरमन्नं भुक्तं सददोषं दोषरहितं पाकं याति । सुखमित्यादि मात्रावदन्नं भुक्तं सुखेन पाकं गच्छति धातुसाम्यं च करोति, धातुशब्दोऽयं दोषधातुमलेषु वर्तते ॥ ४६५—४६६ ॥—

**अतीवायतयामास्तु क्षपा येष्वृतुषु स्मृताः ॥ ४६७ ॥**
**तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु ॥**
**येषु चापि भवेयुश्च दिवसा भृशमायताः ॥ ४६८ ॥**
**तेषु तत्कालविहितमपराह्णे प्रशस्यते ॥**
**रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ॥ ४६९ ॥**
**कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् ॥**

आर्तवलक्षणं कालमाह,—अतीवायतयामा इति । अतीवायतयामाः अतीव दीर्घप्रहराः, क्षपाः रजन्यः, येष्वृतुषु इति हेमन्ते शिशिरे च । तत्प्रत्यनीकाढ्यमिति कालबलप्रवृत्तदोषगुणानां बाधकभूतं विरोधिद्रव्यगुणबहुलमित्यर्थः । प्रातः इति सपादे यामे । येष्विति येषु ऋतुषु ग्रीष्मप्रावृषोः, भृशमायताः दीर्घतराः, तत्कालविहितं द्रवस्निग्धमधुरप्रायं, अपराह्ण इति अर्धतृतीययामोपरि । रजन्य इति येषु ऋतुषु शरदि वसन्ते च, सममहोरात्रं मध्याह्ने इत्यर्थः, अयमेकाशनस्य पुरुषस्य विधिः; द्विरश्नतः पुनः प्रातर्भोजनमात्राया अर्धमात्रं त्रिभागं वा लघुमृष्टं च; तच्च प्रातर्भोजनं सपादे प्रहरे, द्वितीयं भोजनं लर्धचतुर्थप्रहरोपरि इति पञ्जिकाकारः; जेज्झटस्तु सत्रिभागे प्रहरे दिवसस्य रात्रेश्च सत्रिभागप्रहरे भुञ्जानस्य रजनीदिवसयोः समत्वं भवतीत्याह । अयमार्तवकाल उक्तः । आवस्थिकं पुनः स्वास्थ्यवृत्तिकेऽध्याये वक्ष्यति ॥ ४६७—४६९ ॥—

**नाप्राप्तातीतकालं वा हीनाधिकमथापि वा ॥ ४७० ॥**
**अप्राप्तकालं भुञ्जानः शरीरे ह्यलघौ नरः ॥**
**तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति ४७१**
**अतीतकालं भुञ्जानो वायुनोपहतेऽनले ॥**
**कृच्छ्राद्विपच्यते भुक्तं द्वितीयं च न काङ्क्षति ॥ ४७२ ॥**

**हीनमात्रमसन्तोषं करोति च बलक्षयम् ॥**
**आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ॥ ४७३ ॥**

कालमात्रावतो विपर्ययमकालमात्रावत्त्वं निर्दिशन्नाह,—नाप्राप्तेति । अप्राप्तकालमतीतकालं वा न भुञ्जीतेत्यर्थः । हीनाधिकमिति हीनमात्रमधिकमात्रं वा न भुञ्जीत । तयोरप्राप्तातीतकालयोरधिकन्यूनयोश्च दोषं दर्शयन्नाह;—अप्राप्तकाले इति । अप्राप्तकालं भुञ्जानो नरः शरीरे अलघौ सति तांस्तान् शिरोरुजादीन् व्याधीन् नियच्छति प्राप्नोति । अतीतकाले इति । असन्तोषं असंतृप्तिम् । आटोपः उदरस्याध्मानं, सादः अङ्गग्लानिः । अधिकमिति अधिकं अन्नं भुक्तमित्यर्थः ॥ ४७०—४७३ ॥

**तस्मात् सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्जितम् ॥**
**यथोक्तगुणसंपन्नमुपसेवेत भोजनम् ॥ ४७४ ॥**
**विभज्य दोषकालादीन् कालयोरुभयोरपि ॥**

कीदृक् पुनरन्नं सेवितव्यमित्याह,—तस्मादिति । युक्त्या मात्रया । कालयोरुभयोरपि प्रातः सायं च ॥ ४७४ ॥—

**अचोक्षं दुष्टमुत्सृष्टं पाषाणतृणलोष्टवत् ॥ ४७५ ॥**
**द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत् ॥**
**चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः ॥ ४७६ ॥**
**अशान्तमुपदग्धं च तथा स्वादु न लक्ष्यते ॥**

सात्म्याद्युपादेयं प्रदर्श्य हेयं प्रदर्शयन्नाह ।,—अचोक्षमिति । अचोक्षं अपवित्रं, मलिनमित्यन्ये, दुष्टं विषादिभिर्दोषकरत्वात्, उत्सृष्टं भुक्तोत्सृष्टं, पाषाणतृणलोष्टवदिति पाषाणादियुक्तमित्यर्थः, द्विष्टं मनःप्रतिघाति, व्युषितं विशेषेण उषितं, पूति शटितं; पूति चान्नमिति चकारादत्र शत्रुगणगणिकादीनामप्यन्नं बाह्यदूषणान्वितं वर्जनीयमिति समुच्चीयते । अस्वादु अन्नं पूर्वं वर्जनीयमुक्तमिति तद्भेदानाह—चिरसिद्धमित्यादि । स्थिरं कठिनम्, अशान्तं किंचिदवशिष्टविस्रावणम्, उपदग्धमिति अतिपाकित्वेन ज्वलितम् । चकारेण दुःसिद्धमपि समुच्चीयते । तथा स्वादु न लक्ष्यते इति यदन्नं स्वादु न लक्ष्यते तदपि वर्जयेदिति संबन्धः ॥ ४७५ ॥ ४७६ ॥—

**यद्यत् स्वादुतरं तत्तत् विदध्यादुत्तरोत्तरम् ॥ ४७७ ॥**

अन्नेषु स्वादुषु सत्सु विधानं दर्शयन्नाह,—यद् यदिति । स्वादुशब्दः संस्कृते रसे वर्तते, न तु मधुरार्थके एव । विदध्यात्, दद्यात्; कथं ? उत्तरोत्तरं एकस्मिन् स्वादुनि दत्ते सति तस्मादधिकतरस्वादु दद्यात्, तस्मिन्नपि दत्ते तस्मादधिकतरस्वादु दद्यादित्यर्थः ॥ ४७७ ॥

**प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः ॥**
**विशुद्धरसेन तस्मै रोचतेऽन्नमपूर्ववत् ॥ ४७८ ॥**
**स्वादुना तस्य रसनं प्रथमेनातितर्पितम् ॥**
**न तथा स्वादयेदन्यत् तस्मात् प्रक्षाल्यमन्तरा ॥ ४७९ ॥**

प्रक्षालयेदद्भिरास्यं गण्डूषं कारयेदित्यर्थः । गण्डूषकरणस्य फलमाह,—विशुद्धेति । स्वादुना मिष्टेन । तस्य भुञ्जानस्य । अन्यत् अपरम् स्वादोरस्वादोर्वा ॥ ४७८ ॥ ४७९ ॥

**सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम् ॥**
**स्वादु संजनयत्यन्नमस्वादु च विपर्ययम् ॥ ४८० ॥**

तस्य गुणमाह,—सौमनस्यमिति । सौमनस्यं सुमनस्कता, बलं सर्वधातुस्नेहः, पुष्टिः शरीरोपचयः, उत्साहः प्रसिद्धः, हर्षणं तुष्टिः, सुखं नीरोगता । स्वादु सञ्जनयत्यन्नं स्वाद्वन्नं सौमनस्यादीन् सम्यग् जनयतीति संबन्धः । अस्वाद्वित्यादि अस्वाद्वन्नं सौमनस्यादीनां विपर्ययं विपरीततां जनयतीत्यर्थः ॥ ४८० ॥

**भुक्त्वाऽपि यत् प्रार्थयते भूयस्तत् स्वादु भोजनम् ॥**

स्वादोरेवान्नस्य लक्षणं निर्दिशन्नाह,—भुक्त्वेति । भुक्तवान् हि यत् प्रार्थयते तदेव अवश्यं स्वादु विज्ञेयम् । अन्ये तु 'तत्साधु भोजनं' इति पठन्ति । मात्रावद्भुञ्जीतेति तस्यैव लक्षणमिति च वदन्ति, तन्नेच्छति गयी ॥—

**अशितश्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत् ॥ ४८१ ॥**

अशित इति अशितः कृतभोजनः, उदकं जलं युक्त्या पिबेदिति संबन्धः, कया युक्त्या मात्रया, भुञ्जानश्चान्तरा पिबेत् भोजनं कृत्वेत्यर्थः ॥ ४८१ ॥

**दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः ॥**
**कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् ॥ ४८२ ॥**

अन्यदपि भुक्ते कार्यान्तरं दर्शयन्नाह,—दन्तेत्यादि । शोधनेन तृणादिना ॥ ४८२ ॥

**जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेव तु ॥**
**भुक्तमात्रे कफश्चापि,**

भोजनोत्तरकालक्रियाप्रसङ्गेन जरणजीर्णकालयोरपि दोषप्रकोपं दर्शयन्नाह,—जीर्णे इति । जीर्णे परिणामंगते, विदग्धे किंचित्पक्के ॥—

**तस्माद् भुक्तेरितं कफम् ४८३**
**धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः ॥**
**पूगकङ्कोलकर्पूरलवङ्गसुमनःफलैः ॥ ४८४ ॥**
**फलैः कटुकषायैर्वा मुखवैशद्यकारकैः ॥**
**ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ ४८५ ॥**

भुक्ते सति कुपितश्लेष्मणः प्रतीकारमाह,—तस्मादिति । भुक्तेरितं भोजनेन प्रेरितम् । अपोह्य स्फोटयित्वा । कषायकटुतिक्तकैः इति अफलैर्द्रव्यैरिति विज्ञेयं, फलैः कटुतिक्तकषायैर्वा इति वक्ष्यमाणत्वात्, सुमनःफलैः जातीफलैः ॥ ४८३—४८५ ॥

**भुक्त्वा राजवदासीत यावदन्नक्लमो गतः ॥**
**ततः पादशतं गत्वा वामपार्श्वेन संविशेत् ॥ ४८६ ॥**

तदनन्तरं किं कुर्यादित्याह,—तत इति । संविशेत् शय्यायां शयीत ॥ ४८६ ॥

**शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ॥**
**भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥ ४८७ ॥**

अन्नस्य संस्थापनहेतून् शब्दादिविषयानाह,—शब्देति । साधु तिष्ठति भव्येन स्थितिं करोति, शब्दादीन् विषयांश्चेत्यन्ये पठन्ति ॥ ४८७ ॥

**शब्दरूपरसाः स्पर्शा गन्धाश्चापि जुगुप्सिताः ॥**
**अशुच्यन्नं तथाभुक्तमतिहास्यं च वामयेत् ॥ ४८८ ॥**

कुतः पुनरेते प्रिया अप्रिया इत्याह,—शब्देति । जुगुप्सिताः निन्दिताः, अशुचिं अपवित्रम् ॥ ४८८ ॥

**शयनं चासनं वापि नेच्छेद्वापि द्रवोत्तरम् ॥**
**नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥ ४८९ ॥**
**न चैकरससेवायां प्रसज्येत कदाचन ॥**
**शाकावरान्नभूयिष्ठमम्लं च न समाचरेत् ॥ ४९० ॥**

अन्यदपि सर्वं वर्जनीयमाह,—शयनमिति । शयनमासनं वा नेच्छेत् चिरकालमित्यर्थः । द्रवोत्तरं द्रवाढ्यं भोजनम् । न अग्न्यातपादीन् इच्छेदिति संबन्धः । प्लवनं स्नानं जलप्रतरणं वा, यानं गमनं, वाहनं रथाश्वादि । न प्रसज्येत नाभ्यसेत् न पुनः पुनः शीलयेदित्यर्थः । शाकं प्रसिद्धं, अवरान्नं वैदलान्नं, एतद्भूयिष्ठं तद्बहुलं, नाचरेत् न भक्षयेत्, तथा अम्लं च ॥ ४८९ ॥ ४९० ॥

**एकैकशः समस्तान् वा नाध्यश्नीयाद्रसान् सदा ॥**

रसानामतिमात्राशनदोषं दर्शयन्नाह,—एकैकश इति । एकैकश एकैकरसं, समस्तान् वा रसान् नाध्यश्नीयात् नाधिकं भक्षयेदित्यर्थः । दोषरोगापेक्षया एकैकरसविधिः, स्वस्थापेक्षया तु समस्तरसविधिः । नात्यश्नीयादित्यन्ये, अपरे तु 'एकशोऽथ समस्तान् वा न भुञ्जीत रसान् सदा'—इति पठन्ति व्याख्यानयन्ति च एकीकृत्य न सर्वमश्नीयात् यथाक्रममेव षड्रसं स्वस्थेन भोक्तव्यं, वाशब्दः समुच्चये ॥—

**प्राग्भुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् ॥ ४९१**
**पूर्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ॥**

अग्नौ मन्दे द्विरन्नसमभ्यवहारनिषेधं दर्शयन्नाह,—प्रागिति । प्राग्भुक्ते प्रातर्भोजने कृते, अविविक्ते अग्नौ द्विरन्नं न समाचरेत् इति द्वितीयं वारं न भुञ्जीतेत्यर्थः । कुत इत्याह,—पूर्वभुक्ते इत्यादि । विदग्धे जठरानलेन किंचित्पक्के किंचिदामे । भुञ्जानः द्विर्भुञ्जान इत्यर्थः । पावकं जठरानलम् ॥ ४९१ ॥

**मात्रागुरुं परिहरेदाहारं द्रव्यतश्च यः ॥ ४९२ ॥**

मन्दाग्नेरेवाहारविशेषं परिहारार्थं निर्दिशन्नाह,—मात्रेति । मुद्गादीनां लघूनामपि मात्रया गुरुमाहारं परिहरेत्, द्रव्यतो गुरूणां माषमहिषवराहपिशितादीनाम् ॥ ४९२ ॥

**पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः ॥**
**द्विगुणं च पिबेत्तोयं सुखं सम्यक् प्रजीर्यति ॥**

संस्कारगुरोर्द्रव्यविशेषस्य निषेधं दर्शयन्नाह,—पिष्टान्नमिति । अथ कथंचित् पिष्टान्नसेवा तदा क्षुधितस्य मात्रयैव नान्यथेति, तत्र मात्राशब्दोऽल्पतावाचकः; पिष्टान्नभोजने द्विगुणं वा पिबेत्तोयम् ॥—

**पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् ॥ ४९३ ॥**

गुरुत्वप्रसङ्गेन चतुर्णां पेयलेह्यादीनां गुरुत्वं निर्दिशन्नाह,—पेयेत्यादि । पेयं पानीयादि, लेह्यं मध्वादि, अद्यं भक्तादि, भक्ष्यं मोदकादि ॥ ४९३ ॥

**गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते ॥**
**द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ॥ ४९४ ॥**

तत्रोक्तानां पेयादीनां लघूनां गुरूणां का मात्रा यामपेक्ष्य मात्रागुरुरित्युपदिश्यत इत्याह,—गुरूणामिति । गुरूणां संस्कारस्वभावकृतानां मोदकमाषादीनां संस्कारस्वभावाभ्यामेव गुरुतराणां पिष्टमयवराहपिशितादीनां त्रिभागसौहित्यमेव, अयं चार्थोऽर्धशब्दादवयववचनाल्लभ्यते । लघूनां तृप्तिरिष्यते इति लघुतराणामेव च तृप्तिः, लघूनां पुनरीषत्तृप्तिः । न च द्रवद्रवोत्तरयोः पेयत्वाल्लघुलघुतरयोः कदाचिन्मात्रागौरवेण तौ भजेतेत्याह,—द्रवोत्तर इति । द्रवोत्तरः तक्राद्यधिकः, द्रवः पेयादिः ॥ ४९४ ॥

**द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते ॥**

शुष्कस्यापि स्रोतोऽवरोधकारणस्य संयोगान्तरेण अदोषं प्रतिपादयन्नाह,—द्रवाढ्यमिति । शुष्कमपि द्रवाढ्यं सम्यगेवोपपद्यते अदोषकरं सम्यग्भवतीत्यर्थः ॥—

**विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥ ४९५ ॥**
**पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ॥**

केवलविशुष्कस्य पुनराहरणे दोषं निर्दिशन्नाह,—विशुष्कमिति । अभ्यस्तं सेवितं, साधु भव्येन । कथं तर्हि पाकं गच्छतीत्याह,—पिण्डीकृतमित्यादि । असंक्लिन्नं असम्यगार्द्रीभावमापन्नं, विदाहमुपगच्छति विदग्धतामुपयाति ॥ ४९५ ॥—

**स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति ॥ ४९६ ॥**
**विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते ॥**

शुष्कान्नस्य विप्रकृष्टविदाहप्रसङ्गेन सन्निकृष्टं हेतुजमपि विदाहं दर्शयन्नाह,—स्रोतसीति । स्रोतस्यन्नवहे आमाशये, पक्तौ अग्निस्थाने, विदाहि भुक्तमिति अन्नं, अन्यद्वा इति अविदाह्यन्नं, विदह्यते विदग्धतामुपयाति ॥ ४९६ ॥—

**शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ॥ ४९७ ॥**

शुष्कान्नप्रसङ्गेन शुष्कस्येतरस्य च वह्निमान्द्यकरत्वमाह,—शुष्कमिति । शुष्कं पिष्टान्नादि, विरुद्धं क्षीरमत्स्यादिकं, विष्टम्भि चणकमसूरादि, वह्निव्यापदं अग्निमान्द्यं, आवहेत् कुर्यात् ४९७

**आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ॥**
**अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ४९८ ॥**

तामेव वह्निव्यापदं विप्रकृष्टकारणोपजनितामभिधाय सन्नि

कृष्टवातादिकाजीर्णलक्षणां निर्दिशन्नाह,—आममिति। आहारस्यैव पक्कस्य उर्वरितो रसः रसशेषः। तस्मादल्पदोषदूषितत्वान्न तस्य दोषव्यपदेशो भवति॥ ४९८॥

**अत्यम्बुपानाद्विषमाशनाद्वा**
**सन्धारणात् स्वप्नविपर्ययाच्च॥**
**कालेऽपि सात्म्यं लघु चापि भुक्त-**
**मन्नं न पाकं भजते नरस्य॥ ४९९॥**
**ईर्ष्याभयक्रोधपरिक्षतेन**
**लुब्धेन रुग्दैन्यनिपीडितेन॥**
**प्रद्वेषयुक्तेन च सेव्यमान-**
**मन्नं न सम्यक् परिणाममेति॥ ५००॥**

कस्मादजीर्णं भवतीत्याह,—अत्यम्बुपानादिति। रात्रौ जागरणं दिवसे च स्वप्नः स्वप्नविपर्ययः। कायिककारणमभिधाय मानसरजस्तमोदोषकृतमजीर्णमाह,—ईर्ष्येत्यादि। ईर्ष्या परसंपत्तावसहिष्णुता, भयं परस्मात्रासः, क्रोधः पराभिद्रोहलक्षणः, परिक्षतेन ईर्ष्यादिभिः परिभूतेन। लुब्धेन लोभसहितेन। रुग्दैन्यनिपीडितेन रोगदैन्यव्याप्तेन, दैन्यं निर्गतित्वम्। प्रद्वेषः मात्सर्यम्॥ ४९९॥ ५००॥

**माधुर्यमन्नं गतमामसंज्ञं**
**विदग्धसंज्ञं गतमम्लभावम्॥**
**किंचिद्विपक्कं, भृशतोदशूलं**
**विष्टब्धमानद्धविरुद्धवातम्॥ ५०१॥**
**उद्गारशुद्धावपि भक्तकाङ्क्षा**
**न जायते हृद्गुरुता च यस्य॥**
**रसावशेषेण तु सप्रसेकं**
**चतुर्थमेतत् प्रवदन्त्यजीर्णम्॥ ५०२॥**

तेषामेवाजीर्णानां लक्षणं दर्शयन्नाह,—माधुर्यमिति। श्लेष्मदूषणप्रभावोपजनितं माधुर्यगतमामं तदेव कफदूषितं वा तत्स्वभावकल्पमापन्नं, कफकार्याणि तु तत्र गौरवस्नेहकण्डूप्रभृतीनि च द्रष्टव्यानि। विदग्धसंज्ञमिति किंचिद्विपक्कं अम्लभावं गतमन्नं विदग्धसंज्ञं कथ्यते। तत्कथंभूतं? किंचिद्विपक्कम्। अत्रापि शुक्तातिक्ताम्लोद्गारादीनि पित्तकार्याणि द्रष्टव्यानि। आनद्धविरुद्धवातं विष्टब्धं कथ्यते। तत्कथम्भूम्? भृशतोदशूलमिति। आनद्धः अप्रवृत्तः, विरुद्धो विशेषेण रुद्धो वातो यस्मित् तत्तथा। अत्रापि वातकार्याणि जृम्भाङ्गमर्दशिरोरुजादीनि द्रष्टव्यानि। भृशतोदशूलं अत्यर्थतोदशूलम्। उद्गारशुद्धाविति। भक्तकाङ्क्षा न जायते नोत्पद्यते, हृद्गुरुता हृदयगौरवं भवति, यस्याजीर्णस्य, रसावशेषेण कृत्वा, सप्रसेकं लालास्रावसहितम्। एतानि सङ्क्षेपेण अजीर्णलक्षणानि उक्तानि॥ ५०१—५०२॥

**मूर्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः॥**
**उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः॥ ५०३॥**

अजीर्णदोषलिङ्गं प्रदर्श्य व्याधिसामान्यलक्षणभूतप्रभावोपजनितकार्याणि निर्दिशन्नाह,—मूर्च्छेति। मूर्च्छा चेतनाच्युतिः, प्रलापः असम्बद्धभाषणं, वमथुः छर्दिः, सदनं अङ्गग्लानिः, अन्ये तु स्फुटनमिवाङ्गानामिति वदन्ति। भ्रमः चक्रारूढस्येव॥५०३॥

**तत्रामे लङ्घनं कार्यं विदग्धे वमनं हितम्॥**
**विष्टब्धे स्वेदनं पथ्यं रसशेषे शयीत च॥ ५०४॥**
**वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना॥**
**कार्यं चानशनं तावद्यावन्न प्रकृतिं भजेत्॥ ५०५॥**
**लघुकायमतश्चैनं लङ्घनैः समुपाचरेत्॥**
**यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा॥ ५०६॥**

अजीर्णानां चिकित्सामाह,—तत्रेति। आमे लङ्घनं कार्यं, उत्क्लेदे तत्रापि वमनमावश्यिकम्। विदग्धे वमनं हितमिति रसस्याम्लस्य व्यापन्नस्यानुद्धरणे कुष्ठाबाधभयात्। तत्र केचित्, 'आमे तु वमनं कार्यं विदग्धे लङ्घनं हितं' इति पठन्ति, तन्नेच्छति गयी। विष्टब्धे स्वेदनमिति स्वेदनस्यामवातविजयकारिपाचनत्वात्। रसशेषे शयीत चेति चकारेण स्वेदोऽपि रसशेषे तथा पाचनमपि, तच्च पाचनमन्नकालेऽन्नसहितं देयमिति समुच्चीयते। तत्र विदग्धे वमनं कर्तव्यं तत् केनेत्याह,—वामयेदिति। आमे लङ्घनमिति तत्कियन्तं कालं इत्यवधिं दर्शयन्नाह,—कार्यमिति। वाशब्दः समुच्चये। प्रकृतिः अत्राजीर्णनिवृत्तिः। लघ्वित्यादि। अतः पूर्वोक्तविधानादनन्तरम्। एनं अजीर्णिनम्। प्राणो बलम्॥ ५०४—५०६॥

**हिताहितोपसंयुक्तमन्नं समशनं स्मृतम्॥**
**बहु स्तोकमकाले वा विज्ञेयं विषमाशनम्॥ ५०७॥**
**साजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते॥**
**त्रयमेतन्निहन्त्याशु बहून्व्याधीन्करोति वा॥ ५०८॥**

तत्राजीर्णप्रसङ्गेन तस्य अजीर्णस्य भुज्यमानस्य अन्नस्य तन्मात्रातिसंज्ञकस्य तत्तुल्यानां समाशनादीनामपि लक्षणं निर्दिशन्नाह,—हिताहितेति। हिताहितोपसंयुक्तमिति हितमहितं चान्नमैकध्यमुपयुक्तम्। यथा—"धान्यं नवं पुराणं यच्छाकं जीर्णं च कोमलम्। एकध्यं तद्विरुद्धं स्याच्छीतोष्णं च स्वजातितः॥" अन्ये तु हितमेवाहितं येन संपद्यते तत् हिताहितोपसंयुक्तम्। यथा—गोक्षीरं मत्स्येन सहितमहितं संपद्यते। विषमाशनं निर्दिशन्नाह,— बहु स्तोकमिति। बहु प्रचुरं, स्तोकं अल्पं, अकाले इति अकालोऽप्राप्तोऽतीतो वा कालस्तत्र भुक्तम्। अध्यशनं निर्दिशन्नाह,—अजीर्णे इति। त्रयाणामपि समशनादीनां फलमाह,—त्रयमिति॥ ५०७॥ ५०८॥

**अन्नं विदग्धं हि नरस्य शीघ्रं**
**शीताम्बुना वै परिपाकमेति॥**
**तद्ध्यस्य शैत्येन निहन्ति पित्त-**
**माक्लेदिभावाच्च नयत्यधस्तात्॥ ५०९॥**

पुनरपि विदग्धाजीर्णस्य चिकित्सामाह,—अन्नमिति। तत्

शन्नाह,—अर्शसामित्यादि । अर्शसां मेढ्रादिजानां वातादिलक्षणं विना यत् संक्षेपलक्षणमुक्तं तत् सर्वं साधयेत् जानीयात् । कथमित्याह,—प्राग्विनिर्दिष्टात् इति प्राक् पूर्वं व्यासेन प्रत्येकवातादिजार्शोलक्षणमुक्तं वीक्ष्येत्यर्थः । इति गयदासाचार्यः; अन्ये तु संक्षेपतः षोढा, व्यासतः विस्तरेण प्राग्विनिर्दिष्टात् पञ्चदशधा प्रसरात् साधयेदिति मन्यन्ते ॥ २१ ॥

**अर्शःसु दृश्यते रूपं यदा दोषद्वयस्य तु ॥**
**संसर्गं तं विजानीयात् संसर्गः स च षड्विधः॥२२॥**

इदानीं षड्विधेष्वेवार्शःसु अन्तर्रुद्धं संसर्गमौषधकल्पनार्थं दर्शयन्नाह,—अर्शःस्वित्यादि । संसर्गः स च षड्विधः इति वातपित्तौ वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणिते पित्तशोणिते श्लेष्मशोणिते एवं संसर्गः, स च षड्विधः । स च सूत्रस्थानोक्तवर्णवेदनालक्षणादवगन्तव्यः ॥ २२ ॥

**त्रिदोषाण्यल्पलिङ्गानि याप्यानि तु विनिर्दिशेत् ॥**
**द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च॥२३॥**
**कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥**
**सन्निपातसमुत्थानि सहजानि तु वर्जयेत् ॥ २४ ॥**

इदानीं कृच्छ्रसाध्यासाध्यान्यर्शांसि दर्शयन्नाह,—त्रिदोषाणीत्यादि । द्वन्द्वजानि द्विदोषोत्थानि, तान्यपि याप्यानीत्यर्थः । परिसंवत्सराणि इति परितः संवत्सरमतिव्याप्य स्थितानि कृच्छ्रसाध्यानीत्यर्थः । केचित् सन्निपातसमुत्थानीत्यादि कृत्वा पठन्ति । स च पाठो समग्रोऽदर्शनान्न लिखितः ॥ २३ ॥ २४ ॥

**सर्वाः स्युर्वलयो येषां दुर्नामभिरुपद्रुताः ॥**
**तैस्तु प्रतिहतो वायुरपानः सन्निवर्तते ॥ २५ ॥**
**ततो व्यानेन सङ्गम्य ज्योतिर्मृद्गाति देहिनाम् ॥२६॥**

सर्ववलिव्यापिनामर्शसां पञ्चात्मकस्याप्यग्रे महदनर्थकरत्वं दर्शयन्नाह,—सर्वा इत्यादि । येषां देहिनां, दुर्नामभिः तैस्तु अर्शोभिरित्यर्थः । अपानः वायुरिति संवन्धः । सन्निवर्तते स्थितिं बध्नाति न निःसरतीत्यर्थः । सङ्गम्य मिलित्वा । ज्योतिः पञ्चात्मकमग्निं मृद्गाति मन्दीकरोति । अयं सोपद्रवः, प्रायेण सहजेष्वर्शःसु ज्ञेयः ॥ २५ ॥ २६ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

**अथातोऽश्मरीणां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः सुश्रुताय ॥ २ ॥**

अथेत्यादि । 'निदानं' हेतुलक्षणनिर्देशः ॥ १ ॥ २ ॥

**चतस्रोऽश्मर्यो भवन्ति, श्लेष्माधिष्ठानाः, तद्यथा–श्लेष्मणा, वातेन, पित्तेन, शुक्रेण, चेति ॥ ३ ॥**

चतस्र इत्यादि । चतस्रोऽश्मर्यो भवन्तीति छेदः । तिस्र एव श्लेष्माधिष्ठाना, शुक्राश्मरी शुक्राधिष्ठाना, अन्ये तु शुक्राश्मर्यपि श्लेष्माधिष्ठानैव, 'शुक्रं सौम्यं' इति वचनात् । श्लेष्माधिष्ठानाः श्लेष्मोपादानकारणाः श्लेष्माणमुपादाय भवन्तीत्यर्थः । चतस्रोऽश्मर्यो भवन्तीत्यस्य विवरणं कुर्वन्नाह,—तद्यथेत्यादि ॥ ३ ॥

**तत्राऽसंशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसंपृक्तोऽनुप्रविश्य वस्तिमश्मरीं जनयति ॥ ४ ॥**

तासां सम्प्राप्तिं दर्शयन्नाह,—तत्रेत्यादि । मूत्रसंपृक्तः मूत्रेण सहितः ॥ ४ ॥

**तासां पूर्वरूपाणि वस्तिपीडारोचकौ मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना ज्वरो कृच्छ्रावसादो वस्तगन्धित्वं मूत्रस्येति ॥ ५ ॥**

**यथास्ववेदनावर्णं दुष्टं सान्द्रमथाविलम् ॥**
**पूर्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः ॥ ६ ॥**

तासां पूर्वरूपमाह,—तासामित्यादि । वस्तिशिरः मूत्राशयोपरितनभागः । शेफः पुंश्चिह्नम् । कृच्छ्रावसादो कष्टयुक्ताङ्गग्लानिः । वस्तगन्धित्वं बृहत्तमच्छगलगन्धित्वम् । यथास्वं दोषानतिक्रमेण, वेदना वर्णश्च यस्मिन् मूत्रे तत्तथा । दुष्टं वातादिभिः । आविलं कलुषम् । अश्मनः अश्मर्याः ॥ ५ ॥ ६ ॥

**अथ जातासु वस्तिसेवनीमेहनेषु अन्यतमस्मिन् मेहतो वेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणं गोमेदकप्रकाशमत्याविलं ससिकतं विसृजति; धावनलङ्घनप्लवनपृष्ठयानोष्णाध्वगमनैश्चास्य वेदना भवन्ति ॥ ७ ॥**

अथ सर्वासामपि सामान्यं लक्षणमाह,—अथेत्यादि । जातासु सर्वास्वप्यश्मरीषु । संगो निरोधः । मूत्रविकिरणमिति विकिरणं विक्षेपः इतश्चेतश्च गमनम् । गोमेदको मणिः । ससिकतं वालुकासहितं, विसृजति विमुञ्चति, मूत्रमिति शेषः । लङ्घनं परिखादीनां, प्लवनं प्रतरणं, उष्णगमनं घर्मगमनं, अध्वगमनं दीर्घमार्गगमनम् ॥ ७ ॥

**तत्र श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपलिप्याऽधः परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतिघाताद्दाल्यते भिद्यते निस्तुद्यते इव च वस्तिर्गुरुः शीतश्च भवति; अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा वा भवति, तां श्लैष्मिकीमिति विद्यात् ॥ ८ ॥**

---

१ अर्शोरोगः युनानीवैद्यके 'बवासीर' इति नाम्ना आङ्गलवैद्यके च 'हिमरॉइडस' ( Hœmarrhoids ) अथवा 'पाइल्स' ( Piles ) इति नाम्ना प्रसिद्धः ॥

२ अश्मरीरोगः युनानीवैद्यको 'हिस आत' इति नाम्ना आङ्गलवैद्यके च 'क्यालक्युलस' ( Calculus ) इति नाम्ना प्रसिद्धः ॥

इदानीं श्लेष्माद्यश्मरीणां प्रत्येकं विशिष्टलक्षणमाह,—तत्रेत्यादि। श्लेष्मलमन्नमभ्यवहरतः पुंसः श्लेष्मा शरीरे स्रोतो निरुणद्धि इति संबन्धः। उपलिप्य नवघटपङ्कन्यायेन। अधिष्ठाय आश्रित्य। दाल्यते विशीर्यते इव स्फुटतीवेत्यर्थः। भिद्यते विदीर्यते इव। निस्तुद्यते सूचीभिः इव॥ ८॥

**पित्तयुक्तस्तु श्लेष्मा संघातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतीघातादूष्यते चूष्यते दह्यते पच्यते इव बस्तिरुष्णवातश्च भवति; अश्मरी चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति, तां पैत्तिकीमिति विद्यात्॥ ९॥**

पित्तयुक्तस्त्वित्यादि। पित्तयुक्तस्तु श्लेष्मा स्रोतो निरुणद्धीति संबन्धः। संघातमुपगम्य काठिन्यं प्राप्येत्यर्थः। तस्य पुरुषस्य। मूत्रप्रतीघातात् मूत्रनिरोधात्। ऊष्यते समीपाग्निनैवोपतप्यते, चूष्यते आकृष्यते इव, दह्यते इव कक्षाग्निनेव, पच्यते इव क्षारेणेव, उत्काथ्यते इवेत्येके। उष्णवातः उत्तरतन्त्रे पठितो मूत्ररोगः। सरक्ता ईषद्रक्ता॥ ९॥

**वातयुक्तस्तु श्लेष्मा संघातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतीघातात् तीव्रा वेदना भवति, तथाऽत्यर्थं पीड्यमानो दन्तान् खादति नाभिं पीडयति मेढ्रं मृद्नाति पायुं स्पृशति विशर्धते विदहति वातमूत्रपुरीषाणि कृच्छ्रेण चाऽस्य मेहतो निःसरन्ति; अश्मरी चात्र श्यावा परुषा विषमा खरा कदम्बपुष्पवत्कण्टकाचिता भवति, तां वातिकीमिति विद्यात्॥ १०॥**

वातयुक्तस्त्वित्यादि। अत्रापि पूर्ववत् संबन्धः। दन्तान् खादति परस्परं दन्तपीडनं करोति, विशर्धते गुदेन कुत्सितं शब्दं करोति, केचित् विशर्धते इत्यत्र विवर्धते इति पठन्ति व्याख्यानयन्ति च—अत्र मेढ्रं विमर्दनात् विवर्धते इत्यर्थः। विदहति विदाहयुक्तं मेढ्रं भवति, मेहतः मुञ्चत इत्यर्थः, खरा कठिना॥ १०॥

**प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहारप्रियत्वाद् विशेषेण बालानां भवन्ति। तेषामेवाल्पबस्तिकायत्वादनुपचितमांसत्वाच्च बस्तेः सुखग्रहणाहरणा भवन्ति महतां तु शुक्राश्मरी शुक्रनिमित्ता भवति॥ ११॥**

प्रायेणेत्यादि। प्रायेणैतास्तिस्रोऽश्मर्यो बालानां भवन्तीति संबन्धः। कस्मादित्याह—विशेषेण दिवास्वप्नादिप्रियत्वात्तेषामेति प्रायग्रहणाद्यूनामपि बोधयति। तेषामेव च बालानाम्। अल्पकायत्वात् इति अल्पबस्तित्वात् अल्पकायत्वात् चेत्यर्थः। अल्पबस्तित्वादिति आयामेनाल्पत्वं; अनुपचितबस्तिमांसत्वाच्च बस्तेरिति अनेन परिणाहेन अल्पत्वमुक्तम्। सुखग्रहणाः इति सुखेन गृह्यन्ते सुखेन आह्रियन्ते चाश्मर्यः। महतां तु शुक्राश्मरी शुक्रनिमित्ता भवति॥ ११॥

**मैथुनाभिघातादतिमैथुनाद्वा शुक्रं चलितं मार्गनिर्गच्छद्विमार्गगमनादनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति संहृत्य चोपशोषयति सा मूत्रमार्गमावृणोति मूत्रकृच्छ्रं बस्तिवेदनां वृषणयोश्च श्वयथुमापादयति पीडितमात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते; तां शुक्राश्मरीमिति विद्यात्॥ १२॥**

हेतुसंप्राप्तिलक्षणानि शुक्राश्मर्या दर्शयन्नाह,—मैथुनेत्यादि। सा अश्मरी मैथुनविघातादतिमैथुनात् वा इति हेतुः। शुक्रं चलितमनिर्गच्छत् इति संप्राप्तिः। मूत्रकृच्छ्रं बस्तिवेदनामित्यादि लक्षणम्। मैथुनविघातात् मैथुनकार्यस्य विघातात्। अतिमैथुनादिति केचित् पठन्ति; तत्र शुक्रबाहुल्यं शुक्रचलने हेतुः। अनिर्गच्छत् अनिःसरत्। अनिर्गच्छन्निति केचित् पठन्ति; तत्र वायोर्विशेषणम्। विमार्गगमनात् उन्मार्गगमनात्। अनिलः वायुः। अभितः उभयतः ऊर्ध्वाधश्चेत्यर्थः। संगृह्य विधार्य। मेढ्रवृषणयोरन्तरे बस्तिद्वारस्याध इत्यर्थः। संहरति वर्तुलीकरोति। वृषणयोश्चेति चकारात् वङ्क्षणदेशे, वङ्क्षणजस्तु अश्मरीषु वृषणशोफो नास्त्येव। प्रविलयमापद्यते अश्मरी विलीयते अल्पत्वात्; अन्ये तु पुनरश्मरी वृषणशोफान्न विलयमापद्यते इत्याचक्षते॥ १२॥

भवन्ति चात्र।

**शर्करा सिकता मेहो भस्माख्योऽश्मरिवैकृतम्॥**

भवन्ति चात्रेत्यादि। भस्माख्यः इति मूत्रशुक्रनामा उत्तरतन्त्रे मूत्ररोगः। अश्मरीवैकृतं अश्मरीविकारा उपद्रवा इत्यर्थः॥—

**अश्मर्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना॥ १३॥**
**पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः॥**

अश्मर्या इत्यादि अश्मर्यास्तुल्यव्यञ्जनवेदना शर्करा ज्ञेयेत्यर्थः। पवने इत्यादि। सा अश्मरी यदाल्पा स्यात् तदा वातेऽनुगुणे निरेति निर्गच्छति॥ १३॥—

**सा भिन्नमूर्तिर्वातेन शर्करेत्यभिधीयते॥ १४॥**
**हृत्पीडासक्थिसदनं कुक्षिशूलः सवेपथुः॥**
**तृष्णोर्ध्वगोऽनिलः कार्ष्ण्यं दौर्बल्यं पाण्डुगात्रता १५**
**अरोचकाविपाकौ तु शर्करार्ते भवन्ति च॥**

शर्करालक्षणमाह,—सेत्यादि। सक्थिसदनं ऊरुग्लानिः॥ १४॥ १५॥—

**मूत्रमार्गप्रवृत्ता सा सक्ता कुर्यादुपद्रवान्॥ १६॥**
**दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम्॥**
**पाण्डुत्वमुष्णवातं च तृष्णां हृत्पीडनं वमिम्॥१७॥**

अश्मर्या एव मूत्रमार्गगताया लक्षणनिर्देशमाह,—मूत्र-

मार्गेत्यादि । सा अश्मरी, सक्ता अनिर्गता, दौर्बल्यं बलहानिः, सदनं अङ्गग्लानिः, स्फुटिनिकेत्यपरे, कार्श्यं मांसक्षयः ॥१६॥ ॥ १७ ॥

**नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम् ॥**
**एकद्वारस्तनुत्वक्को मध्ये बस्तिरधोमुखः ॥ १८ ॥**
**एकसम्बन्धिनो ह्येते गुदास्थिविवरस्थिताः ॥**
**बस्तिर्बस्तिशिरश्चैव पौरुषं वृषणौ गुदम् ॥ १९ ॥**
**अलाब्वा इव रूपेण शिरास्नायुपरिग्रहः ॥**
**मूत्राशयो मलाधारः प्राणायतनमुत्तमम् ॥ २० ॥**
**पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः ॥**
**तर्पयन्ति सदा मूत्रं सरितः सागरं यथा ॥ २१ ॥**
**सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः ॥**
**नाडीभिरुपनीतस्य मूत्रस्यामाशयान्तरात् ॥ २२ ॥**
**जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्यते ॥**
**आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्यते नवः॥२३॥**
**घटो यथा तथा विद्धि बस्तिर्मूत्रेण पूर्यते ॥**

इदानीमश्मर्या एव आधारस्य बस्तेः स्थानसंस्थानद्वाराणि निर्देष्टुमाह,—नाभीत्यादि । नाभ्यादीनां मध्ये बस्तिः इति स्थानम् । एकद्वार अधोमुख इत्यनेन उपरि द्वाराभावं सूचयति । तनुत्वक्कः सूक्ष्मत्वक् । बस्तिप्रसङ्गेन बस्तिसन्निहितानां चापरेषां स्थानमाह,—बस्तिरित्यादि । पौरुषं मेढ्रम् । पुनर्बस्त्यवयवमाह,—अलाब्वा इवेत्यादि । परिग्रहः आश्रयः । मूत्राशयपर्यायो मलाधार इति । प्राणानां अग्नीषोमादीनाम्, आयतनं स्थानम् । यदा च सर्वदासावक्षीणमूत्रो भवति तदा पक्वाशयगताः ता नाड्यो मूत्रं तर्पयन्ति वर्धयन्तीत्यर्थः । मूत्रवाहिन्यौ मूलधमन्यौ द्वे तच्छाखाभूता दशधा शतधा सहस्रधा भिद्यन्ते इति दर्शयन्नाह,—सूक्ष्मेत्यादि । मुखानीति आसां नाडीनाम् । तैरेवायं मूत्रेण पूर्यते इति दर्शयन्नाह—नाडीभिरित्यादि । आमाशयान्तरात् आमपक्वाशयान्तरात् । सः बस्तिः । निःस्यन्देन उपस्नेहेन पूर्यते । अधोमुखत्वेन बस्तेरनूर्ध्वमुखस्यापि पूरणमुपमानेनाह,—आमुखादित्यादि । न्यस्तः धृतः, विद्धि जानीहि ॥ १८—२३ ॥—

**एवमेव प्रवेशेन वातः पित्तं कफोऽपि वा ॥ २४ ॥**
**मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम् ॥**

मूत्रप्रवेशे तुल्यमेव वातादीनां प्रवेशं दर्शयन्नाह,—एवमेवेत्यादि । एवमेव प्रवेशेन इति पूर्वोक्तप्रवेशेनेत्यर्थः । उपस्नेहात् समीपक्लेदनात् ॥ २४ ॥—

**अप्सु स्वच्छास्वपि यथा निषिक्तासु नवे घटे ॥२५॥**
**कालान्तरेण पङ्कः स्यादश्मरीसंभवस्तथा ॥**
**संहन्त्यपो यथा दिव्या मारुतोऽग्निश्च वैद्युतः ॥२६॥**
**तद्वद्बलासं बस्तिस्थमूष्मा संहन्ति सानिलः ॥**

१ 'तु ताः' इति पाठान्तरम् ।

ननु, द्रवरूपत्वात् सर्वेषां वायोश्चामूर्तत्वात्कथं घनता तदाह—अप्सु स्वच्छास्वपीत्यादि । निषिक्तासु प्रक्षिप्तासु । पङ्कसंमतत्वेऽपि कथमश्मना साम्यमित्याह,—संहन्तीत्यादि । यथा सहन्ति काठिन्यं करोति वर्षोपलान् करोति इत्यर्थः । कः काठिन्यं करोति ? वायुः विद्युदग्निश्चार्कः काठिन्यं करोति; आपः जलानि, दिव्याः मेघजाः । तथा बलासं श्लेष्माणं बस्तिस्थं संहन्ति कठिनं करोति । ऊष्मा पित्तमित्यर्थः । कथम्भूतः ? सानिलः सवात इत्यर्थः ॥ २५ ॥ २६ ॥—

**मारुते प्रगुणे बस्तौ मूत्रं सम्यक् प्रवर्तते ॥**
**विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि ॥२७॥**
**मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च ॥**
**मूत्रदोषाश्च ये केचिद्बस्तावेव भवन्ति हि ॥ २८ ॥**

बस्तिगतानामन्येषामपि विकाराणां वायुरेव हेतुरिति दर्शयन्नाह,—मारुते इत्यादि । प्रगुणे अनुकूले, अनुगुणे इति केचित् पठन्ति । तत्रापि स एवार्थः । प्रतिलोमे विगुणे । वाते विगुणे सति बस्तौ ये विकारास्तानेवाह,—मूत्राघाता इत्यादि ॥ २७ ॥ २८ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः ।

**अथातो भगन्दराणां निदानं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥२॥**

अथेत्यादि ॥ १ ॥ २ ॥

**वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्तोन्मार्गिणो यथासंख्यं पञ्च भगन्दरा भवन्ति । ते तु भगगुदबस्तिप्रदेशदारणाच्च भगन्दरा इत्युच्यन्ते । अपक्वाः पिडकाः पक्वास्तु भगन्दराः ॥ ३ ॥**

वातपित्तेत्यादि । संख्येयनिरुक्तिमाह,—ते त्वित्यादि ॥ ३ ॥

**तेषां तु पूर्वरूपाणि कटीकपालवेदना गुदकण्डूर्दाहः शोफश्च गुदस्य भवति ॥ ४ ॥**

पूर्वरूपमाह,—तेषां त्वित्यादि । तेषां तु पूर्वरूपाणि भवन्तीत्यर्थः । कटीकपालः कटीफलकः ॥ ४ ॥

**तत्रापथ्यसेविनो वायुः प्रकुपितः सन्निवृत्तः स्थिरीभूतो गुदमभितोऽङ्गुले द्व्यङ्गुले वा मांसशोणिते प्रदूष्यारुणवर्णां पिडकां जनयति, सास्य तोदादीन् वेदनाविशेषान् जनयति, अप्रतिक्रियमाणा च पाकमुपैति, मूत्राशयाभ्यासगतत्वाच्च व्रणः**

२ भगन्दरः युनानीवैद्यके 'नावाशीर' इति नाम्ना आङ्गलवैद्यके च 'फिस्चुला' (Fistule) इति नाम्ना प्रसिद्धः ॥

प्रक्लिन्नः शतपोनकवदणुमुखैश्छिद्रैरापूर्यते, तानि च छिद्राणि अजस्रं अच्छं फेनानुविद्धमधिकमास्रावं स्रवन्ति, व्रणश्च ताड्यते भिद्यते छिद्यते सूचीभिरिव निस्तुद्यते गुदं चावदीर्यते वातमूत्रपुरीषरेतसामप्यागमश्च तैरेव छिद्रैर्भवति; तं भगन्दरं शतपोनकमित्याचक्षते ॥ ५ ॥

पूर्वरूपानन्तरं पिडिकोत्पत्तिं दर्शयन्नाह,—तत्रापथ्येत्यादि। सन्निवृत्तः व्याघुटितः। गुदमभितः गुदस्य सर्वतः; अन्ये गुदसन्निधावित्याहुः। अभ्यासः समीपम्। शतपोनकः शूकदोषपरिपठितो व्याधिः; चालनिकेति जेज्झटाचार्यः; तन्नेच्छति गयदासाचार्यः, लोकशास्त्रयोश्चालनिकायां शतपोनकशब्दस्य अप्रसिद्धत्वात्; अश्वपुच्छवालरचितं शतपोनकमित्यन्ये। तुद्यते व्यथ्यते। ताड्यते दण्डेनेवाभिहन्यते इत्यर्थः। भिद्यते त्वक् विदार्यते इव। छिद्यते द्विधा क्रियते इव ॥ ५ ॥

पित्तं तु प्रकुपितमनिलेनाधःप्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति; सास्य चोषादीन् वेदनाविशेषान् जनयति; अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्चाऽग्निक्षाराभ्यामिव पाप्च्यते दंदह्यते दुर्गन्धमुष्णमास्रावं स्रवति उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते ॥ ६ ॥

पित्तं त्वित्यादि। पूर्ववदवस्थितमिति गुदमभितोऽङ्गुले द्व्यङ्गुले वेत्यर्थः। विसृजति व्रण इति संबन्धः ॥ ६ ॥

श्लेष्मा तु प्रकुपितः समीरणेनाधःप्रेरितः पूर्ववदवस्थितः मुक्तावभासां स्थिरां कण्डूमतीं पिडकां जनयति, सास्य कण्ड्वादीन् वेदनाविशेषाञ्जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवति, उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरं परिस्राविणमित्याचक्षते ॥ ७ ॥

वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याऽधोगत्वा पूर्ववदवस्थितः पादाङ्गुष्ठप्रमाणां सर्वलिङ्गां पिडकां जनयति, सास्य तोददाहकण्ड्वादीन् वेदनाविशेषान् जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च नानाविधवर्णमास्रावं स्रवति, पूर्णनदीशम्बूकावर्तवच्चाऽत्र समुत्तिष्ठन्ति वेदनाविशेषाः; तं भगन्दरं शम्बूकावर्तमित्याचक्षते ॥८॥

वेदनाविशेष इति। नैरन्तर्येण वेदना उत्तिष्ठन्ति इत्येके; अन्ये तु तथाविधगत्यारम्भस्य शोफस्य पूर्णनद्यावर्तशम्बूकावर्तकारिणो वावगाढत्वात् अवगाढवेदना भवन्तीत्यर्थः। शम्बूकाख्याः शङ्खाः ॥ ७ ॥ ८ ॥

मूढेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाऽभ्यवहृतं यदावगाढपुरीषोन्मिश्रमपानेनाधःप्रेरितमसम्यगागतं गुदं क्षिणोति तत्र क्षतनिमित्तः कोथ उपजायते, तस्मिंश्च क्षते पूयरुधिरावकीर्णे मांसकोथे भूमाविव जलप्रक्लिन्नायां क्रिमयः संजायन्ते, ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति, तस्य तैर्मार्गैः कृमिकृतैर्वातमूत्रपुरीषरेतांस्यभिनिःसरन्ति; तं भगन्दरमुन्मार्गिणमित्याचक्षते॥९॥

उन्मार्गिणः संप्राप्तिं दर्शयन्नाह,—मूढेनेत्यादि। कोथः पूतिभावः। पार्श्वतो दारयन्ति पक्षतो दारयन्ति; अस्याग्रे अर्शोभगन्दरं केचित् पठन्ति; तन्न, सर्वैर्निबन्धकारैर्निराकृतत्वात् ॥ ९ ॥

भवन्ति चात्र।

उत्पद्यतेऽल्परुक्शोफा क्षिप्रं चाप्युपशाम्यति ॥
पाय्वन्तदेशे पिडका सा ज्ञेयाऽन्या भगन्दरात् १०
पायोः स्याद्द्व्यङ्गुले देशे गूढमूला सरुग्ज्वरा ॥ ११ ॥
भागन्दरी तु विज्ञेया पिडकाऽतो विपर्ययात् ॥

अभागन्दरीं भागन्दरीं च पिडकामाह,—भवन्ति चात्रेत्यादि। शोफादुत्पद्यते इति संबन्धः। अल्परुक् अल्पवेदना, पाय्वन्तदेशे गुदस्यान्ते, अन्या भगन्दरादपरा भगन्दरादन्येत्यर्थः। एतेनाभागन्दरी पिडकोक्ता। या तु भगन्दरेणोत्पद्यते तामाह—पायोरित्यादि। अतः अभागन्दर्याः पिडकायाः विपर्ययात् विपरीतत्वात् भगन्दरकरी भवतीत्यर्थः ॥ १० ॥ ११ ॥—

यानयानान्मलोत्सर्गात् कण्डूरुग्दाहशोफवान् ॥
पायुर्भवेत्ततः कट्यां पूर्वरूपं भगन्दरे ॥ १२ ॥

यानेत्यादि। यानयानात् रथादिगमनात्, मलोत्सर्गात् पुरीषत्यागात्। कण्डूरुग्दाहशोफवान् पायुर्भवेत्, ततोऽनन्तरं कट्यां कण्डूरुग्दाहशोफादिकं पूर्वरूपं भवेत्। अयं चापठनीयः पूर्वो वा; पूर्वरूपग्रन्थद्वयं वा पठनीयं, पूर्वश्चाप्रसिद्धः ॥ १२ ॥

घोराः साधयितुं दुःखाः सर्व एव भगन्दराः ॥
तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च भगन्दरः ॥ १३ ॥

तत्र केषांचिदसाध्यत्वं दर्शयन्नाह,—घोरा इत्यादि। घोराः दुःखप्रदाः साधयितुं दुःखाः कष्टसाध्याः, भवन्तीत्यध्याहारः ॥ १३ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः।

अथातः कुष्ठनिदानं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥२॥

अथेत्यादि ॥ १ ॥ २ ॥

मिथ्याहाराचारस्य विशेषाद् गुरुविरुद्धासा-

---

१ 'शताक्षकं' इति पाठान्तरम्।

**स्याजीर्णाहिताशिनः स्नेहपीतस्य वान्तस्य वा व्यायामग्राम्यधर्मसेविनो ग्राम्यानूपौदकमांसानि वा पयसाऽभीक्ष्णमश्नतो यो वा मज्जत्यप्सूष्माभितप्तः सहसा छर्दिर्वा प्रतिहन्ति, तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिलः प्रवृद्धस्तिर्यग्गाः शिराः संप्रतिपद्य समुद्धूय बाह्यं मार्गं प्रति समन्ताद्विक्षिपन्ति, यत्र यत्र च दोषो विक्षिप्तो निःसरति तत्र तत्र मण्डलानि प्रादुर्भवन्ति, एवमुत्पन्नस्त्वचि दोषस्तत्र तत्र च परिवृद्धिं प्राप्याऽप्रतिक्रियमाणोऽभ्यन्तरं प्रतिपद्य धातूनभिदूषयति ॥ ३ ॥**

**तस्य पूर्वरूपाणि त्वक्पारुष्यमकस्माद्रोमहर्षः कण्डूः स्वेदबाहुल्यमस्वेदनं वाङ्गप्रदेशानां स्वापः क्षतविसर्पणमसृजः कृष्णता चेति ॥ ४ ॥**

मिथ्याहाराचारस्य शास्त्रोक्तविधिभ्रष्टाहाराचारस्येत्यर्थः । —संप्राप्तिमाह,—तस्येत्यादि । तस्य मिथ्याहाराचारस्येत्यादिकस्य । समुद्धूय आक्षिप्य, समन्तात् सर्वत्र । एतेन सर्वदेहगतत्वं रोगस्य सूचयति । अकस्मात् कारणं विना, स्वापः स्पर्शाज्ञानम् ॥ ३ ॥ ४ ॥

**तत्र सप्त महाकुष्ठानि एकादशक्षुद्रकुष्ठानि एवमष्टादश कुष्ठानि भवन्ति । तत्र महाकुष्ठान्यऽरुणोडुम्बरर्ष्यजिह्वकपालकाकणकपुण्डरीकदद्रुकुष्ठानीति । क्षुद्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठं चर्मदलं विसर्पः परिसर्पः सिध्म विचर्चिका किटिमं पामा रकसा चेति । सर्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्त्युत्सन्नतस्तु दोषग्रहणमभिभवात् ॥ ५ ॥**

इदानीं सङ्ख्यामाह,—तत्रेत्यादि । महत्त्वं उत्तरोत्तरधात्वनुप्रवेशात् । एकादशकुष्ठानां क्षुद्रत्वमुत्तरोत्तरधात्वननुप्रवेशात् । अष्टादश कुष्ठानि भवन्ति इति दिङ्मात्रं दर्शितं, कुष्ठानामनियतसङ्ख्यत्वात् । तथा च, सप्तविधा अष्टादशविधा असंख्येयविधा वा । महाकुष्ठानि नामतः प्राह,—तत्र महाकुष्ठानि इत्यादि । क्षुद्रकुष्ठानि नामतः प्राह,—क्षुद्रकुष्ठान्यपीत्यादि । सर्वेष्वेव कुष्ठेषु सर्वेषामेव दोषाणां क्रिमीणां च संभवं दर्शयन्नाह,—सर्वाणीत्यादि । सर्वाणि क्षुद्राणि महान्ति च । कथं तर्हि वातेनारुणमित्याह,—उत्सन्नतस्तु दोषग्रहणमभिभवात्, उत्सन्नतः औत्कट्यतः, दोषग्रहणमभिभवात् इतरदोषयोरिति शेषः ॥ ५ ॥

**तत्र वातेनारुणं, पित्तेनौडुम्बरर्ष्यजिह्वकपालकाकणकानि, श्लेष्मणा पौण्डरीकं दद्रुकुष्ठं चेति । तेषां तु महत्त्वं क्रियागुरुत्वमुत्तरोत्तरं धात्वनुप्रवेशादसाध्यत्वं चेति ॥ ६ ॥**

१ महाकुष्ठानि आङ्गलवैद्यके 'लेप्रसी' ( Leprosy ) इति नाम्ना प्रसिद्धानि ।

यस्य दोषस्य यस्मिन् कुष्ठे प्राधान्यं तद्दर्शयन्नाह,—तत्रेत्यादि । तत्रारुणादीनां सप्तानां महत्त्वादिषु हेतुं दर्शयन्नाह,—तेषामित्यादि । चकारो धात्वनुप्रवेशाच्चेत्यनन्तरं द्रष्टव्यः । तेन अनुक्तमारम्भकदोषमहत्त्वं समुच्चिनोति ॥ ६ ॥

**तत्र, वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि, पित्तेन पक्वोडुम्बरफलाकृतिवर्णान्यौडुम्बराणि, ऋष्यजिह्वाप्रकाशानि खराणि ऋष्यजिह्वानि, कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि, काकणन्तिकाफलसदृशान्यतीव रक्तकृष्णानि काकणकानि, तेषां चतुर्णामप्योषचोषपरिदाहधूमायनानि क्षिप्रोत्थानप्रपाकभेदित्वानि क्रिमिजन्म च सामान्यानि लिङ्गानि ॥ ७ ॥**

तत्र महाकुष्ठानां लक्षणं दर्शयन्नाह,—तत्र वातेनेत्यादि । ऋष्यजिह्वानि ऋष्यजिह्विकानि, ऋष्यजिह्वाया इव प्रकाशः सादृश्यं येषां खरत्वयुक्तानि, ऋष्यजिह्वो नीलाण्डः 'रोरु' इति प्रसिद्धः । अन्ये ऋक्ष इति पठन्ति ऋक्षो 'रीञ्छ' इति लोके । कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि कृष्णकपालिका कृष्णशर्करा । काकणन्तिकाफलसदृशान्यतीव कृष्णरक्तानि काकणन्तिकानि; काकणन्तिका गुञ्जा, 'चिरिहिण्टिका' इति प्रसिद्धा, तत्फलवद्रक्तानि मध्ये कृष्णानि । उडुम्बरादीनां पित्तकृतत्वं दर्शयन्नाह,—तेषामित्यादि । ओषः अनलसमीप इव तापः, कुष्ठस्यैव वेदनाविशेष इत्यन्ये । चोषः आचूष्यते इव वेदनाविशेषः, पिपासेत्यन्ये । धूमायनं धूमोपहतस्येव, धूमोद्गमनमिवाङ्गानामित्येके ॥ ७ ॥

**पुण्डरीकपत्रप्रकाशानि पौण्डरीकाणि, अतसीपुष्पवर्णानि ताम्राणि वा विसर्पीणि पिडकावन्ति च दद्रुकुष्ठानि । तयोर्द्वयोरप्युत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्वं चेति सामान्यानि रूपाणि ॥ ८ ॥**

पुण्डरीकदद्रुकुष्ठयोर्लक्षणं दर्शयन्नाह,—पुण्डरीकपत्रप्रकाशानि पौण्डरीकानि । दद्रुकुष्ठं द्विविधं सितं असितं च । असितस्य महोपक्रमसाध्यत्वादनुबन्धिप्रकाशात्तु महाकुष्ठेषु मध्ये सुश्रुते पाठ इति विशेषः । सितदद्रुकुष्ठस्यैव सुखसाध्यत्वादुत्तरोत्तरधात्वनुप्रवेशाभावात्तथाऽत्यर्थपीडारहितत्वाच्च चरके क्षुद्रकुष्ठेषु मध्ये पाठ इति न दोषः । दद्रुसिध्मयोः सुश्रुतचरकादिषु अभिधानभेद इति जेज्झटाचार्यः समादधाति, तन्नेच्छति गयदासाचार्यः । तयोः पुण्डरीकदद्रुकुष्ठयोः पित्तकफकृतत्वं दर्शयन्नाह,—तयोरित्यादि । परिमण्डलता परिपूर्णमण्डलता ॥ ८ ॥

**क्षुद्रकुष्ठानि अत ऊर्ध्वं वक्ष्यामः ।**
**स्थूलानि सन्धिष्वतिदारुणानि**
**स्थूलारुषि स्युः कठिनान्यरूंषि ॥**

२ दद्रुकुष्ठं आङ्गलवैद्यके 'रिंगवर्म' ( Ringworm ) इति नाम्ना युनानीवैद्यके च 'कुबा' इति नाम्ना प्रसिद्धम् ।

क्षुद्रकुष्ठेषु प्राक् स्थूलारुष्कमाह,—स्थूलानीत्यादि। स्थूलानि स्थूलमूलानि, दारुणानि कृच्छ्रसाध्यानि, अरुंषि व्रणाः॥—

**त्वक्कोचभेदस्वपनाङ्गसादाः**
**कुष्ठे महत्पूर्वयुते भवन्ति॥ ९॥**

महाकुष्ठलक्षणमाह,—त्वक्कोचेत्यादि। त्वक्शब्दः कोचभेदस्वापशब्दैः सह प्रत्येकं संबध्यते, तेन त्वक्कोचः त्वक्सङ्कोचः, त्वग्भेदः त्वग्विदारणं, त्वक्स्वप्नः त्वचोऽचेतनत्वम्, अङ्गसादः अङ्गग्लानिः। कुष्ठे महत्पूर्वयुते इति महाकुष्ठे इत्यर्थः॥ ९॥

**कृष्णारुणं येन भवेच्छरीरं**
**तदेककुष्ठं प्रवदन्ति कुष्ठम्॥**

एककुष्ठमाह,—कृष्णारुणमित्यादि॥—

**स्युर्येन कण्डूव्यथनौषचोषा-**
**स्तलेषु तच्चर्मदलं वदन्ति॥ १०॥**

चर्मदलमाह,—स्युर्येनेत्यादि। चोषः आचूषणमिव। तलेषु हस्तपादतलेषु॥ १०॥

**विसर्पवत् सर्पति सर्वतो य-**
**स्त्वक्रक्तमांसान्यभिभूय शीघ्रम्॥**
**मूर्च्छाविदाहारतितोदपाकान्**
**कृत्वा विसर्पः स भवेद्विकारः॥ ११॥**

विसर्पकुष्ठमाह,—विसर्पवदिति। अत्रोक्तविसर्पाख्यकुष्ठस्य वक्ष्यमाणविसर्परोगस्य चिरविसर्पणशीघ्रविसर्पणतो भेदः॥११॥

**शनैः शरीरे पिडकाः स्रवन्त्यः**
**सर्पन्ति यास्तं परिसर्पमाहुः॥**

परिसर्पमाह,—शनैः शरीर इति॥—

**कण्डून्वितं श्वेतमपायि सिध्म**
**विद्यात्तनु प्रायश ऊर्ध्वकाये॥ १२॥**

सिध्मकुष्ठमाह,—कण्डून्वितमिति। अपायि अकष्टकारि। प्रायश ऊर्ध्वकाये इति प्रायःशब्दोपादानात् अधःकायेऽपि कदाचिद्भवति। सिध्मकुष्ठं द्विविधं—पुष्पिका सिध्मं च, पुष्पिकासिध्मस्य सुखसाध्यत्वात् सुश्रुते क्षुद्रकुष्ठेषु पाठः, सिध्मस्य दुःखसाध्यत्वात् चरके महाकुष्ठे पाठ इत्यदोषः॥ १२॥

**राज्योऽतिकण्डूर्तिरुजः सरूक्षा**
**भवन्ति गात्रेषु विचर्चिकायाम्[1]॥**
**कण्डूमती दाहरुजोपपन्ना**
**विपादिका[2] पादगतेयमेव॥ १३॥**

विचर्चिकामाह,—राज्योऽतिकण्डूर्तिरुज इति। राज्यः रेखाः ताश्च सरुक्षा भवन्ति, कण्डूर्तिः खर्जूरीपीडा, रुजा वेदना, अतिशब्दः कण्डूर्तिरुग्भ्यां संबध्यते। गात्रेषु पाणिपादेषु। कण्डूमतीत्यादि। इयमेव विचर्चिका पादगता यदा स्यात्, तदा विचर्चिकासंज्ञां विहाय विपादिकासंज्ञां प्राप्नोतीत्यर्थः॥ १३॥

**यत् स्रावि वृत्तं घनमुग्रकण्डु**
**तत् स्निग्धकृष्णं किटिमं वदन्ति॥**

किटिममाह—यत् स्रावि वृत्तमिति। रक्तकृष्णमिति केचित् पठन्ति॥—

**सास्रावकण्डूपरिदाहवद्भिः**
**पामा[3]ऽणुकाभिः पिडकाभिरूह्या॥ १४॥**
**स्फोटैः सदाहैरसितैश्च कच्छूः[4]**
**स्फिक्पाणिपादप्रभवैर्निरूप्या॥**

अथ पामामाह,—सास्राव इति। सहास्रावकण्डूपरिदाहकैर्वर्तते या पिडका सा तथाविधा, ताभिः ऊह्या पामेति संबन्धः; ये तु सास्रावकण्डूपरिदाहवद्भिरिति पठन्ति ते तु व्याख्यानयन्ति—सास्रावौ यौ कण्डूपरिदाहौ तद्युक्तैः पुरुषैः कृत्वा, अणुकाभिः पिडकाभिः कृत्वा, पामा ऊह्या ज्ञेया वैद्यैरिति शेषः। सैव कच्छूरिति सैव पाण्योः स्फिजोश्च तीव्रदाहैः स्फोटैरुपगता कच्छूरुच्यते॥ १४॥—

**कण्डून्विता या पिडका शरीरे**
**संस्रावहीना रकसोच्यते सा॥ १५॥**

रकसामाह,—कण्डून्वितेति। शरीरे सकले काये॥ १५॥

**अरुः ससिध्मं रकसा महच्च**
**यच्चैककुष्ठं कफजान्यमूनि॥**
**वायोः प्रकोपात्परिसर्पमेकं**
**शेषाणि पित्तप्रभवाणि विद्यात्॥ १६॥**

इदानीं कस्मिन् क्षुद्रकुष्ठे कस्याधिक्यमित्याह,—अरुः ससिध्ममिति। शेषाणि विसर्पकिटिमविचर्चिकापामाचर्मदलानि। अरुः ससिध्मं रसकेत्यादि जेज्झटाचार्येण स्वकपोलकल्पितः श्लोकः, इति गयदासाचार्यो न मन्यते। यस्मादेककुष्ठं महाकुष्ठं च वातादेव भवति न कफात्, परिसर्पं पित्तात्। पाठान्तरं चात्रारुष्कमित्यादि पठति, तच्चाभावान्न लिखितम्॥ १६॥

**किलासमपि[5] कुष्ठविकल्प एव। तत्त्रिविधं वातेन पित्तेन श्लेष्मणा चेति। कुष्ठकिलासयोरन्तरं—त्वग्गतमेव किलासमपरिस्रावि च। तद्वातेन मण्डलमरुणं परुषं परिध्वंसि च, पित्तेन पद्मपत्रप्रती-**

---

[1] विचर्चिकाकुष्ठं आङ्ग्लभाषायां 'पेंफायगस्' (Pemphigus) इति नाम्ना प्रसिद्धम्।

[2] विपादिकाकुष्ठं आङ्ग्लवैद्यके 'ऱ्हाजेड्स' (Rhajades) इति नाम्ना प्रसिद्धम्।

[3] पामाकुष्ठं आङ्ग्लभाषायां 'एग्झीमा' (Eczema) इति नाम्ना युनानीवैद्यके च 'जर्ब' इति नाम्ना प्रसिद्धम्।

[4] कच्छूः आङ्ग्लवैद्यके 'स्केबीस' (Scebies). इति नाम्ना प्रसिद्धम्।

[5] किलासं युनानीवैद्यके 'बर्स' इति नाम्ना आङ्ग्लवैद्यके च 'ल्यूकोडर्मा' (Leucoderma) इति नाम्ना प्रसिद्धम्।

**काशं सपरिदाहं च, श्लेष्मणापि श्वेतं स्निग्धं बहुलं कण्डूमच्च । तेषु सम्बद्धमण्डलमन्तेजातं रक्तरोम चाऽसाध्यमग्निदग्धं च ॥ १७ ॥**

किलासं दर्शयन्नाह,—किलासमपीत्यादि । अपिशब्दः संभावनायां, तेन किलासं कुष्ठविकृतिरेव संभाव्यते, अन्ये तु, किमपि किलासं कुष्ठविकल्पो न भवतीत्यपि शब्दमाहुः, किं तत् किलासं कुष्ठविकल्पो न भवति ? उच्यते, त्वग्गतमपरिस्रावि चेत्यन्तरं भेदः । त्वग्गतमिति कुष्ठं त्वग्रक्तमांसमधिष्ठाय विदर्शयत्यात्मानं, किलासं तु त्वचमेव, केवलां त्वचमधितिष्ठति इत्यर्थः । अन्ये तु त्वग्गतमेव किलाससंज्ञं, दोषधात्वनुप्रवेशात् श्वित्रसंज्ञमित्याहुः । तथा च,– "त्वग्गतं तु यदा स्रावि किलासं तत् प्रकीर्तितम् । यदा त्वचमतिक्राम्य तत् धातुमवगाहते । हित्वा किलाससंज्ञां तत् श्वित्रसंज्ञां लभेत च" । वातादिजानां किलासानां लक्षणमाह,—तद्वातेनेति । परिध्वंसीति घृष्टं सत् रजो मुञ्चतीत्यर्थः, बहलं स्थूलम्, तेषु वातपित्तश्लेष्मजेषु किलासेषु । संभिन्नमण्डलमिति परस्परभिन्नमण्डलमित्यर्थः । अन्ते जातं ओष्ठपाणिपादगुह्यजं, अन्ये त्वत्रान्तर्जातरक्तरोमेति पठन्ति । अन्तः मध्ये जातानि रक्तानि लोमानि यत्र तत्तथा । ते[1]ष्वसाध्यमग्निदग्धं चेति चकारेण पाणिपादगुह्यौष्ठजमनुक्तमपि असाध्यं समुच्चिन्वन्ति ॥ १७ ॥

**कुष्ठेषु च त्वक्संकोचस्वापस्वेदशोफभेदकौण्यस्वरोपघाता वातेन, पाकावदरणाङ्गुलिपतनकर्णनासाभङ्गाक्षिरागसत्त्वोत्पत्तयः पित्तेन, कण्डूवर्णभेदशोफास्रावगौरवाणि श्लेष्मणा ॥ १८ ॥**

कुष्ठानां संक्षेपेणोक्तत्वात् अनुक्तमपि लिङ्गं दर्शयन्नाह,—कुष्ठेषु च त्वगिति । वातकार्येषु त्वक्संकोचः स्वापास्वेदावित्यन्ये पठन्ति तत्र नञ् स्वेदनिषेधार्थः व्याधिस्वभावात्, स्वेदोऽपि स्यादित्यपरे । कौण्यं नष्टकरता, सत्त्वोत्पत्तयः क्रिमीणां जन्मानि ॥ १८ ॥

**तत्रादिबलप्रवृत्तं पौण्डरीकं काकणं चासाध्यम् ॥ १९ ॥**

तेषामसाध्यत्वं दर्शयन्नाह,—तत्रादिबलप्रवृत्तमिति । उत्पत्तावेव, त्रिदोषबलप्रवृत्तत्वात्; धात्वनुक्रमेण हि अष्टानामस्थिमज्जशुक्रगतानामसाध्यत्वमुपरिष्टादेव वक्ष्यति ॥ १९ ॥

**भवन्ति चात्र ।**

**यथा वनस्पतिर्जातः प्राप्य कालप्रकर्षणम् ॥**
**अन्तर्भूमिं विगाहेत मूलैर्वृष्टिविवर्धितैः ॥ २० ॥**
**एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः ॥**
**क्रमेण धातून् व्याप्नोति नरस्याऽप्रतिकारिणः ॥ २१ ॥**

इदानीमप्रतिकारिण उत्तरोत्तरधात्वनुक्रमणे दृष्टान्तं दर्शयन्नाह,—भवन्ति चात्र यथेत्यादि । यथा वनस्पतिः वृक्षः, कालप्रकर्षणं कालाधिक्यं प्राप्य, मूलैः कृत्वा अन्तर्भूमिं विगाहेत इति संबन्धः । त्वचीति अत्र त्वक्शब्देन रस उक्तः, रसाश्रयत्वात्; तेन रसस्थ इत्यर्थः ॥ २० ॥ २१ ॥

[1] 'तेषु' इत्यस्य स्थाने 'ते चाचार्या' इति पाठान्तरम् ।

**स्पर्शहानिः स्वेदनत्वमीषत्कण्डूश्च जायते ॥**
**वैवर्ण्यं रूक्षभावश्च कुष्ठे त्वचि समाश्रिते ॥ २२ ॥**
**त्वक्स्वापो रोमहर्षश्च स्वेदस्याभिप्रवर्तनम् ॥**
**कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ॥ २३ ॥**
**बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः ॥**
**तोदः स्फोटः स्थिरत्वं च कुष्ठे मांससमाश्रिते २४**
**दौर्गन्ध्यमुपदेहश्च पूयोऽथ क्रिमयस्तथा ॥**
**गात्राणां भेदनं चापि कुष्ठे मेदःसमाश्रिते ॥ २५ ॥**
**नासाभङ्गोऽक्षिरागश्च क्षते च क्रिमिसंभवः ॥**
**भवेत् स्वरोपघातश्च अस्थिमज्जसमाश्रिते ॥ २६ ॥**
**कौण्यं गतिक्षयोऽङ्गानां संभेदः क्षतसर्पणम् ॥**
**शुक्रस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥ २७ ॥**

धातुगतकुष्ठानां लक्षणमाह,—स्पर्शहानिरित्यादि । प्रागेव रसधातुं क्रोडीकृत्य दोषाः कुष्ठारम्भकाः अतो रसधातुलक्षणं नोक्तमित्येके । अपरे त्वक्शब्देन रसमाहुः । जायत इत्यत्रापि संबध्यते । विपूयकः दुर्गन्धता, जायत इत्यत्रापि संबध्यते । बाहुल्यं स्थूलमण्डलता । स्फोटः त्वचः स्फुटनम् । स्थिरत्वं कठिनमण्डलता । केचिदत्रान्यथा पठन्ति, स च पाठोऽभावान्न लिखितः। शुक्रगस्य कुष्ठस्य लिङ्गं दर्शयन्नाह,—कौण्यमिति । तदपीत्यपिशब्दात् पूर्वोक्तात् पूर्वोक्तान्यपि रसादिमज्जान्तगतानि लिङ्गानि भवन्ति । कुष्ठितं संजातकुष्ठम्; अन्ये तु कुष्ठवदिति पठन्ति, कुष्ठसहितमित्यर्थः; अन्ये कुष्ठिलमिति पठन्ति, तत्रापि स एवार्थः ॥ २२—२७ ॥

**स्त्रीपुंसयोः कुष्ठदोषाद् दुष्टशोणितशुक्रयोः ॥**
**यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥ २८ ॥**

यदा स्त्रीपुंसयोः कुष्ठिनोर्बीजमुपहतं स्यात् तदा तयोः प्रजा नोत्पद्यते । उपतप्तगात्रबीजयोः पुनः प्रजापताप उत्पद्यते ॥ २८

**कुष्ठमात्मवतः साध्यं त्वग्रक्तपिशिताश्रितम् ॥**
**मेदोगतं भवेद्याप्यमसाध्यमत उत्तरम् ॥ २९ ॥**

इदानीं धात्वनुक्रमेऽपि साध्यादिभेदं दर्शयन्नाह,—कुष्ठमित्यादि । आत्मवतो जितेन्द्रियस्य ॥ २९ ॥

**ब्रह्मस्त्रीसज्जनवधपरस्वहरणादिभिः ॥**
**कर्मभिः पापरोगस्य प्राहुः कुष्ठस्य संभवम् ॥ ३० ॥**

कुष्ठस्य कर्मजत्वं दर्शयन्नाह—ब्रह्मस्त्रीति । सज्जनः सत्पुरुषः, परस्वं परद्रव्यम् । कुष्ठं दीर्घरोगाणां प्रधानमिति तन्त्रान्तरम् ॥ ३० ॥

**म्रियते यदि कुष्ठेन पुनर्जातेऽपि गच्छति ॥**
**नातः कष्टतरो रोगो यथा कुष्ठं प्रकीर्तितम् ॥ ३१ ॥**
**आहाराचारयोः प्रोक्तामास्थाय महतीं क्रियाम् ॥**
**औषधीनां विशिष्टानां तपसश्च निषेवणात् ॥ ३२ ॥**

**यस्तेन मुच्यते जन्तुः स पुण्यां गतिमाप्नुयात् ॥**

जन्मान्तरे तदनुबन्धं दर्शयन्नाह,—म्रियते इति । अनुगतं भवतीत्यर्थः । कुष्ठजनकस्य कर्मणोऽजीर्णत्वात् पुनर्भवः ॥३१॥ ॥३२॥

**प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात्सहभोजनात् ॥**
**सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात्॥३३॥**
**कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ॥**
**औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥३४॥**

प्रधानं कुष्ठमाश्रित्य कुष्ठप्रभृतीनां संसर्गपरिहारं दर्शयन्नाह,—प्रसङ्गात् गात्रसंस्पर्शादिति । प्रसङ्गात् इति प्रसङ्गेन अभ्यासेन कृतात्, पुनः पुनः कृतादित्यर्थः । इदं विशेषणं गात्रसंस्पर्शनादिभिः सर्वैः सह प्रत्येकं संबध्यते । सह शय्यासनादिभिः एकशय्यास्थितत्वादिभिः । माल्यं पुष्पम् । औपसर्गिकरोगाः शीतलिकादयः । संक्रामन्ति आविशन्ति ॥ ३३ ॥ ॥ ३४ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ।

**अथातः प्रमेहनिदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥२॥**

अथातः प्रमेहनिदानं व्याख्यास्यामः ॥ १ ॥ २ ॥

**दिवास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेध्यद्रवान्नपानसेविनं पुरुषं जानीयात् प्रमेही भविष्यतीति ॥ ३ ॥**

प्रमेहहेतुमाह,—दिवास्वप्नेति । प्रसक्तं प्रकर्षेण सक्तं अतिशयेन अनुषङ्गिनम् । मेध्यं मेदुरं मेदोजनकमित्यर्थः । पुरुषं जानीयात् प्रमेही भविष्यति । तत्राहुरेके,—स्त्रीणां प्रमेहा न भवन्ति । तथाच तन्त्रान्तरे—"रजःप्रसेकान्नारीणां मासि मासि विशुध्यति । सर्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः॥" एतत्तु न युक्तं, सर्वतन्त्राप्रसिद्धेः प्रत्यक्षविरोधाच्च ॥ ३ ॥

**तस्य चैवं प्रवृत्तस्यापरिपक्वा एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्वमुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधोगत्वा बस्तेर्मुखमाश्रित्य निर्भिद्यन्ते तदा प्रमेहान् जनयन्ति ॥ ४ ॥**

संप्राप्तिं दर्शयन्नाह,—तस्य चैवमिति । अपरिपक्वाः आमाः । मेदसा इति अत्रादिशब्दो लुप्तो द्रष्टव्यः, तेन वसादयो ग्राह्याः; अन्ये तु मेदश्चापरिपक्वमिति पठन्ति, चकारेण अनुक्तानपि वसादीन् समुच्चिन्वन्ति । उपेत्य गत्वा । निर्भिद्यन्ते निःसरन्तीत्यर्थः । अन्ये तु विनिर्भिद्यन्ते इति पठित्वा तत्रैव स्थितिं कुर्वन्तीति व्याख्यानयन्ति । अपरे तु अतिद्रवत्वं यान्तीत्याहुः ॥ ४ ॥

**तेषां तु पूर्वरूपाणि हस्तपादतलदाहः स्निग्धपिच्छिलगुरुता गात्राणां मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धश्च श्वासस्तालुगलजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानाम् ॥ ५ ॥**

पूर्वरूपमाह,—तेषामिति । केशानां जटिलीभावः अन्योन्यमिलनं, स्वेदमलबाहुल्यात् रोगप्रभावाच्च ॥ ५ ॥

**तत्राविलप्रभूतमूत्रलक्षणाः सर्व एव प्रमेहाः ॥ ६ ॥**

प्रमेहाणां सामान्यं लक्षणमाह,—तत्राविलमिति । आविलं समलम् ॥ ६ ॥

**सर्वे एव सर्वदोषसमुत्थाः सह पिडकाभिः ॥ ७ ॥**

तेषां प्रमेहाणां पिडकानां च दोषं दर्शयन्नाह,—सर्वदोषसमुत्था इति । एतेन प्रमेहाणां पिडकानां च कुष्ठवत् सर्वदोषजत्वमुक्तम् ॥ ७ ॥

**तत्र, कफादुदकेक्षुवालिकासुरासिकताशनैर्लवणपिष्टसान्द्रशुक्रफेनमेहाः दश साध्याः, दोषदूष्याणां समक्रियत्वात्; पित्तान्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षट् याप्याः, दोषदूष्याणां विषमक्रियत्वात्; वातात्सर्पिर्वसाक्षौद्रहस्तिमेहाश्चत्वारोऽसाध्यतमाः, महात्ययिकत्वात् ॥ ८ ॥**

सर्वेषां सर्वदोषजत्वेऽपि उत्कर्षतो दोषग्रहणं दर्शयन्नाह,—तत्र कफादिति । उदकमेहः, इक्षुवालिकामेहः, सुरामेहः, सिकतामेहः, शनैर्मेहः, लवणमेहः, पिष्टमेहः, सान्द्रमेहः, शुक्रमेहः फेनमेहश्चेति दश प्रमेहाः साध्या यद्यतिशयेन मेदो दूषितं न भवति; दोषदूष्याणां समक्रियत्वादिति अत्र दोषः श्लेष्मा, दूष्याणि रसमांसमेदोमज्जशुक्रालसिकौजांसि, एषां कटुतिक्तकषायादिभिः समैव क्रिया । पित्तादिति अत्रापि यद्यतिशयेन मेदो दूषितं न भवति । दोषदूष्याणां विषमक्रियत्वादिति अत्र दोषः पित्तं, दूष्याणि रसमांसादीनि, तेषां तु विषमक्रियत्वात् । वातादिति महात्ययिकत्वात् शीघ्रं विनाशकारित्वादिति, महात्ययिकत्वं पुनरेषामुत्तरोत्तरमितरधातुस्रावकत्वात्; विषमक्रियत्वाच्चेत्यत्रापि सम्बध्यते ॥ ८ ॥

**तत्र वातपित्तमेदोभिरन्वितः श्लेष्मा श्लेष्मप्रमेहान् जनयति, वातकफशोणितमेदोभिरन्वितं पित्तं पित्तप्रमेहान्, कफपित्तवसामज्जमेदोभिरन्वितो वायुर्वातप्रमेहान् ॥ ९ ॥**

इदानीं सर्वेषामेव सर्वजत्वं प्रकटयन्नाह,—तत्र वातपित्तमेदोभिरन्वित इति ॥ ९ ॥

**तत्र, श्वेतमवेदनमुदकसदृशमुदकमेही मेहति; इक्षुरसतुल्यमिक्षुमेही; सुरामेही सुरातुल्यं; सरुजं**

---

१ प्रमेहः युनानीवैद्यके 'जीयाँन' इति नाम्ना प्रसिद्धः

**सिकतानुविद्धं सिकतामेही; शनैः सकफं मृत्स्नं शनैर्मेही; विशदं लवणतुल्यं लवणमेही; हृष्टरोमा पिष्टरसतुल्यं पिष्टमेही; आविलं सान्द्रं सान्द्रमेही; शुक्रतुल्यं शुक्रमेही; स्तोकं स्तोकं सफेनं फेनमेही मेहति ॥ १० ॥**

कफजानामनुक्रमेण लक्षणं दर्शयन्नाह—सिकतानुविद्धं वालुकामिश्रं, मृत्स्नं पिच्छिलम्। लवणं तु लवणाम्बुतुल्यम्। हृष्टरोमा प्राप्तरोमाञ्चः, पिष्टरसतुल्यं पिष्टमिश्रोदकतुल्यम्। आविलं अत्यर्थं कलुषं, पुनर्वचनात्। मेहति मूत्रयति इत्यर्थः ॥ १० ॥

**अत ऊर्ध्वं पित्तनिमित्तान् वक्ष्यामः—सफेनमच्छ नीलं नीलमेही मेहति; सदाहं हरिद्राभं हरिद्रामेही; अम्लरसगन्धमम्लमेही; स्रुतक्षारप्रतिमं क्षारमेही; मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही; शोणितप्रकाशं शोणितमेही मेहति ॥ ११ ॥**

अत ऊर्ध्वमिति। स्रुतक्षारप्रतिमं गलितक्षारद्रवतुल्यं, मञ्जिष्ठोदकप्रकाशं शोणितप्रकाशं च मूत्रं रक्तपित्तेऽपि भवति ततः कोऽयं प्रमेहः? अत्रोच्यते—रक्तपित्ते प्रमेहपूर्वरूपं न भवति, मञ्जिष्ठाशोणितयोस्तु प्रमेहपूर्वरूपसंभव इति विशेषः ११

**अत ऊर्ध्वं वातनिमित्तान् वक्ष्यामः—सर्पिःप्रकाशं सर्पिर्मेही मेहति; वसाप्रकाशं वसामेही; क्षौद्ररसवर्णं क्षौद्रमेही; मत्तमातङ्गवदनुप्रबन्धं हस्तिमेही मेहति ॥ १२ ॥**

अत ऊर्ध्वं वातनिमित्तान् वक्ष्याम इति ॥ १२ ॥

**मक्षिकोपसर्पणमालस्यं मांसोपचयः प्रतिश्यायः शैथिल्यारोचकाविपाकाः कफप्रसेकच्छर्दिनिद्राकासश्वासाश्चेति श्लेष्मजानामुपद्रवाः; वृषणयोरवदरणं बस्तिभेदो मेढ्रतोदो हृदि शूलमम्लीकाज्वरातीसारारोचकाः वमथुः परिधूमायनं दाहो मूर्च्छा पिपासा निद्रानाशः पाण्डुरोगः पीतविण्मूत्रनेत्रत्वं चेति पैत्तिकानां; हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं बद्धपुरीषत्वं चेति वातजानाम्। एवमेते विंशतिः प्रमेहाः सोपद्रवा व्याख्याताः॥१३॥**

इदानीं प्रतिदोषे उपद्रवान् दर्शयन्नाह,—मक्षिकोपसर्पणमिति। अवदरणं विदरणं, अम्लीका अम्लोद्गारः, वमथुः छर्दिः, परिधूमायानं समन्ततस्तापः। दाहः अग्निदग्धस्येव। वातजे उपद्रवमाह,—हृद्ग्रह इति। लौल्यं सर्वरसाभिकाङ्क्षिता वातजग्रहणीवत् ॥ १३ ॥

**तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश पिडका जायन्ते। तद्यथा—शराविका, सर्षपिका, कच्छपिका, जालिनी, विनता, पुत्रिणी, मसूरिका, अलजी, विदारिका, विद्रधिका चेति ॥ १४ ॥**

पिडकानामुपद्रवविशेषाणां संप्राप्तिं दर्शयन्नाह,—तत्र वसामेदोभ्यामिति। वसा मांसस्नेहः, सकलशरीरस्नेह इत्यन्ये। अभिपन्नशरीरस्य व्यापन्नशरीरस्य। अनुगतधातोः व्याप्तधातोः। पिडकास्तु प्रायेण अधःकाये एव। तासां पिडकानां नामान्याह,—तद्यथेति ॥ १४ ॥

**शरावमात्रा तद्रूपा निम्नमध्या शराविका ॥**
**गौरसर्षपसंस्थाना तत्प्रमाणा च सार्षपी ॥ १५ ॥**
**सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥**
**जालिनी तीव्रदाहा तु मांसजालसमावृता ॥१६॥**
**महती पिडका नीला पिडका विनता स्मृता ॥**
**महत्यल्पाचिता ज्ञेया पिडका सा तु पुत्रिणी १७**
**मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका ॥**
**रक्तासिता स्फोटवती दारुणा त्वलजी भवेत्१८**
**विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥**
**विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः ॥ १९ ॥**

तासां लक्षणमाह,—शरावमात्रेति। गौरसर्षपसंस्थानाः गौरसर्षपाकाराः। जालिनीत्यादि। यद्यपि 'ये यन्मया स्मृता मेहास्तेषामेतास्तु तत्कृताः'—इति अग्रे एव वक्ष्यते, तथापि जालिनी पित्तोत्तरा ज्ञेया, तद्वचनस्य बाहुल्येनोक्तत्वात्। महती स्थूला। अल्पाचिता इति सूक्ष्मपिडकावेष्टिता ॥ १५—१९ ॥

**ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तत्कृताः ॥**

पिडकाजनकान् दोषानाह,—ये यन्मया यद्दोषारब्धाः, तेषां प्रमेहाणां, एता इति पिडकाः ॥—

**गुदे हृदि शिरस्यंसे पृष्ठे मर्मणि चोत्थिताः ॥**
**सोपद्रवाऽल्पकायाग्नेः पिडकाः परिवर्जयेत् २०॥**

तासामसाध्यतां दर्शयन्नाह,—गुदे हृदीति। अंसः बाहुशिरः। सोपद्रव इति "तृट्कासमांससंकोथमोहहिक्कामदज्वराः। विसर्पमर्मसंरोधाः पिडकानामुपद्रवाः"। "सोपद्रवाल्पकायाग्नेः पिडकाः परिवर्जयेत्" इति केचित् पठन्ति। सोपद्रव इति पुरुषविशेषणम् ॥ २० ॥

१ पिष्टमेहः आङ्गलवैद्यके 'कायल्यूरिया' (Chylurea) इति नाम्ना प्रसिद्धः।

२ शुक्रमेहः युनानीवैद्यके 'जीर्यान मनी' इति नाम्ना आङ्गलवैद्यके च 'स्पर्माटोरिया' (Spermatorrhaea) इति नाम्ना प्रसिद्धः।

३ माञ्जिष्ठमेहः आङ्गलवैद्यके 'हिम्याचूरिआ' (Hœmaturea) इति नाम्ना प्रसिद्धः।

४ वसामेहः ओङ्गलवैद्यके 'आल्बुमिन्यूरिआ' (Albuminuria) इति नाम्ना प्रसिद्धः।

५ मधुमेहः युनानीवैद्यके 'ज्ञयाबीतुस' इति नाम्ना आङ्गलवैद्यके च 'डायाबिटिस मेलिटस' (Diabetes-mellitus) इति नाम्ना प्रसिद्धः।

**कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः ॥**
**अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः२१॥**

वातजानामसाध्यत्वे हेतुं दर्शयन्नाह,—कृत्स्नं शरीरमिति। निष्पीड्य निश्चोतयित्वा मूत्रमार्गेण समस्तान् धातून् प्रवाहयित्वा इत्यर्थः। वसेत्युपलक्षणं, तेन ओजोलसीकयोर्ग्रहणम्। अधः प्रक्रमते अधःस्फीतीभवति प्रबलीभवतीत्यर्थः। गयदासाचार्यस्तु आपातनिकापूर्वं प्रमेहपूर्वरूपाणामित्यादि श्लोकत्रयमन्यथा पठति। असाध्यास्तु इति पूर्वहेतुभ्यां च इति तुशब्दार्थः॥ २१॥

**प्रमेहपूर्वरूपाणामाकृतिर्यत्र दृश्यते ॥**
**किंचिच्चाप्यधिकं मूत्रं तं प्रमेहिणमादिशेत्॥२२॥**

इदानीं प्रमेहहेतुयुक्तस्य पुरुषस्य सामान्याकारेण लक्षणमाह,—प्रमेहपूर्वरूपाणामिति। प्रमेहस्य पूर्वोक्तसामान्यलक्षणस्य शेषं लक्षणम्॥ २२॥

**कृत्स्नान्यर्धानि वा यस्मिन् पूर्वरूपाणि मानवे ॥**
**प्रवृद्धमूत्रमत्यर्थं तं प्रमेहिणमादिशेत् ॥ २३ ॥**

इदानीं प्रमेहपिडकाचिकित्सितनिर्देश्यमर्थं पञ्चगुणाश्रयं पूर्वरूपशोफपिडकावस्थाख्यं प्रतिपादयन्नाह,—प्रमेहपूर्वरूपाणामिति। तत्पूर्वरूपे अपतर्पणं वनस्पतिकषायपानादिकं च कर्तव्यम्। प्रवृत्तमूत्रमत्यर्थमिति रूपज्ञानम्। तत्र रूपज्ञानं चिकित्साविशेषार्थम्। तदुक्तम्—'एवमकुर्वन्' इत्यादि (चि०स्था० अ० १२)॥ २३॥

**पिडकापीडितं गाढमुपसृष्टमुपद्रवैः ॥**
**मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्तितः ॥२४॥**

प्रमेहाणां अवस्थान्तरप्राप्तानां संज्ञान्तरासाध्यत्वं दर्शयन्नाह,—पिडकापीडितमिति। स चासाध्य इति चकार उत्पत्तौ वातजानामसाध्यत्वं समुच्चिनोति। उत्पत्तौ च सहजो याप्यत्वादसाध्यः, पित्तजः पुनरसाध्यः, वातजः पुनरुत्पत्तिक्रमेणासाध्यतमः॥ २४॥

**स चापि गमनात् स्थानं स्थानादासनमिच्छति॥**
**आसनाद् वृणुते शय्यां शयनात् स्वप्नमिच्छति२५**

इदानीं मधुमेहिनो विकाराख्यं पञ्चविधक्रियाश्रयं लिङ्गं दर्शयन्नाह,—स चापीति। स्थानमूर्ध्वभवनमिति संबन्धः। वृणुते प्रार्थयते। शयनात् शय्यायाः॥ २५॥

**यथा हि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेण शबलबभ्रुकपिलकपोतमेचकादीनां वर्णानामनेकेषामुत्पत्तिर्भवति एवमेव दोषधातुमलाहारविशेषेणोत्कर्षापकर्षकृतेन संयोगविशेषेण प्रमेहाणां नानाकरणं भवति॥ २६॥**

इदानीं दोषाणां त्रयाणामपि यथा विंशतिप्रमेहसंभवस्तथोपायेनाह,—यथा हि वर्णानामिति। पञ्चानां वर्णानां सितहरितकृष्णपीतरक्तानां, उत्कर्षापकर्षकृतेन वृद्धिह्रासकृतेन, बभ्रुः कपिलः, पिङ्गलः कपोताभः, मेचकः श्यामलः। मलग्रहणमुपधातुभूतवसालसीकयोरुदकस्य चोपलक्षणम्॥ २६॥

**भवति चात्र।**

**सर्व एव प्रमेहास्तु कालेनाऽप्रतिकारिणः॥**
**मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि २७**

इदानीं सर्वेष्वेव प्रमेहेषु पूर्वरूपादीनामुपेक्षालक्षणमनर्थं दर्शयन्नाह—भवति चात्रेति। कालः प्रथमक्रियादिकालः। अप्रतिकुर्वतः अप्रतिक्रियमाणस्य॥ २७॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने षष्ठोऽध्यायः॥

## सप्तमोऽध्यायः।

**अथात उदराणां निदानं व्याख्यास्यामः॥ १॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥ २॥**

अथात इति॥ १॥ २॥

**धन्वन्तरिर्धर्मभृतां वरिष्ठो**
**राजर्षिरिन्द्रप्रतिमो बभूव॥**
**ब्रह्मर्षिपुत्रं विनयोपपन्नं**
**शिष्यं शुभं सुश्रुतमन्वशात्सः॥ ३॥**

यो धन्वन्तरिरभवत् स सुश्रुतमन्वशादिति संबन्धः, शिक्षितवानित्यर्थः। धर्मभृतां धार्मिकाणां मध्ये। इन्द्रप्रतिमः ज्ञानैश्वर्यादिभिः। ब्रह्मर्षिः विश्वामित्रः, राजर्षिरपि तपसा ब्रह्मर्षित्वं प्राप्तवान्। विनयोपपन्नं जितेन्द्रियम्। शुभमिति पूर्वोक्तैरन्वयवयःशीलादिगुणैरुपेतम्॥ ३॥

**पृथक्समस्तैरपि चेह दोषैः**
**प्लीहोदरं बद्धगुदं तथैव॥**
**आगन्तुकं सप्तममष्टमं च**
**दकोदरं चेति वदन्ति तानि॥ ४॥**

उदराणां संख्यामाह,—पृथगिति। पृथग्दोषैः त्रीणि, समस्तैर्दोषैरेकं; एतेन चत्वारि दोषप्रधानानि अस्मिन् शास्त्रे। तानि इति उदराणीत्यर्थः। प्लीहोदरादीनि चत्वारि दूष्यप्रधानानि, अष्टममिति संख्योक्त्या प्लीहोदरयकृद्दाल्युदरयोरैक्यमेव ज्ञातव्यम्॥ ४॥

**सुदुर्बलाग्नेरहिताशनस्य**
**संशुष्कपूत्यन्ननिषेवणाद्वा॥**
**स्नेहादिमिथ्याचरणाच्च जन्तो-**
**र्वृद्धिं गताः कोष्ठमभिप्रपन्नाः॥ ५॥**
**गुल्माकृतिव्यञ्जितलक्षणानि**
**कुर्वन्ति घोराण्युदराणि दोषाः॥**

उदराणां हेतुं दर्शयन्नाह,—सुदुर्बलाग्नेरिति। दुर्बलाग्नेः

१ 'तस्मिन्मेहो भविष्यति' इति पाठान्तरम्।

२ 'प्रमेहं तं विनिर्दिशेत्' इति पाठान्तरम्।

अत्यन्तनष्टाग्नेः। अहिताशनस्य इति विरुद्धसमशनाध्यशनविषमाशनस्य। स्नेहादीत्यादिशब्दात् वमनविरेचनास्थापनानुवासनपरिग्रहः। मिथ्याचरणं यथोक्तानुष्ठानपरित्यागः। जन्तोः प्राणिनः। अभिप्रपन्नाः प्राप्ता इत्यर्थः। किंविशिष्टान्युदराणि कुर्वन्ति? गुल्माकृतिव्यञ्जितलक्षणानि गुल्माकृत्या गुल्मरूपेण व्यञ्जितानि प्रकटितानि लक्षणानि येषां तानि तथा। पुनरपि किंविशिष्टानि? घोराणि कृच्छ्राणि ॥ ५ ॥—

**कोष्ठादुपस्नेहवदन्नसारो**
**निःसृत्य दुष्टोऽनिलवेगनुन्नः ॥ ६ ॥**
**त्वचः समुन्नम्य शनैः समन्ताद्**
**विवर्धमानो जठरं करोति ॥**

संप्राप्तिं दर्शयन्नाह,—कोष्ठादिति। उपस्नेहवदिति नवघटाद्युपस्नेहो यथाणुतमस्रोतोभिर्बहिःस्रवत् दृश्यते तद्वत् कोष्ठात् अन्नसारो दुष्टः। किंभूतः? अनिलवेगनुन्नः वातवेगप्रेरितः। किं कृत्वा? त्वचः समुन्नम्य आनद्धाः कृत्वा। पुनः किंभूतो रसः? समन्तात् विवर्धमानः समन्तात् सर्वतो वृद्धिं गच्छन् ॥ ६ ॥—

**तत्पूर्वरूपं बलवर्णकाङ्क्षा**
**बलीविनाशो जठरे हि राज्यः ॥ ७ ॥**
**जीर्णापरिज्ञानविदाहवत्यो**
**बस्तौ रुजः पादगतश्च शोफः ॥**

जीर्णेति। जीर्णापरिज्ञानविदाहवत्यो बस्तौ रुज इति जीर्णापरिज्ञानविदाहौ विद्येते यासु बस्तिरुजासु तास्तथा। जीर्णापरिज्ञानं अन्नपरिणामानिश्चयः। जीर्णापरिज्ञानं तु यथासंभवात् पुरुषस्यैव ज्ञेयम् ॥ ७ ॥—

**संगृह्य पार्श्वोदरपृष्ठनाभीर्यद्**
**वर्धते कृष्णशिरावनद्धम् ॥ ८ ॥**
**सशूलमानाहवदुग्रशब्दं**
**सतोदभेदं पवनात्मकं च तत् ॥**

वातोदरमाह,—संगृह्येति ॥ ८ ॥—

**यच्चोषतृष्णाज्वरदाहयुक्तं**
**पीतं शिरा भान्ति च यत्र पीताः ॥ ९ ॥**
**पीताक्षिविण्मूत्रनखाननस्य**
**पित्तोदरं तत्त्वचिराभिवृद्धि ॥**

पित्तोदरमाह,—यच्चोषेति। अचिराभिवृद्धि शीघ्रं वर्धनशीलम् ॥ ९ ॥—

**यच्छीतलं शुक्लशिरावनद्धं**
**गुरु स्थिरं शुक्लनखाननस्य ॥ १० ॥**
**स्निग्धं महच्छोफयुतं ससादं**
**कफोदरं तत्तु चिराभिवृद्धि ॥**

श्लेष्मोदरमाह,—यच्छीतलमिति। स्थिरं कठिनं, ससादं अङ्गग्लानियुक्तम् ॥ १० ॥—

**स्त्रियोऽन्नपानं नखरोममूत्र-**
**विडार्तवैर्युक्तमसाधुवृत्ताः ॥ ११ ॥**
**यस्मै प्रयच्छन्त्यरयो गरांश्च**
**दुष्टाम्बुदूषीविषसेवनाद्वा ॥**
**तेनाशु रक्तं कुपिताश्च दोषाः**
**कुर्वन्ति घोरं जठरं त्रिलिङ्गम् ॥ १२ ॥**
**तच्छीतवाताभ्रसमुद्भवेषु**
**विशेषतः कुप्यति दह्यते च**
**स चातुरो मूर्च्छति संप्रसक्तं**
**पाण्डुः कृशः शुष्यति तृष्णया च ॥ १३ ॥**
**प्रकीर्तितं दूष्युदरं तु घोरं**

सन्निपातोदरमाह,—स्त्रियोऽन्नपानमिति। स्त्रियोऽन्नपानं नखरोममूत्रविडार्तवयुक्तं यस्मै पुरुषाय प्रयच्छन्ति ददति। किंभूताः स्त्रियः? असाधुवृत्ताः दुराचाराः। स्त्रीग्रहणमत्रोपलक्षणं, तेनान्येऽपि सन्निहिता अविवेकिनो ग्राह्याः। अपरं अरयः शत्रवः। गरान् कृत्रिमविषाणि यस्मै प्रयच्छन्ति। दुष्टाम्बु सविषमत्स्यादिसंबन्धात्। विषमेव दावाग्निवातातपाद्यभिभवेन मन्दतां गतं विषपीतस्य वा विषं दूषीविषं; तेन नखरोमादिना विषकल्पेन गरेण दूषीविषेण वाशु शीघ्रं रक्तं कुपितमिति बोद्धव्यम्। त्रिलिङ्गं वातपित्तश्लेष्मलिङ्गम्। प्रसक्तं निरन्तरम्। दूष्युदरं इति यदेव सान्निपातिकोदरं तदेव दूष्युदरम्, एतेन न संख्यातिरेकः। घोरं भयानकं, न पुनर्घोरं कष्टकारि ॥ ११—१३ ॥—

**प्लीहोदरं कीर्तयतो निबोध ॥**
**विदाह्यभिष्यन्दिरतस्य जन्तोः**
**प्रदुष्टमत्यर्थमसृक् कफश्च ॥ १४ ॥**
**प्लीहाभिवृद्धिं सततं करोति**
**प्लीहोदरं तत् प्रवदन्ति तज्ज्ञाः ॥**[1]
**वामे च पार्श्वे परिवृद्धिमेति**
**विशेषतः सीदति चातुरोऽत्र ॥ १५ ॥**
**मन्दज्वराग्निः कफपित्तलिङ्गै-**
**रुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥**

निबोध जानीहि। अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजनकम्। असृक् कफश्चेति असृग्ग्रहणेन पित्तस्यापि ग्रहणम्। प्लीहोदरस्य वामपार्श्वस्थितस्य। सीदति अङ्गग्लानियुक्तो भवति ॥ १४ ॥ १५ ॥—

**सव्येतरस्मिन् यकृति प्रदुष्टे**
**ज्ञेयं यकृद्दाल्युदरं तदेव ॥ १६ ॥**[2]

---

१ प्लीहोदरं युनानीवैद्यके 'वरम उलतीहाल' इति नाम्ना आङ्ग्लवैद्यके च 'एनलार्जमेन्ट ऑफ स्प्लीन' (Enlargement of Spleen) इति नाम्ना प्रसिद्धम्।

२ यकृदुदरं युनानीवैद्यके 'वरम उल कीवद' इति नाम्ना आ-

अत्र प्लीहोदरे यकृद्दाल्युदरस्यैवावरोधं दर्शयन्नाह,—सव्येतरस्मिन्नित्यादि । सव्येतरस्मिन् दक्षिणपार्श्वे । तदेव प्लीहोदरं यद्दाल्युदरं ज्ञेयम् । क्व ज्ञेयमित्याह,— यकृति कालखण्डे, किंभूते ? प्रदुष्टे, एतेन न संख्यातिरेकः ॥ १६ ॥

**यस्यान्त्रमन्नैरुपलेपिभिर्वा**
**बालाश्मभिर्वा सहितैः पृथग् वा ॥**
**संचीयते तत्र मलः सदोषः**
**क्रमेण नाड्यामिव संकरो हि ॥ १७ ॥**
**निरुध्यते चास्य गुदे पुरीषं**
**निरेति कृच्छ्रादपि चाल्पमल्पम् ॥**
**हृन्नाभिमध्ये परिवृद्धिमेति**
**यच्चोदरं विट्समगन्धिकं च ॥ १८ ॥**
**प्रच्छर्दयन् बद्धगुदी विभाव्य-**

बद्धगुदं दर्शयन्नाह,—यस्येति । यस्य पुरुषस्य पुरीषं निरुध्यते इति संबन्धः । कैर्निरुध्यते इत्याह,—अन्नैरित्यादि । उपलेपिभिः पिच्छिलादिभिः । वा अत्र समुच्चये । सहितैः इति एकत्र मिलितैः समुदितैरित्यर्थः । पृथक् इति एकैकैरित्यर्थः । मलः पुरीषः, सदोषः दोषत्रयसहितः । नाड्यां प्रणालिकायां, सङ्करः अवकरः, प्रचुरतृणादिसमूह इत्यर्थः । निरेति निःसरति । बद्धगुदी विभाव्यः स पुरुषो बद्धगुदी ज्ञेयः ॥ १७ ॥ १८॥—

**स्ततः परिस्राव्युदरं निबोध ॥**
**शल्यं यदन्नोपहितं तदन्त्रं**
**भिनत्ति यस्यागतमन्यथा वा ॥ १९ ॥**
**तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाशः**
**स्रावः स्रवेद् वै गुदतस्तु भूयः ॥**
**नाभेरधश्चोदरमेति वृद्धिं**
**निस्तुद्यतेऽतीव विदह्यते च ॥ २० ॥**
**एतत् परिस्राव्युदरं प्रदिष्टं**

परिस्राव्युदरमाह,—तत इति । यत् शल्यं अन्नोपहितं अन्नसम्बद्धं भुक्तम्, तत् अन्त्रं भिनत्ति विदारयति । यस्य पुरुषस्य । शल्यं शर्कराकाष्ठास्थिकण्टकादिकम् । आगतमन्यथा वेति वाशब्दोऽवधारणे, तेनान्यथैव विलोमेन तिर्यगेवागतं नत्वनुलोमेन । स्रुतः गलितः ॥ १९ ॥ २० ॥—

**दकोदरं कीर्तयतो निबोध ॥**
**यः स्नेहपीतोऽप्यनुवासितो वा**
**वान्तो विरिक्तोऽप्यथवा निरूढः ॥ २१ ॥**
**पिबेज्जलं शीतलमाशु तस्य**
**स्रोतांसि दुष्यन्ति हि तद्वहानि ॥**
**स्नेहोपलिप्तेष्वथवापि तेषु**
**दकोदरं पूर्ववदभ्युपैति ॥ २२ ॥**
**स्निग्धं महत्संपरिवृत्तनाभि**
**भृशोन्नतं पूर्णमिवाम्बुना च ॥**
**यथा दृतिः क्षुभ्यति कम्पते च**
**शब्दायते चापि दकोदरं तत् ॥ २३ ॥**

दकोदरमाह,—दकोदरमिति । दकोदरं उदकोदरमित्यर्थः । तद्वहानि तोयवहानि । स्नेहोपलिप्तेष्वथवापि तेषु इति स्नेहादिपानादिनापि तेषु स्रोतःसु स्नेहादिलिप्तेषु यदा शीतलजलं पिबेत्तदापीत्यर्थः । पूर्ववदिति क्षतान्त्रोदरे यथा सलिलस्याधोगामित्वादधो नाभेः उदरोत्पत्तिः यथाच गुदादास्रावस्तद्वदिति; जेज्जटाचार्येण पुनः पूर्ववत् इत्यत्रान्यान्युदराणि यथा भवन्ति तथा इदमपीति व्याख्यातम्, तन्नेच्छति गयदासाचार्यः । परिवृत्तनाभिः उच्छिन्ननाभिरिति । खल्पः क्षुभति चलति । कम्पते च इति कम्पनमतिशयेन चलनम् ॥ २१—२३ ॥

**आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता ॥**
**शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः ॥**
**दाहस्तृष्णा च सर्वेषु जठरेषु भवन्ति हि ॥ २४ ॥**

तेषामष्टानामपि सामान्यं लिङ्गं दर्शयन्नाह,—आध्मानमिति । जेज्जटाचार्येण पुनरेते उपद्रवा व्याख्याताः; तन्नेच्छति गयदासाचार्यः ॥ २४ ॥

**अन्ते सलिलभावं हि भजन्ते जठराणि तु ॥**
**सर्वाण्येव परीपाकात्तदा तानि विवर्जयेत् ॥ २५ ॥**

साध्यासाध्यविभागमाह,—अन्ते इति । परिपाकात् परिणामेन ॥ २५ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

**अथातो मूढगर्भनिदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥२॥**

अथात इति । मूढो निरुद्धगतिः । तदुक्तं—"सर्वावयवसंपूर्णो मनोबुद्ध्यादिसंयुतः । विगुणापानसंमूढो मूढगर्भोऽभिधीयते" ॥ १ ॥ २ ॥

**ग्राम्यधर्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीडनधावनाभिघातविषमशयनासनोपवासवेगा-**

---

इङ्गलवैद्यके च 'हेप्याटिक एनलार्जमेन्ट' (Hapatic Enlargement) इति नाम्ना प्रसिद्धम् ।

१ बद्धगुदोदरं आङ्ग्लवैद्यके 'स्ट्रिक्चर ऑफ थी रेक्टम' (Stricture of the Rectum) इति नाम्ना प्रसिद्धम् ।

२ क्षतोदरं आङ्ग्लवैद्यके 'अल्सरेशन ऑफ बावेल' (Ulceration of Bowel) इति नाम्ना प्रसिद्धम् ।

३ जलोदरं युनानीवैद्यके 'इस्तिस्का' इति नाम्ना आङ्ग्लवैद्यके च 'एसिटिस' (Ascitis) इति नाम्ना प्रसिद्धम् ।

४. 'विध्येत्त्यजेत वा' इति पाठान्तरम् ।

**भिघातातिरूक्षकटुतिक्तभोजनशोकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः, फलमिव वृन्तबन्धनादभिघातविशेषैः; स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसंक्षोभमापादयति, तस्या जठरसंक्षोभाद्वायुरपानो मूढः पार्श्ववस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानामन्यतममापाद्य गर्भं च्यावयति तरुणं शोणितस्रावेण; तमेव कदाचिद्विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानं विगुणापानसंमोहितं गर्भं मूढगर्भमित्याचक्षते ॥ ३ ॥**

तस्य हेतुं दर्शयन्नाह,—ग्राम्यधर्मेति । ग्राम्यधर्मः मैथुनं, यानं रथादि, वाहनमश्वादि, अध्वगमनं पद्भ्यां मार्गगमनं, प्रस्खलनं आखुडनादि, प्रपतनं प्रासादादेः सकाशादतिशयेन पतनम्, प्रपीडनं अतिशयेन पीडनं, प्रधावनं अतिशयेन धावनं, अभिघातः शस्त्रलोष्टकशादिभिः प्रहारः, वेगाभिघातः वाताद्यवरोधः, प्रेङ्खोलनं हिन्दोलनं, गर्भशातनं भेषजेन गर्भपातनम् । केचिदेतत् गद्यमन्यथा पठन्ति, तत्तु अभावान्न लिखितम् । बन्धनमत्र गर्भाशयप्रतिबद्धाः शिराः पेश्यश्च । मोचने उपमानमाह,—फलमिति । एतेनैतदुक्तं भवति—यथा वृक्षेऽपरिपक्कं फलमभिघातैः अकाल एव पतति तद्वद्यथोक्तहेतुपातनसामर्थ्यात् अप्रसवकाल एव गर्भः पतति । अतिक्रम्य उल्लंध्य, विवरैः अंतरालैः, अवस्रंसमानः अधःपतन्, कोष्ठशब्देनामाशयपक्काशयादिस्थानं, संक्षोभश्चलनं, तस्याः स्त्रियाः, मूढो विमार्गगामी, अन्यतमं एकतमं, आपाद्य निर्वर्त्य । तरुणं गर्भं अपानो मूढः सन् च्यावयतीति संबन्धः । तरुणं घनाङ्गं अव्यक्तचेतनम् । मूढगर्भस्य निरुक्तिमाह,—तमेवेति । असम्यगागतं विलोमभागेनागतम् । अपत्यपथं अनु विलोमभागेनागतं, अवाग्गमनात् । अपत्यपथं योनिम् । अनुप्राप्तं आश्रितम् । अनिरस्यमानं अनिःसरन्तम् । संमोहितं मूर्च्छितम् ॥ ३ ॥

**ततः स कीलः प्रतिखुरो बीजकः परिघ इति । तत्र ऊर्ध्वबाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव स कीलः; निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः; यस्तु निर्गच्छत्येकशिरोभुजः स बीजकः; परिघ इव योनिमुखमावृत्य तिष्ठेत् स परिघ इति चतुर्विधो भवतीत्येके भाषन्ते; तत्तु न सम्यक्, कस्मात्? स यदा विगुणानिलप्रपीडितोऽपत्यपथमनेकधा प्रतिपद्यते तदा सङ्ख्या हीयते ॥ ४ ॥**

तस्य चातुर्विध्यमाह,—तत इति । तत्र असम्यगागमनात् प्रकारान् प्रकटयन्नाह,—तत्र ऊर्ध्वबाहुशिरः इति । कायसङ्गी निरुद्धकायः । एकशिरोभुज इति एको भुजः शिरसा सह निर्गच्छतीत्यर्थः । परिघ इवेति परिघः अर्गलादण्डः ॥ ४ ॥

**तत्र, कश्चित् द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते; कश्चिदाभुग्नैकसक्थिरेकेन; कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्यगागतः; कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायाऽवतिष्ठते; अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना; कश्चिदाभुग्नशिरा बाहुद्वयेन; कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः; कश्चिदेकेन सक्थ्ना योनिमुखमभिप्रतिपद्यतेऽपरेण पायुमित्यष्टविधा मूढगर्भगतिरुद्दिष्टा समासेन ॥ ५ ॥**

तानेवानेकप्रकारान् दर्शयन्नाह,—तत्रेति । आभुग्नं सङ्कुचितम् । एकेन सक्थ्ना योनिमुखं प्रतिपद्यते इति संबन्धनीयम् । कश्चिदिति आभुग्नं सक्थिशरीरं यस्येत्यर्थः । योनिमुखं प्रतिपद्यते इत्यत्रापि संबन्धनीयम् । कश्चिदुर इति । पिधाय आच्छाद्य । अन्त इति । पार्श्वावृत्तशिराः पार्श्वमध्यनिक्षिप्तशिराः । एकेन बाहुना योनिमुखं प्रतिपद्यते इति संबन्धनीयम् । आभुग्न इति अत्रापि योनिमुखं प्रतिपद्यते इति संबन्धनीयम् । कश्चिदाभुग्नमध्यः योनिमुखं प्रतिपद्यते इत्यत्रापि संबन्धनीयम् । कश्चिदिति । अष्टविधा समासेन विस्तरेण तु तिर्यग्ग्रीवाजङ्घाप्रकारेणानन्ताः ॥ ५ ॥

**तत्र द्वावन्त्यावसाध्यौ मूढगर्भौ, शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसंवरणमक्कल्लश्वासकासभ्रमनिपीडितान् परिहरेत् ॥ ६ ॥**

तेषु असाध्यं निर्दिशन्नाह,—तत्रेति । द्वावन्त्यौ सप्तमाष्टमौ असाध्यौ स्वभावेनैव । अन्येषु अप्यवस्थया असाध्यत्वं दर्शयन्नाह,—शेषानपीत्यादि । विपरीतेन्द्रियार्थादिभिः पीडिताः जननीयैर्मूढगर्भैस्ते तथाविधाः तान् । विपरीतेन्द्रियार्थी रूपाद्यग्रहणभ्रान्ताः । योनिभ्रंशः योनिबहिर्गमनम् । योनिसंवरणं योनिसङ्कोचः । प्रसूताया वायुरसृगारोध्य बस्तिशिरःप्रभृतिषु शूलं करोति स मकल्लः । भ्रमः चक्राधिरूढस्येव भ्रमणम् ॥ ६ ॥

**भवन्ति चात्र ।**

**कालस्य परिणामेन मुक्तं वृन्ताद् यथा फलम् ॥**
**प्रपद्यते स्वभावेन नान्यथा पतितुं फलम् ॥ ७ ॥**
**एवं कालप्रकर्षेण मुक्तो नाडीविबन्धनात् ॥**
**गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते ॥ ८ ॥**

स्वभावप्रजननकाले यथा मूढो गर्भो न भवति तथा श्लोकद्वयेन दर्शयन्नाह,—कालस्येति । यथा कालस्य परिणामेन कालकृतपरिपाकेन वृन्तात् मुक्तं फलं स्वभावेन पतितं पतनं प्रपद्यते प्राप्नोति एवं कालप्रकर्षेण नाडीविबन्धनात् मुक्तो यो गर्भाशयस्थो गर्भः सः जननाय प्रपद्यते जन्म प्राप्नोतीत्यर्थः ॥ ७ ॥ ८ ॥

**कृमिवाताभिघातैस्तु तदेवोपद्रुतं फलम् ॥**
**पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युतिः॥९॥**

मूढगर्भो यथा भवति तथा दर्शयन्नाह,—कृमिवाताभिघातैरिति। गर्भविच्युतिर्द्विविधा तत्—नव्यस्य स्रावरूपेण, घनावयवस्य पातेन। तत्र नव्यस्य स्रावणे मूढगर्भनाम नास्ति, विगुणानिलसंमोहनिर्गमलक्षणाभावात् ॥ ९ ॥

**आचतुर्थात्ततो मासात् प्रभवेद् गर्भविच्युतिः ॥**
**ततः स्थितशरीरस्य पातः पञ्चमषष्ठयोः ॥ १० ॥**

पतनस्तु अस्तीति दर्शयन्नाह,—आचतुर्थादिति। गर्भे विमुक्तिः प्रभवेत् स्रावरूपा भवेत्। एतेन मासचतुष्टयं यावत् मूढगर्भता नास्तीत्युक्तम्। तत इत्यादि। ततः चतुर्थमासादूर्ध्वं स्थितशरीरस्य विच्युतिः। पातः पातरूपा भवेत्। एतेन विच्युतिरियम् ॥ १० ॥

**प्रविध्यति शिरो या तु नताङ्गी निरपत्रपा ॥**
**नीलोद्धतशिरा हन्ति सा गर्भं स च तां तथा११**

प्रविध्यति ताडयति अतिशयेन धुनोतीत्यर्थः। अन्ये अपविद्धशिरा इति पठन्ति। तत्रावनतशीर्षेत्यर्थः। या स्त्री निरपत्रपा लज्जारहिता। नीलोद्धतशिरा कृष्णोद्धतशिरा। सा गर्भं स च तां तथा सा स्त्री गर्भं हन्ति, स च गर्भवती स्त्रीं हिनस्तीत्यर्थः ॥ ११ ॥

**गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ॥**
**भवत्युच्छ्वासपूतित्वं शूलं चान्तर्मृते शिशौ॥१२॥**
**मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः ॥**
**गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः १३**

तथानेन प्रकारेण गर्भिणीरक्षार्थं अन्तर्मृतस्य गर्भस्यापकर्षणाय यल्लक्षणं तद्दर्शयन्नाह,—गर्भास्पन्दनमिति। आवी प्रसववेदना अथवा आवीशब्देन योनेर्मूत्रकफप्रसेकादीन्यावीलिङ्गान्युच्यन्ते। मानसागन्तुभिरिति ॥ १२ ॥ १३ ॥

**बस्तमारविपन्नायाः कुक्षिः प्रस्पन्दते यदि ॥**
**तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक् ॥१४**

मातुर्मृताया अपि जीवतो गर्भस्य अपकर्षणं दर्शयन्नाह,—बस्तमारेति। बस्तमारः छगलवत् मरणम्। एतेन ग्रीवामोटनेन आशुतमं अक्लिष्टं मरणमुक्तं, तेन विपन्नायाः मृतायाः स्त्रिय इत्यर्थः। तत्क्षणात् घटिकाद्वयमध्ये, परतस्तु गर्भोपि मृत इति भावः। तत्क्षणादित्यत्र मुहूर्तादिति पठन्ति तत्रापि स एवार्थः। जन्मकाले नवममासादिकाले इत्यर्थः। तं गर्भम्। पाटयित्वा स्त्रीकुक्षिं विदार्य। अत्र केचित्—"यदा सोऽन्तर्मृतो गर्भो शूनो बस्तिरिवाततः। उत्क्षिप्यन्त इवाङ्गानि मूत्रबस्तिश्च भिद्यते ॥ क्लोम प्लीहा यकृच्चैव फुफ्फुसं हृदयं तथा। गर्भेण पीडितं पित्तादूर्ध्वं प्रकामति स्त्रियाः॥ सा शूयते मुह्यति च कृच्छ्रश्वासा च जायते। पूतिगन्धस्तथा स्वेदो जिह्वा तालु च शुष्यति॥ वेपते भ्राम्यति तथा जीवितं चोपरुध्यते। एतैर्लिङ्गैर्विजानीयात् मृतं गर्भचिकित्सकः।"—इति पठन्ति, तत् न पठनीयं पुनरुक्तत्वात्, जेज्झटाचार्यादिभिः परिहृतत्वाच्च। श्रीब्रह्मदेवेन तु किंचित् व्याख्यातं, तेनार्षानार्षचिन्ता न कृता ॥ १४ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामष्टमोऽध्यायः ॥ ८ ॥

---

# नवमोऽध्यायः।

**अथातो विद्रधीनां निदानं व्याख्यास्यामः॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥ २ ॥**

अथात इति ॥ १ ॥ २ ॥

**सर्वोऽमरगुरुः श्रीमान् निमित्तान्तरभूमिपः ॥**
**शिष्यायोवाच निखिलमिदं विद्रधिलक्षणम् ॥ ३ ॥**

शिष्यार्थमुवाचेति संबन्धः। अमृतदानेन सर्वे देवाः अमराः कृताः, तेनासौ धन्वन्तरिः सर्वेषां देवानां गुरुरित्यर्थः। श्रीमान् ज्ञानातिशयेन ऐश्वर्येण युक्त इत्यर्थः। निमित्तान्तरभूमिप इति निमित्तान्तरेण कारणान्तरेण भैषज्यामृतप्रदानलक्षणेन भूपालतां गत इत्यर्थः। अन्येतु अपुत्रस्य काशिराजस्य परमाराधनया निर्वाणं तनूमधिष्ठाय पुत्रत्वमापन्न इति कारणान्तरं व्याख्यानयन्ति। शिष्यायोवाच शिष्यार्थं कथितवानित्यर्थः। निखिलं समस्तम्। इदं वक्ष्यमाणम्। अनेन धन्वन्तरिस्वरूपवर्णनेन विद्रधेर्गरीयस्त्वं ख्यापितं भवति ॥ ३ ॥

**त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः ॥**
**दोषाः शोफं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ ४ ॥**
**महामूलं रुजावन्तं वृत्तं चाप्यथवायतम् ॥**
**तमाहुर्विद्रधिं[२] धीरा विज्ञेयः स च षड्विधः ॥ ५ ॥**
**पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ॥**
**षण्णामपि हि तेषां तु लक्षणं संप्रवक्ष्यते ॥ ६ ॥**

संप्राप्तिं सामान्यलक्षणं च दर्शयिष्यन्नाह,—त्वग्रक्तेति। भृशमित्यतिशयेनोच्छ्रितमिति संबन्धनीयम्। धीराः धीमन्तः। एतेन संप्राप्तिरुक्ता। महामूलमित्यादि सामान्यलक्षणमुक्तं, विशिष्टं कृष्णोऽरुण इत्यादि, कारणं तु सामान्यशोफकारणाभिधानेनैवोक्तम्। संख्यामाह,—विज्ञेयः स च षड्विध इति। तदेव षड्विधत्वमाह,—पृथगिति। समस्तैश्चेत्येकः, क्षतेनाप्येकः, असृजाप्येक इति षट् ॥ ४—६ ॥

---

[१] वाग्भटे तु अयं श्लोकः अन्यथा पठ्यते; यथा,—"बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि। जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेत् शिशुम्"—इति ॥ "गर्भिण्या मृताया यदि कुक्षिः प्रस्पन्दतेऽत्यन्तं चलति; क्वप्रदेशे ? बस्तिद्वारे; कदा ? जन्मकाले गर्भप्रसवोन्मुखे काले; तदा कुशलो वैद्यः शीघ्रं कुक्षिप्रस्पन्दनादनन्तरं पाटयित्वा शिशुं बालकमुद्धरेत्" इति अरुणदत्तटीका ॥

[२] विद्रधिः युनानीवैद्यके 'दुबेला' इति नाम्ना आङ्गलवैद्यके च 'एब्सेस' (Abscess) इति नाम्ना प्रसिद्धः।

**कृष्णोऽरुणो वा परुषो भृशमत्यर्थवेदनः ॥**
**चित्रोत्थानप्रपाकश्च विद्रधिर्वातसंभवः ॥ ७ ॥**

वातविद्रधिलक्षणमाह,—कृष्ण इति । चिरोत्थानप्रपाकः इति नानाप्रकोपपाकश्चेत्यर्थः ॥ ७ ॥

**पक्वोदुम्बरसङ्काशः श्यावो वा ज्वरदाहवान् ॥**
**क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसंभवः ॥ ८ ॥**

पित्तविद्रधिमाह,—पक्वोदुम्बरसङ्काश इति ॥ ८ ॥

**शरावसदृशः पाण्डुः शीतः स्तब्धोऽल्पवेदनः ॥**
**चिरोत्थानप्रपाकश्च सकण्डुश्च कफोत्थितः ॥ ९ ॥**

कफजमाह,—शरावसदृश इति । शरावसादृश्येन महत्त्वमुक्तम् ॥ ९ ॥

**तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः ॥**

तेषां विद्रधीनां यथाक्रममास्रावानाह,—तनुपीतसिता इति । एषां वातपित्तकफोत्थानां विद्रधीनाम् ॥—

**नानावर्णरुजास्रावो घाटालो विषमो महान् ॥ १० ॥**
**विषमं पच्यते चापि विद्रधिः सान्निपातिकः ॥**

सान्निपातिकमाह,—नानावर्णरुजेति । नानावर्णाः कृष्णपीतशुक्लाः, नानारुजाः तोददाहकण्ड्वाद्याः, नानास्रावाः तनुपीतशुक्लाः स्रवन्ति यस्य स तथोक्तः । घाटाल इति ऊर्ध्वभागो महान् यस्येति सः घाटालः । विषमः असाध्यत्वात् । विषमं पच्यते चापीति चिराचिरगम्भीरोत्तानानुन्नतोन्नतभेदेन॥१०॥—

**तैस्तैर्भावैरभिहते क्षते वापथ्यसेविनः ॥ ११ ॥**
**क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥**
**ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः॥ १२ ॥**
**एष विद्रधिरागन्तुः पित्तविद्रधिलक्षणः ॥**

आगन्तोः संप्राप्तिं दर्शयन्नाह,—तैस्तैर्भावैरिति । तैस्तैः इति अश्वपतनगूढप्रहारादिभिरित्यर्थः । तेन स्रुतशोणितपिशितादीनां ग्रहणम् । क्षतोष्मा वायुविसृतः वातेन विस्तारितपित्तविद्रधिलक्षणो भवतीत्यध्याहारः ॥ ११ ॥ १२ ॥—

**कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाकरः ॥ १३ ॥**
**पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥**

रक्तविद्रधिलक्षणमाह,—कृष्णस्फोटावृत इति ॥ १३ ॥—

**उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्वजः ॥ १४ ॥**

बाह्येषु असाध्यमाह,—उक्ता विद्रधय इति । सर्वजः सान्निपातिकः ॥ १४ ॥

**आभ्यन्तरानतस्तूर्ध्वं विद्रधीन् परिचक्षते ॥**
**गुर्वसात्म्यविरुद्धान्नशुष्कसंक्लिष्टभोजनात् ॥ १५ ॥**
**अतिव्यवायव्यायामवेगाघातविदाहिभिः ॥**
**पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ॥१६॥**
**वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् ॥**
**गुदे बस्तिमुखे नाभ्यां कुक्षौ वंक्षणयोस्तथा ॥ १७ ॥**
**वृक्कयोर्यकृति प्लीह्नि हृदये क्लोम्नि वा तथा ॥**
**तेषां लिङ्गानि जानीयाद् बाह्यविद्रधिलक्षणैः॥१८॥**
**आमपक्वैषणीयाच्च पक्वापक्वं विनिर्दिशेत् ॥**

अन्तर्विद्रधेः हेतुसंप्राप्तिलक्षणान्याह,—गुर्वसात्म्येति । संक्लिष्टभोजनाहुष्टदेशे भोजनात् । संभूय मिलिला । वल्मीकवत्समुन्नद्धं विद्रधिं कुर्वन्तीति संबन्धः। गुल्मरूपिणं काठिन्येन वल्मीकवत्समुन्नद्धत्वेन च, समुन्नद्धं सर्वत उन्नतम्। गुर्वसात्म्येत्यादि विदाहिभिरिति यावत् हेतुः । पृथक् संभूय चेति संप्राप्तिः। गुल्मरूपिणं वल्मीकवत्समुन्नद्धमिति च सामान्यलक्षणम् । तथा वल्मीकवत्समुन्नद्धत्वं पच्यमानावस्थायाम्। तेषां वातादिभेदभिन्नानां विशेषवर्णसंख्यादिकं बाह्यविद्रधेः ज्ञेयम् । जेज्झटाचार्यस्तु आभ्यन्तरस्य आगन्तोरभावमेव मन्यते । तेषां बाह्यानामाभ्यन्तराणां च स्थानमाह,—गुदे बस्तीति । गुदादिस्थानेषु दोषा विद्रधिं कुर्वन्तीति संबन्धः। बस्तौ वस्तिमुखे न तु वस्तौ, तत्र मांसमेदसोरभावात् । वङ्क्षणं ऊरूमूलाश्रयः 'गंडक' इति लोके । वृक्कौ मांसपिण्डद्वयं, एको वामपार्श्वस्थितः, द्वितीयो दक्षिणपार्श्वस्थितः । यकृत् कालखण्डं दक्षिणपार्श्वस्थम् । प्लीहा उदरमध्ये वामपार्श्वस्थितः। हृदयं कमलमुकुलाकारमधोमुखम् । क्लोम कालखण्डादधस्तात् स्थितं दक्षिणपार्श्वस्थं तिलकं प्रसिद्धम् । तेषां लिङ्गानि जानीयात् बाह्यविद्रधिलक्षणैः तेषां आभ्यन्तराणामित्यर्थः ॥ १५—१८ ॥—

**अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः ॥ १९ ॥**
**गुदे वातनिरोधस्तु बस्तौ कृच्छ्राल्पमूत्रता ॥**
**नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतकोपनम् ॥२०॥**
**कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ ॥**
**वृक्कयोः पार्श्वसङ्कोचः प्लीह्न्युच्छ्वासावरोधनम् ॥२१॥**
**सर्वाङ्गप्रग्रहस्तीव्रो हृदि शूलश्च दारुणः ॥**
**श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका २२॥**

बाह्यानामाभ्यन्तराणां च अधिष्ठानविशेषेण लक्षणं दर्शयन्नाह—अधिष्ठानेति । आटोपः संक्षोभः, पार्श्वसङ्कोचः पार्श्वोत्पाटनमिव । हृदि इति हृदयोत्थविद्रधौ सर्वाङ्गप्रग्रहादय उपद्रवा भवन्तीत्यर्थः। क्लोमपिपासेत्यादि पाठान्तरं केचित् पठन्ति। तच्च अभावान्न लिखितम् ॥ १९—२२ ॥

**आमो वा यदि वा पक्वो महान् वा यदि चेतरः ॥**
**सर्वो मर्मोत्थितश्चापि विद्रधिः कष्ट उच्यते॥ २३ ॥**

तत्र मर्मोत्थितानां सर्वावस्थासु कष्टत्वं दर्शयन्नाह,—आमो वेति । यदि वेतरः इति इतरोऽल्पः ॥ २३ ॥

**नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः ॥**
**जीवत्यधो निःस्रुतेषु स्रुतेषूर्ध्वं न जीवति ॥ २४ ॥**
**हृन्नाभिबस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः ॥**
**जीवेत्कदाचित् पुरुषो नेतरेषु कदाचन ॥ २५ ॥**

अवस्थाविशेषादसाध्यत्वमाह—नाभेरिति । नाभेरुपरिजाः प्लीहयकृत्क्लोमकुक्षिहृदयजाः । पक्वा ऊर्ध्वं यान्ति स्रवन्ति इतरे गुदबस्तिवृक्कवङ्क्षणजा अधो यान्ति । एषु चाधोनिःस्रुतेषु

जीवति नोर्ध्वनिःस्रुतेषु। हृन्नाभिबस्तिवर्ज्याः हृदयादिजान् वर्जयित्वा ये अन्ये गुदकुक्षिवङ्क्षणवृक्कप्लीहयकृत्क्लोमजाः। तेषु अन्तर्विद्रधिषु बाह्यतो भिन्नेषु कदाचित् दैववशात् जीवेत्, न पुनः इतरेषु आभ्यन्तराऽधोभिन्नेष्वित्यर्थः। हृन्नाभिबस्तिजानां साध्यत्वमग्रे वाच्यम्॥ २४॥ २५॥

**स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः॥**
**दाहज्वरकरो घोरो जायते रक्तविद्रधिः॥ २६॥**

अभ्यन्तररक्तजं नारीणामेव दर्शयन्नाह,—स्त्रीणामिति। स्त्रीणां रक्तविद्रधिर्जायते इति संबन्धः। किंभूतानां स्त्रीणां अपप्रजातानां पतितगर्भाणां, पुनरपि किंभूतानां? प्रजातानां सम्यक्कालप्रसूतानाम्। अहितैः शीतरुक्षाहारविहारैः॥ २६॥

**अपि सम्यक् प्रजातानामसृक् कायादनिःसृतम्॥**
**रक्तजं विद्रधिं कुर्यात् कुक्षौ मक्कल्लसंज्ञितम्॥२७॥**

तस्यैव रक्तविद्रधेर्विशेषमाह—अपि सम्यगिति। मक्कल्लसंज्ञितं मक्कल्लजनितं, कारणे कार्योपचारात्, घृतमायुरिति यथा॥ २७॥

**सप्ताहान्नोपशान्तश्चेत्ततोऽसौ संप्रपच्यते॥**

सप्तरात्रमप्रशान्तः पित्तोष्मणान्तः प्रपच्यते। पक्वश्चासाध्यः॥—

**विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः॥ २८॥**
**तुल्यदोषसमुत्थानाद्विद्रधेर्गुल्मकस्य च॥**
**कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च॥२९॥**
**न निबन्धोऽस्ति गुल्मानां विद्रधिः सनिबन्धनः॥**
**गुल्माकाराः स्वयं दोषा विद्रधिर्मांसशोणिते॥**
**विवरानुचरो ग्रन्थिरप्सु बुद्बुदको यथा॥ ३०॥**
**एवंप्रकारो गुल्मस्तु तस्मात्पाकं न गच्छति॥**
**मांसशोणितबाहुल्यात् पाकं गच्छति विद्रधिः३१॥**
**मांसशोणितहीनत्वाद् गुल्मः पाकं न गच्छति॥**
**गुल्मस्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते॥**
**विद्रधिः पच्यते तस्माद् गुल्मश्चापि न पच्यते ३२॥**

"पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम्"—इत्यत्रैकरूपत्वात् अन्तर्विद्रधिगुल्मयोः विशेषं भेदसमुत्थानकारणं दोषा एव समुत्थानतश्च द्वयोस्तुल्यं (?) सिद्धान्तमाह,—न निबन्धोऽस्तीति निश्चित्य बध्नातीति निबन्धो मूलं तत् गुल्मानां मूलं नास्तीति, रक्तादिद्रव्याणामभावत्वात्। कुतः पुनरेषां शोफरूपाणामपि मूलं नास्तीत्याह,—गुल्माकाराः गुल्मरूपाः, स्वयं आत्मानमेव, दोषाः वातादयः, न पुनर्दूष्यसंश्रयः। विद्रधेर्मूलसंभवहेतुमाह,—विद्रधिर्मांसशोणिते इति भवतीति शेषः। तत्र कथं रक्ते पित्ते कफे वा द्रवे वातजनितस्य गुल्मस्य स्थितिरित्याह,—विवरानुचर इति। यथाऽप्सु बुद्बुदकः, एवंप्रकारः विवरानुचरः स्रोतोऽनुसारी वातग्रन्थिरूपो गुल्मः कफपित्तयोरिति शेषः। तस्मात् पूर्वोक्तात् हेतोः पाकं न याति। अमुमेवार्थं नियमयन्नाह,—मांसशोणितबाहुल्यात् इति। विद्रधिगुल्मयोर्मूलसंभवासंभवाभ्यां पाकापाकौ प्रतिपाद्य स्थानविशेषादपि हेतोः पाकापाकं प्रतिपादयन्नाह,—गुल्मस्तिष्ठतीत्यादि। गुल्मश्चापि न पच्यते इति अपिशब्देन पच्यते गुल्म इति कायचिकित्सायां गुल्मपाकित्वं समुच्चीयते॥ २८—३२॥

**हृन्नाभिबस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः॥**

"हृन्नाभिबस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः" एतेन सान्निपातिकः पक्वो यत्र कुत्रचित् स्थितो विद्रधिर्वर्जनीयः। केचित् गुल्मविद्रध्योर्मानकथनाय श्लोकं पठन्ति,—"मुष्टिप्रमाणो गुल्मस्तु विद्रधिश्च ततः परम्" ततः परमिति मुष्टेरधिक इत्यर्थः॥—

**अथ मज्जपरीपाको घोरः समुपजायते॥ ३३॥**
**सोऽस्थिमांसनिरोधेन द्वारं न लभते यदा॥**
**ततः स व्याधिना तेन ज्वलनेनेव दह्यते॥ ३४॥**
**अस्थिमज्जोष्मणा तेन शीर्यते दह्यमानवत्॥**
**विकारः शल्यभूतोऽयं क्लेशयेदातुरं चिरम्॥ ३५॥**
**अथास्य कर्मणा व्याधिर्द्वारं तु लभते यदा॥**
**ततो मेदःप्रभं स्निग्धं शुक्लं शीतमथो गुरु॥ ३६॥**
**भिन्नेऽस्थ्नि निःस्रवेत् पूयमेतदस्थिगतं विदुः॥**
**विद्रधिं शास्त्रकुशलाः सर्वदोषरुजावहम्॥ ३७॥**

प्राकृतनवशात् तदुपेक्षणाद्वा यो विद्रधिश्चास्थ्यन्तर्गतः पक्वो भवति तस्य लक्षणमाह,—अथ मज्जेति। सर्वविद्रधयो वातादिना यदाऽस्थ्याश्रित्य जायन्ते उपादानादनन्तरं तद्गतमज्जा च परिपच्यते तदा एतद्रूपमुक्तम्। सोऽस्थिमांसनिरोधेनेति सः मज्जपरिपाकः। ततः स व्याधिना तेनेति तदा सः पुरुषः, तेन व्याधिना मज्जपरिपाकेन। अस्थिमज्जोष्मणा तेन शीर्यते दह्यमानवत् इति तेन मज्जोष्मणा, अथ उपेक्षणादनन्तरं शीर्यते विनश्यति, किंवत् दह्यमानवत्। अथास्य कर्मणेति कर्मणा शास्त्रकर्मणा। व्याधिः पूयादिः॥ ३३—३७॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने नवमोऽध्यायः॥ ९॥

## दशमोऽध्यायः।

**अथातो विसर्पनाडीस्तनरोगनिदानं व्याख्यास्यामः यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥ २॥**

अथात इति॥ १॥ २॥

**त्वङ्मांसशोणितगताः कुपितास्तु दोषाः**
**सर्वाङ्गसारिणमिहास्थितमात्मलिङ्गम्॥**
**कुर्वन्ति विस्तृतमनुन्नतमाशु शोफं**
**तं सर्वतो विसरणाच्च विसर्पमाहुः॥ ३॥**

---

१ विसर्पः युनानीवैद्यके 'हुमरा' इति नाम्ना आङ्गलवैद्यके च 'इरिसिपेलस्' (Erysipelas) इति नाम्ना प्रसिद्धः।

इदानीं संप्राप्तिहेतुस्वरूपनिरुक्तीराह,—त्वङ्मांसेति । त्वङ्मांसशोणितगताः कुपिता दोषाः शोफं कुर्वन्तीति संबन्धः । किंभूतं शोफं ? सर्वाङ्गसारिणम् । इह अस्मिन् शास्त्रे, तं विसर्पमाहुरिति संबन्धः । पुनरपि किंभूतं ? अस्थितं अनवस्थितं, देशात् देशान्तरगमनात्; अन्ये तु आस्थितं संप्राप्तं आत्मलिङ्गं, एतेन वातादिदोषलिङ्गान्तं प्राप्तमित्यर्थः; अन्ये तु इहास्थितं क्वचिदेवावयवे स्थितमिति पठन्ति व्याख्यानयन्ति च । विसृतं विस्तीर्णं, अनुन्नतं तनुत्वात् शोफस्य । विसरणाच्चेति चकारात् नानाप्रकारं विसर्पयतीत्यर्थः समुच्चीयते । त्वङ्मांसशोणितगताः इति संप्राप्तिः । कुपिता दोषाः इति हेतुः । सर्वाङ्गसारिणमित्यादि स्वरूपम् । सर्वतो वा विसरणाच्चेति निरुक्तिः ॥ ३ ॥

**वातात्मकोऽसितमृदुः परुषोऽङ्गमर्द-**
**संभेदतोदपवनज्वरलिङ्गयुक्तः ॥**
**गण्डैर्यदा तु विषमैरतिदूषितत्वाद्**
**युक्तः स एव कथितः खलु वर्जनीयः ॥ ४ ॥**

तेषां दोषभेदेन विशिष्टं लक्षणं दर्शयन्नाह,—वातात्मक इति । असितः कृष्णः । अङ्गमर्दः वेदनाविशेषः । इदं शुद्धवातविसर्पलक्षणमुक्तम् । गण्डैरित्यादि गण्डैः अग्निसदृशैः स्फोटैः इति संबन्धः । अतिदूषितत्वात् काभ्यां ? वातपित्ताभ्याम् । इदं पित्तानुगतविसर्पलक्षणमुक्तम् । अपरे तु सकलेनापि श्लोकेन शुद्धवातविसर्पलक्षणमाहुः, तन्मते तु दूषितत्वं वातेनैवेति बोद्धव्यम् ॥ ४ ॥

**पित्तात्मको द्रुतगतिर्ज्वरदाहपाक-**
**स्फोटप्रभेदबहुलः क्षतजप्रकाशः ॥**
**दोषप्रवृद्धिहतमांसशिरो यदा स्यात्**
**स्रोतोजकर्दमनिभो न तदा स सिध्येत् ॥ ५ ॥**

पित्तात्मक इति । ज्वरादिभिः प्रभेदान्तैर्बहुलशब्दः प्रत्येकं संबध्यते । क्षतजप्रकाशः इति रक्तमिव यः प्रकाशते इत्यर्थः । पूर्वार्धेन केवलपित्तारब्धो विसर्प उक्तः । दोषप्रवृद्धीत्यादि दोषप्रवृद्ध्या पित्तकफवृद्ध्या हतं मांसं शिराश्च यस्मिन् सः तथा । स्रोतोजकर्दमनिभः इति अञ्जनसदृशकर्दमद्रव्यतुल्यः । अनेन उत्तरार्धेन कफपित्तात्मको विसर्प उक्तः ॥ ५ ॥

**श्लेष्मात्मकः सरति मन्दमशीघ्रपाकः**
**स्निग्धः सितश्वयथुरल्परुगुग्रकण्डुः ॥**

श्लेष्मात्मक इति । सरति विसर्पति । कफवातयोर्ग्रन्थिविसर्पः, स तु साध्य एव । स पुरस्तादेव ग्रन्थिनिर्देश (?) इति नात्र निर्दिष्टः; अत्रैव वातकफलिङ्गविसर्पलिङ्गेन निर्दिष्टेनावरुध्यते इत्यन्ये ॥—

**सर्वात्मकस्त्रिविधवर्णरुजोऽवगाढः**
**पक्वो न सिध्यति च मांसशिराप्रणाशात् ॥ ६ ॥**

सान्निपातिकं दर्शयन्नाह,—सर्वात्मक इति । त्रिविधवर्णरुज इति प्रत्येकं वातादिदोषनिर्दिष्टकृष्णपीतसितादिवर्णः, वातादिजनितविसर्पनिर्दिष्टतोददाहकण्ड्वादिवेदनः । अवगाढः अभ्यन्तरमूलः । प्रणाशः शटनं, मांसशिराप्रणाशात् पूर्वं कच्छ्रतः सिध्यति ॥ ६ ॥

**सद्यःक्षतव्रणमुपेत्य नरस्य पित्तं**
**रक्तं च दोषबहुलस्य करोति शोफम् ॥**
**श्यावं सलोहितमतिज्वरदाहपाकं**
**स्फोटैः कुलत्थसदृशैरसितैश्च कीर्णम् ॥ ७ ॥**

सद्यःक्षतव्रणमिति पित्तं रक्तं च शोफं करोतीति संबन्धः । किं कृत्वा ? सद्यःक्षतव्रणमुपेत्य प्राप्य । किंभूतं शोफं ? श्यावमित्यादिविशेषणविशिष्टम् । दोषबहुलस्येति कुष्ठवातरक्तादिपूर्वरूपदोषदूषितधातोः, तदुक्तं तयोः पूर्वरूपे "विसर्पणम्" इति, अन्ये त्रिदोषबहुलस्येत्यर्थमाहुः । कीर्णं व्याप्तम् ॥ ७ ॥

**सिध्यन्ति वातकफपित्तकृता विसर्पाः**
**सर्वात्मकः क्षतकृतश्च न सिद्धिमेति ॥**
**पैत्तानिलावपि च दर्शितपूर्वलिङ्गौ**
**सर्वे च मर्मसु भवन्ति हि कृच्छ्रसाध्याः ॥ ८ ॥**

तेषां साध्यासाध्यत्वमाह,—सिध्यन्तीति । न सिद्धिमेति इति न साध्यतां याति । दर्शितपूर्वलिङ्गौ इति गण्डयुक्तवातविसर्पः । स्रोतोजकर्दमनिभः इति पित्तविसर्पः । अन्ये तु पित्तात्मकोऽञ्जनवपुश्च तथा न सिध्येदिति पठन्ति । चकारेण गण्डैर्यदातिविषमैरित्येवं विशिष्टो वातिकोऽप्यसाध्य इति समुच्चीयते इति व्याख्यानयन्ति, पित्तजस्य असाध्यत्वमुक्तं यत् पुनरुच्यते तत् क्षतजस्यासाध्यताप्रसङ्गे, प्रसङ्गोक्तं च न पौनरुक्त्यमर्हति ॥ ८ ॥

**शोफं न पक्वमिति पक्वमुपेक्षते यो**
**यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ॥**
**अभ्यन्तरं प्रविशति प्रविदार्य तस्य**
**स्थानानि पूर्वविहितानि ततः स पूयः ॥ ९ ॥**
**तस्यातिमात्रगमनाद्गतिरित्यतश्च**
**नाडीव यद्वहति तेन मता तु नाडी[1] ॥**

नाडीं निर्दिशन्नाह,—शोफमिति । व्रणमित्यत्रोपेक्षित इति संबन्धः । असाधुवृत्तः अहिताचारः । स्थानानि त्वगादीनि व्रणवस्तुशब्दाभिहितानि । तस्य पूयस्य । अतश्चेति चकारो नाडीनिरुक्तिपक्षान्तरसमुच्चये । तामेव नाडीनिरुक्तिमाह,—नाडीव यद्वहति तेन मता तु नाडी येन हेतुना नाडीवत् प्रणालीवद्वहति याति तेन हेतुना नाडी मता इत्यर्थः । शोफं न पक्वमित्यादि हेतुः । अभ्यन्तरमित्यादि संप्राप्तिः । नाडीवेत्यादि निरुक्तिः ॥ ९ ॥—

**दोषैस्त्रिभिर्भवति सा पृथगेकशश्च**
**संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ १० ॥**

सङ्ख्यां नियमन्नाह,—दोषैरिति । दोषैः पृथगिति तिस्रः, एकशश्च सन्निपातैरन्या, अपरश्च तिस्रः संमूर्च्छितैरपि च द्विदोषोत्थाः संयोगोत्थाः; अन्यथा अपिचकारौ निरर्थकौ

[1] नाडीव्रणः युनानीवैद्यके 'नासूर' इति नाम्ना आङ्गलवैद्यके च 'साइनस' ( Sinus ) इति नाम्ना प्रसिद्धः ।

स्याताम्। संमूर्च्छितैर्मिश्रीकृतैरित्यर्थः। शल्यनिमित्ततोऽन्या अभिघातजा अपरेत्यर्थः। गयदासाचार्यस्तु त्रिभिर्दोषैः पृथक् तिस्रः, एकशश्च संमूर्च्छितैः अन्या सान्निपातिकी, शल्यनिमित्ता च, पञ्चैव नाद्य इति व्याख्यानयति॥ १०॥

**तत्रानिलात्परुषसूक्ष्ममुखी सशूला**
**फेनानुविद्धमधिकं स्रवति क्षपायाम्॥**

तेषां तु वातादीनां प्रत्येकं विशिष्टलक्षणमाह,—तत्रानिलादिति। फेनानुविद्धं फेनमिश्रम्॥—

**तृट्तापतोदसदनज्वरभेदहेतुः**
**पीतं स्रवत्यधिकमुष्णमहःसु पित्तात्॥ ११॥**

तृट्तापेति तृट्तापादीनां हेतुः, तृषादीन् करोतीत्यर्थः॥ ११॥

**ज्ञेया कफाद्वहुघनार्जुनपिच्छिलास्रा**
**रात्रिस्रुतिः स्तिमितरुक्कठिना सकण्डुः॥**

ज्ञेया कफादिति। वहुघनार्जुनपिच्छिलास्रा इति विपुलसान्द्रधवलपिच्छिलस्राववतीत्यर्थः। अत्रास्रशब्दः स्राववाची चिन्त्य एव। अन्ये तु कफाद्वहुघनार्जुनपिच्छिलास्रुः इति पठन्ति, तत्रास्रुः स्राव इत्यर्थः॥—

**दोषद्वयाभिहितलक्षणदर्शनेन**
**तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात्॥ १२॥**

द्वन्द्वजा आह,—दोषद्वयाभिहितेति। व्यतिकरप्रभवाः द्वन्द्वजाः। वातपित्तजा पित्तकफजा वातकफजा चेति तिस्रः। गयदासाचार्यास्तु दोषद्वयाभिहितेत्यादि द्वन्द्वजानां लक्षणं न पठन्ति॥ १२॥

**दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा**
**यस्यां भवन्त्यभिहितानि च लक्षणानि॥**
**तामादिशेत् पवनपित्तकफप्रकोपाद्**
**घोरामसुक्षयकरीमिव कालरात्रिम्॥ १३॥**

सान्निपातिकीमाह,—दाहज्वरेति। असुक्षयकरीं प्राणहारिणीं, कामिव कालरात्रिमिव॥ १३॥

**नष्टं कथंचिदनुमार्गमुदीरितेषु**
**स्थानेषु शल्यमचिरेण गतिं करोति॥**
**सा फेनिलं मथितमच्छमसृग्विमिश्र-**
**मुष्णं स्रवेत सहसा सरुजा च नित्यम्॥१४॥**

शल्यनिमित्तां दर्शयन्नाह,—नष्टमिति। उदीरितेषु स्थानेषु त्वगादिषु। मथितं उन्मथितमिव। उष्णं उष्णस्पर्शं; उष्णं करोति इति पाठे स्रावमित्यध्याहारः॥ १४॥

**यावत्यो गतयो यैश्च कारणैः संभवन्ति हि॥**
**तावन्तः स्तनरोगाः स्युः स्त्रीणां तैरेव हेतुभिः॥१५॥**

इदानीं स्तनरोगाणां संख्यां हेतुं च दर्शयन्नाह,—यावत्य इति। यावत्यः यावत्प्रमाणा गतयो, यैश्च कारणैः वातपित्तकफसन्निपाताभिघातैः, तावन्तः तावत्प्रमाणाः॥ १५॥

**धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः॥**
**दोषाविसरणात् तासां न भवन्ति स्तनामयाः॥१६॥**

इदानीं समानायामपि जातावसंभूतगर्भाणां ते दोषा न भवन्तीति दर्शयन्नाह,—धमन्य इति। कन्यानां असंभूतगर्भाणां स्त्रीणामित्यर्थः। अविसरणं अप्रसरणम्॥ १६॥

**तासामेव प्रजातानां गर्भिणीनां च ताः पुनः॥**
**स्वभावादेव विवृता जायन्ते संभवन्त्यतः॥ १७॥**

तासामेव प्रजातानां एता एव धमन्यो विवृतद्वारा भवन्तीति दर्शयन्नाह,—तासामेवेति। प्रजातानां प्रसूतानाम्। ताः इति धमन्यः। विवृताः प्रसृतद्वाराः, जायन्ते भवन्ति इत्यर्थः। संभवन्ति इति स्तनरोगा इति शेषः॥ १७॥

**रसप्रसादो मधुरः पक्वाहारनिमित्तजः॥**
**कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते॥१८॥**

सक्षीरौ वाप्यदुग्धौ वा प्राप्य दोषा इति स्त्रीक्षीरस्य स्तनरोगाणां हेतुत्वेनोक्तत्वात् स्त्रीक्षीरस्यैव संभवमाह,—रसप्रसाद इति। रसप्रसादः रसस्य प्रसादः उत्तमसारः तेज इत्यर्थः। स्तन्यनिरुक्तिमाह,—कृत्स्नदेहादिति। रसधातोरूर्ध्वविक्षिप्तस्य सर्वदेहगतत्वात्॥ १८॥

**विशस्तेष्वपि देहेषु यथा शुक्रं न दृश्यते॥**
**सर्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते॥ १९॥**
**तदेव चेष्टयुवतेर्दर्शनात् स्मरणादपि॥**
**शब्दसंश्रवणात् स्पर्शात् संहर्षाच्च प्रवर्तते॥ २०॥**
**सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते॥**
**आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः॥ २१॥**
**तदेवापत्यसंस्पर्शाद्दर्शनात् स्मरणादपि॥**
**ग्रहणाच्च शरीरस्य शुक्रवत्संप्रवर्तते॥ २२॥**
**स्नेहो निरन्तरस्तत्र प्रस्रवे हेतुरुच्यते॥**

तस्य शरीराभ्यन्तराच्चादृश्यस्य प्रसिद्धोपमानेन प्रवर्तमाने हेतुं दर्शयन्नाह,—विशस्तेष्वपीति। शुक्रलक्षणं स्तन्यमुच्यते इति शेषः। कुत इत्याह,—सर्वदेहाश्रितत्वादिति शुक्रवत् समस्तशरीरसंश्रितत्वात्, शुक्रदृष्टान्तेन स्तन्यस्य अभ्यन्तरादर्शनं प्रतिपाद्यते। तस्यैव बहिर्निःसरणे सामग्रीं प्रतिपादयन्नाह,—तदेवेत्यादि। तदेव शुक्रं प्रवर्तते बहिर्निःसरति। इष्टयुवतिदर्शनादिहेतुचतुष्टये मनसोपि सुप्रसन्नस्य कारणत्वं दर्शयन्नाह,—सुप्रसन्नमित्यादि। एवं स्तन्यमपि स्त्रियः प्रवर्तते, शुक्रमाहाररसयोनिः प्रवर्तते स्तन्यमपि तथा तस्मात् प्रवर्तते। ननु शुक्रमाहारयोनिरपि संहर्षात् कारणात् प्रवर्तते, अत्र किं कारणमित्याह,—तदेवेत्यादि। तदेव स्तन्यं शुक्रवत् संप्रवर्तते। अपत्यसंस्पर्शादिकारणचतुष्टयेऽपि स्नेहो मूलकारणमिति तदेव दर्शयन्नाह,—स्नेह इत्यादि। प्रस्रवे स्तन्यस्रवणे। अत्रापि चत्वारः हेतवः, परमिष्टयुवतिस्थानेऽत्रापत्यग्रहणं, मूलहेतुहर्षस्थाने स्नेहः॥ १९—२२॥—

**तत् कषायं भवेद्वातात् क्षिप्तं च प्लवतेऽम्भसि ॥२३॥**
**पित्तादम्लं सकटुकं राज्योऽम्भसि च पीतिकाः ॥**
**कफाद्घनं पिच्छिलं च जले चाप्यवसीदति ॥ २४ ॥**
**सर्वैर्दुष्टैः सर्वलिङ्गमभिघाताच्च दुष्यति ॥**

स्तन्यस्य प्रवर्तनं प्रभवं चाभिधाय प्रकृतिमभिधातुकामः परित्याज्यतया प्रथमं विकृतिं दर्शयन्नाह,—तत्कषायमिति । क्षिप्तं चेति चकारेण अनुक्तमपि तनुत्वादिकं समुच्चीयते । पित्तादम्लमिति । सकटुकं ईषत्तिक्तं, तिक्तेऽपि कटुशब्दस्य प्रवृत्तेः । अम्भसि चेति चकारान्नीललोहिताश्च राज्यो द्रष्टव्याः । कफादिति । पिच्छिलं चेति चकारेण दोषसंप्लवः सूच्यते । अवसीदति मज्जति । सर्वैर्दुष्टैरिति । अभिघातात् पतनपीडनादिकात् ॥ २३—२४ ॥—

**यत् क्षीरमुदके क्षिप्तमेकीभवति पाण्डुरम् ॥ २५ ॥**
**मधुरं चाविवर्णं च प्रसन्नं तद्विनिर्दिशेत् ॥**

निर्दोषस्य स्तन्यस्य लक्षणमाह,—यत् क्षीरमिति । एकीभवति एकत्वं याति मिलतीत्यर्थः । अविवर्णं ईषत्पीतादिवर्णं, प्रसन्नं प्रकृतिस्थम् ॥ २५ ॥—

**सक्षीरौ वाप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः२६**
**रक्तं मांसं च सन्दूष्य स्तनरोगाय कल्पते ॥**

स्तन्यं प्रकृतिविकृतिभिरभिनिर्दिश्य स्तनरोगसंप्राप्तिं दर्शयन्नाह—सक्षीराविति । सक्षीरौ गर्भिण्याः, तस्या देहेऽस्यासंभवात् । अदुग्धौ प्रसूतायाः, तस्या देहेऽस्य संभवात् । तत्र यदा दोह्यावदुग्धौ भवतः, तदा क्षीरभरपीडिता दोषाः कुपिताः स्तनरोगाय जायन्ते स्तनरोगार्थं समर्था भवन्ति ॥ २६ ॥—

**पञ्चानामपि तेषां तु हित्वा शोणितविद्रधिम् ॥**
**लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ २७ ॥**

तेषामपि संक्षेपार्थं लक्षणमतिदेशेन निर्दिशन्नाह,—पञ्चानामपीति । लक्षणानि तेषां स्तनरोगाणां समानानि तुल्यानि भवन्तीत्यध्याहारः ॥ २७ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने दशमोऽध्यायः ॥

---

## एकादशोऽध्यायः ।

**अथातो ग्रन्थ्यपच्यर्बुदगलगण्डानां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**

अथात इति ॥ १ ॥ २ ॥

**वातादयो मांसमसृक् च दुष्टाः**
**सन्दूष्य मेदश्च कफानुविद्धम् ॥**
**वृत्तोन्नतं विग्रथितं तु शोफं**
**कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ ३ ॥**

तेषां हेतुसंप्राप्तिलक्षणनिरुक्तीराह,—वातादय इति । वातादयः दोषा दुष्टं मांसमसृक् संदूष्य शोफं कुर्वन्तीति संबन्धः । एतेन त्रयो ग्रन्थय उक्ताः । मेदश्च कफानुविद्धं कफसंसृष्टं वायुदूषितत्वात् शोफं करोतीति संबन्धः । भोजेनापि वातकर्तृत्वं मेदोग्रन्थावभिहितम् । तथा च,—"वायुर्मेदो यदा मांसं संक्षिपेदथवा त्वचि । तत्र मेदोभवो ग्रन्थिः श्यावो भवति कण्डुलः—" इत्यादि । अयं चतुर्थो ग्रन्थिः । चकारात् शिराजो ग्रन्थिः पञ्चमोऽपि ग्राह्यः । दुष्टाः वृद्धिं गता इत्यर्थः । वृत्तः वर्तुलः, उन्नतः उच्छ्रितः । विग्रथितः अतिकठिनः । वातादयः प्रदुष्टाः इत्यनेन हेतूपदेशः, मांसमसृक् च संदूष्येति संप्राप्तिः, वृत्तोन्नतं विग्रथितं च शोफमिति लक्षणोपदेशः, अतो ग्रन्थिरिति प्रदिष्ट इति निरुक्तिः ॥ ३ ॥

**आयम्यते व्यथ्यत एति तोदं**
**प्रत्यस्यते कृत्यत एति भेदम् ॥**
**कृष्णोऽमृदुर्बस्तिरिवाततश्च**
**भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ ४ ॥**

तेषां वातादिजानां प्रत्येकं विशिष्टं लक्षणमाह,—आयम्यते इति । आयम्यते वायोराकर्षणेन दीर्घ इव क्रियते, ग्रन्थिरिति शेषः । व्यथ्यते विधूयते । एति तोदं व्यथां प्रत्यस्यते । कृष्यते कृत्यते छिद्यते । एति भेदमिति भेदं च गच्छति । अमृदुः कर्कशः । बस्तिरिवाततश्च इति मूत्राशयवद्दीर्घः । अस्रं रुधिरम् ॥ ४ ॥

**दन्दह्यते धूप्यति चोषवांश्च**
**पापच्यते प्रज्वलतीव चापि ॥**
**रक्तः सपीतोऽप्यथवापि पित्ता-**
**द्भिन्नः स्रवेदुष्णमतीव चास्रम् ॥ ५ ॥**

दन्दह्यते भृशं दह्यते इव । धूप्यति चातिमात्रं अतिशयेन सन्तापं करोति । पापच्यते भृशं पच्यते इव । प्रज्वलतीव च भस्मीभवतीव ॥ ५ ॥

**शीतो विवर्णोऽल्परुजोऽतिकण्डुः**
**पाषाणवत्संहननोपपन्नः ॥**
**चिराभिवृद्धिश्च कफप्रकोपाद्**
**भिन्नः स्रवेच्छुक्लघनं च पूयम् ॥ ६ ॥**

अविवर्णः ईषद्विवर्णः । पाषाणवत् पाषाण इव कठिन इत्यध्याहारः । संहननोपपन्नः सङ्घातान्वितो महानित्यर्थः ॥ ६ ॥

**शरीरवृद्धिक्षयवृद्धिहानिः**
**स्निग्धो महानल्परुजोऽतिकण्डुः ॥**
**मेदःकृतो गच्छति चात्र भिन्ने**
**पिण्याकसर्पिःप्रतिमं तु मेदः ॥ ७ ॥**

गच्छति स्रवति मेद इति संबन्धः । अत्र मेदोग्रन्थौ भिन्ने सति पिण्याकसर्पिःप्रतिमं तिलकल्कस्यानघृतसदृशम् ॥ ७ ॥

**व्यायामजातैरबलस्य तैस्तै-**
**राक्षिप्य वायुर्हि शिराप्रतानम् ॥**

**संपीड्य सङ्कोच्य विशोष्य वापि**
**ग्रन्थिं करोत्युन्नतमाशु वृत्तम् ॥ ८ ॥**
**ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो**
**भवेद् यदि स्यात्सरुजश्चलश्च ॥**
**अरुक् स एवाप्यचलो महांश्च**
**मर्मोत्थितश्चापि विवर्जनीयः ॥ ९ ॥**

शिराजस्य ग्रन्थेः संप्राप्तिं दर्शयन्नाह,—व्यायामजातैरिति । व्यायामजातैः व्यायामसमूहैः । अबलस्य पुरुषस्य । शिराप्रतानं शिराविस्तारम् । शिराजस्य कृच्छ्रसाध्यत्वमाह,—स तु कृच्छ्रसाध्य इत्यादि । तस्यासाध्यत्वमाह,—अरुक् इत्यादि । महांश्चेति चकारेण वातादिजा अपि एवंरूपा विवर्जनीयाः । मर्मोत्थितश्चेति चकारेण तलजोऽपि विवर्जनीयः । अन्ये पुनरत्र "मांसास्रजं चार्बुदलक्षणेन तुल्यं हि दृष्टं त्वथ लक्षणज्ञैः"—इति षष्ठं ग्रन्थिं पठन्ति । तन्न, जेज्झटाचार्यादिभिः परिहृतत्वात् ॥ ८ ॥ ९ ॥

**हन्वस्थिकक्षाक्षकबाहुसन्धि-**
**मन्यागलेषूपचितं तु मेदः ॥**
**ग्रन्थिं स्थिरं वृत्तमथायतं वा**
**स्निग्धं कफश्चाल्परुजं करोति ॥ १० ॥**
**तं ग्रन्थिभिश्चामलकास्थिमात्रै-**
**र्मत्स्याण्डजालप्रतिमैस्तथान्यैः ॥**
**अनन्यवर्णैरुपचीयमानं**
**चयप्रकर्षादपचीं वदन्ति ॥ ११ ॥**
**कण्डूयुतास्तेऽल्परुजः प्रभिन्नाः**
**स्रवन्ति नश्यन्ति भवन्ति चान्ये ॥**
**मेदःकफाभ्यां खलु रोग एष**
**सुदुस्तरो वर्षगणानुबन्धी ॥ १२ ॥**

इदानीं अपच्याः संप्राप्त्यादीनाह,—हन्वस्थीति।हन्वोरस्थिनी। सन्धिशब्दो हन्वस्थ्यादिभिर्बाह्वन्तैः प्रत्येकं संबध्यते । बाहुसन्धिशब्देन कूर्परसन्धिरुच्यते । अक्षकं कोष्ठकं तस्य सन्धिः, एतेन ग्रीवाधःसन्धिरुच्यते । मन्या ग्रीवापश्चिमभागस्था धमनी । हन्वस्थीत्यादि संप्राप्तिः, ग्रन्थिं स्थिरं वृत्तमित्यादि लक्षणम् । तं ग्रन्थिभिरित्यादि तं पूर्वोक्तग्रन्थिम् । अनन्यवर्णैः समानवर्णैः । उपचीयमानं वर्धमानम् । चयप्रकर्षादिति उपचयातिशयादित्यर्थः । चयप्रकर्षादपचीमिति निरुक्तिः । खलुशब्दोऽन्वर्थः । तेन मेदःकफौ वातादिदोषान्तरानुविद्धौ ज्ञेयौ । तथाहि भोजः,—"वातपित्तकफा वृद्धा मेदश्चापि समाचितं । जङ्घयोः कण्डराः प्राप्य मत्स्याण्डसदृशान् बहून् ॥ कुर्वन्ति ग्रन्थयस्तेभ्यः पुनः प्रकुपितोऽनिलः। त्रिदोषादूर्ध्वगो वक्षःकक्षामन्यागलाश्रितः॥ नानाप्रकारान् कुरुते ग्रन्थीन् सा त्वपची स्मृता । व्यामिश्रदोषजातस्य कृच्छ्रसाध्या प्रकीर्तिता ॥ तासां वातोत्तरा रूक्षा वातवेदनयान्विता । क्षिप्रपाकसमुत्थाना दाहयुक्ता तु पैत्तिकी ॥ गूढा वापाककठिना कफात्स्निग्धाल्परुक्करा । मेदोऽधिका श्लैष्मिकी च विशेषादतिमार्दवा ॥ तां तु मालाकृतिं विद्यात् कण्ठहृद्वङ्क्षुसन्धिषु । गण्डमालां विजानीयादपचीतुल्यलक्षणाम्—इति । चरकशास्त्रे गण्डमाला[1] गण्डे एव पठिता ॥ "मेदः कफात् शोणितसंचयोत्थो गण्डस्य पार्श्वे गलगण्ड एकः । स्याद्गण्डमाला बहुभिश्च गण्डैर्दीप्तानिलेष्वल्पबलान्विते च । साध्या स्मृता पीनसपार्श्वशूलकासज्वरच्छर्दियुता त्वसाध्या"—इति । अन्ये तु "मेदःकफाभ्यां पुनरेष रोगः" इति पठन्ति । पुनःशब्दाधिक्यात् दोषान्तरसंबन्ध इत्यर्थः । एतेन दीर्घरोगित्वं सूचितम् । मेदःकफाभ्यामिति हेतूद्देशः ॥ १०—१२ ॥

**गात्रप्रदेशे क्वचिदेव दोषाः**
**संमूर्च्छिता मांसमभिप्रदूष्य ॥**
**वृत्तं स्थिरं मन्दरुजं महान्त-**
**मनल्पमूलं चिरवृद्ध्यपाकम् ॥ १३ ॥**
**कुर्वन्ति मांसोच्छ्रयमत्यगाधं**
**तदर्बुदं[2] शास्त्रविदो वदन्ति ॥**

इदानीं अर्बुदादीनां संप्राप्त्यादीनाह,—गात्रप्रदेशे इति । क्वचिदेव गात्रप्रदेशे दोषाः शोफं कुर्वन्तीति संबन्धः । संमूर्च्छिताः वृद्धिं गताः । क्वचिदेव अनियतप्रदेशे न पुनरपचीवत् हन्वस्थ्यादिसंस्पृष्टैः । अविपाकं अविद्यमानपाकं, मांसोपचयं मांससंघातम् गात्रप्रदेशे क्वचिदेवेति संप्राप्तिः । संमूर्च्छिता दोषा इति हेतुः । वृत्तं स्थिरमित्यादि स्वलक्षणम् । गयदासाचार्यादयस्तु 'कुर्वन्ति मांसोच्छ्रयमेत्य गाढम्' इति पठन्ति ॥ १३ ॥—

**वातेन पित्तेन कफेन चापि**
**रक्तेन मांसेन च मेदसा[3] च ॥ १४ ॥**
**तज्जायते तस्य च लक्षणानि**
**ग्रन्थेः समानानि सदा भवन्ति ॥**

तज्जायते तदर्बुदं भवतीत्यर्थः । तस्य च लक्षणानि वातपित्तकफभेदैः ॥ १४ ॥—

**दोषः प्रदुष्टो रुधिरं शिरास्तु**
**संपीड्य सङ्कोच्य गतस्तु पाकम् ॥ १५ ॥**
**सास्रावमुन्नह्यति मांसपिण्डं**
**मांसाङ्कुरैराचितमाशुवृद्धिम् ॥**
**स्रवत्यजस्रं रुधिरं प्रदुष्ट-**
**मसाध्यमेतद्रुधिरात्मकं स्यात् ॥ १६ ॥**
**रक्तक्षयोपद्रवपीडितत्वात्**
**पाण्डुर्भवेदर्बुदपीडितस्तु ॥**

---

१ गण्डमाला युनानीवैद्यके 'खनाझीर' इति नाम्ना आङ्ग्लवैद्यके च 'स्क्रोफ्यूला' (Scrofula) इति नाम्ना प्रसिद्धा ॥

२ अर्बुदं युनानीवैद्यके 'सलआ' इति नाम्ना आङ्ग्लवैद्यके च 'ट्यूमर' (Tumour) इति नाम्ना प्रसिद्धम् ।

३ मेदोर्बुदं आङ्ग्लवैद्यके 'फ्याटी ट्यूमर' (Fatty tumour) इति नाम्ना प्रसिद्धम् ।

तस्यार्बुदस्य लक्षणमाह—दोषः प्रदुष्ट इति। प्रदुष्टदोषः उन्नह्यति उच्छ्रितो भवति। मांसपिण्डं मांसवृद्धिं मांसप्रवर्धनं व्याख्यानयन्ति। अपाकमीषत्पाकं ॥ १५ ॥ १६ ॥

मुष्टिप्रहारादिभिरर्दितेऽङ्गे
मांसं प्रदुष्टं प्रकरोति शोफम् ॥ १७ ॥
अवेदनं स्निग्धमनन्यवर्ण-
मपाकमश्मोपममप्रचाल्यम् ॥
प्रदुष्टमांसस्य नरस्य बाढ-
मेतद्भवेन्मांसपरायणस्य ॥ १८ ॥
मांसार्बुदं त्वेतदसाध्यमुक्तं

मांसजस्य संप्राप्तिं दर्शयन्नाह,—मुष्टिप्रहारादिभिरिति। मांसपरायणस्य मांसभक्षणशीलस्य। मुष्टिप्रहारादिभिरित्यत्र केचित् काष्ठप्रहारादिभिरिति पठन्ति ॥१७॥१८॥—

साध्येष्वपीमानि विवर्जयेत्तु ॥
संप्रस्रुतं मर्मणि यच्च जातं
स्रोतःसु वा यच्च भवेदचाल्यम् ॥ १९ ॥
यज्जायतेऽन्यत् खलु पूर्वजाते
ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ॥
यद् द्वन्द्वजातं युगपत् क्रमाद्वा
द्विरर्बुदं तच्च भवेदसाध्यम् ॥ २० ॥

साध्येष्वपीति। साध्येष्वपीमानि अपवर्जयेदिति साध्येषु मध्ये इमानि वक्ष्यमाणानि विवर्जयेदित्यर्थः। अध्यर्बुदमपि द्विरर्बुदमेव, अन्ये लर्बुदमिति पठन्ति। यत् द्वन्द्वजातमित्यादि द्वन्द्वेन युग्मेन जातं युग्मजातं न केवलमध्यर्बुदम्। द्विरर्बुदं यत् द्वन्द्वजातं तदपि द्विरर्बुदमित्यर्थः। भेदश्च तयोरुपरिजातत्वेन, एतेन द्विरर्बुदं द्विदोषजमप्यसाध्यमुक्तम् ॥ १९ ॥ २० ॥

न पाकमायान्ति कफाधिकत्वा-
न्मेदोऽधिकत्वाच्च विशेषतस्तु ॥
दोषस्थिरत्वाद् ग्रथनाच्च तेषां
सर्वार्बुदान्येव निसर्गतस्तु ॥ २१ ॥

तेषां पाकाभावहेतुं दर्शयन्नाह—न पाकमिति। ग्रन्थ्यादिष्वपि कफादयश्चत्वारो हेतवः सन्ति परमर्बुदेषु विशेषतः कफस्य मेदसश्चाधिक्यं तस्मात् तथा विशेषतो दोषस्थिरत्वात् दोषकार्यस्य मांसोच्छ्रयस्य तेनैव स्वरूपेण चिरकालावस्थितिशीलत्वात्, तथा ग्रथनात् ग्रन्थिरूपत्वात्, तेषां मेदःप्रभृतीनां निसर्गतस्तु तुशब्दोऽप्यर्थः तेन स्वभावादपि अर्बुदा विपाकं न गच्छन्तीत्यर्थः ॥ २१ ॥

वातः कफश्चैव भृशं प्रवृद्धौ
मन्ये तु संसृत्य तथैव मेदः ॥
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः
समन्वितं तं गलगण्डमाहुः ॥ २२ ॥

इदानीं गलगण्डसंप्राप्तिं दर्शयन्नाह—वातः कफ इति। वातादयो गण्डं क्रमशः कुर्वन्तीति संबन्धः। किं विशिष्टं गण्डम्? स्वलिङ्गैः समन्वितम्। वातेन कफेन च गलगण्डो भवति, न च पित्तेन, स्वभावेन पित्तजस्य गलगण्डस्याभावात् ॥ २२ ॥

तोदान्वितः कृष्णशिरावनद्धः
कृष्णोऽरुणो वा पवनात्मकस्तु ॥
मेदोऽन्वितश्चोपचितश्च काला-
द्भवेदतिस्निग्धतरोऽरुजश्च ॥ २३ ॥
पारुष्ययुक्तश्चिरवृद्ध्यपाको
यदृच्छया पाकमियात् कदाचित् ॥
वैरस्यमास्यस्य च तस्य जन्तो-
र्भवेत् तथा तालुगलप्रशोषः ॥ २४ ॥
स्थिरः सवर्णोऽल्परुगुग्रकण्डुः
शीतो महांश्चापि कफात्मकस्तु ॥
चिराभिवृद्धिं कुरुते चिराच्च
प्रपच्यते मन्दरुजः कदाचित् ॥ २५ ॥
माधुर्यमास्यस्य च तस्य जन्तो-
र्भवेत् तथा तालुगलप्रलेपः ॥
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो
मेदःकृतो नीरुगथातिकण्डुः ॥ २६ ॥
प्रलम्बतेऽलाबुवदल्पमूलो
देहानुरूपक्षयवृद्धियुक्तः ॥
स्निग्धास्यता तस्य भवेच्च जन्तो-
र्गलेन शब्दं कुरुते च नित्यम् ॥२७॥

तस्यैव वातादिविशेषलिङ्गानि निर्दिशन्नाह,—तोदान्वित इति। अरुज इति सोऽपि वातगलगण्डः यदा कालात् कालेन कृत्वा मेदोऽन्वितो भवति, तदा अरुजो भवतीत्यर्थः। यदृच्छया अज्ञातहेतुनियमेन पाकं इयात् गच्छेत्। कदाचित् न सर्वकालम्। प्रलिप्तवातजं कफरक्तमेदोजमाह,—स्निग्ध इति। गलेन शब्दं गलेन नादं प्रतिशब्दमित्यर्थः ॥ २३—२७ ॥

कृच्छ्रात् श्वसन्तं मृदुसर्वगात्रं
संवत्सरातीतमरोचकार्तम् ॥
क्षीणं च वैद्यो गलगण्डिनं तं
भिन्नस्वरं चैव विवर्जयेत् तु ॥ २८ ॥

इदानीं गलगण्डस्यासाध्यतामाह,—कृच्छ्रादिति ॥ २८ ॥

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ॥
महान् वा यदि वा ह्रस्वस्तं गण्डमिति निर्दिशेत्॥२९॥

न सर्व एव गलाश्रयो गण्डो गलगण्डः, किं तर्हि कश्चिदेव

१ मांसार्बुदं आङ्गलवैद्यके 'क्यान्सर' (Cancer) इति नाम्ना प्रसिद्धम्।

वक्ष्यमाणस्वरूपत इति दर्शयन्नाह—निबद्ध इति । नियमेन बद्धः निबद्धः । मुष्कवत् अण्डवत् ॥ २९ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने एकादशोऽध्यायः ॥

## द्वादशोऽध्यायः ।

**अथातो वृद्ध्युपदंशश्लीपदानां निदानं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥२॥**

अथात इति ॥ १ ॥ २ ॥

**वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ताः सप्त वृद्धयः । तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे केवलमुत्पत्तिहेतुरन्यतमः ॥ ३ ॥**

वृद्धीनां संख्यामाह,—वातेति । संख्येयनिर्देशादेव सप्त संख्या सिद्धा, सप्तग्रहणं द्वन्द्वजादिवृद्धिनिषेधार्थम् । तासां पुनरभावो व्याधिस्वभावात् । धातुमलकृतायामपि वृद्धौ दोषस्यैव चिकित्सार्थं संभवत्वं दर्शयन्नाह,—तासामिति । वातसमुत्थे वातात् सम्यक् उत्तिष्ठते वृद्धिं गच्छतीत्यर्थः । जननहेतुः पुनरन्यतम इति तं प्रतिपादयन्नाह,—केवलमुत्पत्तिहेतुरन्यतम इति केवलं परं उत्पत्तेः उत्पादकस्य हेतोः कारणं अन्यतमं मूत्रं अन्त्रं वा । अन्ये तु अनयोर्व्याध्योः य उत्पत्तेर्हेतुर्वायुः सोऽन्यतमो भिन्नो ज्ञेयः; एतेन मूत्रसन्धारणकुपितो वायुर्मूत्रवृद्धेः कारणं, भारहरणादिभिः कुपितस्तु अन्त्रवृद्धेः कारणमित्यर्थः॥३॥

**अधः प्रकुपितोऽन्यतमो हि दोषः फलकोशवाहिनीरभिप्रपद्य धमनीः फलकोषयोर्वृद्धिं जनयति तां वृद्धिमित्याचक्षते ॥ ४ ॥**

तासां संप्राप्तिमाह,—अधःप्रकुपित इति । फलकोशयोरित्यनेन हि वचनेन मुष्कद्वय एव वृद्धिरिति न ज्ञेयं किंतर्हि एकस्मिन् पक्षे वृद्धिः परिज्ञातव्या ॥ ४ ॥

**तासां भविष्यतीनां पूर्वरूपाणि बस्तिकटीमुष्कमेढ्रेषु वेदना मारुतनिग्रहः फलकोशशोफश्चेति ॥५॥**

तासां पूर्वरूपमाह,—तासां भविष्यतीनामिति ॥ ५ ॥

**तत्राऽनिलपरिपूर्णां बस्तिमिवाततां परुषामनिमित्तानिलरुजं वातवृद्धिमाचक्षते; पक्वोडुम्बरसङ्काशां ज्वरदाहोष्मवतीं चाशुसमुत्थानपाकां पित्तवृद्धिं; कठिनामल्पवेदनां शीतां कण्डूमतीं श्लेष्मवृद्धिं; कृष्णस्फोटावृतां पित्तवृद्धिलिङ्गां रक्तवृद्धिं[1]; मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफलप्रकाशां मेदोवृद्धिं[1]; मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति, सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रवेदनां वृषणयोः श्वयथुं कोशयोश्चापादयति, तां मूत्रवृद्धिं[2] विद्यात्; भारहरणबलवद्विग्रहवृक्षप्रपतनादिभिरायासविशेषैर्वायुरतिप्रवृद्धः प्रकुपितश्च स्थूलान्त्रस्यैकदेशं[3] विगुणं[4]मादायाधोगत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोशं प्रविश्य मुष्कशोफमापादयति, आध्मातो बस्तिरिवाततः प्रदीर्घः शोफो भवति, सशब्दमवपीडितश्चोर्ध्वमुपैति, विमुक्तश्च पुनराध्मायते तामन्त्रवृद्धिं[5]मसाध्यामित्याचक्षते॥६॥**

तासां वातादिजानां लक्षणमाह,—तत्रानिलेति । आततां आध्माताम् । शीलस्य स्वभावस्य । क्षुभ्यति संचलति । आध्मातः बस्तिरिवापूर्णो मूत्राशय इव । आततः विस्तीर्णः । उपैति उद्गच्छति, विमुक्तः सशब्दमेवाध्मायते ॥ ६ ॥

**तत्रातिमैथुनादतिब्रह्मचर्याद्वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढरोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्ष्यसलिलप्रक्षालितयोनिमप्रक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषशूकनिपातनान् बन्धनात् हस्ताभिघाताच्चतुष्पदीगमनादचौक्ष्यसलिलप्रक्षालनादवपीडनाच्छुक्र-मूत्र-वेग-विधारणान्मैथुनान्ते वाऽप्रक्षालनादिभिर्मेढ्रमागम्य प्रकुपिताः दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति, तमुपदंशमित्याचक्षते[6] ॥ ७ ॥**

वृद्धेरनन्तरमुपदंशानां हेत्वाद्यभिधानमाह,—तत्रातिमैथुनेति अतिब्रह्मचारिण्या मैथुनातिनिवृत्त्या सङ्कुचितकर्कशयोनिमुखत्वात् चिरोत्सृष्टायाः कदाचिदेवेत्यनयोर्भेदः, रजस्वला दुष्टार्तवसङ्गात्, दीर्घकर्कशरोमाभिसर्पणे पीडनाभिघातप्रसङ्गात्, संकीर्णरोमां

---

१ रक्तजवृद्धिः आङ्ग्लवैद्यके 'हिमाटोसेल' (Hematocele) इति नाम्ना प्रसिद्धा ।

१ मेदोजवृद्धिः आङ्ग्लवैद्यके 'एलीफॅन्टीएसीस ऑफ स्क्रोटम (Elephantiasis of scrotum) इति नाम्ना प्रसिद्धा ।

२ मूत्रजवृद्धिः युनानीवैद्यके 'किल्लतुल माय्' इति नाम्ना आङ्ग्लवैद्यके च 'हाइड्रोसील (Hydrocele) इति नाम्ना प्रसिद्धा ।

३. 'क्षुद्रान्त्रस्यैकदेशं' इति पाठान्तरम् ॥

४. विगुणं संकुचितं; 'द्विगुणं' इति पाठान्तरम्, तत्र संकोचेन द्विगुणीकृतमित्यर्थः ॥

५अन्त्रवृद्धिः युनानीवैद्यके 'किल्लतुल अमआ' इति नाम्ना आङ्ग्लवैद्यके च 'हर्निया' (Hernia) इति नाम्ना प्रसिद्धा ।

६ उपदंशरोगः युनानीवैद्यके 'जुम्राह' इति नाम्ना आङ्ग्लवैद्यके च 'सिफिलिस' (Syphilis) इति नाम्ना प्रसिद्धः ।

घनरोमां, निगूढरोमां अभ्यन्तररोमां, अल्पद्वारायामपि स एव हेतुः, महाद्वारायां शोफहेतुश्चान्य एव तस्मात् केचिन्न पठन्ति, अप्रियायां लिङ्गानुत्थाने इतश्चेताभिघातप्रसङ्गात्, अकामायाः सक्थिसङ्कोचनेन द्वारात्पलात्, अचौक्ष्यसलिलप्रक्षालितयोनिः सलिलदोषात्, अचौक्ष्यं अपवित्रम्, अप्रक्षालितयोनिः स्वेदमलिनमलदोषात्; योनिरोगोपसृष्टायां रोगदोषानुसारेण दोषोदयात्; स्वभावतो वा दुष्टयोनेः वातादयः एव कारणं; वियोनिं हस्तजङ्घान्तरं तस्य कर्कशत्वात्, करजाः नखाः, दशनाः दन्ताः, शूकस्य "शुया" इति प्रसिद्धस्य सविषमलजकीटस्य, निपातनात् लिङ्गादिशरीरे पतनात् अथवा तेषां मर्दनात् पीडनात्, चतुष्पद्योऽजादयो गवादयो वा तासामप्यल्पयोनित्वात्, अचौक्ष्यसलिलप्रक्षालनादिभिः अचौक्ष्यसलिलप्रक्षालनमत्र लिङ्गस्य न तु योनेः ॥ ७ ॥

**स पञ्चविधस्त्रिभिर्दोषैः पृथक् समस्तैरसृजा चैकः ॥ ८ ॥**

तेषां संख्यामाह,—स पञ्चविध इति । त्रिभिर्दोषैः पृथगिति त्रयः, समस्तैरेकः, असृजा चैकः एताः पञ्च ॥ ८ ॥

**तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता विविधाश्च वातवेदनाः; पैत्तिके ज्वरः पक्वोडुम्बरसङ्काशस्तीव्रदाहः क्षिप्रपाकः पित्तवेदनाश्च; श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्मवेदनाश्च; रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमसृक्प्रवृत्तिः पित्तलिङ्गान्यत्यर्थं ज्वरदाहौ शोषश्च याप्यश्चैव कदाचित्; सर्वजे सर्वलिङ्गदर्शनमवदरणं च शेफसः क्रिमिप्रादुर्भावो मरणं चेति ॥ ९ ॥**

तेषां वातादीनां प्रत्येकं लक्षणमाह,—तत्र वातिके इति । "मेढ्रसन्धौ व्रणाः केचित् केचित् सर्वाश्रयाः स्मृताः। कुलत्थाकृतयः केचित् केचित् मुद्गदलोपमाः ॥ रुग्दाहपरीताश्च तृष्णामोहसमन्विताः। शीघ्रं केचिद्विसर्पन्ति शनैः केचित्तथापरे ॥ स्त्रीणां च पुंसां जायन्ते उपदंशाः सुदारुणाः" ॥ ९ ॥

**कुपितास्तु दोषाः वातपित्तश्लेष्माणोऽधःप्रपन्ना वङ्क्षणोरुजानुजङ्घास्ववतिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शोफं उपजनयन्ति तत् श्लीपदमित्याचक्षते । तत् त्रिविधं वातपित्तकफनिमित्तमिति ॥ १० ॥**

**तत्र वातजं खरं कृष्णं परुषमनिमित्तानिलरुजं परिस्फुटति च बहुशः; पित्तजं तु पीतावभासमीषन्मृदुज्वरदाहप्रायं च; श्लेष्मजं तु श्वेतं स्निग्धावभासं मन्दवेदनं भारिकं महाग्रन्थिकं कण्टकैरुपचितं च ॥ ११ ॥**

**तत्र संवत्सरातीतमतिमहद्वल्मीकजातं प्रस्रुतमिति वर्जनीयानि ॥ १२ ॥**

**भवन्ति चात्र ।**

**त्रीण्यप्येतानि जानीयात् श्लीपदानि कफोच्छ्रयात् ॥**
**गुरुत्वं च महत्त्वं च यस्मान्नास्ति विना कफात् ॥ १३ ॥**
**पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः ॥**
**ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ १४ ॥**
**पादयोर्हस्तयोश्चापि श्लीपदं जायते नृणाम् ॥**
**कर्णाक्षिनासिकौष्ठेषु केचिदिच्छन्ति तद्विदः ॥ १५ ॥**

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ।

**अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**

अथात इति क्षुद्ररोगेषु महाव्याधयः सन्ति तथापि क्षुद्ररोगाणां बहुत्वात् तैरव्यपदेशः; यथा बहुषु छत्रिषु गच्छत्सु अच्छत्रिषु अपि केषुचित् गच्छत्सु छत्रिणो यान्तीति व्यपदेशः, तथा अत्रापीति न दोषः । अन्ये तु क्षुद्रा लघवस्तिलकलायाद्यपेक्षया, अग्निरोहिणीवल्मीकाद्यपेक्षया तु क्षुद्राः सूक्ष्माः; अथवा पूर्वाचार्यप्रसिद्धा नित्येयं संज्ञा ॥ १ ॥ २ ॥

**समासेन चतुश्चत्वारिंशत् क्षुद्ररोगाः भवन्ति । तद्यथा,—अजगल्लिका, यवप्रख्या, अन्धालजी, विवृता, कच्छपिका, वल्मीकं, इन्द्रवृद्धा, पनसिका, पाषाणगर्दभः, जालगर्दभः, कक्षा, विस्फोटकः, अग्निरोहिणी, चिप्पं, कुनखः, अनुशयी, विदारिका, शर्कराऽर्बुदं, पामा, विचर्चिका, रकसा, पाददारिका, कदरं, अलसेन्द्रलुप्तौ, दारुणकः, अरुंषिका, पलितं, मसूरिका, यौवनपिड़का, पद्मिनीकण्टको, जतुमणिः, मशकः, चर्मकीलः, तिलकालको, न्यच्छं, व्यङ्गः, परिवर्तिका, अवपाटिका, निरुद्धप्रकशः, संनिरुद्धगुदः, अहिपूतनं, वृषणकच्छूः, गुदभ्रंशश्चेति ॥ ३ ॥**

संख्यामाह,—समासेनेति । समासेन संक्षेपेण, विस्तरेण प्रमाणं तु नास्त्येव । श्रीब्रह्मदेवस्तु, गर्द्दभिकेरिवेल्लिकागन्धपिडिकातिलकालकानां संग्रहणेन चत्वारिंशदिति पठति । श्रीजेज्झठाचार्येण गर्द्दभिकादयश्चत्वारो न पठिताः । पूर्वव्याख्यातारोऽपि चीरनंदीवाराहादयो समानतन्त्रापाठात् गर्द्दभिकादीनां चतुर्णां पाठं गर्हितं मन्यते । गयदासाचार्यस्तु समानतन्त्रादर्शनेऽपि सर्वेष्वेव पाठेषु पातात् गर्द्दभिकादीन् पठति, पामादींश्च चतुरः कुष्ठ एव पठति ॥ ३ ॥

१ श्लीपदरोगः युनानीवैद्यके 'दाय् उल फील' इति नाम्ना आङ्गलवैद्यके च 'एलीफॅन्टीएसीस' ( Elephantiasis ) इति नाम्ना प्रसिद्धः ।

**स्निग्धा सवर्णा ग्रथिता नीरुजा ग्रन्थिसन्निभा ॥**
**कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ ४ ॥**

तेषां प्रत्येकं लक्षणमाह,—स्निग्धेत्यादि । प्रायोग्रहणमत्र लुप्तनिर्दिष्टं द्रष्टव्यम् । तेन क्वचिदबालेष्वपि इत्येके भाषन्ते, पाठान्तरं चात्र मन्यन्ते ॥ ४ ॥

**यवाकारा सुकठिना ग्रथिता मांससंश्रिता ॥**
**पिडका श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥ ५ ॥**

यवाकारा स्थूलयवाकारा, अन्तनिम्नमध्योन्नतत्वेन ॥ ५ ॥

**घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम् ॥**
**अन्धालजीमल्पपूयां तां विद्यात् कफवातजाम् ॥६॥**

घनामित्यादि अवक्त्रामिति अल्पमुखीं, परिमण्डलां वर्त्तुलामित्यर्थः । अन्धालजीं स्नायुप्रसृतान्तर्मुखीम् ॥ ६ ॥

**विवृतास्यां महादाहां पक्कोडुम्बरसन्निभाम् ॥**
**विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम् ॥७**

विवृतास्यामिति व्यावृत्तमुखीम् ॥ ७ ॥

**ग्रन्थयः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः ॥**
**कफानिलाभ्यामुद्भूतां विद्यात् तां कच्छपीमिति ८**
**पाणिपादतले सन्धौ ग्रीवायामूर्ध्वजत्रुणि ॥**
**ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते ॥ ९ ॥**
**तोदक्लेदपरीदाहकण्डूमद्भिर्व्रणैर्वृतः ॥**
**व्याधिर्वल्मीक इत्येष कफपित्तानिलोद्भवः ॥ १० ॥**

दारुणाः कठिनाः ॥ ८—१० ॥

**पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम् ॥**
**इन्द्रवृद्धां तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥११॥**
**कर्णौ परिसमन्ताद्वा पृष्ठे वा पिडकोग्ररुक् ॥**
**शालूकवत्पनसिकां तां विद्यात् श्लेष्मवातजाम् १२**
**हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम् ॥**
**पाषाणगर्दभं विद्याद्बलासपवनात्मकम् ॥ १३ ॥**
**विसर्पवत् सर्पति यो दाहज्वरकरस्तनुः ॥**
**अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्दभः ॥१४॥**
**बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम् ॥**
**पित्तप्रकोपात्संभूतां कक्षामिति विनिर्दिशेत् ॥ १५ ॥**
**अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः ॥**
**क्वचित् सर्वत्र वा देहे स्मृता विस्फोटका इति ॥ १६ ॥**

पद्मपुष्करं पद्मकर्णिका । गयदासाचार्यस्तु गर्द्धभिकां पठति । यथा "मण्डलां वृत्तमुत्सन्नां सरक्तां पिडकाचिताम् । रुजाकरीं गर्द्धभिकां तां विद्यात् वातपित्तजाम्" ॥ ११—१६ ॥

१ कक्षारोगः आङ्गलवैद्यके 'बोइल' (Boil) इति नाम्ना प्रसिद्धः ।

**कक्षाभागेषु ये स्फोटा जायन्ते मांसदारुणाः ॥**
**अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ १७ ॥**
**सप्ताहाद् द्वादशाहाद् वा पक्षाद् वा घ्नति मानवम् ॥**
**तामग्निरोहिणीं विद्यादसाध्यां सन्निपाततः ॥ १८ ॥**

चिकित्साभिधाने मांसदारुणमित्ययं पाठः । तथाहि तन्त्रान्तरम् ,—"पित्तोत्कटाः नृणां दोषाः प्रदीप्ताङ्गारसन्निभाः । कक्षाभागेषु कुर्वन्ति तीव्रदाहरुजाज्वरान् ॥ मांसावदारणान् स्फोटान् ये हन्युरनुपक्रमात् । पक्षाद्दशाहादर्वाक् वा सा ज्ञेया वह्निरोहिणी—" इति । तत्र वाताधिकैः सप्ताहात् , पित्ताधिकैर्दशाहात्, कफाधिकैः पक्षात् ॥ १७ ॥ १८ ॥

**नखमांसमधिष्ठाय पित्तं वातश्च वेदनाम्**
**करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ॥१९॥**
**तदेव क्षतरोगाख्यं तथोपनखमित्यपि ॥**
**अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसितः खरः ॥२०॥**
**भवेत्तं कुनखं विद्यात् कुलीनमिति संज्ञितम् ॥**

चिप्पमिति तन्त्रान्तरे अङ्गुलीवेष्टकमिति प्रसिद्धम् ॥ १९ ॥ २० ॥—

**गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ॥ २१ ॥**
**कफादन्तःप्रपाकां तां विद्यादनुशयीं भिषक् ॥**

अल्पसंरम्भां अल्पशोथां, उपरिस्थितां मस्तके स्थितां, अन्तः पाकेन गम्भीराम् ॥ २१ ॥—

**विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु ॥ २२ ॥**
**रक्तां विदारिकां विद्यात् सर्वजां सर्वलक्षणाम् ॥**

वङ्क्षणसन्धि गुण्डकः । रक्तां लोहितां, सर्वजां सन्निपातजाम्; परं तथापि साध्या, न हि सर्वे एव सन्निपातजा व्याधयोऽसाध्याः । सर्वलक्षणां दोषसमुदयलक्षणां, न तु प्रत्येकलक्षणां, दोषेभ्यो दोषसमुदायस्यान्यत्वात्, चूर्णहरिद्रासंयोगस्यैव; अन्ये तु सर्वेभ्यः वातपित्तकफेभ्यः पृथक् द्विशस्त्रिशो वा जायते इति सर्वजा इत्यस्याः साप्तविध्यं दोषलिङ्गैः सूक्ष्ममिति नानुक्तमप्युक्तमित्याचक्षते; तन्नेच्छति गयदासाचार्यः, येन क्षुद्ररोगसामान्यन्यायेनास्य प्रवेशः, न हि क्षुद्ररोगेषु कोऽपि व्याधिः पठितो यः प्रत्येकादिदोषजः, अपि च यद्याचार्यस्य साप्तविध्यमभिप्रेतं स्यात् तदा दोषैः सर्वविधाश्चेति पाठं कुर्यात्, तन्त्रान्तरे चेयं वातकफान्विता इति पठिता, तस्माद्वातकफाधिकहीनपित्ततया अस्याः उत्पत्तिः ज्ञेयेति ॥ २२ ॥—

**प्राप्य मांससिरास्नायूः श्लेष्मा मेदस्तथाऽनिलः ॥ २३**
**ग्रन्थिं कुर्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम् ॥**
**स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः ॥ २४ ॥**
**मांसं विशोष्य ग्रथितां शर्करां जनयेत् पुनः ॥**
**दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः शिराः ॥ २५ ॥**
**स्रवन्ति सहसा रक्तं तद्विद्यात् शर्करार्बुदम् ॥**

प्राप्येति। इयं च शर्करासंप्राप्तिरुक्ता, सा च शर्करा हेतुः शर्करार्बुदस्य। काठिन्यात् शर्करासादृश्येन शर्करा। नानावर्णं मधुघृतरससन्निभम्। तत इत्यादि ततः शर्करायाः शिरा रक्तं स्रवतीत्यर्थः। केचित् शर्करा अर्बुदं चेति व्याधिद्वयं वदन्ति, तन्नेच्छति गयदासाचार्यः; संख्यातिरेकात्॥ २३—२५॥—

**पामाविचर्च्यौ कुष्ठेषु रकसा च प्रकीर्तिता॥ २६॥**

पामेति कुष्ठेषु इति कुष्ठनिदानेषु इत्यर्थः॥ २६॥

**परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः॥**
**पादयोः कुरुते दारीं सरुजां मूलसंश्रिताम्॥ २७॥**

परिक्रमणशीलस्य सर्वतो भ्रमणस्वभावस्य। दारीमिति विपादिकाम्॥ २७॥

**शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः॥**
**मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम्॥ २८॥**
**सकीलः कठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा॥**
**कोलमात्रः सरुक्स्रावो जायते कदरस्तु सः॥२९॥**
**क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ॥**
**दुष्टकर्दमसंस्पर्शादलसं तं विनिर्दिशेत्॥ ३०॥**

शर्कराः षट् कर्पूरखण्डादयः ताभिरुन्मथिते पीडिते। कीलेन सदृशः सकील इति सकीलश्चासौ कठिनश्च सकीलकठिनः। हस्तयोरपीति भोजः। क्लिन्नमित्यादि अयं कफेन सशोणितेन॥ २८—३०॥

**रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्॥**
**प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः॥३१॥**
**रुणद्धि रोमकूपांस्तु ततोऽन्येषामसंभवः॥**
**तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते॥ ३२॥**

रोमकूपानुगं पित्तं वातेन सह मूर्च्छितमिति खालित्यं पुंसामेव न तु योषिताम्। तथाच विदेहः,—"अत्यन्तसुकुमाराङ्ग्यो रजो दुष्टं स्रवन्ति च। अव्यायामरता यस्मात् तस्मान्न खलितिः स्त्रियाम्॥ ३१॥ ३२॥

**दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते॥**
**कफवातप्रकोपेण विद्याद्दारुणकं तु तम्॥ ३३॥**

दारुणा कठिना, कण्डुरा कण्डूयुक्ता, प्रपाट्यते प्रकर्षेण पाट्यते। पित्तरुधिरयोरप्यनुबन्धो ज्ञेयः, विदेहवचनात्। दारुणकं 'उपहास' इति लोके॥ ३३॥

**अरूंषि बहुवक्त्राणि बहुक्लेदानि मूर्धनि॥**
**कफासृक्कृमिकोपेन नृणां विद्यादरूंषिकाम्॥ ३४॥**

अरूंषि व्रणान्॥ ३४॥

**क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः॥**
**पित्तं च केशान् पचति पलितं तेन जायते॥ ३५॥**

क्रोधादिकृतेन शरीरोष्मणा शिरोगतेन वैकृतपित्तेन पुनः प्राकृतं पलितं; अन्यथा पित्तोष्मणोरभेदात् पुनरुक्तिदोषः स्यात्। पञ्जिकाकारस्तु शरीरोष्मा पावकः, पित्तं तदाश्रयः, एतौ पित्तपावकावेकीभूय केशान् पचेत्, एतेन केवलोष्मकृतस्य विकृतस्यादोषप्रसङ्गो निराकृत इति मन्यते॥ ३५॥

**दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः॥**
**गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः॥ ३६॥**

ताम्रत्वेन शोणितानुबन्धो येषां तथा। तन्त्रान्तरे च, "पित्तं शोणितसंसृष्टं यदा दूषयति त्वचं। तदा करोति पिडकाः सर्वगात्रेषु देहिनः॥ मसूरमुद्गमाषाणां तुल्याः कोलोपमा इति। मसूरिकास्तु विज्ञेयाः पिडका रक्तपित्तजाः"—इति। एतासां 'शीतलिका' इति लोकाश्रया संज्ञा॥ ३६॥

**शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः॥**
**जायन्ते पिडका यूनां वक्त्रे या मुखदूषिकाः॥ ३७॥**

शाल्मलीति। शाल्मलीकण्टकप्रख्याः शाल्मलीकण्टकसदृशाः। यूनां तरुणानाम्॥ ३७॥

**कण्टकैराचितं वृत्तं कण्डूमत् पाण्डुमण्डलम्॥**
**पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम्॥ ३८॥**

कण्टकैरित्यादि पद्मिनीकण्टकप्रख्यैः पद्मिनीकण्टकसदृशैः ३८

**नीरुजं सममुत्पन्नं मण्डलं कफरक्तजम्॥**
**सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं विदुः॥ ३९॥**

सहजं जन्मबलप्रवृत्तम्। श्लक्ष्णं अकर्कशम्। जतुमणिः 'जतु' इति लोकाश्रया तत्संज्ञा॥ ३९॥

**अवेदनं स्थिरं चैव यस्य गात्रेषु दृश्यते॥**
**माषवत् कृष्णमुत्सन्नमनिलान्मषकं दिशेत्॥ ४०॥**

स्थिरं कठिनम्॥ ४०॥

**कृष्णानि तिलमात्राणि नीरुजानि समानि च॥**
**वातपित्तकफोच्छोषात्तान् विद्यात्तिलकालकान् ४१**

१ कदररोगः आङ्गलवैद्यके 'कोर्न' (Corn) इति नाम्ना प्रसिद्धः।

२ इन्द्रलुप्तं युनानीवैद्यके 'इन्तशार उल शअर' इति नाम्ना आङ्गलवैद्यके च 'बॉल्डनेस' (Boldness) इति नाम्ना प्रसिद्धं।

१ पलितं युनानीवैद्यके 'शेब' इति नाम्ना आङ्गलवैद्यके च 'प्रिमेचर ग्रे हेअर' (Premature grey hair) इति नाम्ना प्रसिद्धं।

२ मसूरिका युनानीवैद्यके 'जुदरी' इति नाम्ना आङ्गलवैद्यके च 'स्मॉलपोक्स' (Smallpox) इति नाम्ना प्रसिद्धा।

३ यौवनपिडका युनानीवैद्यके 'बसूर उल लबन' इति नाम्ना आङ्गलवैद्यके च 'एक्नी' (Acne) इति नाम्ना प्रसिद्धा।

४ मषकः युनानीवैद्यके 'शाॅलील' इति नाम्ना आङ्गलवैद्यके च 'मोल्स' (Moles) इति नाम्ना प्रसिद्धः।

५ तिलकालकः युनानीवैद्यके 'खाल' इति नाम्ना आङ्गलभाषायां च 'मेक्युली' (Macule) इति नाम्ना प्रसिद्धः।

वातपित्तकफोच्छोषात् इति वातपित्ताभ्यां कफस्य उच्छोषात् इत्यर्थः। अन्येतु "वातपित्तासृगुच्छोषात्" इति पठन्ति, व्याख्यानयन्ति च–वातपित्ताभ्यां रक्तस्य शोषादित्यर्थः। अतएव तिलकालके कार्ष्ण्यम्। न च कफोद्रेकादिति पाठः। तस्मिन् पाठे कफोद्रेकलक्षणं तिलकालके नास्ति ॥ ४१ ॥

**मण्डलं महदल्पं वा श्यामं वा यदि वा सितम् ॥**
**सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥ ४२ ॥**

सहजं जन्मबलप्रवृत्तम्। न्यच्छं लोके लाञ्छनमिति वदन्ति, पित्तरक्तान्वितो वायुरस्य कारणम् ॥ ४२ ॥

**समुत्थाननिदानाभ्यां चर्मकीलं प्रकीर्तितम् ॥**

समुत्थानं संप्राप्तिः, निदानं हेतुलक्षणनिर्देशः। गयदासाचार्यस्तु "समुत्थाननिदानाभ्याम्" इति चर्मकीलप्रतिपादकं वाक्यमेव पठति ॥—

**क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ॥ ४३ ॥**
**सहसा मुखमागत्य मण्डलं विसृजत्यतः ॥**
**नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥ ४४ ॥**

व्यङ्गमेव स्थानान्तरेण वर्णान्तरेण च नीलिकेत्यन्ये ॥ ४३ ॥ ॥ ४४ ॥

**मर्दनात् पीडनाच्चापि तथैवात्यभिघाततः ॥**
**मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरः ॥ ४५ ॥**
**तदा वातोपसृष्टं च चर्म प्रतिनिवर्तते ॥**
**मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ॥ ४६ ॥**
**सवेदनः सदाहश्च पाकं च व्रजति क्वचित् ॥**
**मारुतागन्तुसंभूतां विद्यात् तां परिवर्तिकाम्[1] ॥४७॥**
**सकण्डूः कठिना वापि सैव श्लेष्मसमुत्थिता ॥**

अतीति मर्दनपीडनाभ्यां प्रत्येकं संबध्यते; सम्यक्कृतौ हि मर्दनपीडनौ वायुप्रशान्तकरावेव भवतः। भजते आश्रयति। सर्वतश्चरो वायुः व्यानः। चर्म प्रतिनिवर्तते इति मणिं विहाय सर्वतो व्याघटतीत्यर्थः। कोशः चर्मकोशः। सैव परिवर्तिकेत्यर्थः ॥ ४५—४७ ॥—

**अल्पीयःखां यदा हर्षाद्बालां गच्छेत् स्त्रियं नरः ॥४८॥**
**हस्ताभिघातादथवा चर्मण्युद्वर्तिते बलात् ॥**
**मर्दनात्पीडनाद्वाऽपि शुक्रवेगविघाततः ॥ ४९ ॥**
**यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥**

अल्पीति। अल्पीयःखां अल्पतरयोनिद्वाराम्। चर्मण्युद्वर्तिते उत्तानीभूय व्याघुटिते। यस्य चर्म मर्दनादिभिः अवपाट्यते विदार्यते तस्य तां अवपाटिकां विद्यादित्यर्थः ॥ ४८ ॥४९॥—

**वातोपसृष्टमेवं तु चर्म संश्रयते मणिम् ॥ ५० ॥**

१ परिवर्तिका आँङ्ग्लवैद्यके 'पेराफाइमॉसिस' (Paraphymosis) इति नाम्ना प्रसिद्धा।

**मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥**
**निरुद्धप्रकशे[1] तस्मिन्मन्दधारमवेदनम् ॥ ५१ ॥**
**मूत्रं प्रवर्तते जन्तोर्मणिर्न च विदीर्यते ॥**
**निरुद्धप्रकशं विद्यादुरूढां चावपाटिकाम् ॥ ५२ ॥**

वातोपसृष्टमिति एवमतिमर्दनपीडनाभिघातादिनेत्यर्थः। संश्रयते समग्रं श्रयते। दुरूढां चावपाटिकामिति अवपाटिकापि दुरूढा निरुद्धप्रकाशाख्यां लभते ॥ ५०—५२ ॥

**वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः ॥**
**निरुणद्धि महत् स्रोतः सूक्ष्मद्वारं करोति च ॥ ५३ ॥**
**मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति ॥**
**सन्निरुद्धगुदं[2] व्याधिमेनं विद्यात् सुदुस्तरम् ॥ ५४ ॥**

वेगसन्धारणादिति। विहतः निरुद्धगतिः। महत्स्रोतो गुदम् ॥ ॥ ५३ ॥ ५४ ॥

**शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ॥**
**स्विन्नस्यास्नाप्यमानस्य कण्डू रक्तकफोद्भवा ॥ ५५ ॥**
**कण्डूयनात् ततः क्षिप्रं स्फोटाः स्रावश्च जायते ॥**
**एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ५६ ॥**

शकृदिति शकृन्मूत्रसमायुक्ते अपाने गुदे अधौते अक्रियमाणे शौचे शिशोः रक्तकफोद्भवा कण्डूर्भवेदिति संबन्धः। कथंभूतस्य स्विन्नस्य अस्नाप्यमानस्य च। एकीभूतं अपानं व्रणैः सहेत्यध्याहार्यम्। अहिपूतनं कफरक्तजं ज्ञेयम् ॥५५॥५६॥

**स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः ॥**
**प्रक्लिद्यते यदा स्वेदात् स कण्डूं जनयेत्तदा ॥ ५७ ॥**
**तत्र कण्डूयनात् क्षिप्रं स्फोटाः स्रावश्च जायते ॥**
**प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥ ५८ ॥**

स्नानोत्सादनमिति उत्सादनं उद्वर्तनम् ॥ ५७ ॥ ५८ ॥

**प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः ॥**
**रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत्[3] ॥ ५९ ॥**

प्रवाहणेति प्रवाहणं प्रकर्षेण निर्वाहणम्। अयं वातकोपजः ॥ ५९ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने त्रयोदशोऽध्यायः ॥

१ निरुद्धप्रकशरोगः आङ्ग्लवैद्यके 'फाइमॉसिस' (Phymosis) इति नाम्ना प्रसिद्धः।

२ संनिरुद्धगुदरोगः आङ्ग्लवैद्यके 'स्ट्रिक्चर ऑफ ध रेक्टम (Stricture of the rectum) इति नाम्ना प्रसिद्धः।

३ गुदभ्रंशः युनानीवैद्यके 'खरुज उल मुकअद' इति नाम्ना आङ्ग्लवैद्यके च 'प्रोलेप्ससएनाइ' (Prolapsusani) इति नाम्ना प्रसिद्धः।

## चतुर्दशोऽध्यायः ।

**अथातः शूकदोषनिदानं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**

अथात इति । शूकदोषनिदानमिति । अत्रादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः । तेन शूकादिदोषनिदानमित्यर्थः । आदिशब्दाच्च दुष्टयोनिगूढान्तर्लोमयोनिगमनाभिघातश्चाभिप्रेतः । तन्नेच्छति गयदासाचार्यः, दुष्टयोन्यादीनां उपदंशहेतुत्वात् । शूकः सजन्तुजलमलः लिङ्गवृद्धिकरो योगो वा; दोषोऽत्र दुष्टिः, असम्यक्करणात् वैकृतम्; अथवा दोषो वातादिः; वातादिकृतो वा विकारः; तेषां लक्षणस्यैव निर्देशात् निदानं, न तु हेतुः, हेतुः पुनरत्र शूक एव स च प्रतिसूत्रेणाभिहितः ॥ १ ॥ २ ॥

**लिङ्गवृद्धिमिच्छतामक्रमप्रवृत्तानां शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते । तद्यथा— सर्षपिका, अष्ठीलिका, ग्रथितं, कुम्भीका, अलजी, मृदितं, संमूढपिडका, अवमन्थः, पुष्करिका, स्पर्शहानिः, उत्तमा, शतपोनकः, त्वक्पाकः, शोणितार्बुदं, मांसार्बुदं, मांसपाकः, विद्रधिः, तिलकालकश्चेति ॥ ३ ॥**

तेषां शूकदोषजानां व्याधीनां सामान्यां संप्राप्तिमाह,— लिङ्गवृद्धीति । लिङ्गवृद्धिः लिङ्गस्थूलीकरणम्; आयामपरिणाहाभ्यामित्यन्ये । वात्स्यायनाद्युक्तलिङ्गवृद्धियोगस्य अक्रमः अनाचारः; उत्तरबस्तिकर्मणोऽनाचार इत्यन्ये, तन्नेच्छति गयदासाचार्यः । संख्येयनिर्देशादेव संख्यायां लब्धायां अष्टादशवचनं संशयवचनभ्रान्तिनिरासार्थम् । तद् यथेति ॥ ३ ॥

**गौरसर्षपतुल्या तु शूकदुर्भग्नहेतुका ॥**
**पिडका कफरक्ताभ्यां ज्ञेया सर्षपिका बुधैः ॥ ४ ॥**

शूकदुर्भग्नहेतुका इति दुरवचारितशूकहेतुकेत्यर्थः । अन्ये शूकदुर्भगहेतुकेति पठन्ति, व्याख्यानयन्ति—शूको दुष्टभगश्च हेतुर्यस्याः सा तथा । तन्नेच्छति गयदासाचार्यः ॥ ४ ॥

**कठिना विषमैरन्तैर्मारुतस्य प्रकोपतः ॥**
**शूकैस्तु विषसंयुक्तैः पिडकाऽष्ठीलिका भवेत् ॥ ५ ॥**

शूकैरष्ठीलिका भवेदिति संबन्धः । विषमैः अप्रशस्तैः । अन्तैः इति कोऽर्थः पतितैः । अन्ये विषमैरन्तैरुपलक्षितेति व्याचक्षते । एतेन विषमान्तसहिता इत्युक्तम् । विषसंभुग्नैः विषेण कृत्वा वक्रैरित्यर्थः ॥ ५ ॥

**शूकैर्यत् पूरितं शश्वद्ग्रथितं तत् कफोत्थितम् ॥**
**कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा ॥ ६ ॥**
**अलजीलक्षणैर्युक्तामलजीं च वितर्कयेत् ॥**
**मृदितं पीडितं यत्तु संरब्धं वायुकोपतः ॥ ७ ॥**

शूकैर्यदिति शश्वत् प्रतिदिनं, एतेन एकदिनान्तरपूरणं प्रशस्तमिच्छन्ति कामतन्त्राचार्याः । नित्यपूरणाद् ग्रथितनाम्नो रोगस्योत्पत्तिः । कुम्भीकेति कुम्भीका कुम्भफलमिव । अशुभेति शुभः शुक्लः तद्विरोधेन अशुभा कृष्णेत्यर्थः । अयमपि दुष्टशूकावचारणात् ज्ञेया ॥ ६ ॥ ७ ॥

**पाणिभ्यां भृशसंमूढे संमूढपिडका भवेत् ॥**

यत् पुनर्लिङ्गं पातितशूकं सत् पाणिभ्यामिति भृशसंमूढेऽत्यर्थपिच्चितावनतपातितलिङ्गे शूके इत्यर्थः । संमूढपिडका मृदितं च वातरक्तात् ॥—

**दीर्घा बह्वयश्च पिडका दीर्यन्ते मध्यतस्तु याः ॥ ८ ॥**
**सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत् ॥**

बह्वयः प्रभूताः । अवमन्थोऽपि शूककर्मापचारेण ज्ञेयः ॥ ८ ॥

**पित्तशोणितसंभूता पिडका पिडकाचिता ॥ ९ ॥**
**पद्मपुष्करसंस्थाना ज्ञेया पुष्करिकेति सा ॥**

पद्मेति । पद्मपुष्करं पद्मकर्णिका । एषापि स्वकर्मापचारजा ज्ञेया ॥ ९ ॥—

**जनयेत् स्पर्शहानिं तु शोणितं शूकदूषितम् ॥ १० ॥**

जनयेदिति स्पर्शहानिं स्पर्शहानिनामानं व्याधिविशेषम् । शूकदूषितं शूकेन दुष्टिं नीतम् ॥ १० ॥

**मुद्गमाषोपमा रक्ता पिडका रक्तपित्तजा ॥**
**उत्तमैषा तु विज्ञेया शूकाऽजीर्णनिमित्तजा ॥ ११ ॥**

मुद्गमाषेति । उक्तव्याधिविशेषः शूकाजीर्णनिमित्तयोर्जातः शूकाजीर्णे दुरवचारितशूकविकृतलक्षणपातितेन शूकेनाजीर्णे प्रतिलक्षणपातितलक्षणपातनिमित्ताभ्यां (?) रक्तपित्ताभ्यां जायते इत्याहुः ॥ ११ ॥

**छिद्रैरणुमुखैर्यत्तु चितं मेढ्रं समन्ततः ॥**
**वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः ॥ १२ ॥**

छिद्रैरणुमुखैरिति । छिद्रैर्दुरवचारितशूकदूषितरक्तपित्तजैरित्यर्थः । गयदासाचार्यस्तु दुरवचारितशूकदूषितवातपित्तजमित्यर्थः ॥ १२ ॥

**पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान् ॥**

पित्तरक्तेत्यादि । पित्तरक्तकृतः इति दुरवचारितशूकजनितपित्तशोणितज इत्यर्थः । अस्याधिष्ठानमित्यर्थः ॥—

**कृष्णस्फोटैः सरक्तैश्च पिडकाभिश्च पीडितम् ॥**
**यस्य वास्तुरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् ॥ १३ ॥**

कृष्णेति । यस्य वस्तु अधिष्ठानं स्फोटैः पिडकाभिश्च पीडितं भवति तत् शोणितार्बुदं ज्ञेयमिति संबन्धः । अयमपि दुरवचारितशूकेभ्यो मांसदोषेण जानीयात् ॥ १३ ॥

**मांसदोषेण जानीयादर्बुदं मांससंभवम् ॥**

अर्बुदं मांससंभवं मांसदोषेण मांसवृद्ध्या । अयमपि दुरवचारितशूके लिङ्गे प्रहारादिभिर्जायते ॥—

**शीर्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः ॥ १४ ॥**
**विद्यात् तं मांसपाकं तु सर्वदोषकृतं भिषक् ॥**

शीर्यते शटितं भवति । एषोऽपिदुरवचारितशूकदूषितदोषजः ॥ १४ ॥—

**विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत् ॥ १५ ॥**
**कृष्णानि चित्राण्यथवा शूकानि सविषाणि च ॥**
**पातितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥ १६ ॥**
**कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः ॥**
**सन्निपातसमुत्थानं तं विद्यात् तिलकालकम् ॥१७॥**

कृष्णानीति कृष्णवर्णानि। चित्राणि विचित्राणि शुक्लपीतनीलादिवर्णानीत्यर्थः। कालानि परिणततिलफलवर्णानि। शीर्यन्ते गलन्ति ॥ १५—१७ ॥

**तत्र मांसार्बुदं यच्च मांसपाकश्च यः स्मृतः ॥**
**विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः॥१८॥**

शूकदोषजानामसाध्यान् निर्दिशन्नाह,—तत्र मांसार्बुदमिति ॥ १८ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने चतुर्दशोऽध्यायः।

---

## पञ्चदशोऽध्यायः।

**अथातो भग्नानां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

अथात इति ॥ १ ॥ २ ॥

**पतनपीडनप्रहाराक्षेपणव्यालमृगदशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थ्नां भग्नमुपदिशन्ति ॥ ३ ॥**

भग्नानां हेतुं निर्दिशन्नाह,—पतनपीडनेति। प्रहारो मुष्टिलगुडकृपाणबाणादीनां, आक्षेपणमतिशयेन चालनं, व्यालमृगदशनं व्यालादिभक्षणं, प्रभृतिग्रहणात् बलवद्विग्रहादीनामवरोधः। अनेकविधं बहुप्रकारम् ॥ ३ ॥

**तत्तु भग्नजातमनुसार्यमाणं द्विविधमेवोत्पद्यते सन्धिमुक्तं[1] काण्डभग्नं[2] च ॥ ४ ॥**

तेषां द्वैविध्यमाह,—तत्त्विति। भग्नजातमिति जातं समूहः। अनुसार्यमाणं अनुसर्तुं पूर्यमाणम्। अनुश्रयमाणं इत्येके पठन्ति। सन्धिमुक्तकाण्डभग्नयोर्लक्षणमाह,—तत्र पर्वणीत्यादि। अयं पाठोऽभावान्नापि लिखितो न च व्याख्यातः ॥ ४ ॥

**तत्र सन्धिमुक्तं, उत्पिष्टं, विश्लिष्टं, विवर्तितं, अवक्षिप्तं, अतिक्षिप्तं, तिर्यक्क्षिप्तमिति षड्विधम् ॥५॥**

सन्धिमुक्तस्य षाड्विध्यमाह,—तत्र सन्धिमुक्तमिति। सन्धिमुक्तं षड्विधमिति संबन्धः ॥ ५ ॥

**तत्र प्रसारणाकुञ्चनविवर्तनाक्षेपणाऽशक्तिरुग्ररुजत्वं स्पर्शासहत्वं चेति सामान्यं सन्धिमुक्तलक्षणमुक्तम् ॥ ६ ॥**

तत्र सन्धिमुक्तस्य सामान्यलक्षणमाह,—तत्र प्रसारणेति। सामान्यं सन्धिभग्नलक्षणमुक्तम्। विवर्तनं विपरीतावर्तनम्, आक्षेपणं अतिशयेन चालनम् ॥ ६ ॥

**विशेषेणोत्पिष्टे सन्धावुभयतः शोफो वेदनाप्रादुर्भावो विशेषतश्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति; विश्लिष्टेऽल्पशोफो वेदनासातत्यं सन्धिविक्रिया च; विवर्तिते तु सन्धिपार्श्वापगमनाद् विषमाङ्गता वेदना च; अवक्षिप्ते सन्धिविश्लेषस्तीव्ररुजत्वं च; प्रतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च; तिर्यक्क्षिप्ते त्वेकास्थिपार्श्वापगमनमत्यर्थं वेदना चेति ॥ ७ ॥**

उत्पिष्टादिलक्षणमाह,—विशेषेणोत्पिष्टे इति। उत्पिष्टे चूर्णिते। विश्लिष्टे घट्टिते सन्धाविति शेषः। सन्धिसंश्रययोरस्थ्नो व्यावर्तनेन। विवर्तिते तु सन्धि पार्श्वागमनात् विषमाङ्गता वेदना चेति चकारात् वेदनापि विषमेत्यर्थः। अवक्षिप्ते सन्धावधोगते इति। अतिक्षिप्ते दूरं गते सन्धौ। अतिक्रान्तता दूरगमनम्। अतिवेदना चेति चकारार्थः। तिर्यगिति तिर्यक्क्षिप्ते सन्धाविति शेषः। तत्रैकस्यैव पार्श्वापगमनं, विवर्तिते द्वयोरपीति विशेषः ॥ ७ ॥

**काण्डभग्नमत ऊर्ध्वं वक्ष्यामः-कर्कटकं, अश्वकर्णं, चूर्णितं, पिच्चितं, अस्थिच्छल्लितं काण्डभग्नं, मज्जानुगतं, अतिपातितं, वक्रं, छिन्नं, पाटितं, स्फुटितमिति द्वादशविधम् ॥ ८ ॥**

काण्डभग्नमिति ॥ ८ ॥

**श्वयथुबाहुल्यं स्पन्दनविवर्तनस्पर्शासहिष्णुत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविधवेदनाप्रादुर्भावः सर्वास्ववस्थासु न शर्मलाभः इति समासेन काण्डभग्नलक्षणमुक्तम् ॥ ९ ॥**

तेषां सामान्यलक्षणमाह,—श्वयथुबाहुल्यमिति स्पष्टम् ॥ ९॥

**विशेषतस्तु समूढमुभयतोऽस्थिमध्यभग्नं ग्रन्थिरिवोन्नतं कर्कटकं, अश्वकर्णवदुद्गतमश्वकर्णकं, स्पृश्यमानं[1] शब्दवच्चूर्णितमवगच्छेत्, पिच्चितं पृथुतां गतमनल्पशोफं, पार्श्वयोरस्थिहीनोद्गतमस्थिच्छलितं, वेल्लते प्रकम्पमानं काण्डभग्नं, अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानमुन्नह्यतीति मज्जानुगतं, अस्थि निःशेषतश्छिन्नमतिपातितं, आभुग्नमविमुक्तास्थि वक्रं, अन्यतरपार्श्वावशिष्टं छिन्नं, पाटितमणु बहुविदारितं वेदनावच्च, शूकपूर्णमिवाध्मातं विपुलं विस्फुटीकृतं स्फुटितमिति ॥ १० ॥**

---

[1] सन्धिमुक्तं युनानीवैद्यके 'खलआ' इति नाम्ना आङ्गलवैद्यके च 'डिस्लोकेशन' ( Dislocation ) इति नाम्ना प्रसिद्धम्।

[2] काण्डभग्नं युनानीवैद्यके 'कस्र' इति नाम्ना आङ्गलवैद्यके च 'फ्रॅक्चर' ( Fracture ) इति नाम्ना प्रसिद्धम्।

[1] 'चूर्णितमस्थि शब्दस्पर्शाभ्यां बोद्धव्यं' इति पाठान्तरम् ॥

शर्म तेषां प्रत्येकं विशिष्टलक्षणमाह,—विशेषतस्त्विति । विशेषतः संमूढमिति अतिशयेन स्पर्शं जानातीत्यर्थः । गयदासाचार्यस्तु उभयतः संमूढमिति उभयोः पार्श्वयोर्निपीडनेन मध्ये ग्रन्थिरिवोन्नतमिति व्याख्यानयति । कर्कटकं कर्कटसदृशम् । अश्वकर्णवदुन्नतमश्वकर्णकं, अश्वकर्णसदृशमित्यर्थः । स्पृश्यमाणं शब्दवत् चूर्णितमवगच्छेदिति चूर्णितं चूर्णीकृतम्, अवगच्छेत् जानीयात् । पिच्चितमित्यादि पिच्चितं पीडितसदृशम् । पृथुतां गतं विस्तीर्णतां गतम् । अस्थि छल्लितमिव विद्यते यस्मिन् तत् अस्थिच्छल्लितं, अस्थिसन्नितमित्यन्ये । वेल्लते प्रकम्पमानमिति वेल्लते चलति । यद्यपि काण्डव्यपदेशः द्वादशानामपि तथापि विशेषतः कस्यचित् व्यपदेशः । यथा विशिष्टजङ्घायोगेन एणादीनामिव जङ्घालत्वम् । अस्थ्यवयव इति । आभुग्नं ईषद् जिह्मं । छिन्नं अन्यतरपार्श्वे एकपार्श्वे इत्यर्थः । पाटितमिति । अणूनि बहूनि विदारितानि यस्य तत्तथा । गयदासाचार्यास्तु स्फुटितलक्षणमेतत् पठन्ति, अग्रेतनं पाटितलक्षणमिति । शूकपूर्णमिति शूकं यवादीनामग्रभागः, तत्पूर्णमिव वेदनाविशेषः । आध्मातं शूनम् । विस्फुटीकृतं विपुलस्फुटितं, गयदासाचार्यास्तु विपुलैकदारीति पठन्ति ॥ १० ॥

**तेषु स्फुटितचूर्णितच्छिन्नातिपातितमज्जानुगतानि कृच्छ्रसाध्यानि कृशवृद्धबालानां क्षतक्षीणकुष्ठश्वासिनां सन्ध्युपगतं चेति ॥ ११ ॥**

कृच्छ्रसाध्यान् निर्दिशन्नाह,—तेष्विति । चकारात् काण्डोपघातमिति ॥ ११ ॥

**भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम् ॥**
**जघनं प्रतिपिष्टं च वर्जयेत् तच्चिकित्सकः ॥ १२ ॥**
**असंश्लिष्टं कपालं तु ललाटे चूर्णितं च यत् ॥**
**भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्ध्नि च वर्जयेत् ॥ १३ ॥**
**आदितो यच्च दुर्जातमस्थि सन्धिरथापि वा ॥**
**सम्यग्यमितमप्यस्थि दुर्न्यासाद्दुर्निबन्धनात् ॥१४॥**
**सङ्क्षोभाद्वापि यद्गच्छेद्विक्रियां तत् तु वर्जयेत् ॥**

असाध्यान् निर्दिशन्नाह,—भिन्नमिति । असाध्यं षड्विधं—तदुच्यते—विश्लिष्टं लम्बितमसाध्यं; सन्धिमुक्तशब्देन च्युतस्यापि सन्धिमुक्तभेदस्यासाध्यत्वे लब्धे तदुपादानं विशेषार्थम्; जघनं प्रतीति जघनस्थाने पिष्टं, सन्धिमुक्तभेदोयं अश्लिष्टविघट्टितसन्धिः; ललाटे चूर्णितं च यदिति चूर्णितं काण्डभग्नमेतत्; भग्नं सन्धिमुक्तं काण्डभग्नं द्वयमपि बोद्धव्यम् । इदानीं द्विविधस्यापि सर्वस्थानगतस्यावस्थायामसाध्यत्वं दर्शयन्नाह,—आदितः यच्च दुर्जातमिति आदितः उत्पत्तावेव दुःसन्धानोपपादितम्; यत् अस्थिभग्नमिति शेषः, तदसाध्यम् । अस्थि सन्धिरथापि वेति सन्धिरस्थ्नोरन्तरालम् । सोऽपि दुर्जातोऽसाध्यः । सम्यग्यमितमिति । सम्यक् यमितमप्यस्थि सम्यक् संहितमप्यस्थि दुर्न्यासात् दुःस्थापनात् दुर्निबन्धनात्, संक्षोभाद्व्यवायादिना चलनात् ॥ १२—१४ ॥—

**मध्यस्य वयसोऽवस्थास्तिस्रो याः परिकीर्तिताः१५**
**तत्र स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता ॥**

तिस्रो अवस्था इति षोड़शवर्षादूर्ध्वं चत्वारिंशत् यावत् पूर्यते ॥ १५ ॥—

**तरुणास्थीनि नम्यन्ते भज्यन्ते नलकानि तु ॥**
**कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि च ॥१६॥**

अस्थिविशेषेणापि भग्नविशेषं दर्शयन्नाह,—तरुणास्थीनीति । घ्राणकर्णकटकाक्षिकूटेषु तरुणास्थीनि; नम्यन्ते वक्रीभवन्ति, एतेन वक्रलक्षणं भग्नमुक्तम् । नलकानि शाखास्थीनि; भज्यन्ते त्रुटन्ति । कपालानीति । कपालानि मस्तकादिखर्पराणि; विभिद्यन्ते इत्यनेन कपालेषु विदारणलक्षणो भग्न उक्तः । रुचकाः दन्ताः, तेषु स्फुटितं भग्नमुक्तम् । चकारेण वलयेष्वपि स्फुटितं समुच्चीयते । एतेन पञ्चविधान्यस्थीनि तरुणकपालवलयरुचकान्युक्तानि ॥ १६ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां निदानस्थाने पंचदशोऽध्यायः ॥

---

## षोडशोऽध्यायः ।

**अथातो मुखरोगाणां निदानं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**

अथात इति ॥ १ ॥ २ ॥

**मुखरोगाः पञ्चषष्टिः सप्तस्वायतनेषु । तत्रायतनानि—ओष्ठौ, दन्तमूलानि, दन्ताः, जिह्वा, तालु, कण्ठः, सर्वाणि चेति । तत्राष्टावोष्ठयोः, पञ्चदश दन्तमूलेषु, अष्टौ दन्तेषु, पञ्च जिह्वायां, नव तालुनि, सप्तदश कण्ठे, त्रयः सर्वेष्वायतनेषु ॥ ३ ॥**

तेषां संख्यामाह,—मुखरोगाः पञ्चषष्टिरिति । अन्ये सप्तषष्टिरित्याहुः, तन्नेच्छन्ति निबन्धकाराः । अथ कियत्सु स्थानेषूत्पद्यन्ते इत्याह,—सप्तस्वायतनेष्विति । आयतनेषु स्थानेषु । तान्येव स्थानान्याह,—तत्रायतनान्यष्टाविति ॥ ३ ॥

**तत्रौष्ठप्रकोपा वातपित्तश्लेष्मसन्निपातरक्तमांसमेदोऽभिघातनिमित्ताः ॥ ४ ॥**

ओष्ठप्रकोपाः ओष्ठरोगाः ॥ ४ ॥

**कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ ॥**
**दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः ॥ ५ ॥**
**आचितौ पिडकाभिस्तु सर्षपाकृतिभिर्भृशम् ॥**
**सदाहपाकसंस्रावौ नीलौ पीतौ च पित्ततः ॥ ६ ॥**
**सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ ॥**
**कण्डूमन्तौ कफाच्छूनौ पिच्छिलौ शीतलौ गुरू ॥७**
**सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च ॥**
**सन्निपातेन विज्ञेयावनेकपिडकाचितौ ॥ ८ ॥**

खर्जूरफलवर्णाभिः पिडकाभिः समाचितौ ॥
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ९ ॥
मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुद्गतौ ॥
जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ॥१०॥
मेदसा घृतमण्डाभौ कण्डूमन्तौ स्थिरौ मृदू ॥
अच्छस्फटिकसङ्काशमास्रावं स्रवतो गुरू ॥ ११ ॥
क्षतजाभौ विदीर्येते पाट्येते चाभिघाततः ॥
ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥१२॥

तेषामोष्ठरोगाणां प्रत्येकं विशिष्टलक्षणमाह,—कर्कशौ शाकपत्रसदृशौ । परुषौ रूक्षौ । स्तब्धौ निश्चलौ । दाल्येते द्विविधा भिद्येते इव । परिपाट्येते पुटपुटायेते । चीयेते व्याप्येते । शूनौ शोफयुक्तौ । सकृत् किंचिदित्यर्थः । अनेकपिडकाचितौ अनेकपिडकाव्याप्तौ इत्यर्थः । अयमसाध्यो ज्ञेयः । रक्तोपसृष्टौ रक्तजव्याधियुक्तौ, शोणितप्रभौ रक्तच्छायौ । जन्तवः क्रिमयः, अत्र अस्मिन्, मूर्च्छन्ति भवन्ति । उभयतः सृक्कभागयोरित्यर्थः, सृक्क प्रान्तः । घृतमण्डो घृतस्योपर्यच्छभागः । स्थिरौ अचलौ । क्षतजाभाविति क्षतजाभौ रक्तच्छायौ । दीर्येते विदारणयुक्तौ भवतः । पाट्येते द्विधा भिद्येते इव । ग्रथितौ ग्रन्थियुक्तौ । ओष्ठप्रकोपे वातजेषु शुद्धो वातः कारणं, अभिघातजेषु कफरक्तसहित इति परस्परं भेदः ॥ ५—१२ ॥

दन्तमूलगतास्तु शीतादो, दन्तपुप्पुटको, दन्तवेष्टकः, शौषिरो, महाशौषिरः, परिदर, उपकुशो, दन्तवैदर्भो, वर्धनोऽधिमांसो, नाड्यः पञ्चेति॥१३॥

दन्तमूलगतास्त्विति ॥ १३ ॥

शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्तते ॥
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ १४ ॥
दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम् ॥
शीतादो नाम स व्याधिः कफशोणितसंभवः॥१५॥

तेषां प्रत्येकं लक्षणमाह,—शोणितमिति । शीर्यन्ते गलन्ति ॥ १४ ॥ १५ ॥

दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान् ॥
दन्तपुप्पुटको ज्ञेयः कफरक्तनिमित्तजः ॥ १६ ॥
स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ॥
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसंभवः ॥ १७ ॥
श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः ॥
लालास्रावी स विज्ञेयः कण्डूमान् शौषिरो गदः१८

दन्तयोरिति द्विवचनात् द्वयोः ॥ १६—१८ ॥

दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते ॥
दन्तमांसानि पच्यन्ते मुखं च परिपीड्यते ॥ १९ ॥
यस्मिन् स सर्वजो व्याधिर्महाशौषिरसंज्ञकः ॥

तालुश्चाप्यवदीर्यते इति चकारेण दन्ताश्चावदीर्यन्ते ओष्ठावपि च सर्वजः सर्वदोषेभ्यः । अयं सप्तरात्रात् मारयति ॥ १९ ॥—

दन्तमांसानि शीर्यन्ते यस्मिन् ष्ठीवति चाप्यसृक्२०
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥
वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च ॥ २१ ॥
आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ॥
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ॥ २२ ॥
यस्मिन्नुपकुशः स स्यात् पित्तरक्तकृतो गदः ॥

दन्तमांसानीति वेष्टेषु दंतमांसेषु । तेभ्यः वेष्टेभ्यो । रोगी बहुलं फूत्करोति ष्ठीवतीति । आघट्टिताः अचालिताः ॥२०—२२॥—

घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ॥ २३ ॥
भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः ॥

संरम्भः अत्र श्वयथुः ॥ २३ ॥—

मारुतेनाधिको दन्तो जायते तीव्रवेदनः ॥ २४ ॥
वर्धनः[1] स मतो व्याधिर्जाते रुक् च प्रशाम्यति ॥

जाते रुक् च प्रशाम्यति इति व्याधिप्रभावात् ॥ २४ ॥—

हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः ॥२५॥
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥
दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ २६ ॥

हानव्ये हनुसंभवे । यथेरिताः इति यथा कथिताः ॥ २५ ॥ ॥ २६ ॥

दन्तगतास्तु-दालनः, क्रिमिदन्तको, दन्तहर्षो, भञ्जनकः, शर्करा, कपालिका, श्यावदन्तको, हनुमोक्षश्चेति ॥ २७ ॥

दाल्यन्ते बहुधा दन्ता यस्मिंस्तीव्ररुगन्विताः ॥
दालनः स इति ज्ञेयः सदागतिनिमित्तजः ॥ २८ ॥

तेषां प्रत्येकं लक्षणमाह,—दाल्यन्ते इति । दाल्यन्ते विदार्यन्ते । सदागतिनिमित्तजः सदागतिरिति वातः, तन्निमित्तजः । असाध्योऽयं व्याधिः ॥ २७ ॥ २८ ॥

कृष्णश्छिद्री चलः स्रावी ससंरम्भी महारुजः ॥
अनिमित्तरुजो वाताद्विज्ञेयः कृमिदन्तकः[2] ॥ २९ ॥

कृष्णः कृष्णदन्तकः । छिद्री सच्छिद्रदन्तकः क्रिमिकृतच्छिद्रवान् । चलः चलदन्तः । संरम्भः श्वयथुः । वक्ष्येत्यादि असाध्योऽयं व्याधिः ॥ २९ ॥

दशनाः शीतमुष्णं च सहन्ते स्पर्शनं न च ॥
यस्य तं दन्तहर्षं[3] तु व्याधिं विद्यात् समीरणात् ३०

१ वर्धनः युनानीवैद्यके 'असनान उल ज्ञायद' इति नाम्ना आङ्ग्लवैद्यके च 'एक्स्ट्रा टुथ' ( Extra Tooth ) इति नाम्ना प्रसिद्धः ।

२ क्रिमिदन्तकः युनानीवैद्यके 'दीदान उल लसा' इति नाम्ना आङ्ग्लवैद्यके च 'केरिझ' ( Caries ) इति नाम्ना प्रसिद्धः ।

३ दन्तहर्षः युनानीवैद्यके 'जर्स' इति नाम्ना आङ्ग्लवैद्यके च 'इरिटेशन् इन् ध टुथ' ( Irritation in the tooth ) इति नाम्ना प्रसिद्धः ।

**वक्रं वक्रं भवेद्यस्मिन् दन्तभङ्गश्च तीव्ररुक्॥**
**कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः॥ ३१॥**
**शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै॥**
**सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा[1]॥ ३२॥**

शर्करा कर्परं सूक्ष्मखण्डः। गुणघ्नी शुक्लादिगुणस्फोटनी ॥३०—३२॥

**दलन्ति दन्तवल्कानि यदा शर्करया सह॥**
**ज्ञेया कपालिका सैव दशनानां विनाशिनी॥ ३३॥**
**योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः॥**
**श्यावतां नीलतां वापि गतः स श्यावदन्तकः ३४**

दलन्ति स्फुटन्ति, दन्तवल्कानि दन्तत्वचः। असाध्योऽयं व्याधिः॥ ३३॥ ३४॥

**वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः॥**
**हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः॥ ३५॥**

तैस्तैरुच्चैर्व्याहरणकठिनभक्षणजृम्भणादिभिः। विसंहतः विघट्टितः। हनुमोक्षव्याधिरपि दन्तस्थानसामीप्यात् दन्तपीडाकरत्वात् दन्तरोग इति व्यपदिश्यते॥ ३५॥

**जिह्वागतास्तु—कण्टकास्त्रिविधास्त्रिभिर्दोषैः, अलास, उपजिह्विका, चेति॥ ३६॥**

जिह्वागतास्त्वित्यादि॥ ३६॥

**जिह्वाऽनिलेन स्फुटिता प्रसुप्ता**
**भवेच्च शाकच्छदनप्रकाशा॥**

तेषां प्रत्येकं लक्षणमाह,—जिह्वानिलेनेति। शाकः वृक्षविशेषो महाखरपत्रलक्षणः। छदनं पत्रम्॥—

**पित्तेन पीता परिदह्यते च**
**चिता सरक्तैरपि कण्टकैश्च॥**

पित्तेनेति। चिता व्याप्ता॥—

**कफेन गुर्वी बहुला चिता च**
**मांसोद्गमैः शाल्मलिकण्टकाभैः॥ ३७॥**

बहुला स्थूला। मांसोद्गमैः मांसाङ्कुरैः। चिता व्याप्ता॥३७॥

**जिह्वातले यः श्वयथुः प्रगाढः**
**सोऽलाससंज्ञः कफरक्तमूर्तिः॥**
**जिह्वां स तु स्तम्भयति प्रवृद्धो**
**मूले तु जिह्वा भृशमेति पाकम्॥ ३८॥**

जिह्वास्तम्भेन तु वायुरप्यस्ति, भृशं पाकेन तु पित्तमप्यस्ति, अतएव त्रिदोषत्वेनासाध्यत्वमपि दुरुपक्रमत्वात्॥ ३८॥

**जिह्वाग्ररूपः श्वयथुर्हि जिह्वा-**
**मुन्नम्य जातः कफरक्तयोनिः॥**
**प्रसेककण्डूपरिदाहयुक्ता**
**प्रकथ्यतेऽसावुपजिह्विकेति[2]॥ ३९॥**

जिह्वाग्ररूप इति। जिह्वामुन्नम्य ऊर्ध्वीकृत्य, जातः उत्पन्नः; एतेन जिह्वाया अधोभवतीत्युक्तम्। कफरक्तयोनिः श्लेष्मरक्तकारणः॥ ३९॥

**तालुगतास्तु—गलशुण्डिका, तुण्डिकेरी, अध्रुषो, मांसकच्छपः, अर्बुदं, मांससङ्घातः, तालुपुप्पुटः, तालुशोषः, तालुपाक इति॥ ४०॥**

**श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो**
**दीर्घः शोफो ध्मातबस्तिप्रकाशः॥**
**तृष्णाकासश्वासकृत्तंप्रदिष्टो**
**व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना॥ ४१॥**

तेषां प्रत्येकं लक्षणमाह,—श्लेष्मासृग्भ्यामिति। कण्ठशुण्डी गलशुण्डीत्यर्थः॥ ४१॥

**शोफः स्थूलस्तोददाहप्रपाकी**
**प्रागुक्ताभ्यां तुण्डिकेरी मता तु॥**
**शोफः स्तब्धो लोहितस्तालुदेशे**
**रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः॥ ४२॥**

तोददाहप्रपाकीति इति तोददाहप्रपाकयुक्त इति शेषः। प्रागुक्ताभ्यां श्लेष्मासृग्भ्याम्। तुण्डिकेरी कार्पासिका, तत्फलानुकारी व्याधिरयम्॥ ४२॥

**कूर्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा-**
**ऽरक्तो ज्ञेयः कच्छपः श्लेष्मणा स्यात्॥**
**पद्माकारं तालुमध्ये तु शोफं**
**विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम्॥ ४३**

कूर्मोत्सन्नः कूर्मवदुन्नतः। अरक्तः पाण्डुरः। अशीघ्रजन्मा मन्दापसारी। पद्माकारं पद्मकर्णिकाकारम्। प्रोक्तलिङ्गं यथोक्तरक्तार्बुदलिङ्गम्। असाध्योऽयं व्याधिः॥ ४३॥

**दुष्टं मांसं श्लेष्मणा नीरुजं च**
**तात्वन्तःस्थं मांससङ्घातमाहुः॥**
**नीरुक् स्थायी कोलमात्रः कफात् स्या-**
**न्मेदोयुक्तात् पुप्पुटस्तालुदेशे॥ ४४॥**

दुष्टमिति। स्थायी स्थिरः। पुप्पुट इत्यत्र तालुशब्दो लुप्तो द्रष्टव्यः, तेन तालुपुप्पुट इत्यर्थः॥ ४३॥

**शोषोऽत्यर्थं दीर्यते चापि तालुः**
**श्वासो वातात् तालुशोषः सपित्तात्॥**
**पित्तं कुर्यात् पाकमत्यर्थघोरं**
**तालुन्येनं तालुपाकं वदन्ति॥ ४५॥**

शोषोऽत्यर्थमिति। एनमिति एनं पाकम्॥ ४५॥

**कण्ठगतास्तु—रोहिण्यः पञ्च, कण्ठशालूकं, अधिजिह्वो, बलयो, बलास, एकवृन्दो, वृन्दः, शतघ्नी, गिलायुः, गलविद्रधिः, गलौघः, स्वरघ्नो, मांसतानो, विदारी चेति॥ ४६॥**

[1] दन्तशर्करा युनानीवैद्यके 'हजर' इति नाम्ना आङ्गलवैद्यके च 'येलो टुथ' ( Yellow tooth ) इति नाम्ना प्रसिद्धा।

[2] उपजिह्वा युनानीवैद्यके 'जफद उल लसान' इति नाम्ना आङ्गलवैद्यके च 'रेन्युला' ( Ranulla ) इति नाम्ना प्रसिद्धा।

कण्ठगतास्त्विति । एकवृन्दो वृन्द इति एकवृन्दो विशेषानुगमेनावस्थान्तरं प्राप्तो वृन्दत्वं प्रतिपद्यते, अतो मूलोक्ता सप्तदशसंख्या न विरुध्यत इति जेज्झटाचार्यः; गयदासाचार्यस्तु वृन्द इति पाठं कल्पितमेव मन्यते; अन्ये तु वृन्दमुदाहरन्ति । तत्र छन्दोनुरोधात् एकवृन्द एव वृन्दशब्देनोक्तः ॥ ४६ ॥

**गलेऽनिलः पित्तकफौ च मूर्च्छितौ**
**पृथक् समस्ताश्च तथैव शोणितम् ॥**
**प्रदूष्य मांसं गलरोधिनोऽङ्कुरान्**
**सृजन्ति यान् साऽसुहरा हि रोहिणी॥४७॥**
**जिह्वां समन्ताद् भृशवेदना ये**
**मांसाङ्कुराः कण्ठनिरोधिनः स्युः ॥**
**तां रोहिणीं वातकृतां वदन्ति**
**वातात्मकोपद्रवगाढयुक्ताम् ॥ ४८ ॥**
**क्षिप्रोद्गमा क्षिप्रविदाहपाका**
**तीव्रज्वरा पित्तनिमित्तजा स्यात् ॥**
**स्रोतोनिरोधिन्यपि मन्दपाका**
**गुर्वी स्थिरा सा कफसंभवा वै ॥ ४९ ॥**
**गम्भीरपाकाऽप्रतिवारवीर्या**
**त्रिदोषलिङ्गा त्रयसंभवा स्यात् ॥**
**स्फोटाचिता पित्तसमानलिङ्गा-**
**ऽसाध्या प्रदिष्टा रुधिरात्मिकेयम् ॥ ५० ॥**

तेषां प्रत्येकं लक्षणमाह,—गलेऽनिल इति । पृथक् इति तिस्रः, समस्ताः इति एका, शोणितादित्येका, एवं पञ्च । मूर्च्छितौ वृद्धौ । असुहरा प्राणहरा । रोहिणीत्यत्र पाठे वातपित्तकफसंबन्धिक्रियापदं न विद्यते इति पाठ एवेति निबन्धकाराः(?) । त्रिदोषजा असाध्याः । उक्तं च,—"वातात् पित्तात् कफात् त्रिभ्यो रक्ताद्रोहिण्य ईरिताः । अन्या सद्यो मारयति आद्यास्तिस्रः क्रियां विना—" इति । जिह्वां समन्तादिति जिह्वां व्याप्य संभवतीत्यर्थः । अप्रतिवारवीर्या दुर्निवारशक्तिरित्यर्थः ॥ ॥ ४७—५० ॥

**कोलास्थिमात्रः कफसंभवो यो**
**ग्रन्थिर्गले कण्टकशूकभूतः ॥**
**खरः स्थिरः शस्त्रनिपातसाध्य-**
**स्तं कण्ठशालूकमिति ब्रुवन्ति ॥ ५१ ॥**

कण्टकशूकभूतः कण्टक इव शूकः, तं भूतः प्राप्तः । अतएव शिताङ्कुराचितत्वात् शालूकाकारत्वमस्य ॥ ५१ ॥

**जिह्वाग्ररूपः श्वयथुः कफात्तु**
**जिह्वाप्रबन्धोपरि रक्तमिश्रः ॥**
**ज्ञेयोऽधिजिह्वः खलु रोग एष**
**विवर्जयेदागतपाकमेनम् ॥ ५२ ॥**

जिह्वाप्रबन्धस्योपरि जिह्वामूलस्योपरिष्टादित्यर्थः । आगतपाकत्वेन पित्तमप्यत्रास्ति ॥ ५२ ॥

**बलास एवायतमुन्नतं च**
**शोफं करोत्यन्नगतिं निवार्य ॥**
**तं सर्वथैवाऽप्रतिवारवीर्यं**
**विवर्जनीयं वलयं वदन्ति ॥ ५३ ॥**

बलास एवेति बलासः श्लेष्मा ॥ ५३ ॥

**गले तु शोफं कुरुतः प्रवृद्धौ**
**श्लेष्मानिलौ श्वासरुजोपपन्नम् ॥**
**मर्मच्छिदं दुस्तरमेतदाहु-**
**र्बलाससंज्ञं निपुणा विकारम् ॥ ५४ ॥**

उपपन्नं सहितम् । निपुणाः धीमन्तः ॥ ५४ ॥

**वृत्तोन्नतो यः श्वयथुः सदाहः**
**कण्ड्वन्वितोऽपाक्यमृदुर्गुरुश्च ॥**
**नाम्नैकवृन्दः परिकीर्तितोऽसौ**
**व्याधिर्बलासक्षतजप्रसूतः ॥ ५५ ॥**
**समुन्नतं वृत्तममन्ददाहं**
**तीव्रज्वरं वृन्दमुदाहरन्ति ॥**
**तं चापि पित्तक्षतजप्रकोपा-**
**द्विद्यात् सतोदं पवनात्मकं[1] तु ॥ ५६ ॥**

वृत्तोन्नत इति । सदाहः मन्ददाहः । अपाकी ईषत्पाकी । बलासक्षतजप्रसूतः श्लेष्मरक्तजातः । भेदनं वृंदसत्वं (?) प्रतिपाद्यते । एतेन एकवृन्दो वृन्दश्च द्वावप्येकात्मकौ मतौ । एवं चैते कण्ठरोगाः सप्तदशेति । पञ्जिकायां पुनः आप्तावेव (?) वृन्दपाठः ॥ ५५ ॥ ५६ ॥

**वर्तिर्घना कण्ठनिरोधिनी या**
**चिताऽतिमात्रं पिशितप्ररोहैः ॥**
**नानारुजोच्छ्रायकरी त्रिदोषाज्**
**ज्ञेया शतघ्नीव शतघ्न्यसाध्या ॥ ५७ ॥**

वर्तिर्घनेति । "अवकण्टकसंछिन्ना शतघ्नी महती शिला" ॥ ५७ ॥

**ग्रन्थिर्गले त्वामलकास्थिमात्रः**
**स्थिरोऽल्परुक् स्यात् कफरक्तमूर्तिः ॥**
**संलक्ष्यते सक्तमिवाशनं च**
**स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥ ५८ ॥**

कफरक्तमूर्तिः कफरक्तकारणः । सक्तमिव लग्नमिव । अशनं भोजनम् ॥ ५८ ॥

**सर्वं गलं व्याप्य समुत्थितो यः**
**शोफो रुजो यत्र वसन्ति सर्वाः ॥**
**स सर्वदोषो गलविद्रधिस्तु**
**तस्यैव तुल्यः खलु सर्वजस्य ॥ ५९ ॥**

तस्यैव तुल्यः खलु सर्वजस्येति तस्यैव सान्निपातिकविद्रधेः सदृश इत्यर्थः ॥ ५९ ॥

१ 'पवनास्रजं तत्' इति पाठान्तरम् ॥

**शोफो महानन्नजलावरोधी**
**तीव्रज्वरो वातगतेर्निहन्ता ॥**
**कफेन जातो रुधिरान्वितेन**
**गले गलौघः परिकीर्त्यतेऽसौ ॥ ६० ॥**
**योऽतिप्रताम्यन् श्वसिति प्रसक्तं**
**भिन्नस्वरः शुष्कविमुक्तकण्ठः ॥**
**कफोपदिग्धेष्वनिलायनेषु**
**ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥ ६१ ॥**

अतिप्रताम्यन् अत्यर्थं प्रकर्षेण ताम्यन् तमः पश्यन् । श्वसिति निःश्वसितीत्यर्थः । प्रसक्तं निरन्तरम् । श्वसनात् वातात् ॥ ६० ॥ ६१ ॥

**प्रतानवान् यः श्वयथुः सुकष्टो**
**गलोपरोधं कुरुते क्रमेण ॥**
**स मांसतानः कथितोऽवलम्बी**
**प्राणप्रणुत् सर्वकृतो विकारः ॥ ६२ ॥**

प्रतानवानिति प्रतानवान् विस्तरवान् । अवलम्बी लम्बनशीलः । प्राणनुत् प्राणप्रेरकः ॥ ६२ ॥

**सदाहतोदं श्वयथुं सरक्त-**
**मन्तर्गले पूतिविशीर्णमांसम् ॥**
**पित्तेन विद्याद्वदने विदारीं**
**पार्श्वे विशेषात् स तु येन शेते ॥ ६३ ॥**

सदाहेति । पूतिविशीर्णमांसं दुर्गन्धिशटितमांसम् । पार्श्वे विशेषात् स तु येन शेते इति येनैव पार्श्वेन विशेषात् शेते तेनैव पार्श्वेन विदारी विशेषेण भवति । अन्यत्रापि अस्याः संभवः सामान्यतो न निवार्यते ॥ ६३ ॥

**सर्वसरास्तु वातपित्तकफशोणितनिमित्ताः ॥ ६४ ॥**

सर्वसरास्त्विति । वातनिमित्तपित्तनिमित्तरक्तनिमित्तश्चैक एवेति वातादिनिमित्तास्त्रय एव सर्वसराः । सर्वस्मिन् मुखे ये भवन्ति ते सर्वसराः ॥ ६४ ॥

**स्फोटैः सतोदैर्वदनं समन्ताद्**
**यस्याचितं सर्वसरः स वातात् ॥**
**रक्तैः सदाहैस्तनुभिः सपीतै-**
**र्यस्याचितं चापि स पित्तकोपात् ॥ ६५ ॥**
**कण्डूयुतैरल्परुजैः सवर्णै-**
**र्यस्याचितं चापि स वै कफेन ॥**
**रक्तेन पित्तोदित एक एव**
**कैश्चित् प्रदिष्टो मुखपाकसंज्ञः ॥ ६६ ॥**

इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण
महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां
निदानस्थानं समाप्तम् ।

स्फोटैरिति । रक्तैः स्फोटैरिति शेषः । कण्डूयुतैः इत्यादि स्फोटैरिति शेषः । रक्तेन इति रक्तेन कृत्वा योऽसौ सर्वसरः । कैश्चित् आचार्यैः । मुखपाकसंज्ञः प्रदिष्टः कथितः । स च पित्तोदित एक एव; न चत्वारः सर्वसराः, किन्तु त्रय एव । एवमेते पञ्चषष्टिर्मुखरोगाः सप्तस्वायतनेष्विति ॥ ६५ ॥ ६६ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां
समस्तनिबन्धार्थज्ञापिकायां सुश्रुतटीकायां
निदानस्थाने षोडशोऽध्यायः समाप्तः ।

समाप्तमिदं निदानस्थानम् ।

निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता।



## अथ शारीरस्थानम्।

### प्रथमोऽध्यायः।

**अथातः सर्वभूतचिन्ताशारीरं व्याख्यास्यामः॥१॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥२॥**

हेतुलक्षणप्रतिपादकान्निदानस्थानादधिगतव्याधिहेतुलक्षणस्य वैद्यस्य चिकित्साया अवसरः, चिकित्सा चाधिष्ठानविशेषज्ञानमन्तरेण न संभवतीत्यधिष्ठानज्ञापनाय शारीरस्थानमारभ्यते। शारीरस्थानेऽपि प्रतिपाद्ये आदौ सर्वशरीरकारणानां भूतानामेव चिन्ता कर्तुं युज्यत इत्याह,—अथात इत्यादि। सर्वाणि भूतानि स्थावरजङ्गमानि, महाभूतानि पृथिव्यादीनि वा, तेषां चिन्ता हेतुस्वलक्षणकार्यैश्चिन्तनं, कुत उत्पन्नानि? कानि चैषां स्वलक्षणानि? कानि कार्याणीति चिन्तनं, सैव यस्मिन्नध्यायेऽस्तीति मत्वर्थे पूर्ववच्छप्रत्ययमुत्पाद्य तल्लोपे प्रकृतिभावं च प्रतिपाद्य सर्वभूतचिन्तेति निष्पाद्यते। सर्वभूतचिन्ता च तच्छारीरं चेति पश्चात् कर्मधारयः। गयी तु सर्वभूतचिन्तानाम शारीरमिति पठति ॥ १ ॥ २ ॥

**सर्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः संभवहेतुरव्यक्तं नाम। तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम् ॥ ३ ॥**

तत्रादौ हेतुचिन्तामाह,—सर्वभूतानामित्यादि। एवंभूतमव्यक्तं मूलप्रकृत्यपरपर्यायं सर्वभूतानां कारणमिति पिण्डार्थः। किंविशिष्टं? अकारणं न विद्यते कारणं यस्य तदकारणं, अविकृतिरूपं न कस्यचित् कार्यमित्यर्थः। स्वरूपविशेषणमाह,—सत्त्वरजस्तमोलक्षणं—सत्त्वरजस्तमःस्वरूपम्। पुनरपि किंभूतमित्याह,—अष्टरूपमिति प्रकृतिभावेनैवाव्यक्तं महानहङ्कारः पञ्चतन्मात्राणीत्यष्टौरूपाणि यस्य तत्तथा। प्रकृतित्वं चाष्टानामव्यक्तादीनां सांख्येऽपि प्रतिपादितमस्ति। शिलापुत्रकन्यायेन रूपत्वं रूपित्वं चाव्यक्तस्य। अव्यक्तं महानहङ्कारः पञ्चभूतानीत्यष्टौ रूपाणीत्येके। अन्ये तु धर्मज्ञानवैराग्यैश्वर्यधर्माज्ञानावैराग्यानैश्वर्याण्यष्टौ रूपाण्याहुः। अपरे तु मनोबुद्ध्यहङ्कारमहाभूतान्याहुः। पुनरपि किंभूतं? अखिलस्य जगतः संभवहेतुः अभिव्यक्तिकारणम्। तत्र सर्वभूतानां कारणमित्यनेन कार्यकारणयोस्तादात्म्यं दर्शितं, अखिलस्य जगतः संभवहेतुरित्यनेन चाभिव्यक्तिहेतुत्वमिति न पौनरुक्त्यम्। गयी त्वन्यथा व्याख्याति, यथा—सर्वभूतानां कारणमित्यस्यैव भाष्यं निर्दिशन्नाह,—अखिलस्य जगतः संभवहेतुरित्यनेनोपादानकारणत्वमव्यक्तस्य जगदुत्पत्तौ प्रतिपादितम्। न व्यज्यते स्मेत्यव्यक्तं, प्रकृतिः प्रधानं मूलप्रकृतिरिति यावत् अव्यक्तपर्यायाः; ततः अव्यक्तं एकं शिलापट्टवदविवेच्यावयवं न पुनस्त्रिदण्डवत् विवेच्यावयवम्। क्षेत्रज्ञानां कर्मपुरुषाणां, अधिष्ठानं शरीरभावाय विषयः। अत्रोपमानमाह,—समुद्र इवेत्यादि। उदकभवाः औदकाः नदीनदसरस्तडागादयः; अन्ये तु औदकभावाः चराचरा मत्स्यपद्मादयः इत्याहुः ॥ ३ ॥

**तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव; तल्लिङ्गाच्च महतस्तल्लक्षण एवाहङ्कार उत्पद्यते, स तु त्रिविधो वैकारिकस्तैजसो भूतादिरिति; तत्र वैकारिकादहङ्कारात् तैजससहायात् तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते, तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्हस्तोपस्थपायुपादमनांसीति, तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि, इतराणि पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः; भूतादेरपि तैजससहायात् तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते, तद्यथा—शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति; तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः; तेभ्यो भूतानि व्योमानिलानलजलोर्व्यः; एवमेषा तत्त्वचतुर्विंशतिर्व्याख्याता ॥ ४ ॥**

ननु, कथमेकमव्यक्तमनेकधर्मिणां सर्वभूतानां कारणमित्याशङ्क्याव्यक्तात् सर्वभूतानामुत्पत्तिक्रममाह,—तस्मादिति। तस्मात् क्षेत्रज्ञाधिष्ठितात्। अव्यक्तात् महानिति बुद्धितत्त्वं, तत्तु सत्त्वसमुद्रेकात् निर्मलस्फटिकोपलप्रख्यं चिच्छायासंक्रान्तिप्राप्तचैतन्यं पुरुषवन्नानात्मकमध्यवसेयविषयं निश्चितार्थकारणमित्यर्थः। उत्पद्यते व्यक्तीभवति। तल्लिङ्ग एव इति सत्त्वरजस्तमःस्वभाव एव। तल्लिङ्गात् सत्त्वरजस्तमःस्वभावात् महतः इति बुद्धितत्त्वात्। तल्लक्षण एव इति सत्त्वरजस्तमः-

स्वभाव एवेत्यर्थः । अहङ्कारः अभिमानव्यापारलक्षणः । तल्लिङ्गादिति विशेषणेन शुद्धसत्त्वस्वरूपान्महत्तत्त्वान्नाहङ्कारस्योत्पत्तिरिति सूच्यते । तथा च चरकेऽप्यभिहितं,—"शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्तते । यया भिनत्त्यतिबलं महामोहमयं तमः॥ सर्वभावस्वभावज्ञो यया भवति निस्पृहः । यया नोपैत्यहङ्कारं नोपास्ते कारणं यया—" इत्यादि । वैकारिकादिसंज्ञास्तु पूर्वाचार्यैः संव्यवहाराय कृताः । तत्र वैकारिकः सात्त्विकः, तैजसः राजसः, भूतादिः तामसः । तस्य त्रिविधस्यापि कार्यमाह,—तत्रेत्यादि । तत्र सात्त्विकादहङ्काराद्राजससहायात् तमोमात्रयानुविद्धादेकादशेन्द्रियाणि; तल्लक्षणानि प्रकाशलक्षणानि, सत्त्वस्य प्रकाशकत्वात् । तान्यहङ्कारादुत्पन्नान्यहङ्कारकार्याणि इति सांख्ये, वैद्यके तु भौतिकानि । पूर्वाणि पञ्च श्रोत्रादीनि बुद्धीन्द्रियाणि, बुद्धेराश्रयत्वात् । इतराणि वाक्प्रभृतीनि कर्मेन्द्रियाणि, कर्मण आश्रयत्वात् । तेषां उभयात्मकं बुद्ध्यात्मकं कर्मात्मकं मनो, बुद्धीन्द्रियाणां कर्मेन्द्रियाणां च मनोऽधिष्ठातानामेव प्रवृत्तेः । भूतादेरिति तामसादहङ्कारात् राजससहायात् सत्त्वमात्रयानुविद्धात् तल्लक्षणान्येव मोहादिलक्षणान्येव । तत्रानुद्भूतस्वभावानि बाह्येन्द्रियग्राह्याणि शब्दादीन्येव तन्मात्राणि तानि चायोगिभिरेव ग्राह्याणि । सा मात्रा यस्मिन् तत्तन्मात्रम् । तेषामित्यादि तेषां तन्मात्राणाम् । विशेषा इति अनुभवयोग्यैः सुखदुःखमोहरूपैर्धर्मैर्विशिष्यन्ते इति विशेषाः शब्दादयः, तन्मात्राणि त्वविशेषाणि यतस्तानि पुनरनुभवयोग्यैः सुखदुःखादिभिर्विशेष्टुं न शक्यन्ते, सूक्ष्मत्वात् । तेभ्यः पञ्चभ्यः शब्दतन्मात्रादिभ्यः एकोत्तरपरिवृद्धया व्योमादय उत्पद्यन्ते । तद्यथा—शब्दतन्मात्रात् शब्दगुणं व्योम, शब्दतन्मात्रसहितात् स्पर्शतन्मात्रात् शब्दस्पर्शगुणो वायुः, शब्दस्पर्शतन्मात्रसहितात् रूपतन्मात्रात् शब्दस्पर्शरूपगुणं तेजः, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रात् शब्दस्पर्शरूपरसगुणा आपः, शब्दस्पर्शरूपरसतन्मात्रसहितात् गन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धगुणा पृथिवी । पातञ्जलिमतानुसारिणश्च शब्दादिभ्य एव व्योमादीनामुत्पत्तिमिच्छन्ति । शब्दादीनां व्योमादिमहाभूतगुणानां धर्मिणोऽभिन्नत्वेन पृथक्त्वं निरस्यन् उक्तस्योपसंहारमाह,—एवमिति ॥ ४ ॥

**तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः; कर्मेन्द्रियाणां यथासङ्ख्यं वचनादानानन्दविसर्गविहरणानि ॥ ५ ॥**

तत्रेत्यादि विषया ग्राह्याः । वचनादानानन्दविसर्गविहरणानीत्यत्र विषया इति संबध्यते; तेनोच्यते यत् तद् वचनं वक्तव्यमुच्यते, एवं कर्मप्रत्ययान्तत्वात् आदानं आदातव्यं, आनन्दः आनन्दनीयं, विसर्गः विसर्जितव्यं, विहरणं विहर्तव्यं स्थानम् ॥५॥

**अव्यक्तं महानहङ्कारः पञ्चतन्मात्राणि चेत्यष्टौ प्रकृतयः; शेषाः षोडश विकाराः ॥ ६ ॥**

उक्तायास्तत्त्वचतुर्विंशतेरुक्तमेव धर्मान्तरं क्वचित् किंचिन्निदर्शयन्नाह,—अव्यक्तमित्यादि । प्रकृतय इति अपरेषां कारणभूताः; अव्यक्तमिति विच्छिद्य पाठः केवलहेतुभावेनाव्यक्तं प्रकृतिरेवेति बोधनार्थम् । तन्मात्राणि चेति चकारः प्रकृतयश्चेत्यत्र संबन्धनीयः । तेन महदादयः सप्त कार्यत्वेन विकृतयोऽपि । शेषा एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोडश विकाराः कार्यमित्यर्थः ॥ ६ ॥

**स्वः स्वश्चैषां विषयोऽधिभूतं; स्वयमध्यात्मं; अधिदैवतमथ—बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः, मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्यश्चक्षुषः, रसनस्यापः, पृथिवी घ्राणस्य, वचसोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रं, प्रजापतिरुपस्थस्येति ॥ ७ ॥**

अस्मिन् चतुर्विंशतिके तत्त्वराशौ प्रकाशकत्वेन बुद्ध्यादयः प्रधानभूताः, अतस्ते यत्रस्थं प्रकाश्यं यत्र स्थिता यदनुग्रहेणैव प्रकाशयन्ति, तत्प्रकारत्रयमधिभूतादिभेदेनाह,—स्वः स्व इत्यादि । एषां बुद्ध्यहङ्कारश्रोत्रादिबुद्धीन्द्रियाणां वागादिकर्मेन्द्रियाणां मनसश्च स्वः स्वः आत्मीयो विषयोऽध्यवसेयोऽभिमन्तव्यः स्वकल्पनीयादि लक्षण्ये । अधिभूतं भूतेष्वधि भूतानि महाभूतानि प्राणिनो वा । एतेन बुद्ध्यादेरध्यवसायादिव्यापारस्याध्यवसेयादिविषयो भूतेष्विति प्रतिपादितम् । केचित् स्वः स्व एषां विषयोऽधिभूतसंज्ञ इति व्याख्यानयन्ति । स्वयमिति एतानि बुद्ध्यादीनि त्रयोदश स्वयमध्यात्मम् । आत्मन्यपि आत्मशब्दोऽत्र स्वशरीरवचनः, तेन स्वशरीरबुद्ध्यादिकमात्मनः परमात्मपर्यायस्य वा योग्यो विषयः अध्यात्मम्; अन्ये तु बुद्ध्यादिकं स्वयमध्यात्मसंज्ञमिति व्याख्यानयन्ति । अधिदैवतमिति देवतानामधिकृतत्वं अधिदैवतम् । तदेव बुद्ध्यादिषु प्रकटीकरोति—अथ बुद्धेर्ब्रह्मेत्यादि या या देवता विश्वरूपस्य विष्णोरवयवादुत्पन्ना सा सा तस्यावयवस्याधिदैवत्वमापन्ना बोद्धव्या । अयं चाधिभूतादिभावो वेदान्तेऽपि वर्णितः । यथा—बुद्धिरध्यात्मं, बोद्धव्यं अधिभूतं, ब्रह्माधिदैवतं; अहङ्कारः अध्यात्मं, अहङ्कर्तव्यमधिभूतं, रुद्रोऽधिदैवतं; मनोऽध्यात्मं, मन्तव्यमधिभूतं, चन्द्रोऽधिदैवतं; श्रोत्रमध्यात्मं, श्रोतव्यमधिभूतं, दिशोऽधिदैवतं; त्वगध्यात्मं, स्पर्शनीयमधिभूतं, वायुरधिदैवतं; चक्षुरध्यात्मं, द्रष्टव्यमधिभूतं, सूर्योऽधिदैवतं; रसनाध्यात्मं, रसनीयमधिभूतं, वरुणोऽधिदैवतं; घ्राणमध्यात्मं, घ्रातव्यमधिभूतं; भूमिरधिदैवतं; वागध्यात्मं, वक्तव्यमधिभूतं, अग्निरधिदैवतं; हस्तावध्यात्मं, आदातव्यमधिभूतं, इन्द्रोऽधिदैवतं; पादावध्यात्मं, गन्तव्यमधिभूतं, विष्णुरधिदैवतं; पायुरध्यात्मं विसर्जनीयमधिभूतं, मित्रोऽधिदैवतं; उपस्थोऽध्यात्मं, आनन्दनीयमधिभूतं, प्रजापतिरधिदैवतमित्यादि ॥ ७ ॥

**सर्व एवाचेतन एष वर्गः, पुरुषः पञ्चविंशतितमः कार्यकारणसंयुक्तश्चेतयिता भवति । सत्यप्य-**

**चैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ति क्षीरादींश्चात्र हेतूनुदाहरन्ति ॥ ८॥**

तत्र सर्व इत्यादि । सर्व एवैष वर्गोऽव्यक्तादिकोऽचेतनः, कारणस्याव्यक्तस्याचेतनत्वेन तत्कार्यस्य महदादेरचेतनत्वात् । कार्यकारणसंयुक्त इति कार्येण महदादिविकारगणेन, कारणेन मूलप्रकृत्या, संयुक्तः संयोगी । तस्य कैवल्यार्थी मोक्षार्थी प्रधानस्य मूलप्रकृतेः प्रवृत्तिमुपदिशन्त्याचार्याः । कथमचेतनः प्रवर्तते इत्याह—क्षीरादीनित्यादि । यथा क्षीरमज्ञं वत्सविवृद्ध्यर्थं प्रवर्तते । आदिशब्दाच्च यथैकान्ते कमनीयकामिनीसुरतमहोत्सवे तत्सुखातिशयोत्पादनार्थं रेतः प्रवर्तते, तद्वदित्यर्थः ॥ ८ ॥

**अत ऊर्ध्वं प्रकृतिपुरुषयोः साधर्म्यवैधर्म्ये व्याख्यास्यामः । तद्यथा—उभावप्यनादी उभावप्यनन्तौ उभावप्यलिङ्गौ उभावपि नित्यौ उभावप्यनपरौ उभौ च सर्वगताविति; एका तु प्रकृतिरचेतना त्रिगुणा बीजधर्मिणी प्रसवधर्मिण्यमध्यस्थधर्मिणी चेति, बहवस्तु पुरुषाश्चेतनावन्तोऽगुणा अबीजधर्मिणोऽप्रसवधर्मिणो मध्यस्थधर्मिणश्चेति ॥ ९ ॥**

अत इत्यादि । प्रकृतिरव्यक्तं, पुरुषः आत्मा । साधर्म्यं समानो धर्मः, वैधर्म्यं विसदृशो धर्मः, तौ व्याख्यास्यामः कथयिष्यामः । उभावपि अलिङ्गौ इति न विद्यते लिङ्गं ययोस्तावलिङ्गौ, उभावपि लयं क्वचिदपि न गच्छत इत्यर्थः । न विद्यतेऽपरो याभ्यां तौ अनपरौ, यतस्तावेव प्रकृतिपुरुषौ महदादिभ्यः परौ । सर्वगतौ सर्वं व्याप्य स्थितौ । साधर्म्यमुक्त्वा वैधर्म्यमाह,—तयोर्मध्ये एका प्रकृतिः अव्यक्तापरपर्याया, सा च त्रिगुणा सत्त्वरजस्तमोगुणा । सत्वरजस्तमसां गुणानां साम्यावस्थायां स्थिता सर्वेषां महदादिविकाराणां बीजभावेनावस्थिता बीजधर्मिणी इत्युच्यते; गयी तु संहारे भूतेन्द्रियतन्मात्राहङ्कारमहदादीनामाधारभूतेति बीजधर्मिणी । सैव सिसृक्षुणा विभुना पुरुषेण सार्द्धं क्षोभमागम्य साम्यावस्थातः प्रच्युता महदहङ्कारादिक्रमेण चराचरस्य जगतः प्रसवित्रीति प्रसवधर्मिणी इत्युच्यते । अमध्यस्थधर्मिणी इति सत्त्वादिगुणराशितया सुखादिरूपत्वात्, सुखी हि सुखमभिलिप्सन् दुःखी दुःखं विद्विषन् अमध्यस्थो भवति, प्रकृतिश्च सत्वादिरूपा ततो न मध्यस्था । बहवः इति युगपन्मरणासंभवादनेके पुरुषाः, पुरुषशब्देन महदादिकृतं सूक्ष्मं लिङ्गशरीरमुच्यते, तच्च योगिनामेव दृश्यं, तत्र पुरौ शेरते इति पुरुषाः । अगुणाः इति अविद्यमानसत्त्वादिगुणाः । अबीजधर्मिणः इति महदादीनां महाप्रलये प्रकृताविव तेष्वनवस्थानात् । मध्यस्थधर्मिणः इति प्रीत्यप्रीतिविषादायोगेनेच्छाद्वेषशून्यत्वात् । तदुक्तं साङ्ख्ये,—"तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य । कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च" इति ॥९॥—

**तत्र कारणानुरूपं कार्यमिति कृत्वा सर्व एवैते विशेषाः सत्वरजस्तमोमया भवन्ति; तदञ्जनत्वात् तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्तीत्येके भाषन्ते ॥ १० ॥**

इदानीमुक्तमेव तदुपसंहरन्नाह,—तत्रेत्यादि । कारणस्य प्रकृतेः अनुरूपं सदृशं कार्यं महदादिकम् । विशेषाः प्रकाराः महदादिकाः । संयुक्तस्य पञ्चविंशतितमस्य, पुरुषस्यापि सत्त्वादिगुणत्वं दर्शयन्नाह,—तदञ्जनत्वादित्यादि । तेषां सत्त्वरजस्तमसां, अञ्जनं लक्षणं व्यक्तिर्वा येषु ते तदञ्जनाः पुरुषाः सत्त्वादिलक्षणा इत्यर्थः, तेषां भावस्तत्त्वं, तस्मात् तदेव । कुत इत्याह,—तन्मयत्वादिति । सत्त्वादिमयत्वात् । सत्त्वादिमयत्वं पुनः पुरुषाणां सत्त्वादिरूपे महदादौ प्रतिबिम्बनात् । यथा—तडागोदके प्रतिबिम्बितो विधुस्तडागोदकप्रकम्पनेन प्रकम्पनात्मकः कथ्यते एवं सत्त्वादिरूपे महदादौ प्रतिबिम्बिताः पुरुषाः सत्त्वादिमया भवन्ति न तु वास्तवं सत्वादिमयत्वं; तादृशाच्च तन्मयत्वात् तल्लक्षणाः तद्गुणाः सुखिनो दुःखिनो मूढाश्च पुरुषा भवन्ति । गयी तु तैः सत्वादिभिरञ्जनं व्यक्तिर्यस्य महदादेस्तत्तदञ्जनं तदस्यास्तीति मत्वर्थीयोऽकारप्रत्यय इति तत्संबन्धात् पुरुषस्य सत्वादिभिरेवाञ्जनं इत्याह । तन्मयत्वात् सत्वादिप्रकृतिकारणत्वात् । तेषां तदञ्जनत्वं निर्विकारस्यापि विकारिवत् संयोगात्; यथा सन्ध्यारागिरविकरनिकरसंयोगादरुणगगनतलोपलम्भः इति । पूर्वोक्तस्य सर्वस्याप्येकीयमतत्वं दर्शयन्नाह, इत्येके इति ॥१०॥

**वैद्यके तु ।**

**स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा ॥**
**परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः ॥ ११ ॥**

स्वमतं दर्शयन्नाह,—वैद्यक इति । अत्रैके स्वभाववादिनः स्वभावं सर्वस्य प्रकृतिं कारणमूचुः । तथाहि—"कः कण्टकानां प्रकरोति तैक्ष्ण्यं, चित्रं विचित्रं मृगपक्षिणां च । माधुर्यमिक्षौ कटुता मरीचे, स्वभावतः सर्वमिदं प्रवृत्तम्—" इति । ईश्वर एव उर्वीपर्वततर्वादिजन्तूनां स्वर्गनरकादेश्च कारणमित्यन्ये । उक्तंच—"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव च" इति। काल एव जगतः सृष्टिस्थितिप्रलयनिमित्तमिति कालकारणिकाः । उक्तं च ज्योतिःशास्त्रविदा श्रीपतिना—"प्रभवविरतिमध्यज्ञानवन्ध्या नितान्तं विदितपरमतत्त्वा यत्र ते योगिनोऽपि । तमहमिह निमित्तं विश्वजन्मात्ययानामनुमितमभिवन्दे प्रग्रहैः कालमीशम्—" इति । यो यतो भवति तत्तन्निमित्तमिति यादृच्छिकाः । यथा—तृणारणिनिमित्तो वह्निरिति । पूर्वजन्मार्जितौ धर्माधर्मौ नियतिः, सैव सर्वस्य कारणमिति नियतिवादिनः । प्रधानमेव महदहङ्कारादिरूपतया परिणतं सर्वस्य निमित्तमिति परिणामवादिनः । एतत् सर्वमत्रानुमतं सर्ववेदपारिषदत्वादायुर्वेदस्य । सुश्रुताचार्येणापि स्वभावादिभेदभिन्नाया

षड्विधाया अपि प्रकृतेरुदाहरणान्यभिहितानि । तत्र स्वभावस्य तावत् कारणत्वमाह,—"अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते;" पुनश्च "सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ। तलेष्वसंभवो यश्च रोम्णामेतत् स्वभावतः—" इति; पुनश्चोक्तं,—"धातुषु क्षीयमाणेषु वर्धेते द्वाविमौ सदा । स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः" इति; पुनरप्याह,—"निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते। स्वभाव एव वा हेतुर्गरीयानपि कीर्त्यते—" इति; अन्यत्राप्युक्तं—"स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः। स्वभावाद् गुरवो माषा वराहमहिषादयः"—इति । ईश्वरोऽपि वह्निरूपो जीवितादेः कारणत्वेनोदाहृतः; तथाहि—"जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः। सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते । अग्निमूलं बलं पुंसां बलमूलं हि जीवितम्"—इति । कालस्तु शीतोष्णलक्षणः; उक्तं च—"महाभूतविशेषांस्तु शीतोष्णद्वयभेदतः । काल इत्यध्यवस्यन्ति न्यायमार्गानुसारिणः ॥" अयं च ऋतुचर्याध्याये दोषाणां सञ्चयप्रकोपोपशमद्वारेण हेतुरुक्तः । यदृच्छा पुनरलक्षित आकस्मिकपदार्थाविर्भावः, उक्तं च "यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्विधिज्ञः" इत्यादि । नियतिरत्रापि धर्माधर्मौ, तद्धेतुत्वमाह,—"ब्रह्मस्त्रीसज्जनवधपरस्वहरणादिभिः । कर्मभिः पापरोगस्य प्राहुः कुष्ठस्य संभवम् ॥" "कर्मजा व्याधयः केचित्"—इति चोक्तम्। परिणामस्य हेतुत्वमाह,—"जाठरामेस्तु संयोगात् यदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः ॥;" "ता एवौषध्यः कालपरिणामात् परिणतवीर्या बलवत्यो हेमन्ते भवन्त्यापश्च;" 'सम्यक्परिणतस्याहारस्य सारो रसः।;' "एवं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो भवति–इति॥"इत्थमेताः षड्प्रकृतयो वैद्यकानुगता दर्शिताः। ननु, स्वभावादयः षट् पदार्थाः प्रकृतेरष्टरूपायाः पर्यायाः स्युरथवाऽन्यार्थाभिधायित्वेन भिन्नार्थाः; तत्र भिन्नार्थत्वेऽपि विकल्पद्वयं; किमेतैः स्वभावादिभिर्भिन्नार्थैः किंचित् स्वभावेन किंचिदीश्वरेण इत्येवं प्रकारेण मिलित्वा जगदारभ्यते? उत एते स्वभावादयः पृथक् पृथगेव विश्वजननसमर्थाः? इत्यनेकधा विकल्पमुत्पाद्य जेज्झटाचार्येणेश्वरं विहाय स्वभावादयः प्रकृतेरष्टरूपायाः पर्यायत्वेनाभिहिताः । यत्तु वैद्यके "स्वभावमीश्वरं कालम्"—इत्यादिवाक्येन विपुलदर्शिभिः स्वभावादीनां भिन्नमेव प्रकृतित्वं प्रतिपादितं तत्तथा स्वरूपेण तेषामवभासनात् । परमार्थतस्तु गुणत्रयात्मिका प्रकृतिरेव कारणम् । यतः स्वभावादयश्चत्वारः प्रकृतिपरिणामस्य धर्मविशेषतया प्रकृतावेवान्तर्भवन्ति । तथाहि—स्वभावस्तावत् सत्वरजस्तमसां तद्विकाराणां पृथिव्यादिमहाभूतानां च परिणामस्य तादृशो विशेष इति प्रकृतिपरिणामादन्यो न भवति; नियतेरपि पूर्वकृतसदसत्कर्मरूपाया रजोगुणपरिणामलक्षणत्वेन न प्रकृतेरन्यत्वं; कालोऽपि चन्द्रार्कादिगतिक्रियालक्षणः, तत्र तु महाभूतानां परिणामविशेषात् शीतोष्णादयो भवन्ति, तदुक्तं—"महाभूतविशेषांस्तु शीतोष्णद्वयभेदतः । काल इत्यध्यवस्यन्ति न्यायमार्गानुसारिणः" इति, क्रियात्वेन रजोगुणपरिणामत्वात् महाभूतपरिणामविशेषत्वाच्च न कालस्य प्रकृतेरन्यत्वम्; ईश्वरश्च पञ्चविंशतितमः पुरुषः प्रकृतेः क्षोभकतया कारणत्वेनोदाहृत एव; यदृच्छा च कादाचित्कत्वाद्भूतपरिणामविशेषान्नान्या । किंचास्मिन् शास्त्रे प्रकृतिपरिणामात्मकं विश्वं पठ्यते। तथाहि—सात्विकं कायलक्षणं, राजसं कायलक्षणं, तथा सत्वबहुलमाकाशमित्यादि । गयी त्वन्यथा व्याख्याति । यथा—वैद्यके तु विपुलदर्शिनः स्वभावादीनां षण्णां प्रकृतित्वं प्रतिपादयन्ति। ते च स्वभावादयः समुच्चयेन जगदुत्पत्तौ कारणभूताः । तत्रापि प्रकृतिपरिणामस्योपादानकारणत्वं स्वभावादीनां च पञ्चानां निमित्तकारणत्वमिति ॥ ११ ॥

**तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् ॥**
**तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत ॥ १२ ॥**
**तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्वदा ॥**
**भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते॥१३**
**यतोऽभिहितं तत्सम्भवद्रव्यसमूहो भूतादिरुक्तः; भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः ॥ १४ ॥**

एकीयमतेन कारणानुरूपं कार्यमित्यादिवाक्यात् कारणमयत्वं कार्यस्य प्रतिपाद्य स्वमतेऽपि कारणमयत्वं प्रतिपादयन्नाह,—तन्मयानीति । चलोष्णद्रवखरस्वभावादिधर्मविशेषाक्रान्तप्रकृतिपरिणाममयानि भूतान्याकाशादीनि तद्गुणान्येव इति सत्वरजस्तमोगुणान्येवेत्यर्थः, सत्वबहुलमाकाशमित्याद्युक्तत्वात्। गयी तु ततो जातानि भूतानीति पठित्वा व्याख्याति—ततः स्वभावादेःनिमित्तकारणत्वात् प्रकृतिपरिणामाच्चोपादानकारणानि भूतान्याकाशादीनि तद्गुणानि कारणगुणानि । तैश्चेत्यादि तैः आकाशादिभिर्भूतैः, तल्लक्षणः भूतलक्षणः, कृत्स्नः समस्तः, भूतग्रामः स्थावरजङ्गमात्मकः, व्यजन्यत विविधो जनितः। भूतानां पृथिव्यादीनां पुनर्लक्षणं स्थिरगुरुकठिनत्वमित्यादि तल्लक्षणश्च स्थावरजङ्गमात्मको भूतग्रामः। तस्य पञ्चमहाभूतारब्धस्य भूतग्रामस्य परस्परोपकार्योपकारकत्वेन व्यवस्थितस्य उपयोगः प्रयोजनम्, अभिहितः कथितः। चिकित्सां प्रति रोगापनयनं लक्षीकृत्य। सर्वदा नित्यगे आवस्थिके च काले। कुतः? यस्मात् तेभ्यः पञ्चमहाभूतारब्धभूतग्राम्येभ्यः परं चिकित्सिते चिन्ता नास्ति । तदुक्तमाद्ये अध्याये, "तत्रास्मिन् पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते। तस्मिन् क्रिया, सोधिष्ठानं, कस्मात्? लोकद्वैविध्यात्, लोको हि द्विविधः—स्थावरो जङ्गमश्च, तस्मिन् पुरुषः प्रधानः, तस्योपकरणमन्यत्"—इति । तेन पञ्चमहाभूतारब्धस्यैव भूतग्रामस्य चिकित्सोपकरणत्वम् । अतो भूतेभ्यः परं यद् व्यक्तादि तत्र चिन्ताऽपि नास्ति। अयमेवार्थोऽन्यत्रापि निर्दिष्ट इति दर्शयन्नाह,—यत इत्यादि। एतत्तत्र बीजाध्याये व्याख्यातं, अत्रापि

**चतस्रः, अष्टौ हन्वोः, एकैका काकलकगलयोः, द्वे तालुनि, एका जिह्वायां, ओष्ठयोर्द्वे, नासायां द्वे, द्वे नेत्रयोः, गण्डयोश्चतस्रः, कर्णयोर्द्वे, चतस्रो ललाटे, एका शिरसीत्येवमेतानि पञ्च पेशीशतानि ॥ ३७ ॥**

**शिरास्नाय्वस्थिपर्वाणि सन्धयश्च शरीरिणाम् ॥**
**पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥ ३८ ॥**

पञ्च पेशीशतानीत्यादि । मांसावयवसङ्घातः परस्परं विभक्तः 'पेशी' इत्युच्यते । गयी तु, 'कोष्ठे षष्टिः ग्रीवां प्रत्यूर्ध्वं चत्वारिंशत्' इति पठति । एकैकस्यां त्वित्यादि । प्रपदं पादाग्रम् । कोष्ठगता आह,—तिस्रः पायोरित्यादि । गयी तु 'एका मेढ्रे, सेविन्यां चैका, द्वे अपरे वृषणयोः, स्फिचोर्द्वयोर्दश, तिस्रो बलिसंज्ञका गुदे, द्वे बस्तिशिरसि, सप्तोदरफलके यकृदादिभिः सह, नाभ्यामेका, पृष्ठे सन्धिनिविष्टाः पञ्च, पार्श्वयोः, दीर्घा पंच दश वक्षसि, अक्षकांशौ प्रति सर्वतः सप्त, द्वे हृदि, एका आमाशये, द्वे अभ्यन्तरतः कोष्ठे" इति काष्ठे षष्टिं पठति । वृद्धवाग्भटोऽपि कोष्ठे षष्टिमेवाह । ग्रीवां प्रत्यूर्ध्वगा आह,—ग्रीवायामित्यादि । गयी तु "ग्रीवायां चतस्रः, एका कण्ठे, तथा काकलकेऽप्येका, तालुनि द्वे, रसनायां षट्, अधरयोर्द्वे, घोणायांच द्वे, द्वे कर्णयोः, प्रत्येकं हन्वोश्चतस्रः, अक्ष्णोः द्वे, अलिके चतस्रः, मूर्धनि षड्—" इत्यूर्ध्वकाये चत्वारिंशत् पठति ॥ ३७ ॥ ३८ ॥

**स्त्रीणां तु विंशतिरधिका । दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च यौवने तासां परिवृद्धिः, अपत्यपथे चतस्रस्तासां प्रसृतेऽभ्यन्तरतो द्वे, मुखाश्रिते बाह्ये च वृत्ते द्वे, गर्भच्छिद्रसंश्रितास्तिस्रः, शुक्रार्तवप्रवेशिन्यस्तिस्र एव । पित्तपक्वाशययोर्मध्ये गर्भशय्या यत्र गर्भस्तिष्ठति ॥ ३९ ॥**

अधिकाया विंशतेर्विवरणमाह,—स्त्रीणां त्वित्यादि । अपत्यपथे योनौ चतस्रः । चतसृणामेव विवरणमाह,—तासामित्यादि । मुखाश्रिते योनिमुखाश्रिते । अभ्यन्तरतः प्रसृते योनेः अभ्यन्तरतः प्रसारं प्राप्ते मूत्रस्रोतः स्वरूपे इत्यर्थः । बाह्ये निर्गते, वृत्ते वर्तुले, योनिकर्णिकास्रोतःपार्श्वद्वयगतत्वेन द्वे मांसपेश्यौ । गर्भच्छिद्रसंश्रिता इति गर्भमार्गमाश्रितास्तिस्रः आवर्तत्रयरूपेण, तृतीये चावर्ते, मत्स्यमुखाकारा गर्भशय्या । तासां शुक्रार्तवप्रवेशिन्यश्च तिस्रः पेश्यः । क्व गर्भशय्येत्याह,—पित्तपक्वाशययोरित्यादि ॥ ३९ ॥

**तासां च बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिशिरास्नायुप्रच्छादका यथाप्रदेशं स्वभावत एव भवन्ति ॥४०॥**

इदानीं तासां पेशीनां स्थानवशान्नानारूपत्वमाह,—तासां चेत्यादि । तासां पेशीनां, बहलाः बहुतराः, पेलवाः अल्पाः, अणवः सूक्ष्माः, तद्विपरीताः स्थूलाः, पृथवः विस्तीर्णाः, वृत्ताः वर्तुलाः, ह्रस्वाः अदीर्घाः, दीर्घाः आयताः, स्थिराः कठिनाः, मृदवः कोमलाः, श्लक्ष्णाः स्पर्शसुखाः, तद्विपरीताः कर्कशाः ॥ ॥ ४० ॥

भवन्ति चात्र ।

**पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षणमुष्कजाः ॥**
**स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥४१॥**

केचित्तन्त्रकाराः स्त्रीणां मेढ्रमुष्काभावात् तदाश्रितानां पेशीनां अन्यत्रावस्थानं पठन्ति । तन्मतमाह,—भवति चात्रेत्यादि । लक्षणेति लक्ष्यते ज्ञायते पुमाननेनेति लक्षणं लिङ्गं शिश्नमिति यावत् । फलं गर्भाशयः । ताः इति पेश्यः । गयी तु, अमुं तन्त्रान्तरीयश्लोकं न पठति । किन्तु एवमेतानि पञ्च पेशीशतानीत्यत्र पुंसामिति पदं पठित्वा पुंसामेव पञ्चपेशीशतानि स्त्रीणां तु तिसृभिरूनानि शतानि पञ्चशतानीति व्याख्याति । अत्रार्थे च भोजवाक्यं दृष्टान्तीकरोति । तथाच भोजवाक्यं,—"पञ्चपेशीशतान्येव स्त्रीवर्जं विद्धि भूमिप । अतश्च तिस्रो हीयन्ते स्त्रीणां सेफसि मुष्कयोः"—इति ॥ ४१ ॥

**मर्मशिराधमनीस्रोतसामन्यत्र प्रविभागः॥ ४२ ॥**

परिशिष्टमर्मशिरादिव्याकरणं चास्तीति मन्यमान आह,—मर्मेत्यादि । अन्यत्र इति प्रत्येकमर्मनिर्देशे धमनीव्याकरणे च ॥ ४२ ॥

**शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता सा प्रकीर्तिता ॥**
**तस्यास्तृतीये त्वावर्ते गर्भशय्या प्रतिष्ठिता ॥ ४३ ॥**
**यथा रोहितमत्स्यस्य मुखं भवति रूपतः ॥**
**तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः ॥ ४४**

गर्भशय्यानन्तरमावर्तं प्रतिपादयितुमाह,—शङ्खनाभ्याकृतिरित्यादि । तत्संस्थानामिति अल्पमुखामन्तर्महासुषिरामित्यर्थः ॥ ४३ ॥ ४४ ॥

**आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः ॥**
**स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥४५**

मूढगर्भोद्धरणार्थं तत्र गर्भस्थितिस्वरूपमाह,—आभुग्न इत्यादि । आभुग्नः सङ्कुचिताङ्गः, स्वभावात् पूर्वकर्माक्षेपात् ॥४५॥

**त्वक्पर्यन्तस्य देहस्य योऽयमङ्गविनिश्चयः ॥**
**शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित् ॥ ४६ ॥**

इदानीं शल्यतन्त्रस्योत्कर्षं दर्शयन्नाह,—त्वक्पर्यन्तस्येत्यादि ॥ ४६ ॥

**तस्मान्निःसंशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता ॥**
**शोधयित्वा मृतं सम्यक् द्रष्टव्योऽङ्गविनिश्चयः ॥४७**
**प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टं च यद्भवेत् ॥**
**समासतस्तदुभयं भूयो ज्ञानविवर्धनम् ॥ ४८ ॥**

सर्वावयवपरिमाणं प्रत्यक्षलक्ष्यं संशयच्छेदनाय स्यात्, तस्मात्तदुपायं दर्शयन्नाह,—तस्मान्निःसंशयमित्यादि ॥ ४७ ॥ ४८ ॥

**तस्मात् समस्तगात्रमविषोपहतमदीर्घव्याधिपीडितमवर्षशतिकं निःसृष्टान्त्रपुरीषं पुरुषमवहन्त्या-**

मापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गमप्रकाशे देशे कोथयेत्, सम्यक्प्रकुथितं चोद्धृत्य ततो देहं सप्तरात्राद्धुशीरबालवेणुवल्कलकूर्चानामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा ॥ ४९ ॥

कथं पुनः शास्त्रदृष्टं प्रत्यक्षतो दृश्यते ? इत्याह,—तस्मात् समस्तगात्रमित्यादि । अङ्गहीने आगमोक्तावयवसंख्याद्यप्रत्ययात् । विषोपहते विषज्वालाविशीर्णत्वगादि स्यात् । दीर्घव्याधिपीडिते हि त्वगादिमानासंभवः । मुञ्जाद्यवेष्टने मत्स्यादिभक्षितत्वादसंपूर्णावयवता । अपञ्जरस्थे जलरयेण भ्रश्यति । प्रकाशे गृध्रादिभक्षणेन भयम् ॥ ४९ ॥

श्लोकौ चात्र भवतः ।

न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः ॥
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥ ५० ॥

त्वक्पर्यन्तो देहश्चक्षुरिन्द्रियकल्प्यो न क्षेत्रज्ञ इत्याह,—न शक्य इत्यादि । विभुः आत्मा चक्षुषा द्रष्टुं न शक्यः, यतः सूक्ष्मतमः । दृश्यते ज्ञानचक्षुर्भिः इति सद्गुरूपदेशजज्ञानान्येव चक्षूंषि तैर्दृश्यते । तपांसि चान्द्रायणादीनि तानि चक्षूंषि दृष्टयस्तैरपि च ॥ ५० ॥

शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः ॥
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः ॥ ५१ ॥

शास्त्रतः प्रत्यक्षतश्च दर्शनं सन्देहापोहकारणं, तदाह,—शरीरे चैवेत्यादि । अवापोह्य निराकृत्येत्यर्थः ॥ ५१ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातः प्रत्येकमर्मनिर्देशं शारीरं व्याख्यास्यामः ॥१॥
यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥

शारीरसंख्याव्याकरणे हि मांसशिरादिव्याकरणमभिहितं, मर्माणि च मांसशिरादिसंश्रितानि, अतस्तदनन्तरं मर्मणां निर्देशो युज्यते इत्याह—अथात इत्यादि । प्रत्येकशब्दादग्रे मांसादिशब्दो लुप्तो द्रष्टव्यः, तेन प्रत्येकमांसादिमर्मणां निर्देशः विवरणं यस्मिन् तत् तथा ॥ १ ॥ २ ॥

सप्तोत्तरं मर्मशतम् । तानि मर्माणि पञ्चात्मकानि भवन्ति, तद्यथा—मांसमर्माणि, शिरामर्माणि, स्नायुमर्माणि, अस्थिमर्माणि, सन्धिमर्माणि चेति ३ न खलु मांसशिरास्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्माणि भवन्ति, यस्मान्नोपलभ्यन्ते ॥ ४ ॥

तेषां संख्यामाह,—सप्तोत्तरमित्यादि । पञ्चात्मकानि पञ्चप्रकाराणि । तान्येव पञ्चप्रकाराण्याह,—तद्यथेत्यादि । ननु, कथं मांसादीनि पञ्चैव मर्माणि नाधिकानीति दर्शयन्नाह,—न खल्वित्यादि । ननु, स्रोतःप्रभृतीनामपि मारणात्मकत्वात् मर्मत्वमस्त्येव, तत् कथं मांसादिव्यतिरेकेणान्यानि मर्माणि नोपलभ्यन्ते इत्युक्तम् ? उच्यते,—मारयन्तीति मर्माण्युच्यन्ते, श्रोतसि च क्षतेऽपि नावश्यतया मरणं; यतो वक्ष्यति,—"श्रोतोविद्धं तु प्रत्याख्यायोपचरेत्"—इति । यद्येवं तर्हि रुक्वैकल्यकराणाममारणात्मकत्वात् मर्मत्वं न स्यादिति चेत् ? तन्न, रुक्करवैकल्यकरेष्वपि अग्निसोमादिप्राणानां मध्ये कस्यचित् प्राणस्य हानेः, अथवा श्रोतःप्रभृतीनि मांसादीन्यव्यतिरिच्य वर्तन्ते, यतो मांसादिष्वेव श्रोतःप्रभृतीनि सन्ति, तस्मान्मांसादीनि पञ्चैव मर्माणीति ॥ ३ ॥-४ ॥

तत्रैकादश मांसमर्माणि, एकचत्वारिंशत् शिरामर्माणि, सप्तविंशतिः स्नायुमर्माणि, अष्टावस्थिमर्माणि, विंशतिः सन्धिमर्माणि चेति । तदेतत् सप्तोत्तरं मर्मशतम् ॥ ५ ॥

इदानीं मांसादिभेदेन मर्मसंख्यां निर्दिशन्नाह,—तत्रेत्यादि । एकादशेति चत्वारि तलहृदयानि, तावन्त्येव इन्द्रबस्तीनि, गुदमेकं, द्वे स्तनरोहिते, एवं एकादश मांसमर्माणि । एकचत्वारिंशदिति चतस्रो धमन्यः, अष्टौ मातृकाः, चत्वारि शृङ्गाटकानि, द्वे अपाङ्गे, एका स्थपनी, द्वौ फणौ, द्वे स्तनमूले, द्वावपस्तम्भौ, द्वावपलापौ, एकं हृदयं, एका नाभिः, द्वे पार्श्वसन्धी, द्वे बृहत्यौ, चत्वारि लोहिताक्षाणि, चतस्र ऊर्व्यः, एवं एकचत्वारिंशत् शिरामर्माणि । सप्तविंशतिरिति चतस्रः आणयः, द्वौ विटपौ, द्वौ कक्षधरौ, चत्वारः कूर्चाः, चत्वारि कूर्चशिरांसि, एको बस्तिः, चत्वारि क्षिप्राणि, द्वावंसौ, द्वे विधुरे, द्वावुत्क्षेपौ, एवं सप्तविंशतिः स्नायुमर्माणि । अष्टाविति द्वे कटीकतरुणे, द्वौ नितम्बौ, द्वे अंसफलके, द्वौ शङ्खौ, एवं अष्टावस्थिमर्माणि । विंशतिरिति द्वे जानुनी, द्वौ कूर्परौ, पञ्च सीमन्ताः, एकोऽधिपतिः, द्वौ गुल्फौ, द्वौ मणिबन्धौ, द्वे ककुन्दरे, द्वावावर्तौ, द्वे कृकाटिके, एवं विंशतिः सन्धिमर्माणि । पुनः सप्तोत्तरं मर्मशतमिति वचनं उपसंहारे प्रयुक्तमतो न पौनरुक्त्यम् ॥ ५ ॥

तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति, एतेनेतरसक्थि बाहू च व्याख्यातौ, उदरोरसोर्द्वादश, चतुर्दश पृष्ठे, ग्रीवां प्रत्यूर्ध्वं सप्तत्रिंशत् ॥ ६ ॥

मांसादिमर्मणां सप्तोत्तरशतसंख्याकानां प्रदेशविशेषज्ञानार्थं संख्यया विभज्य शाखाद्याश्रयं निर्दिशन्नाह,—तेषामित्यादि॥६॥

तत्र सक्थिमर्माणि क्षिप्रतलहृदयकूर्चकूर्चशिरोगुल्फेन्द्रबस्तिजान्वाण्युर्वीलोहिताक्षाणि विटपं चेति, एतेनेतरं सक्थि व्याख्यातम् । उदरोरसोस्तु गुदबस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौ चेति । पृष्ठमर्माणि तु कटीकतरुणककुन्द-

रनितम्बपार्श्वसन्धिबृहत्यंसफलकान्यंसौ चेति । बाहुमर्माणि तु क्षिप्रतलहृदयकूर्चकूर्चशिरोमणिबन्धेन्द्रबस्तिकर्पूराण्युर्वीलोहिताक्षाणि कक्षधरं चेति । एतेनेतरो बाहुर्व्याख्यातः । जत्रुण ऊर्ध्वं मर्माणि चतस्रोधमन्योऽष्टौ मातृका द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वावावर्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति ॥ ७ ॥

शाखादिषु संख्यया विभक्तानां मर्मणां नामान्याह,—तत्रेत्यादि । तत्र क्षिप्रादि एकैकं गणयितव्यं, एवमेकादश । क्षिप्रादीनां लक्षणं आचार्यः स्वयमेव अग्रे करिष्यति, अतोऽत्रेमानि न व्याख्यातानि । उदरेत्यादि गुदादिहृदयान्तमेकैकं गणयितव्यं, स्तनमूलादीनि द्वे द्वे, एवं द्वादश । पृष्ठेत्यादि कटीकतरुणादीनि द्वे द्वे, एवं चतुर्दश । बाह्वित्यादि अत्रापि क्षिप्रादिकमेकैकं गणयितव्यम् ॥ ७ ॥

तत्र तलहृदयेन्द्रबस्तिगुदस्तनरोहितानि मांसमर्माणि, नीलधमनीमातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धिबृहतीलोहिताक्षोर्व्यः शिरामर्माणि, आणिविटपकक्षधरकूर्चकूर्चशिरोबस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्माणि, कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्माणि, जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धककुन्दरावर्तकृकाटिकाश्चेति सन्धिमर्माणि॥ ८

तत्रैकादश मांसमर्माणीत्यादिवाक्यैः प्रागुद्दिष्टानां मांसादिमर्मणां नामान्याह,—तत्रेत्यादि । एतेषां मांसादिमर्मणां संख्या प्रागत्रैवाध्याये व्याख्याता, तेनात्र न व्याख्यायते ॥ ८ ॥

तान्येतानि पञ्चविकल्पानि मर्माणि भवन्ति । तद्यथा—सद्यःप्राणहराणि, कालान्तरप्राणहराणि, विशल्यघ्नानि, वैकल्यकराणि, रुजाकराणीति । तत्र सद्यःप्राणहराणि एकोनविंशतिः, कालान्तरप्राणहराणि त्रयस्त्रिंशत्, त्रीणि विशल्यघ्नानि, चतुश्चत्वारिंशद्वैकल्यकराणि, अष्टौ रुजाकराणीति ॥ ९ ॥

भवन्ति चात्र ।

शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरो गुदम् ॥
हृदयं बस्तिनाभी च घ्नन्ति सद्यो हतानि तु ॥ १० ॥
वक्षोमर्माणि सीमन्ततलक्षिप्रेन्द्रबस्तयः ॥
कटीकतरुणे सन्धी पार्श्वजौ बृहती च या ॥ ११ ॥
नितम्बाविति चैतानि कालान्तरहराणि तु ॥
उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्दिशेत् ॥१२॥
लोहिताक्षाणि जानूर्वीकूर्चविटपकूर्पराः ॥
ककुन्दरे कक्षधरे विधुरे सकृकाटिके ॥ १३ ॥
अंसांसफलकापाङ्गा नीले मन्ये फणौ तथा ॥
वैकल्यकरणान्याहुरावर्तौ द्वौ तथैव च ॥ १४ ॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्चशिरांसि च ॥
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान् ॥
क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च ॥१५॥

तान्येतानि पञ्चेत्यादिना यानि मर्माणि उक्तानि, तान्येव सुखपाठार्थं श्लोकैर्दर्शयन्नाह,—भवन्तीत्यादि । चत्वारि शृङ्गाटकानि,एकः अधिपतिः, शङ्खौ द्वौ, कण्ठशिरा अष्टौ मातृकाः, गुदं, हृदयं, बस्तिः नाभीचेत्येकैकं एवमेकोनविंशतिः सद्योघ्नानि। वक्षोमर्माणीति स्तनमूले द्वे, स्तनरोहिते द्वे, अपलापौ द्वौ, अपस्तम्भौ द्वौ, एवमष्टौ वक्षोमर्माणि; सीमन्ताः पञ्च, तलानि चत्वारि, क्षिप्राणि चत्वारि, इन्द्रबस्तयश्चत्वारः, द्वे कटीकतरुणे, द्वे पार्श्वसन्धी, द्वे बृहत्यौ, द्वौ नितम्बौ एवं त्रयस्त्रिंशत् कालान्तरप्राणहराणि । उत्क्षेपाविति उत्क्षेपौ द्वौ, एका स्थपनी, एवं त्रीणि विशल्यघ्नानि । लोहितेति चत्वारि लोहिताक्षनामधेयानि, आणयश्चतस्रः, जानुनी द्वे, चतस्र ऊर्व्यः, चत्वारः कूर्चाः, विटपादीनामावर्तान्तानां त्रयोदशानां प्रत्येकं द्वौ द्वौ, इति चतुश्चत्वारिंशत् वैकल्यकरणानि । गुल्फाविति द्वे गुल्फौ, द्वौ मणिबन्धौ, द्वे द्वे कूर्चशिरांसि चेति द्वौ कूर्चशिरसी हस्तयोः, द्वे कूर्चशिरसी पादयोः, एवं चत्वारि कूर्चशिरांसि इति अष्टौ सद्यःप्राणहराणि । भेदेन यत् पञ्चप्रकारत्वमुक्तं तद् यद्यपि वक्ष्यमाणेन 'मर्माणि शल्यविषयार्धमुदाहरन्ति' इत्यादि श्लोकप्रतिपादितेन प्राणहरवैकल्यकरेऽपि द्वित्वेन बाध्यते, तथापि न दोषो भिषजामादरख्यापनार्थत्वात्तु द्वित्वस्येति ॥९—१५॥

मर्माणि नाम मांसशिरास्नाय्वस्थिसन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति । तस्मान्मर्मसु अभिहतास्तांस्तान् भावान् आपद्यन्ते१६

इदानीं प्राणहरादिकं कर्म मर्मणां सयुक्तिकं दर्शयन्नाह,—मर्माणीत्यादि । सन्निपातः संश्लेषः अत्यन्तमिश्रीभाव इति यावत् । सर्वेषां सर्वत्र मर्मणि संश्लेषेऽपि मांसमर्मशिरामर्मादिव्यवहार आधिक्यमाश्रित्य पार्थिवादिव्यवहारवत् । स्वभावतः इति हेत्वन्तरनिरपेक्षतया । प्राणाः अग्न्यादयः । तांस्तानिति 'इन्द्रियार्थेष्वसंप्राप्तिर्मनोबुद्धिविपर्यय' इत्यादिकानत्रैवोक्तान् । अन्ये तु 'भ्रमः प्रलापः पतनं प्रमोह' इत्यादिकान् सूत्रस्थानोक्तान् आहुः ॥ १६ ॥

तत्र सद्यःप्राणहराणि आग्नेयानि, अग्निगुणेषु आशु क्षीणेषु क्षपयन्ति; कालान्तरप्राणहराणि सौम्याग्नेयानि,अग्निगुणेषु आशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति; विशल्यप्राणहराणि वायव्यानि, शल्यमुखनिरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवति उद्धृतमात्रे तु शल्ये मर्मस्थानाश्रितो वायुर्निष्क्रामति, तस्मात् सशल्यो जीवति

१. 'तत्' इति पाठान्तरम् ।

**उद्धृतशल्यो म्रियते; वैकल्यकराणि सौम्यानि, सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति; रुजाकराणि अग्निवायुगुणभूयिष्ठानि, विशेषतश्च तौ रुजाकरौ, पाञ्चभौतिकीं च रुजामाहुरेके ॥१७॥**

कस्मात् पुनरत्र समानेऽपि प्राणोपघाते सद्यःप्राणहरकालान्तरप्राणहरादिविशेष इत्याह,—तत्रेत्यादि । यद्यपि "सोममारुततेजांसि रजःसत्त्वतमांसि च । मर्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते—" इत्युक्तं, तथापि आग्नेयेषु मर्मस्वधिकं तेजः, सौम्येषु सोम इत्यादि ज्ञेयम् । अग्निगुणेष्वाशुक्षीणेष्विति अग्नेराशुकारित्वादित्यर्थः । तौ इति अग्निवायू विशेषेण रुजाकरौ, सामान्येन पुनः सोमोऽपि, कफव्रणे वेदनासंभवात् । रुजायामेव द्वितीयमेकीयमतं दर्शयन्नाह,—पाञ्चभौतिकीमित्यादि ॥ १७ ॥

**केचिदाहुर्मांसादीनां पञ्चानामपि समस्तानां विवृद्धानां च समवायात् सद्यःप्राणहराणि, एकहीनानामल्पानां वा कालान्तरप्राणहराणि, द्विहीनानां विशल्यप्राणहराणि, त्रिहीनानां वैकल्यकराणि, एकस्मिन्नेव रुजाकराणीति । यतश्चैवमतोऽस्थिमर्मस्वप्यभिहतेषु शोणितागमनं भवति ॥१८॥**

सद्यःप्राणहरादिविशेषस्य द्वितीयदर्शने व्यवस्थां दर्शयन्नाह,—केचिदित्यादि । यद्यपि गुदवस्तिनाभिहृदयेषु सद्यःप्राणहरमर्मसु अस्थीनि न व्यक्तानि तथाप्यव्यक्तानामस्थ्नां शक्तिरूपेणावस्थानात् पञ्चानां समवाय उत्पद्यते एव । एकहीनानामित्यत्र हीनशब्दोऽत्यन्ताभावे वर्तते, नतु न्यूनत्वे । एकहीनानि पुनः स्तनमूलापलापापस्तम्भसीमन्तकटीकतरुणपार्श्वसन्धिबृहतीनितम्बानि मांसहीनानि, स्तनरोहिततलहृदयक्षिप्रेन्द्रबस्तयोऽस्थिहीनाः; द्विहीनानि पुनः उत्क्षेपौ मांससन्धिहीनौ, स्थपनी मांसशिरास्नायुहीना; त्रिहीनानि पुनः लोहिताक्षाणि स्नायुसन्ध्यस्थिहीनानि, जानुनी मांसशिरास्नायुहीने, ऊर्व्योऽस्थिमांसस्नायुहीनाः, विटपे मांसशिराऽस्थिहीनौ, कूर्परौ मांसशिरास्नायुहीनौ, कुकुन्दरे मांससन्धिशिराहीने, कक्षधरे शिरास्थिसन्धिहीने, विधुरे मांसशिरासन्धिहीने, कृकाटिके मांसशिरास्नायुहीने, अंसौ मांसशिरासन्धिहीनौ, अंसफलके मांसस्नायुसन्धिहीने, नीले मन्ये फणे च मांससन्ध्यस्थिहीने, आवर्तौ मांसशिरास्नायुहीनौ, अपाङ्गौ मांसस्नायुसन्धिहीनौ; एकस्मिन्निति मांसादिसंघातादेकस्मिन्नवशिष्टे रुजाकराणि भवन्ति, गुल्फमणिबन्धास्तथा कूर्चशिरांसि मांसशिरास्नाय्वस्थिहीनानि । स्वदर्शने सर्वमर्मणां मांसशिरास्नाय्वस्थिसन्धिसन्निपातत्वादेव द्वित्र्यादिहीनमसम्यक् इत्यर्थः । कुतः स्वदर्शने सर्वाणि सर्वत्र सन्तीत्याह,—यत इत्यादि । यतश्चैवं अस्थिविद्धेष्वपि शोणितदर्शनं भवत्यतः प्रत्यक्षात् प्रमाणात् सर्वाणि मांसादीनि सर्वत्र मर्माणि भवन्तीति ज्ञातव्यम् ॥ १८ ॥

**चतुर्विधा यास्तु शिराः शरीरे**
**प्रायेण ता मर्मसु सन्निविष्टाः ॥**
**स्नाय्वस्थिमांसानि तथैव सन्धीन्**
**सन्तर्प्य देहं प्रतिपालयन्ति ॥ १९ ॥**

अतः एतदेव दर्शयन्नाह,—चतुरित्यादि । चतुर्विधाः इति वातपित्तश्लेष्मरक्तवहाः । मर्मस्वित्यादि एतेन शिराणां स्नाय्वस्थिमांससन्धिगतत्वं बोधितं, अतएवास्थिविद्धेऽपि शोणितागमनमित्यर्थः ॥ १९ ॥

**ततः क्षते मर्मणि ता प्रवृद्धः**
**समन्ततो वायुरभिस्तृणोति ॥**
**विवर्धमानस्तु स मातरिश्वा**
**रुजः सुतीव्राः प्रतनोति काये ॥ २० ॥**
**रुजाभिभूतं तु पुनः शरीरं**
**प्रलीयते नश्यति चास्य संज्ञा ॥**
**अतो हि शल्यं विनिहर्तुमिच्छन्**
**मर्माणि यत्नेन परीक्ष्य कर्षेत् ॥ २१ ॥**

इदानीं यथैकदेशजेऽपि प्रहारे मर्मविद्धस्य क्रमेण सकलशरीरे वातादिदोषव्याप्त्या रुजा चेतनाधातोश्चवियोगस्तथा दर्शयन्नाह,—तत इत्यादि । ताः शिराः, प्रवृद्धो वायुः समन्ततः सर्वतः अभिस्तृणोति सञ्छादयति । शरीरं प्रलीयते प्रलयं गच्छति शरीरयन्त्रं विघट्टयतीत्यर्थः । तस्मिन् पाञ्चभौतिके शरीरे प्रलीने संज्ञाषष्ठश्चेतनाधातुरपि नश्यति । 'ताः प्रवृद्ध' इत्यत्र 'तासु वृद्ध' इति केचित् पठन्ति व्याख्यानयन्ति च—तासु शिरासु वृद्धो वायुः समन्ततः सकलं शरीरं अभिस्तृणोति संछादयतीत्यर्थः ॥ २० ॥ २१ ॥

**एतेन शेषं व्याख्यातम् ॥ २२ ॥**

एतेनेति । रुगादिरूपेण वायोर्लक्षणेन, शेषमिति दाहादि स्रोतोनिरोधादि च पित्तश्लेष्मणोर्लक्षणं व्याख्यातमेवेत्यर्थः ॥२२॥

**तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति, कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति, विशल्यप्राणहरं च वैकल्यकरं, वैकल्यकरमन्ते विद्धं क्लेशयति रुजां च करोति, रुजाकरमतीव्रवेदनं भवति ॥ २३ ॥**

तेषां सद्यःप्राणहरादीनां स्वकर्म यत् नियतं तत्कारणं विकल्याभिचारयन्नाह,—तत्रेत्यादि । अन्ते विद्धं समीपे विद्धं, मध्ये विद्धं सद्य एवेत्यर्थः, एतेन पूर्वं पूर्वं मर्म कारणवैकल्यात्परस्य परस्य कार्यं करोति । एवं परं परमपि मर्मातिविद्धादिकारणवशात् पूर्वस्य पूर्वस्य कर्म करोति । एतदेवाह—तेष्वित्यादिना ॥ २३ ॥

**तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरात् मारयन्ति, कालान्तरप्राणहराणि पक्षात् मासाद्वा, तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति, वि-**

**शल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि मारयन्ति ॥ २४ ॥**

तत्र सद्य इत्यादि । यद्यपि सद्यःशब्दस्तत्क्षणवाची तथापि सद्यःप्राणहराणीत्यत्र सद्यःशब्दः सप्ताहाभ्यन्तरात् परो ज्ञातव्यः, सप्तरात्रान्मारयन्तीति उक्तत्वात् । तेष्वपि इति कालान्तरप्राणहरेष्वपीत्यर्थः । कदाचिदाशु मारयन्ति अभिहतानीति शेषः । अनभिहतानि तु कालान्तरेणैव मारयन्ति; एतच्चोपलक्षणं, तेन रुजाकराण्येवं वैकल्यं जनयन्ति । एवं वैकल्यादिष्वपि स्वनियतकर्मव्यभिचारः ॥ २४ ॥

**अत ऊर्ध्वं प्रत्येकशो मर्मस्थानानि अनुव्याख्यास्यामः—तत्र पादस्याङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म, तत्र विद्धस्य आक्षेपकेण मरणं; मध्यमाङ्गुलीमनुपूर्वेण मध्ये पादतलस्य तलहृदयं नाम, तत्रापि रुजाभिर्मरणं; क्षिप्रस्योपरिष्टादुभयतः कूर्चो नाम, तत्र पादस्य भ्रमणवेपने भवतः; गुल्फसन्धेरध उभयतः कूर्चशिरो नाम, तत्र रुजाशोफौ; पादजङ्घयोः सन्धाने गुल्फो नाम, तत्र रुजः स्तब्धपादता खञ्जता वा; पार्ष्णिं प्रति जङ्घामध्ये इन्द्रबस्तिर्नाम, तत्र शोणितक्षयेण मरणं; जङ्घोर्वोः सन्धाने जानु नाम, तत्र खञ्जता; जानुन ऊर्ध्वमुभयतस्त्र्यङ्गुलमाणीर्नाम, तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च; ऊरुमध्ये ऊर्वी नाम, तत्र शोणितक्षयात् सक्थिशोषः; ऊर्व्या ऊर्ध्वमधो वङ्क्षणसंधेरूरुमूले लोहिताक्षं नाम, तत्र लोहितक्षयेण पक्षाघातः; वङ्क्षणवृषणयोरन्तरे विटपं नाम, तत्र षाण्ढ्यमल्पशुक्रता वा भवति; एवमेतानि एकादश सक्थिमर्माणि व्याख्यातानि । एतेनेतरसक्थि बाहू च व्याख्यातौ । विशेषतस्तु यानि सक्थ्नि गुल्फजानुविटपानि तानि बाहौ मणिबन्धकूर्परकक्षधराणि; यथा वङ्क्षणवृषणयोरन्तरे विटपमेवं वक्षःकक्षयोर्मध्ये कक्षधरं, तस्मिन् विद्धे त एव उपद्रवाः; विशेषतस्तु मणिबन्धे कुण्ठता, कूर्पराख्ये कुणिः, कक्षधरे पक्षाघातः। एवमेतानि चतुश्चत्वारिंशच्छाखासु मर्माणि व्याख्यातानि ॥ २५ ॥**

अत ऊर्ध्वमित्यादि । तत्र पादाङ्गुष्ठेति स्नायुमर्मेदं अर्धाङ्गुलं कालान्तरप्राणहरं च । मध्यमाङ्गुलीति मध्यमाङ्गुलिमनुलक्षीकृत्य क्रमेण पादतलस्य मध्ये तलहृदयं, मांसमर्मेदं अर्धाङ्गुलं कालान्तरप्राणहरं च । उपरिष्टात् इत्यत्र द्व्यङ्गुल इति शेषः । उभयतः इति ऊर्ध्वमधश्च, तस्य कूर्चः इति नाम 'विद्धि' इति शेषः, स्नायुमर्मेदं चतुरङ्गुलं वैकल्यकरं च । गुल्फेति इदमपि स्नायुमर्म एकाङ्गुलं वैकल्यकरं च । पादेत्यादि सन्धिमर्मेदं द्व्यङ्गुलप्रमाणं वैकल्यकरं च । पार्ष्णिमिति मांसमर्मेदं अर्धाङ्गुलं पार्ष्णिं प्रति त्रयोदशाऽङ्गुले स्थितं कालान्तरे प्राणहरं च, भोजस्तु द्व्यङ्गुलप्रमाणमाह, भोजदर्शनात् गयदासोऽपि मर्ममानसूत्रे "द्व्यङ्गुलमिन्द्रबस्तिमर्म" इति पठित्वा व्याख्याति । जङ्घेत्यादि सन्धिमर्मेदं त्र्यङ्गुलप्रमाणं वैकल्यकरं च । जानुन इत्यादि जानुन ऊर्ध्वं त्र्यङ्गुले उभयतः ऊर्ध्वमधश्च, स्नायुमर्मेदं अर्धाङ्गुलं वैकल्यकरं च, गयी तु त्र्यङ्गुलमानमेतदाह । उर्वीति शिरामर्मेदं एकाङ्गुलं वैकल्यकरं च । उर्व्या इति शिरामर्मेदं अर्धाङ्गुलं वैकल्यकरं च । वङ्क्षणेति स्नायुमर्मेदं एकाङ्गुलं वैकल्यकरं च । एवमिति एतेनैकादश सक्थिमर्माणि निर्दिष्टानि । विशेषत इत्यादि मणिबन्धः पाणिमूलं, कूर्परः कफोणिः 'कुहणी' इति लोके । तस्मिन् इति मणिबन्धादौ । त एव इति गुल्फादिवधजाताः । विशेषस्तु इति कुण्ठता करस्याकर्मण्यत्वम् । कुणिः सङ्कुचितबाहुमध्यः । एतेनेतरो बाहुर्व्याख्यातः । उपसंहारमाह,—एवमित्यादि ॥२५॥

**अत ऊर्ध्वमुदरोरसोर्मर्मस्थानानि अनुव्याख्यास्यामः—तत्र वातवर्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म, तत्र सद्योमरणं; अल्पमांसशोणितोऽभ्यन्तरतः कट्यां मूत्राशयो बस्तिर्नाम, तत्रापि सद्योमरणमश्मरीव्रणादृते, तत्राप्युभयतो भिन्ने न जीवति एकतो भिन्ने मूत्रस्रावी व्रणो भवति, स तु यत्नेनोपक्रान्तो रोहति; पक्वामाशययोर्मध्ये शिराप्रभवा नाभिर्नाम, तत्रापि सद्य एव मरणं; स्तनयोर्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्वरजस्तमसामधिष्ठानं हृदयं नाम, तत्रापि सद्य एव मरणं; स्तनयोरधस्ताद् द्व्यङ्गुलमुभयतः स्तनमूले नाम मर्मणी, तत्र कफपूर्णकोष्ठतया (कासश्वासाभ्यां) म्रियते; स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम, तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्यां च म्रियते; अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम, तत्र रक्तेन पूयभावं गतेन मरणं; उभयत्रोरसो नाड्यो वातवहे अपस्तम्भौ नाम, तत्र वातपूर्णकोष्ठतया कासश्वासाभ्यां मरणं; एवमेतानि उदरोरसोर्द्वादश मर्माणि व्याख्यातानि ॥ २६ ॥**

अत इत्यादि । तत्रेति निरसनं प्रेरकं, मांसमर्मेदं चतुरङ्गुलं सद्योघाति च । अल्पेति कट्यामित्युपलक्षणं, तेन नाभिपृष्ठमुष्कगुदवङ्क्षणशेफांसि गृह्यन्ते, तदुक्तं,—"नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसां। एकद्वारस्तनुत्वक्को मध्ये बस्तिरधोमुखः"—इति। सद्यो मरणं अश्मरीव्रणादृते भवतीति संबन्धः । तत्रापि इति अश्मरीनिमित्ते इत्यर्थः। उभयतो भिन्ने बस्ताविति शेषः । स्नायुमर्मेदं चतुरङ्गुलं सद्योघाति च । पक्वेति शिरामर्मेदं चतुरङ्गुलं च । स्तनयोरिति शिरामर्मेदं कमलमुकुलाकारमधोमुखं चतुरङ्गुलं च । स्तनयोरधस्तादिति उभयतः

द्व्यङ्गुलप्रदेशे स्तनमूले मर्मणि, उभयतो ग्रहणात् पृथक् पृथक् स्तनस्याधः स्तनमूलं मर्मेति गम्यते, अन्यथा स्तनयोरधस्तादित्युक्तेर्मिलितयोरेव स्तनयोरधस्तादितीदृशेऽर्थे स्तनयुगमध्यस्याधस्तात् स्तनमूलाख्यं मर्मद्वयमित्यनिष्टं स्यात् , इमे शिरामर्मणी द्व्यङ्गुले कालान्तरप्राणहरे च । स्तनचूचुकयोरिति स्तनयोश्चूचुके स्तनचूचुके पूर्ववाक्यात् द्व्यङ्गुले इत्यनुवर्तते, तेन स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुले स्तनरोहिते द्वे मर्मणी, तदुक्तं,—"स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलात् स्तनरोहिते । अर्धाङ्गुलमिते मांसमर्मणी परिकीर्तिते । रक्तपूरितकोष्ठस्य कालान्मरणकारिणी ॥" वृद्धवाग्भटेन "स्तनचूचुकयोरूर्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहिते"— इत्युक्तं, मांसमर्मणी सद्योघातिनी । अंसेति शिरामर्मणी अर्धाङ्गुले कालान्तरप्राणहरे । उभयत्रोरसः इति उरसोर्द्वयोः पार्श्वयोरित्यर्थः, शिरामर्मणी अर्धाङ्गुलप्रमाणे कालान्तरप्राणहरे च ॥ २६ ॥

**अत ऊर्ध्वं पृष्ठमर्माणि अनुव्याख्यास्यामः—तत्र पृष्ठवंशमुभयतः प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्मणी, तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते, पार्श्वयोर्जघनबहिर्भागे पृष्ठवंशमुभयतो ( नातिनिम्ने ) कुकुन्दरे नाम मर्मणी, तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च; श्रोणीकाण्डयोरुपर्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम, तत्राधःकायशोषो दौर्बल्याच्च मरणं; अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्यगूर्ध्वं च जघनात् पार्श्वसन्धी नाम, तत्र लोहितपूर्णकोष्ठतया म्रियते; स्तनमूलादृजूभयतः पृष्ठवंशस्य बृहती नाम, तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते; पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसंबद्धे अंसफलके नाम, तत्र बाह्वोः स्वापशोषौ; बाहुमूर्द्धग्रीवामध्येंऽसपीठस्कन्धनिबन्धनावंसौ नाम, तत्र स्तब्धबाहुता । एवमेतानि चतुर्दश पृष्ठमर्माणि व्याख्यातानि ॥ २७ ॥**

अत ऊर्ध्वमित्यादि । तत्र पृष्ठेत्यादि । प्रतिश्रोणिकाण्डमित्यत्र 'प्रतिश्रोणिकर्णौ' इति केचित् पठन्ति, तत्र श्रोणिकर्णौ लक्षीकृत्य त्रिकसन्निधानौ श्रोण्यामुपरि अस्थिमर्मणी, अर्धाङ्गुले कालान्तरप्राणहरे च । पार्श्वेत्यादि पार्श्वयोः वामदक्षिणसंज्ञकयोः, जघनबहिर्भागे इति कट्याः पश्चाद्भागे, गयी तु 'पार्श्वजघनभागे' इति पठित्वा पार्श्वयोर्जघनभागे अधोभागे नितम्बे निम्ने कुकुन्दरे इति व्याख्याति, सन्धिमर्मणी अर्धाङ्गुले ईषन्निम्नाकारे वैकल्यकरे च । श्रोणीति पूर्वोक्तश्रोणिकाण्डयोरुपरि आशयाच्छादनौ आमाशयपिधायकौ पार्श्वान्तरप्रतिबद्धौ पार्श्वमध्ये प्रतिबद्धौ नितम्बौ, अस्थिमर्मणी अर्धाङ्गुले कालान्तरे प्राणहरे च । अध इति अधःपार्श्वान्तरप्रतिबद्धौ अधोभागे यत् पार्श्वयोरन्तरं मध्यं तत्प्रतिबद्धौ, जघनपार्श्वमध्ययोः इति पश्चाद्भागपार्श्वभागयोः यौ मध्यौ वामदक्षिणौ भागौ तयोः, कथं स्थिताविल्याह,—तिर्यगूर्ध्वं चेति, उपर्युपरि पर्शुकानां क्रमवृद्धेः सन्धेरपि क्रमवृद्धत्वं, जघनादिति यद्यपि लुप्ता पञ्चमीयं तेन जघनपश्चाद्भागमाश्रित्य स्थितौ पार्श्वसन्धी, शिरामर्मणी अर्धाङ्गुले कालान्तरमृत्युप्रदे च । स्तनमूलादिति शिरामर्मणी अर्धाङ्गुले कालान्तरप्राणहरे च । पृष्ठोपरीत्यादि पृष्ठवंशस्यायतत्वात् प्रदेशनियमार्थं पृष्ठोपरीत्युक्तं, त्रिकसंबद्धे इति ग्रीवाया अंसद्वयस्य च यः संयोगः सः त्रिकः, तत्र संबद्धे अंसफलके, अस्थिमर्मणी अर्धाङ्गुले वैकल्यकारिणी च । बाहुमूर्धग्रीवेति बाहुमूर्धा बाहुशिरः, ग्रीवा तु कन्धरा, तयोर्मध्ये अंसपीठस्कन्धयोः अंसफलकभुजशिखरयोः बन्धनौ अंसौ, स्नायुमर्मणी अर्धाङ्गुले वैकल्यकारिणी च ॥ २७ ॥

**अत ऊर्ध्वं उर्ध्वजत्रुगतानि व्याख्यास्यामः—तत्र कण्ठनाडीमुभयतश्चतस्रो धमन्यो द्वे नीले द्वे च मन्ये व्यत्यासेन, तत्र मूकता स्वरवैकृतमरसग्राहिता च; ग्रीवायामुभयतश्चतस्रः शिरा मातृकाः, तत्र सद्योमरणम् । शिरोग्रीवयोः सन्धाने कृकाटिके नाम, तत्र चलमूर्धता; कर्णपृष्ठतोऽधःसंश्रिते विधुरे नाम, तत्र बाधिर्यं; घ्राणमार्गमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरतः फणे नाम, तत्र गन्धाज्ञानं; भ्रूपुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ नाम, तत्रान्ध्यं दृष्ट्युपघातो वा; भ्रुवोरुपरि निम्नयोरावर्तौ नाम, तत्रान्ध्यं दृष्ट्युपघातो वा; भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम, तत्र सद्योमरणं; शङ्खयोरुपरि केशान्त उत्क्षेपौ नाम, तत्र सशल्यः पाकात् पतितशल्यो वा जीवेन्नोद्धृतशल्यः; भ्रुवोर्मध्ये स्थपनी नाम, तत्रोत्क्षेपवत् ; पञ्च सन्धयः शिरसि विभक्ताः सीमन्ता नाम, तत्रोन्मादभयचित्तनाशैर्मरणं; घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां शिराणां मध्ये शिरासन्निपातः शृङ्गाटकानि तानि चत्वारि मर्माणि, तत्रापि सद्योमरणं; मस्तकाभ्यन्तरोपरिष्टात् शिरासन्धिसन्निपातो रोमावर्तोऽधिपतिः, तत्रापि सद्योमरणम् । एवमेतानि सप्तत्रिंशदूर्ध्वजत्रुगतानि मर्माणि व्याख्यातानि ॥ २८ ॥**

अत ऊर्ध्वं उर्ध्वजत्रुगतानीत्यादि। तत्रेति व्यत्यासेन वैपरीत्येन, एका नीला एका मन्या चैकस्मिन् पार्श्वे, अन्या नीला अन्या मन्या चापरस्मिन् पार्श्वे, शिरामर्मणी चतुरङ्गुले वैकल्यकारिणी च । ग्रीवायामिति उभयतश्चतस्रः इति एकस्मिन् एकस्मिन् पार्श्वे चतस्रः चतस्र इत्यर्थः, शिरामर्माणि चतुरङ्गुलप्रमाणानि मातृकाः । शिर इति सन्धिमर्मणी अर्धाङ्गुले वैक-

ल्यकारिणी च । कर्णेति स्नायुमर्मणी किंचिन्निम्नाकारे वैकल्यकारिणी च । घ्राणेति घ्राणमार्गस्य द्वयोः पार्श्वयोरभ्यन्तरविवरद्वारसंबद्धे फणे, शिरामर्मणी अर्धाङ्गुले वैकल्यकारिणी च । भ्रूपुच्छेति शिरामर्मणी अर्धाङ्गुले वैकल्यकरे च । भ्रुवोरुपरीति भ्रुवोरुपरि निम्नयोरिति प्रदेशकथनं, सन्धिमर्मणी अर्धाङ्गुले वैकल्यकारिणी च । भ्रुवोः पुच्छान्तयोरिति अस्थिमर्मणी अर्धाङ्गुले । शङ्खयोरिति केशान्ते केशपर्यन्ते, स्नायुमर्मणी अर्धाङ्गुले विशल्यप्राणहरे च । भ्रुवोर्मध्ये इति तत्रोत्क्षेपवदिति सशल्यः स्वयं पतितशल्यो वा जीवति उद्धृतशल्यो म्रियते इत्यर्थः, शिरामर्म अर्धाङ्गुलं विशल्यघ्नं च । पञ्च सन्धय इति पञ्च सन्धयो ये शिरसि विभक्ताः शरीरसंख्याव्याकरणे ते सीमन्ता इत्यर्थः, इमानि सन्धिमर्माणि चतुरङ्गुलप्रमाणानि कालान्तरप्राणहराणि च । घ्राणश्रोत्रेति घ्राणादीन्द्रियचतुष्कतर्पणीनां शिराणां शिरामुखानां संनिपातः संयोगस्थानं शृङ्गाटकानि, तानि चत्वारि घ्राणादितर्पणशिराणां चतुर्भेदात्; इमानि शिरामर्माणि चतुरङ्गुलप्रमाणानि । मस्तकेति मस्तकाभ्यन्तरोपरिष्टादिति मस्तकस्याभ्यन्तरोर्ध्वमित्यर्थः, शिरासन्ध्योः सन्निपातः रोमावर्तः, एतत् सन्धिमर्म अर्धाङ्गुलप्रमाणं च ॥ २८ ॥

भवन्ति चात्र ।

**ऊर्व्यः शिरांसि विटपे च सकक्षपार्श्वे**
**एकैकमङ्गुलमिता स्तनपूर्वमूलम् ॥**
**विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं**
**त्रीण्येव जानु सपरं सह कूर्पराभ्याम् ॥ २९ ॥**
**हृद्बस्तिकूर्चगुदनाभि वदन्ति मूर्ध्नि**
**चत्वारि पञ्च च गले दश यानि च द्वे ॥**
**तानि स्वपाणितलकुञ्चितसंमितानि**
**शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्धम् ॥ ३० ॥**

इदानीं सर्वेषामेव मर्मणां सूत्रे मानमाह,—भवन्ति चात्रेत्यादिना । ऊर्व्यः इति शिरांसि कूर्चशिरांसि, कक्षपार्श्वे कक्षधरे इत्यर्थः । एकैकमङ्गुलमिताः इति एकैकं यथा भवति तथा ऊर्व्यादयो मर्मविशेषा अङ्गुलमिता ज्ञेयाः । स्तनपूर्वमूलमित्यादि मणिबन्धगुल्फं स्तनमूलं चाङ्गुलद्वयमितं विद्धि जानीहि इति संबन्धः । त्रीण्येव जानु सपरमिति सपरं द्वितीयजानुसहितं जानु त्रीणि त्र्यङ्गुलानि विद्धीत्यर्थः । मूर्ध्नि चत्वारि पञ्च च इति यानि मूर्ध्नि चत्वारि मर्माणि शृङ्गाटकसंज्ञकानि, तथा तत्रैव पञ्च सीमन्तसंज्ञकानि, गले दश यानि च द्वे इति गले कण्ठे यानि दश द्वे च कथितानि तत्राष्टौ मातृकाः द्वे नीले द्वे च मन्ये, तानि मर्माणि स्वपाणितलकुञ्चितसंमितानि चतुरङ्गुलप्रमाणानीत्यर्थः । शेषाणि षट्पञ्चाशत् मर्माणि । अवेहि जानीहि । अन्ये तु इमानि षट्पञ्चाशत् मर्माणि तलप्रमाणान्याहुः । गयी तु अन्यादृशं सूत्रं पठित्वा स्तनमूले द्वे गुल्फे च, इन्द्रबस्तयश्चत्वारो, द्वौ मणिबन्धाविति दश मर्माणि द्व्यङ्गुलानि भोजदर्शनात् व्याख्याति, तथा जानु सपरमित्यत्र सह परेण परप्रदेशावस्थितेनापि मर्मणा वर्तते यत् तत् सपरं तेन जानुनी द्वे, आण्यः चतस्रः, कूर्परे द्वे, इत्यष्टौ अङ्गुलानि व्याख्याति । शेषं समम् ॥ २९ ॥ ३० ॥

**एतत्प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः**
**शस्त्रेण कर्मकरणं परिहृत्य मर्म ॥**
**पार्श्वाभिघातितमपीह निहन्ति मर्म**
**तस्माद्धि मर्मसदनं परिवर्जनीयम् ॥ ३१ ॥**

मानकथनप्रयोजनमाह,—एतदित्यादिना । मर्मसदनमिति मर्मस्थानम् ॥ ३१ ॥

**छिन्नेषु पाणिचरणेषु शिरा नराणां**
**सङ्कोचमीयुरसृगल्पमतो निरेति ॥**
**प्राप्यामितव्यसनमुग्रमतो मनुष्याः**
**संच्छिन्नशाखतरुवत् निधनं न यान्ति ॥ ३२ ॥**
**क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं**
**गच्छत्यतीव पवनश्च रुजं करोति ॥**
**एवं विनाशमुपयान्ति हि तत्र विद्धा**
**वृक्षा इवायुधविघातनिकृत्तमूलाः ॥ ३३ ॥**
**तस्मात् तयोरभिहतस्य तु पाणिपादं**
**छेत्तव्यमाशु मणिबन्धनगुल्फदेशे ॥**

करचरणच्छेदे जीवन्ति तदवयवभूतमर्मच्छेदे तु न जीवन्तीति विशेषं दर्शयन्नाह,—छिन्नेष्वित्यादि । सङ्कोचमीयुः सङ्कोचं जग्मुरतोऽल्पं रुधिरं प्रवर्तते । क्षिप्रेष्वित्यादि तत्र पाण्योश्चरणयोर्वा । गयी तु, वृक्षा इवायुधनिपातेत्यादिस्थाने 'किञ्जल्कपत्रमथनादिव पङ्कजानि' इति पठति ॥ ३२ ॥ ३३ ॥—

**मर्माणि शल्यविषयार्धमुदाहरन्ति**
**यस्माच्च मर्मसु हता न भवन्ति सद्यः ॥ ३४ ॥**
**जीवन्ति तत्र यदि वैद्यगुणेन केचित्**
**ते प्राप्नुवन्ति विकलत्वमसंशयं हि ॥**

मर्ममानकथनप्रयोजनं पूर्वतरवाक्ये प्रतिपाद्य मर्मस्थानविषयं निर्दिशन्नाह,—मर्माणीत्यादि । शल्यस्य मनःशरीराबाधकरस्य विषयः शल्यविषयः; स च शस्त्रादिप्रधानान्मरणामरणकारकत्वेन द्विविधः; तत्र मरणकारकः शल्यविषयो मर्माख्यः शरीरदेशः, यस्मात् तत्र हताः सद्य एव न भवन्ति सप्ताहाभ्यन्तरे एव म्रियन्ते इत्यर्थः, तस्मान्मरणकारकत्वेन मर्माणि शल्यविषयार्धमुदाहरन्ति, पूर्वाचार्या इति शेषः । ननु, केचिन्मर्महता अपि जीवन्तो दृश्यन्ते तत् कथं मरणकारकत्वेन मर्माणि शल्यविषयार्धमित्याशङ्क्याह—जीवन्तीत्यादि ॥ ३४ ॥

**संभिन्नजर्जरितकोष्ठशिरःकपाला**
**जीवन्ति शस्त्रविहतैश्च शरीरदेशैः ॥**

**छिन्नैश्च सक्थिभुजपादकरैरशेषै-**
**र्येषां न मर्मपतिता विविधाः प्रहाराः ॥ ३५ ॥**

प्रसङ्गतोऽपरं शल्यविषयार्थं प्रतिपादयितुकामः अमर्महतास्तु विविधैरपि छेदभेदादिभिर्न म्रियन्ते इति दर्शयन्नाह,—संभिन्नेत्यादि ॥ ३५ ॥

**सोममारुततेजांसि रजःसत्वतमांसि च ॥**
**मर्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते ॥**
**मर्मस्वभिहतास्तस्मात् न जीवन्ति शरीरिणः ॥ ३६ ॥**

इदानीं मर्मणां शरीरमनोदोषनिवासभूतानां शरीरमनोदोषैरेव मर्मविद्धकुपितैर्मनः शरीरं च नश्यति, तयोराधारभूतयोर्नाशादाधेयभूतोऽपि भूतात्मा नश्यति इति दर्शयन्नाह—सोमेत्यादि ॥ ३६ ॥

**इन्द्रियार्थेष्वसंप्राप्तिर्मनोबुद्धिविपर्ययः ॥**
**रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते ॥ ३७ ॥**
**हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम् ॥**
**ततो धातुक्षयात् जन्तुर्वेदनाभिश्च नश्यति ॥ ३८ ॥**
**हते वैकल्यजनने केवलं वैद्यनैपुणात् ॥**
**शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात् ॥ ३९ ॥**
**विशल्यघ्नेषु विज्ञेयं पूर्वोक्तं यच्च कारणम् ॥**
**रुजाकराणि मर्माणि क्षतानि विविधा रुजः ॥**
**कुर्वन्त्यन्ते च वैकल्यं कुवैद्यवशगो यदि ॥ ४० ॥**

सद्यःप्राणहरादिमर्मपञ्चकस्य लक्षणं निर्दिशन्नाह,—इन्द्रियार्थेषु इत्यादि । आशुहरे सद्यःप्राणहरे । पूर्वोक्तमिति शल्यमुखावरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवतीत्यादि । उक्तमेव कारणं ज्ञेयं लक्षणत्वेनेत्यर्थः ॥ ३७—४० ॥

**छेदभेदाभिघातेभ्यो दहनाद्दारणादपि ॥**
**उपघातं विजानीयात् मर्मणां तुल्यलक्षणम् ॥ ४१ ॥**

इदानीं मर्मघाततुल्यं मर्मसमीपस्यापि देशस्य घातं महानर्थकरं दर्शयन्नाह,—छेदेत्यादि । उपघातं समीपघातम् ॥४१॥

**मर्माभिघातस्तु न कश्चिदस्ति**
**योऽल्पात्ययो वापि निरत्ययो वा ॥**
**प्रायेण मर्मस्वभिताडितास्तु**
**वैकल्यमृच्छन्त्यथवा म्रियन्ते ॥ ४२ ॥**

मर्माभिघाते वैद्यस्य यत्नपरतां दर्शयन्नाह,—मर्माभिघात इत्यादि । अल्पात्ययः इति अल्पव्यापत् । निरत्ययः इति निर्गतव्यापत् । गयी तु एतद्वाक्यं न पठति ॥ ४२ ॥

**मर्माण्यधिष्ठाय हि ये विकारा**
**मूर्च्छन्ति काये विविधा नराणाम् ॥**
**प्रायेण ते कृच्छ्रतमा भवन्ति**
**नरस्य यत्नैरपि साध्यमानाः ॥ ४३ ॥**

शरीरदोषेणापि मर्मणां मर्मसमीपदेशस्यापि नियतं महानर्थं दर्शयन्नाह,—मर्माण्यधिष्ठायेत्यादि। मूर्च्छन्ति समुच्छ्रायं गच्छन्ति । यस्मादेवंविधो मर्माभिघातस्तस्माद् वैद्येन यत्नः कार्य इति सूचितम् ॥ ४३ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने षष्ठोऽध्यायः ॥ ६ ॥

---

# सप्तमोऽध्यायः ।

**अथातः शिरावर्णविभक्तिनाम शारीरं व्याख्यास्यामः यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

मर्मशिरास्नायुधमनीः परिहरन्नित्यादौ मर्मानन्तरं शिराणां निर्देशात् प्रत्येकमर्मनिर्देशशारीरानन्तरं शिरावर्णविभागशारीरारम्भो युज्यत इत्याह,—अथेत्यादि । विभक्तिः विभागः समुदायात् पृथक्करणमित्यर्थः । शिराणां वातादिवहानां तद्वर्णानां चारुणनीलशुक्ललोहितानां विभक्तिर्यस्मिन् शारीरे तत् तथाविधम् ॥ १ ॥ २ ॥

**सप्त शिराशतानि भवन्ति; याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः; द्रुमपत्रसेवनीनामिव च तासां प्रतानाः; तासां नाभिर्मूलं, ततश्च प्रसरन्त्यूर्ध्वमधस्तिर्यक् च ॥ ३ ॥**

तासामणुशोऽपरिसंख्यातानामपि भूयस्त्वाश्रयसमुदायसंख्यां निर्दिशन्नाह,—सप्तेत्यादि । तासां सर्वासामपि सामान्यं कर्म निर्दिशन्नाह,—याभिरित्यादि । याभिः शिराभिः । आरामः नानावृक्षसमुदायविशेषः । जलहारिणीभिः प्रणालीभिः, कुल्याभिः कृत्रिमाल्पसरिद्भिः, एतद्दृष्टान्तद्वयं स्थूलसूक्ष्मशिराप्रापणार्थम् । उपस्निह्यते पुष्टिं नीयते तरुणानां शरीरं, वृद्धानां शरीरपरिणामात्तेनोपस्नेहेन शरीरं याप्यते । 'स एवान्नरसो वृद्धानां जरापरिपक्वशरीरत्वादप्रीणनो भवति' इति । अनुगृह्यते परिपाल्यते । आकुञ्चनादिभिरित्यत्रादिशब्दात् भाषणस्वप्नावबोधादयो गृह्यन्ते । शिराणां सूक्ष्मशेषप्रदर्शनाय दृष्टान्तमाह,—द्रुमेत्यादि । प्रतानाः विस्ताराः, ततः इति नाभित इत्यर्थः ॥ ३ ॥

**भवतश्चात्र ।**

**यावत्यस्तु शिराः काये संभवन्ति शरीरिणाम् ॥**
**नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः ॥४॥**

भवतश्चात्रेत्यादि । प्रतन्वन्ति ऊर्ध्वमधस्तिर्यक् च काये इति संबध्यते ॥ ४ ॥

**नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता ॥**
**शिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥ ५ ॥**

इदानीं शिराणां प्राणानां चाधाराधेयत्वं प्रतिपादयन्नाह,—नाभिस्था इत्यादि । नाभिस्थाः इत्यनेन नाभ्यावरकासु शिरासु अवस्थिताः । प्राणाः इति शिराणां प्राणाधारत्वं प्रतिपादितम् ॥ ५ ॥

**तासां मूलशिराश्चत्वारिंशत्; तासां वातवाहिन्यो दश, पित्तवाहिन्यो दश, कफवाहिन्यो दश, दश रक्तवाहिन्यः। तासां तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति, तावत्यः एव पित्तवाहिन्यः पित्तस्थाने, कफवाहिन्यश्च कफस्थाने, रक्तवाहिन्यश्च यकृत्प्लीह्नोः, एवमेतानि सप्त शिराशतानि॥ ६॥**

इदानीं शिरापिण्डमभिधाय विभजन्नाह,—तासामित्यादि॥ ६॥

**तत्र वातवाहिन्यः शिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः, एतेनेतरसक्थि बाहू च व्याख्यातौ। विशेषतस्तु कोष्ठे चतुस्त्रिंशत्, तासां गुदमेढ्राश्रिताः श्रोण्यामष्टौ, द्वे द्वे पार्श्वयोः, षट् पृष्ठे, तावत्य एव चोदरे, दश वक्षसि। एकचत्वारिंशत् जत्रुण ऊर्ध्वं, तासां चतुर्दश ग्रीवायां, कर्णयोश्चतस्रः, नव जिह्वायां, षट् नासिकायां, अष्टौ नेत्रयोः, एवमेतत् पञ्चसप्ततिशतं वातवहानां शिराणां व्याख्यातं भवति। एष एव विभागः शेषाणामपि। विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश, कर्णयोर्द्वे; एवं रक्तवहाः कफवहाश्च। एवमेतानि सप्त शिराशतानि सविभागानि व्याख्यातानि॥ ७॥**

वातादिवहाः शिराः सामान्यतः संख्यया अभिधाय प्रसङ्गविभागेन ता एव प्रतिपादयितुमाह,—तत्र वातवाहिन्य इत्यादि। कोष्ठे चतुस्त्रिंशदिति याः प्रतिपादितास्तासां विवरणमाह—तासां गुदमेढ्राश्रिता इत्यादि। एकचत्वारिंशत् जत्रुण ऊर्ध्वमित्युद्दिष्टानां विवरणमाह—तासां चतुर्दशेत्यादि। पञ्चसप्ततिशतमिति पञ्चसप्तत्यधिकं शतमित्यर्थः। एष इत्यादि एष एव विभागः पूर्वोक्तो वातवाहिशिराविभाग इत्यर्थः। शेषाणामिति पित्तश्लेष्मरक्तवहानामित्यर्थः। एतेन पित्तादिवाहिनीनामपि शिराणां प्रत्येकं पञ्चसप्तत्यधिकं शतं भवतीत्युक्तम्। उपसंहारमाह,—एवमित्यादि॥ ७॥

भवन्ति चात्र।

**क्रियाणामप्रतीघातममोहं बुद्धिकर्मणाम्॥**
**करोत्यन्यान् गुणांश्चापि स्वाः शिराः पवनश्चरन्॥८॥**
**यदा तु कुपितो वायुः स्वाः शिराः प्रतिपद्यते॥**
**तदास्य विविधा रोगा जायन्ते वातसंभवाः॥ ९॥**
**भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्॥**
**संसर्पत्स्वाः शिराः पित्तं कुर्याच्चान्यान्गुणानपि॥१०॥**
**यदा प्रकुपितं पित्तं सेवते स्ववहाः शिराः॥**
**तदास्य विविधा रोगा जायन्ते पित्तसंभवाः॥११॥**
**स्नेहमङ्गेषु सन्धीनां स्थैर्यं बलमुदीर्णताम्॥**
**करोत्यन्यान् गुणांश्चापि बलासः स्वाः शिराश्चरन्१२**
**यदा तु कुपितः श्लेष्मा स्वाः शिराः प्रतिपद्यते॥**
**तदास्य विविधा रोगा जायन्ते श्लेष्मसंभवाः॥१३॥**
**धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम्॥**
**स्वाः शिराः संचरद्रक्तं कुर्यात् चान्यान् गुणानपि१४**
**यदा तु कुपितं रक्तं सेवते स्ववहाः शिराः॥**
**तदास्य विविधा रोगा जायन्ते रक्तसंभवाः॥ १५॥**

इदानीं वातादिवहशिरासु वातादीनां प्रकृतिभूतानां प्राकृतं कर्म विकृतिभूतानां वैकृतं कर्म निर्दिशन्नाह—क्रियाणामित्यादि। क्रियाणां कायक्रियाणां प्रसारणाकुञ्चनादीनां, वाक्क्रियाणां भाषितादीनाम्। अप्रतीघातं अप्रतिहननम्। बुद्धिकर्मणामिति पञ्चानां बुद्धीन्द्रियाणां, मनसो बुद्धेश्च स्वे स्वे विषये प्राकृतायां प्रवृत्तौ मोहस्याभावं करोति। अन्यान् गुणान् 'तत्र प्रस्पन्दनोद्वहनपूरण' इत्यादिकान्। भ्राजिष्णुतामित्यादि भ्राजिष्णुतां दीप्तिमत्त्वं, संसर्पत् गच्छत्। अन्यान् गुणान् रागपक्त्योज इत्यादिकान्। यदेत्यादि अन्यान् गुणान् सन्धिश्लेषणादिकान्। यदा तु इत्यादि अन्यान् गुणान् 'रक्तं वर्णप्रसादं मांसपुष्टिं करोति' इत्याद्युक्तान्॥ ८—१५॥

**न हि वातं शिराः काश्चित् न पित्तं केवलं तथा॥**
**श्लेष्माणं वा वहन्त्येता अतः सर्ववहाः स्मृताः॥१६॥**

प्राकृतवातादिवहानामपि शिराणां सर्वत्र सर्वकार्योपलम्भात् सर्ववहत्वं दर्शयन्नाह,—न हि वातमित्यादि॥ १६॥

**प्रदुष्टानां हि दोषाणां मूर्छितानां प्रधावताम्॥**
**ध्रुवमुन्मार्गगमनमतः सर्ववहाः स्मृताः॥ १७॥**

इदानीं प्रकुपितवातादिवहानामपि शिराणां सर्ववहत्वं दर्शयन्नाह,—प्रदुष्टानामित्यादि। मूर्च्छितानामिति परस्परं मिश्रितानामित्यर्थः॥ १७॥

**तत्रारुणा वातवहाः पूर्यन्ते वायुना शिराः॥**
**पित्तादुष्णाश्च नीलाश्च शीता गौर्यः स्थिराः कफात्॥**
**असृग्वहास्तु रोहिण्यः शिरा नात्युष्णशीतलाः॥१८॥**

शिराविभक्तिं प्रतिपाद्य तद्वर्णविभक्तिं प्रतिपादयन्नाह,—तत्रेत्यादि॥ १८॥

**अत ऊर्ध्वं प्रवक्ष्यामि न विध्येद् याः शिरा भिषक्॥**
**वैकल्यं मरणं चापि व्यधात् तासां ध्रुवं भवेत्॥१९॥**
**शिराशतानि चत्वारि विद्यात् शाखासु बुद्धिमान्।**
**षट्त्रिंशत् च शतं कोष्ठे चतुःषष्टिं च मूर्धनि॥२०॥**
**शाखासु षोडश शिराः कोष्ठे द्वात्रिंशदेव तु॥**
**पञ्चाशज्जत्रुणश्चोर्ध्वमवेध्याः परिकीर्तिताः॥ २१॥**

तत्र व्यध्याव्यध्यविभागज्ञानाय पूर्वोक्तानि सप्तशिराशतानि षडङ्गेष्वनूद्य प्रतिज्ञाता अव्यध्याः शिराः प्राह,—शिराशतानीति। शिराशतानि चत्वारि इति एकैकशाखागतवातादिवहानां शिराणां पञ्चविंशत्या चत्वारि शतानि भवन्ति। चतुःषष्टिं चेति शतमित्यत्रापि योजनीयं, तेन चतुःषष्ठ्यधिकं शतं मूर्धनि ज्ञातव्यम्॥ १९—२१॥

**तत्र शिराशतमेकैकस्मिन् सक्थ्नि भवति; तासां**

**जालधरा त्वेका तिस्रश्चाभ्यन्तरास्तत्रोर्वीसंज्ञे द्वे लोहिताक्षसंज्ञा चैकैतास्त्ववेध्याः; एतेनेतरसक्थि बाहू च व्याख्यातौ, एवमशस्त्रकृत्याः षोडश शाखासु; द्वात्रिंशत् श्रोण्यां, तासामष्टावशस्त्रकृत्या द्वे द्वे विटपयोः कटीकतरुणयोश्च; अष्टावष्टावेकैकस्मिन् पार्श्वे, तासामेकैकामूर्ध्वगां परिहरेत्, पार्श्वसन्धिगते च द्वे; चतस्रो विंशतिश्च पृष्ठे पृष्ठवंशमुभयतः, तासामूर्ध्वगामिन्यौ द्वे द्वे परिहरेद्‌बृहतीसिरे; तावत्य एवोदरे, तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत्; चत्वारिंशद् वक्षसि, तासां चतुर्दशाशस्त्रकृत्या हृदये द्वे, द्वे द्वे स्तनमूले, स्तनरोहितापलापस्तम्भेषूभयतोऽष्टौ; एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति। चतुःषष्टिशिराशतं जत्रुण ऊर्ध्वं भवति; तत्र षट्पञ्चाशत् शिरोधरायां, तासामष्टौ चतस्रश्च मर्मसंज्ञाः परिहरेद्, द्वे कृकाटिकयोर्द्वे विधुरयोः; एवं ग्रीवायां षोडश अव्यध्याः; हन्वोरुभयतोऽष्टावष्टौ, तासां तु सन्धिधमन्यौ द्वे द्वे परिहरेत्; षट्त्रिंशत् जिह्वायां, तासामधः षोडश अशस्त्रकृत्याः रसवहे द्वे वाग्वहे च द्वे; द्विर्द्वादश नासायां, तासामौपनासिक्यश्चतस्रः परिहरेत्; तासामेव च तालुनि एकां मृदावुद्देशे; अष्टात्रिंशदुभयोर्नेत्रयोस्तासामेकैकामपाङ्गयोः परिहरेत्; कर्णयोर्दश, तासां शब्दवाहिनीनामेकैकां परिहरेत्; नासानेत्रगतास्तु ललाटे षष्टिः, तासां केशान्तानुगताश्चतस्रः आवर्तयोरेकैका स्थपन्याश्चैका परिहर्तव्या; शङ्खयोर्दश, तासां शङ्खसन्धिगतामेकैकां परिहरेत्; द्वादश मूर्ध्नि, तासामुत्क्षेपयोर्द्वे परिहरेत्, सीमन्तेष्वेकैकां, एकामधिपताविति; एवमशस्त्रकृत्याः पञ्चाशत् जत्रुण ऊर्ध्वमिति ॥ २२ ॥**

कास्ताः अव्यध्याः ? इत्याह,—तत्र शिराशतमिति । जालधरा इति जालानीव जालानि मांसशिरास्नाय्वस्थिसन्धिजानि कूर्चशिरोव्यापीनि तानि धारयन्ति यास्ता जालधरा इत्यर्थः । कास्तास्तिस्रोऽभ्यन्तरा इत्याह,—तत्रोर्वीसंज्ञे द्वे इत्यादि द्वे अपि ते ऊर्वीसंज्ञे अतिसान्निध्यात् प्राक् मर्मविभागीयशारीरे ऊर्वीसंज्ञैकमर्मतया निर्दिष्टे । कटीकतरुणयोश्चेति अत्रापि द्वे द्वे इति संबन्धः । पार्श्वसन्धिगते द्वे इति जघनपार्श्वमध्ययोर्ये पार्श्वसन्धिसंज्ञके मर्मणी तत्संज्ञां प्राप्ते द्वे । चतस्रः इत्यादि पृष्ठगतचतुर्विंशतिशिरासु द्वे द्वे बृहती सिरे परिहरेदित्यर्थः । तावत्यः इति चतुर्विंशतिरित्यर्थः । चत्वारिंशदिति उभयतोऽष्टौ इति उभयत्रेत्यर्थः[1], उभयत इति स्तनमूलादिषु योजनीयं, तेनोभयत्र स्तनमूले वामदक्षिणाश्रिते द्वे द्वे इति चतस्रः । तथोभयत्र स्तनरोहितापलापस्तम्भेष्वष्टौ, तत्र स्तनरोहितयोर्द्वे द्वे, अपलापयोरेकैका, अपस्तम्भयोरप्येकैका एवमष्टावित्यर्थः । उपसंहारमाह,—एवमिति । पृष्ठोदरोरःसु इति अत्र पृष्ठशब्देन श्रोणिपार्श्वानामपि ग्रहणं, तेन श्रोणिगता अष्टौ, पार्श्वगता एकैका, चतस्रः पृष्ठे, चतस्र उदरे, चतुर्दश वक्षसि, एवं द्वात्रिंशदव्यध्याः । चतुःषष्टीति चतुःषष्टिशिराशतमिति चतुःषष्ट्यधिकं शिराशतमित्यर्थः । तत्र षडिति तत्र इति चतुःषष्ट्यधिकशिराशतमध्ये । अष्टौ चतस्रश्च मर्मसंज्ञाः इति तत्राष्टौ मातृकाः, द्वे नीले, द्वे च मन्ये, एता द्वादशमर्मसंज्ञा इत्यर्थः । तथा द्वे कृकाटिकयोः, द्वे विधुरयोः, एवं ग्रीवायामिति । गयी तु वातादिवहानां चतुर्भिरष्टकैर्द्वात्रिंशद् ग्रीवायां, तत्र षोडश अव्यध्या इति प्रतिपादयति । हन्वोरित्यादि सन्धिधमन्यौ इति हनुसन्धिधमन्यावित्यर्थः । हन्वोः षोडश शिरा ग्रीवाशिरासु एवान्तर्भवन्तीत्यतो न पृथग्गणनीयाः । गयी तु हनुगताः पृथगेव षोडश, तत्र द्वे सन्धिबन्धनकर्मणी परिहरेदित्याह । षट्त्रिंशदित्यादि । तासामधः षोडश इति तासां जिह्वागतषट्त्रिंशच्छिराणां मध्ये अधोजिह्वायाः षोडशशिरा भवन्ति, शेषा विंशतिश्च जिह्वाया ऊर्ध्वं भवन्ति । अशस्त्रकृत्या रसवहे वाग्वहे च इति रसवहे द्वे, वाग्वहे च द्वे । गयी तु अष्टाविंशतिर्जिह्वायां, तासां रसवाहिन्यः षट् अशस्त्रकृत्या इति ब्रूते । द्विर्द्वादश इति चतुर्विंशतिरित्यर्थः । औपनासिक्यः नासासमीपवर्तिन्यः । मृदावुद्देशे इति घोणासमीपे[1] इत्यर्थः । गयी तु षोडश नासायां तासु पञ्च अव्यध्या इत्याह । अष्टत्रिंशदिति गयी तु 'चतुर्विंशतिरुभयोर्नेत्रयोः तासामेकैकामपाङ्गयोः परिहरेत्' इत्याचष्टे। कर्णयोरिति गयी तु कर्णयोः षोडश, तासामेकैकां शब्दवहां परिहरेदिति ब्रूते । नासानेत्रेति याश्चतुर्विंशतिर्नासागता याश्च षट्त्रिंशन्नेत्रगतास्ता एव षष्टिः ललाटे विज्ञातव्याः, अतो न पृथग्गणनीयाः । केशान्तानुगताः इति आवर्तमर्मसमीपकेशान्तानुगता इत्यर्थः । गयी तु ललाटस्थिताभिः शिराभिः सह नासानेत्रगताः शिराः ललाटे षष्टिः, तासु सप्त अव्यध्या इति ब्रूते । शङ्खयोरिति शङ्खयोर्दश इत्येता अपि नासानेत्रगता बोद्धव्याः, अतो न पृथग्गणनीयाः । गयी तु शङ्खयोरष्टौ पृथगेव पठति, तासु द्वे शङ्खसन्धिगतेऽव्यध्ये इति प्रतिपादयति । द्वादश मूर्ध्नीति सीमन्तेषु पञ्चसु एकैकां परिहरेत्, तथा अधिपतावेकां परिहरेत्, एतासामपि नासानेत्रगतत्वात् पृथग्गणना न कर्तव्या । गयी तु मूर्ध्नि पृथगेव द्वादश पठित्वा तास्वष्टावव्यध्या इत्याह ॥ २२ ॥

**भवति चात्र ।**

**व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः शिराः ॥**
**प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम् ॥२३॥**

इदानीं सर्वत्र शिरासंभवत्वेन नियमव्याख्यानसङ्ख्याव्य-

१ 'उभयत्रेत्यर्थे' इति पाठान्तरम् ।

१ 'घण्टासमीपे' इति पाठान्तरम् ।

भिचारोऽस्तीति दर्शयन्नाह,—व्याप्नुवन्ति इति । यथा बिसादीनां प्रताना विस्तारा पद्मिनीकन्दात्प्रसृता जलं व्याप्नुवन्ति तथा नाभितः प्रसृताः शिराः सर्वतः शरीरं व्याप्नुवन्ति ॥२३॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

**अथातः शिराव्यधविधिशारीरं व्याख्यास्यामः ॥१॥ यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**

शिरावर्णविभक्त्यनन्तरं ज्ञातव्याव्यध्यशिरस्य शिराव्यधविधिर्युज्यते इत्याह,—अथात इत्यादि ॥ १ ॥ २ ॥

**बालस्थविररूक्षक्षतक्षीणभीरुपरिश्रान्तस्त्रीमद्याध्वकर्षितवमितविरिक्तास्थापितानुवासितजागरितक्लीबकृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छाप्रपीडितानां च शिरां न विध्येत्, याश्चाव्यध्याः, व्यध्याश्चादृष्टाः, दृष्टाश्चायन्त्रिताः, यन्त्रिताश्चानुत्थिताः इति ॥ ३ ॥**

बालस्थविरयोरसंपूर्णक्षीणधातुत्वात्, गयी तु क्षतेन क्षीणः क्षतक्षीणस्तस्यानिलव्याधिभयान्न विध्येदिति व्याख्याति, भीरोश्च तमोबहुलत्वाल्लोहितदर्शनेन मूर्च्छाभयान्न विध्येत्, परिश्रान्तस्य श्रमकुपितो शोणितावसेचनेनातिप्राबल्यं प्राप्य शरीरव्यापादकः स्यात्, मद्यपस्य मदविक्षिप्तचित्तस्यातिमूर्च्छाकरत्वात्, अध्वस्त्रीकर्षितस्य वातप्रकोपभयान्न विध्येत्, वान्तविरिक्तयोरकृतसंसर्जनयोरपीतस्नेहयोर्वमनविरेकानन्तरमेव वातप्रकोपभयात् शिरां न विध्येत्, आस्थापितजागरितयोर्मरुत्प्रकोपभयान्न विध्येत्, अनुवासितस्य मन्देऽग्नौ भूयोऽग्निमान्द्यभयात्, क्लीबस्य प्रधानधातुक्षयेणाल्पसत्वेन च निश्चितविनाशात्, कृशस्य गर्भिणीनां चोपक्षीणधातुत्वाद्देहसन्देहभयात्, कासश्वासशोषिणामपि अपचीयमानधातुत्वेन देहसन्देहभयान्न विध्येत्, प्रवृद्धज्वरस्यासृक्स्रावेण प्रलापादिभयात् शिरां न विध्येत् । याश्चाव्यध्या इति अशेषाव्यध्यप्रसङ्गेनोक्तमपि न पुनरुक्तम् ॥ ३ ॥

**शोणितावसेकसाध्याश्च ये विकाराः प्रागभिहितास्तेषु चापकेषु अन्येषु चानुक्तेषु यथाभ्यासं यथान्यायं च शिरां विध्येत् ॥ ४ ॥**

शोणितावसेकसाध्या इति 'त्वग्दोषा ग्रन्थयः शोफा' इत्यादयः शोणितवर्णनीये उक्ताः । तेषु चापकेषु इति यद्यपि रक्ताभावात् पक्वानां रक्तस्रुतिर्न क्रियते इत्यर्थादेवापक्वग्रहणं लभ्यते, तथापि बाह्योपक्रमेषु मध्ये शोणितावसेकस्य प्राधान्यख्यापनायापक्वग्रहणं कृतम् । अन्येषु चानुक्तेषु इति ये विपाकाभिमुखाः शोणितावसेकसाध्येषु अनभिहितास्तेष्वित्यर्थः । यथाभ्यासमिति यथासमीपमित्यर्थः । यथान्यायमिति न्यायस्य स्नेहस्वेदादिकस्य अनतिक्रमेण यथान्यायम् ॥ ४ ॥

**प्रतिषिद्धानामपि च विषोपसर्गे आत्ययिके च शिराव्यधनमप्रतिषिद्धम् ॥ ५ ॥**

इदानीं कारणवशान्निषिद्धानामपि शोणितावसेकं दर्शयन्नाह,—प्रतिषिद्धानामपीति । प्रतिषिद्धानामिति बालस्थविरादीनाम् । आत्ययिकेषु इति अत्ययो विनाशो भवत्यस्मादिति आत्ययिकः, विद्रध्यादिरनन्यसाध्यः ॥ ५ ॥

**तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकं द्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वा यथाकालमुपस्थाप्यासीनं स्थितं वा प्राणानबाधमानो वस्त्रपट्टचर्मान्तर्वल्कललतानामन्यतमेन यन्त्रयित्वा नातिगाढं नातिशिथिलं शरीरप्रदेशमासाद्य[1] प्राप्तं शस्त्रमादाय शिरां विध्येत् ॥ ६ ॥**

तत्र शिराव्यधस्य पूर्वकर्मविधिं प्रदर्श्य प्रधानकर्मविधिं दर्शयन्नाह,—तत्रेति । तत्र इति वाक्योपक्रमे । आतुरमिति अत्र आतुरग्रहणं स्वस्थस्य रक्तं न स्रावयेदिति बोधनार्थम् । द्रवप्रायमिति रक्तोत्क्लेशनार्थं द्रवाधिकमन्नं भुक्तवन्तम् । यवागूं पीतवन्तमिति सात्म्यापेक्षया । यथाकालमिति वर्षादिषु व्यभ्रादिकालानतिक्रमेण । उपस्थाप्य सन्निधाने स्थापयित्वा । आसीनं उपविष्टं, स्थितं ऊर्ध्वीभूतम् । नातिगाढं नातिशिथिलमिति नातिगाढं उत्तमाङ्गे, नातिशिथिलं शाखासु । शरीरप्रदेशं गृहीत्वेत्यर्थः । प्राप्तं शस्त्रमिति उपयुक्तं शस्त्रमित्यर्थः ॥ ६ ॥

**नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते ॥**
**शिराणां व्यधनं कार्यमरोगे वा कदाचन ॥ ७ ॥**

नैवातिशीते इति । अभ्रिते इति अभ्राणि संजातानि यत्र दिने तदभ्रितं दिनं तस्मिन्नित्यर्थः ॥ ७ ॥

**तत्र व्यध्यशिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोर्निवेश्य कूर्परौ सन्धिद्वयस्योपरि हस्तावन्तर्गूढाङ्गुष्ठकृतमुष्टी मन्ययोः स्थापयित्वा यन्त्रणशाटकं ग्रीवामुष्ट्योरुपरि परिक्षिप्यान्येन पुरुषेण पश्चात्स्थितेन वामहस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो वैद्यो ब्रूयात् दक्षिणहस्तेन शिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावेष्टयेति, असृक्स्रावणार्थं च यन्त्रं पृष्ठमध्ये पीडयेति, कर्मपुरुषं च वायुपूर्णमुखं स्थापयेत्; एष उत्तमाङ्गगतानामन्तर्मुखवर्ज्यानां शिराणां व्यधने यन्त्रणविधिः । तत्र पादव्यध्यशिरस्य पादं समे स्थाने सुस्थिरं स्थापयित्वान्यं पादमीषत्संकुचितमुच्चैः कृत्वा व्यध्यसिरपादं जानुसन्धेरधः**

[1] 'यथोक्तं गृहीत्वा' इति पाठान्तरम् ।

**मासा गर्भस्य तावन्त्यहानि; बस्त्युदरशूलेषु पुराणगुडं दीपनीयसंयुक्तं पाययेदरिष्टं वा; वातोपद्रवगृहीतत्वात् स्रोतसां लीयते गर्भः, सोऽतिकालमवतिष्ठमानो व्यापद्यते, तं मृदुना स्नेहादिक्रमेणोपचरेत्, उत्क्रोशरससंसिद्धामनल्पस्नेहां यवागूं पाययेत्, माषतिलबिल्वशलाटुसिद्धान् वा कुल्माषान् भक्षयेन्मधुमाध्वीकं चानुः पिबेत् सप्तरात्रम्; कालातीतस्थायिनि गर्भे विशेषतः सधान्यमुदूखलं मूषलेनाभिहन्याद्विषमे वा यानासने सेवेत; वाताभिपन्न एव शुष्यति गर्भः, स मातुः कुक्षिं न पूरयति मन्दं स्पन्दते च, तं बृंहणीयैः पयोभिर्मांसरसैश्चोपचरेत्; शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरं, तत्कदाचिद्यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते, तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुः, तत्रापि लीनवत् प्रतीकारः ॥ ५७ ॥**

अत्यर्थं स्रवतिरक्ते असृग्दर इत्यर्थः। कोष्ठवदागारं कोष्ठागारं तेन चरतीति कोष्ठागारिका महाकारिका कीटविशेषः तद्गृहमृत्तिका। औदकाः कन्दाः कसेरुशालुकनदीमाषकादयः। दुष्टशोणितायां रुजि चिकित्सां निर्दिश्यादुष्टशोणितायां रुजि चिकित्सां निर्दिशन्नाह,—अथादुष्टशोणित इत्यादि। पयस्या अर्कपुष्पी। सिद्धं पयः पाययेदिति शेषः। अश्मन्तकः कर्बुदाकारः। उपावर्तन्ते उपशमं यान्ति। गर्भश्चाप्याय्यते रक्तश्रुतिकर्षितः। 'एवं क्षिप्रमुपक्रान्ते नीरजाया उपावर्तन्ते गर्भः प्राप्याय्यते च' इति क्वचित् पाठः। तन्त्रान्तरे चोपविष्टकाख्योऽयं गर्भः कथितः। तथाच चरके,—"यस्याः पुनरुष्णतीक्ष्णोपयोगाद् गर्भिण्या महति जातसारे गर्भे पुष्पदर्शनं अन्यो वा योनिस्रावः, तस्या गर्भो वृद्धिं न प्राप्नोति निःस्रुतत्वात् सकालान्तरमवतिष्ठते सस्पन्दश्चभवति, तमुपविष्टकमित्याचक्षते" —इति। व्यवस्थिते चेत्यादि—उडुम्बरस्य कोमलैः फलैः पक्वेन क्षीरेण। क्षीरपाकस्तु तन्त्रान्तराभिहितो यथा,—"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणं। क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः"। अतीते इत्यादि अतीते पतित इत्यर्थः। उद्दालकः आरण्यकोद्रवः, एतच्च यवागूदानं लङ्घनपूर्वम्। तथाच वाग्भटः,—"आमान्वये च तत्रेष्टं शीतं रुक्षोपसंहितं। उपवासो घनोशीरगुडूच्यरलुधानकाः। क्वथिताः सलिले पानं तृणधान्यादिभोजनं—"इति। बस्त्युदरशूलेष्वित्यादि। दीपनीयसंयुक्तं पञ्चकोलचूर्णसंयुक्तं, अरिष्टमभयारिष्टादिकम्। उक्तरक्तस्रुतिनिमित्तोपविष्टकप्रसङ्गेनापरां चिरकालस्थायिनीं गर्भविकृतिं दर्शयन्नाह,—वात इत्यादि। आदिशब्दः प्रधानवाची, तेन स्नेहप्रधानानुक्रमेणेत्यर्थः। मृदुनेति मधुपानवर्जितवचारणास्नेहेनेति मन्यन्ते। तामेवावचराणां निर्दिशन्नाह,—उत्क्रोशरससंसिद्धामित्यादि। उत्क्रोशः कुररभेदः, अनल्पस्नेहां प्रभूतस्नेहां; अन्ये पुनरल्पस्नेहामिति पठन्ति तदसम्यक्, यवाग्वा पचनार्थमाज्यस्योपयुज्यमानत्वात् परतन्त्रदर्शनाच्च। तदुक्तं चरके,—"यस्याः पुनर्गर्भः प्रसुप्तो न स्पन्दते तां श्येन मत्स्यगवयशिखिताम्रचूडतित्तिरीणामन्यतमस्य सर्पिष्मता रसेन माषयूषेण वा प्रभूतसर्पिषा भोजयेत्—" इति। बिल्वस्य कोमलफलैः सिद्धान्। एवं श्रोतसामवरोधहेतोर्वातस्य उपशमविधिमुक्त्वा वातोपशमहेतु भूतानां श्रोतसां विकाशार्थं विधिं दर्शयन्नाह,—कालातीत इत्यादि। उत्क्रोशकुररकौ समाविलमरः, पक्षिविशेष इत्यर्थः। मृदुना अतीक्ष्णेन,- तीक्ष्णस्य गर्भोपघातकरत्वात्। स्नेहादीन् इत्यत्रादिशब्दो न व्यवस्थावाची, तीक्ष्णस्वेदस्य वमनविरेचनयोश्च गर्भोपघातकरत्वात्। शुष्कमाह,—वाताभिपन्न इत्यादि। वाताभिपन्नो गर्भः शुष्यति, नतु पुनर्लीनवत् मार्गावरोधात्तिष्ठति। गर्भशोषलक्षणं पुनः कुक्षेरपूरणं, वातशोषणेनैव विहतौजस्त्वात् गर्भो मन्दमेव चलति। बृंहणीयैः पयोभिरिति बृंहणीयसंस्कृतैः क्षीरैरित्यर्थः। मांसरसैश्चेति चकारात् नीलशुण्डाकेरसमुच्चयः। वृद्धकाश्यपे च शुष्कलक्षणमभिहितं यथा—"गर्भनाड्यास्त्ववहनादल्पत्वाद्वा बलस्य च। चिरेणाप्याय्यते गर्भस्तथैवाकालभोजनात्। अकुक्षिपूरणं गर्भो शुष्कश्च मन्द एव च"—अवक्रान्तजीवं जीवनोपगतं, अतएवाकुथितमवतिष्ठेत्। शुक्रार्तवावरोधनो वायुरेव उदरमाध्मापयति। तदाध्मानं कदाचित् यदृच्छया अनियतहेतुना उपशान्तं लीनभूतं दृष्ट्वा नैगमेषेण बालग्रहेणाहृतमिति वदन्ति। वाताभिन्नमेव गर्भावस्थाविशेषं दर्शयन्नाह,—तमेवेत्यादि। तमेव वाताभिपन्नमेव पुनः प्रविलीनमानं अल्पीभवन्तं नागोदरमिति ब्रुवते। तत्रेति नागोदरे। अपि शब्दात् नैगमेषेण हृतेपि लीनोक्तप्रतीकारः॥ ५७॥

**अतऊर्ध्वं मासानुमासिकं वक्ष्यामः॥ ५८॥**

**मधुकं शाकबीजं च पयस्या सुरदारु च॥**
**अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी॥५९॥**
**वृक्षादनी पयस्या च लता चोत्पलसारिवा॥**
**अनन्ता सारिवा रास्ना पद्मा मधुकमेव च॥ ६०॥**
**बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम्॥**
**पृश्निपर्णी बला शिग्रु श्वदंष्ट्रा मधुपर्णिका॥ ६१॥**
**शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता॥**
**वत्सैते सप्त योगा स्युरर्धश्लोकसमापनाः॥**
**यथासंख्यं प्रयोक्तव्या गर्भस्रावे पयोयुताः॥ ६२॥**

शाको महावृक्षः कर्कशपत्रः, तस्य बीजम्। पयस्या अर्कपुष्पी, गयी तु पयस्यां क्षीरविदारीं क्षीरकाकोलीं वा ब्रूते। अश्मन्तकः कोविदारसदृशोऽम्लपत्रः 'अम्ललोटक' इति लोके। ताम्रवल्ली वामतरुणी मञ्जिष्ठा। अपरलता प्रियङ्गुः। अनन्ता उत्पलसारिवा, पद्मा पद्मचारिणी, भार्गीमपरे। बृहत्यौ स्थूलफला चणकबृहती च। क्षीरिशुङ्गाः क्षीरिवृक्षाणां वटादीनां अविक-

सिताः प्रवालाः। मधुपर्णी मधुयष्टिका। यथासंख्यमिति प्रथममासमारभ्य सप्तममासान् यावत् अनुक्रमेणेत्यर्थः। पयोयुता इति चूर्णादिप्रयोगे एते योगाः पयसा युताः प्रयोज्या इत्यर्थः॥ ५८–६२॥

**कपित्थबृहतीबिल्वपटोलेक्षुनिदिग्धिजैः॥**
**मूलानि क्षीरसिद्धानि पाययेद्भिषगष्टमे॥ ६३॥**
**नवमे मधुकानन्तापयस्यासारिवाः पिबेत्॥**
**क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम्॥६४॥**
**सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च॥**
**एवमाप्याय्यते गर्भस्तीव्रा रुक् चोपशाम्यति॥ ६५॥**

कपित्थेत्यादि। कपित्थादीनां मूलानि क्षीरसिद्धान्यष्टमे मासि। नवमे मधुकादयः सारिवान्ताः क्षीरसिद्धाः पिबेत्। पयस्या क्षीरविदारी। दशमे मासि शुण्ठीपयस्याभ्यां क्षीरपाककल्पनया सिद्धं क्षीरं हितं भवेत्। अथवा सक्षीराः शुण्ठ्यादयः प्रशस्यन्ते, वाग्भटेऽप्येतैः सिद्धं क्षीरं प्रतिपादितं; तथा च,—"कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिजैः। मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाष्टमे। नवमे शारिवानन्तापयस्यामधुयष्टिभिः। योजयेद्दशमे मासि क्षीरं सिद्धं पयस्यया। अथवा यष्टिमधुकनागरामरदारुभिः"—इति। गयदासेन एते गर्भस्रावचिकित्सितयोगाः प्रागेव गर्भश्चाप्यायत इत्यनन्तरं पठिताः॥ ६३–६५॥

**निवृत्तप्रसवायास्तु पुनः षड्भ्यो वर्षेभ्य ऊर्ध्वं प्रसवमानाया नार्याः कुमारोऽल्पायुर्भवति॥ ६६॥**

इदानीं पूर्वगर्भजन्मनो उत्तरगर्भजन्मावधिमतिक्रम्य गर्भग्राहिण्या दोषं दर्शयन्नाह,—निवृत्तेत्यादि। एतेन षड्भ्यो वर्षेभ्य ऊर्ध्वं निवृत्तप्रसवेत्युच्यते। षट्सु षडवयवेषु पञ्चचतुस्त्रिद्विवर्षेषु गर्भानुजननस्य जन्मकाल इति; कुतः पुनरस्याः कुमारोऽल्पायुर्भवति? उच्यते—गर्भाशययोन्यादिदोषेण हि निवर्तते प्रसवः; तत्र तच्छोधनक्रियामन्तरेणाहारविहारादिगुणमात्रेण यदृच्छोपगृहीताया योनिगर्भाशयादिषु अनिष्फुटितदोषेषु जातोऽल्पायुरेवेति॥ ६६॥

**अथ गर्भिणीं व्याध्युत्पत्तावत्यये छर्दयेन्मधुराम्लेनान्नोपहितेनानुलोमयेच्च, संशमनीयं च मृदु विदध्यादन्नपानयोः, अश्नीयाच्च मृदुवीर्यं मधुरप्रायं गर्भाविरुद्धं च, गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः॥ ६७॥**

गर्भव्याघातकत्वेन निषिद्धाया वमनादिक्रियायाः क्वचिदत्ययकारिणि व्याधौ मृदुना द्रव्येण प्रतिप्रसवं निर्दिशन्नाह,—अथ गर्भिणीमित्यादि। अत्यये विनाशहेतौ। अनुलोमयेच्चेति मधुराम्लेनान्नोपहितेनेति संबन्धः। आहारं नियमयन्नाह,—अश्नीयाच्चेत्यादि। विहारमप्यस्य नियमयन्नाह,—गर्भाविरुद्धा इत्यादि। यथायोगं अहीनातिमिथ्यायोगेनेत्यर्थः॥ ६७॥

**भवन्ति चात्र।**

**सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा॥**
**मत्स्याक्षकः शङ्खपुष्पी मधुसर्पिः सकाञ्चनम्॥६८॥**
**अर्कपुष्पी मधुघृतं चूर्णितं कनकं वचा॥**
**हेमचूर्णानि कैटर्यः श्वेता दूर्वा घृतं मधु॥ ६९॥**
**चत्वारोऽभिहिताः प्राशाः श्लोकार्धेषु चतुर्ष्वपि॥**
**कुमाराणां वपुर्मेधाबलबुद्धिविवर्धनाः॥ ७०॥**

इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां शारीरस्थानं समाप्तम्।

इदानीं योगान्तरैः सह कुमारस्य सुवर्णचूर्णं निर्दिशन्नाह,—सौवर्णमित्यादि। मत्स्याक्षको ब्राह्मी, 'धूस्तूर' इत्येके, अन्ये रक्तपुष्पमानूपं 'मत्स्याक्षक' इति लोके प्रसिद्धमाहुः। अर्कपुष्पी पयस्या अर्कसदृशःपयःपुष्पा, श्वेतदूर्वाविशेषां केचिदाहुः, वृक्षजातिमन्ये। कैटर्यः पर्वतनिम्बः। केचित्तु संवत्सरं यावदेते इति अपादकं वाक्यमपठित्वा मात्राज्ञानार्थं बिल्वमित्युक्तं वाक्यमभिदधति, यथा—"विडङ्गफलमात्रं तु जातमात्रस्य भेषजं। एतेनैव प्रदानेन मासि मासि प्रवर्धितं। कोलास्थिमात्रं क्षीरादे दद्याद्भैषज्यकोविदः, क्षीरान्नादे कोलमात्रमन्नादे डुम्बरोपमं—" इति। संवत्सरं यावदेते योगाः प्रयोज्याः; अन्ये द्वादशवर्षाण्याहुः। मात्रा उक्तैव; गयी तु प्राक्तनमात्राप्रतिपादकं वाक्यमपठित्वा मात्राज्ञानार्थं विश्वामित्रोक्तं वाक्यमभिदधाति। यथा,—"विडङ्गफलमात्रं तु जातमात्रस्य भेषजं। एतेनैव प्रमाणेन मासि मासि प्रवर्धितं। कोलास्थिमात्रं क्षीरादे दद्याद्भैषज्यकोविदः। क्षीरान्नादे कोलमात्रमन्नादे डुम्बरोपममिति"॥ ६८–७०॥

इति भिषग्वरश्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां शारीरस्थाने दशमोऽध्यायः समाप्तः।

**समाप्तमिदं शारीरस्थानम्।**

निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता।



## अथ चिकित्सितस्थानम्।

### प्रथमोऽध्यायः।

**अथातो द्विव्रणीयचिकित्सितं व्याख्यास्यामः॥१॥ यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥२॥**

शारीरानन्तरं चिकित्सितस्थानमारभ्यते। द्वौ व्रणौ अधिकृत्य कृतं द्विव्रणीयम्। चिकित्सितं विकारप्रतीकारः॥१॥॥२॥

**द्वौ व्रणौ भवतः शारीर आगन्तुकश्चेति। तयोः शारीरः पवनपित्तकफशोणितसन्निपातनिमित्तः; आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृपप्रपतनपीडनप्रहाराग्निक्षारविषतीक्ष्णौषधशकलकपालशृङ्गचक्रेषुपरशुशक्तिकुन्ताद्यायुधाभिघातनिमित्तः। तत्र तुल्ये व्रणसामान्ये द्विकारणोत्थानप्रयोजनसामर्थ्याद् द्विव्रणीय इत्युच्यते॥३॥**

कथं द्वौ व्रणौ भवत इत्याह–शारीर आगन्तुकश्च। अत्र केचित् शारीरसमुत्थ आगन्तुश्चेति पठन्ति, व्याख्यानयन्ति च—उभयत्र चकारकरणमुभयोश्च व्याकरणमुभयोः परस्परानुबन्धसूचनार्थम्। अभिघातशब्दः पुरुषादिभिः प्रत्येकं सम्बन्धनीयः। पशवो गोमहिषादयः। मृगा एणादयः। पक्षिणः काककङ्कगृध्रादयः। व्याला व्याघ्रादयो दुष्टजीवाः। सरीसृपः कृष्णसर्पादयो मीनमकरौ च। प्रपतनं प्रकर्षेण पतनम्। प्रहारः लगुडादिकुट्टनम्। तीक्ष्णौषधानि चिरविल्वचित्रकादीनि। शकलं काष्ठादीनां खण्डम्। कपालं घटादीनां कर्परम्। चक्रं आयुधविशेषः खनामख्यातः। इषुः बाणः। परशुः आयुधविशेषः कुठाराकारः। शक्तिः आयुधविशेषस्त्रिमुखी। कुन्तः प्रसिद्धः। आदिशब्दात् खड्गादयः। व्रणसामान्यं व्रणजातिः व्रणत्वमित्यर्थः। तस्मिंस्तुल्ये सत्यपि द्विकारणोत्थानप्रयोजनसामर्थ्यात् द्विव्रणीय इत्युच्यते। द्विकारणं द्विहेतुकं यत् उत्थानं उत्पत्तिः तस्य प्रयोजनं शीतक्रियादि तस्य सामर्थ्यं शक्तिस्तस्मात् द्विव्रणीय इत्युच्यते॥३॥

**सर्वस्मिन्नेव आगन्तुव्रणे तत्कालमेव क्षतोष्मणः प्रसृतस्योपशमार्थः पित्तवच्छीतक्रियावचारणविधिविशेषः सन्धानार्थं च मधुघृतप्रयोग इत्येतद् द्विकारणोत्थानप्रयोजनं, उत्तरकालं तु दोषोपप्लवविशेषात् शारीरवत् प्रतीकारः॥४॥**

अथागन्तुव्रणस्य कर्मविशेषप्रयोजनं दर्शयन्नाह—सर्वस्मिन्नित्यादि। तत्कालमेवेति यत्कालमेवाभिघातात् क्षतमुत्पद्यते तस्मिन्नेव काले। क्षतोष्मण इति उष्मा प्रहारसंघट्टजनितःतेजः। प्रसृतस्य विस्तृतस्य। विधिविशेषः विधानभेदः। हेतुप्रत्यनीकं कर्माभिधाय व्याधिप्रत्यनीकं दर्शयन्नाह—सन्धानार्थं चेत्यादि। चकारः क्षतोष्मणो निर्वापणार्थं तथा मार्गावरोधकुद्धवातरक्तशमनार्थं च। वक्ष्यमाणशारीरव्रणोत्थानप्रयोजनं मनसि संप्रधार्याह—एतद् द्विकारणोत्थानप्रयोजनमिति। उत्तरकालमिति सप्ताहादूर्ध्वमित्यर्थः। यतः सद्योव्रणत्वं सप्ताहमेव। दोषोपप्लवविशेषादिति दोषैरनिलादिभिरुपप्लवो दूषणं तद्भेदात्॥४॥

**दोषोपप्लवविशेषः पुनः समासतः पञ्चदशप्रकारः, प्रसरणसामर्थ्याद्; यथोक्तो व्रणप्रश्नाधिकारे; शुद्धत्वात् षोडशप्रकार इत्येके॥५॥**

दोषोपप्लवविशेषं दर्शयन्नाह—दोषेत्यादि। समासतः संक्षेपतः। वातादीनां शोणितचतुर्थानां पृथगन्योन्यसंसर्गेण पञ्चदशभेदाः। विस्तरः पुनरेषां धातुमलसंसर्गजः अपरिसङ्ख्येयः। शुद्धत्वादित्यादि पञ्चदशप्रकारदोषोपप्लवयुक्तत्वात् पञ्चदशप्रकारो व्रणः, षोडशश्च शुद्धः सकलदोषोपप्लवरहितो व्रण इत्यर्थः॥५॥

**तस्य लक्षणं द्विविधं सामान्यं वैशेषिकं च। तत्र सामान्यं रुक्। 'व्रण' गात्रविचूर्णने, व्रणयतीति व्रणः। विशेषलक्षणं पुनर्वातादिलिङ्गविशेषः॥६॥**

इदानीं व्रणस्य शुद्धाशुद्धभेदेन लक्षणद्वैविध्यमाह—तस्य लक्षणमित्यादि। तस्य व्रणस्य इत्यर्थः। सामान्यलक्षणं व्रणस्य किमित्याह—तत्र सामान्यं रुगिति। रुक् पीडामात्रमित्यर्थः। व्रणस्य व्युत्पत्तिमाह—'व्रण'गात्रविवर्णने इत्येवं धातुः गात्रविवर्णनमित्यस्यार्थः। व्रणयतीति गात्रवैवर्ण्यं करोतीत्यर्थः। एतेनादोषलिङ्गाधिष्ठितो रोपणचिकित्साविषयः शुद्ध एव व्रण उक्तः। विशेषलक्षणमाह—विशेषलक्षणमित्यादि। अयमशुद्धो व्रण उक्तः॥६॥

**तत्र श्यावारुणाभस्तनुः शीतः पिच्छिलोऽल्पस्रावी रूक्षश्चटचटायनशीलः स्फुरणायामतोदभेदवेदनाबहुलो निर्मांसश्चेति वातात्, क्षिप्रजः पीतनीलाभः किंशुकोदकाभोष्णस्रावी दाहपाकरागविकारी पीतपिडकाजुष्टश्चेति पित्तात्, प्रततचण्डकण्डूबहुलः स्थूलो घनः स्तब्धशिरास्नायुजालावततः कठिनः पाण्ड्ववभासो मन्दवेदनः शुक्लशीतसान्द्रपिच्छिलास्रावी गुरुश्चेति कफात्, प्रबालदलनिचयप्रकाशः कृष्णस्फोटपिडकाजालोपचितस्तुरङ्गस्थानगन्धः सवेदनो धूमायनशीलो रक्तस्रावी पित्तलिङ्गश्चेति रक्तात्, तोददाहधूमायनप्रायः पीतारुणाभासस्तद्वर्णस्रावी चेति वातपित्ताभ्यां, कण्डूयनशीलः सनिस्तोदो दारुणो मुहुर्मुहुः शीतपिच्छिलस्रावी चेति वातश्लेष्मभ्यां, गुरुः सदाह उष्णः पीतपाण्डुस्रावी चेति पित्तश्लेष्मभ्यां, रूक्षस्तनुस्तोदबहुलः सुप्त इव च रक्तारुणाभस्तद्वर्णस्रावी चेति वातशोणिताभ्यां, घृतमण्डाभो मीनधावनतोयगन्धिर्मृदुर्विसर्प्युष्णकृष्णस्रावी चेति पित्तशोणिताभ्यां, रक्तो गुरुः पिच्छिलः कण्डूप्रायः स्थिरो रक्तपाण्डुस्रावी चेति श्लेष्मशोणिताभ्याम्, स्फुरणतोददाहधूमायनप्रायः पीततनुरक्तस्रावी चेति वातपित्तशोणितेभ्यः, कण्डूस्फुरणचुमचुमायनप्रायः पाण्डुघनरक्तास्रावी चेति वातश्लेष्मशोणितेभ्यः, दाहपाकरागकण्डूप्रायः पाण्डुघनरक्तास्रावी चेति श्लेष्मपित्तशोणितेभ्यः, त्रिविधवर्णवेदनास्रावविशेषोपेतः पवनपित्तकफेभ्यः, निर्दहननिर्मथनस्फुरणतोददाहपाकरागकण्डूस्वापबहुलो नानावर्णवेदनास्रावविशेषोपेतः पवनपित्तकफशोणितेभ्यः, जिह्वातलाभो मृदुः स्निग्धः श्लक्ष्णो विगतवेदनः सुव्यवस्थितो निरास्रावश्चेति शुद्धो व्रण इति ॥ ७ ॥**

इदानीं वातादिव्रणलक्षणमाह—तत्रेत्यादि । चटचटायनशीलः चटचटायनस्वभावः । चटचटायनादयो वेदनाविशेषाः । स्फुरणं पुनःपुनश्चलनम् । आयामः सङ्कुचिताङ्गदेशस्य दीर्घीकरणमिव । तोदः सूचीभिरिव, भेदनं त्वग्विदारणमिव । क्षिप्रजः शीघ्रजन्मा । किंशुकोदकाभोष्णस्रावी किंशुकसुमनःप्रक्षालनसलिलसदृशोष्णस्रवणशील इत्यर्थः । प्रततचण्डकण्डूबहुलः विशालकण्डूयनप्रायः, विशालोन्नतव्रणवर्त्मेत्यर्थः । स्तब्धसिरास्नायुजालावततः अतः अमृदुशिरास्नायुसमूहेन बद्ध इत्यर्थः । प्रवालदलनिचयप्रकाशः प्रबालखण्डसमूहसदृशः; प्रबालोविद्रुमः, स च समुद्रजातोऽत्यन्तरक्तो वल्लीविशेषः । कृष्णस्फोटेत्यादि कृष्णस्फोटपिडकासमूहव्याप्तः । तुरङ्गस्थानगन्धः तीक्ष्णक्षारगन्धिः । धूमायनशीलः प्रकर्षेण धूमोद्गमनमिव कर्तुं शीलः । तोदेत्यादि तद्वर्णस्रावी अत्रानुक्तपरिशिष्टेन वातपित्तयोर्वर्णेन स्रावेण च युक्त इत्यर्थः । कण्डूयनेत्यादि सनिस्तोदः व्यथायुक्तः । दारुणः कठिनः । रुक्षेत्यादि सुप्त इवेति अज्ञायमानस्पर्श इव । अत्रानुक्तपरिशिष्टेन तयोर्वातशोणितयोर्वर्णेन स्रावेण च युक्त इत्यर्थः । घृतमण्डो घृतस्य उपरिस्थोऽच्छो भागो मण्डः । मीनधावनतोयगन्धिः मत्स्यप्रक्षालनोदकगन्धिः, विस्रगन्धिरित्यर्थः । रक्तेत्यादि चुमूचुमायमानं राजिकासर्षपलिप्त इव । दाहेत्यादि निर्दहनं भस्मसात्करणमिव । निर्मथनं मन्थानविलोडनमिव । इदानीं शुद्धव्रणमाह—जिह्वेत्यादि । अत्र जिह्वातलाभशब्दो मृदुस्निग्धश्लक्ष्णशब्दैः प्रत्येकं सम्बध्यते । आभाशब्देन वर्णः कथ्यते । मृदु कोमलः । श्लक्ष्णो मसृणः । सुव्यवस्थितः शोभनाकृतिः । एतेन नात्युन्नतो नातिनीचः किन्तु सम इति बोधयति । इति शब्दः सूत्रनिर्दिष्टसमाप्तौ ॥ ७ ॥

**तस्य व्रणस्य षष्टिरुपक्रमा भवन्ति । तद्यथा—अपतर्पणमालेपः परिषेकोऽभ्यङ्गः स्वेदो विम्लापनमुपनाहः पाचनं विस्रावणं स्नेहो वमनं विरेचनं छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं विस्रावणं सीवनं सन्धानं पीडनं शोणितास्थापनं निर्वापणमुत्कारिका कषायो वर्तिः कल्कः सर्पिस्तैलं रसक्रियाऽवचूर्णनं व्रणधूपनमुत्सादनमवसादनं मृदुकर्म दारुणकर्म क्षारकर्माग्निकर्म कृष्णकर्म पाण्डुकर्म प्रतिसारणं रोमसञ्जननं लोमापहरणं बस्तिकर्मोत्तरबस्तिकर्म बन्धः पत्रदानं कृमिघ्नं बृंहणं विषघ्नं शिरोविरेचनं नस्यं कवलधारणं धूमो मधुसर्पिर्यन्त्रमाहारो रक्षाविधानमिति ॥ ८ ॥**

तस्येत्यादि एषां मध्ये प्रतिसारणं न गणनीयं, शुक्लमृदुकृष्णकर्मणोस्खशेषत्वात्; अतो न संख्यातिरेकः । केचिदत्र रोमसञ्जननलोमापहरणादीन् सप्तोपक्रमान् विहाय कषायादीन् सप्त शोधनरूपान् सप्त रोपणरूपान् इति द्विरूपान् गणयित्वा षष्टिमुपक्रमान् पूरयन्ति । तत्र कषायादयोऽवान्तरभेदविवक्षया चतुर्दशापि सामान्याकारेण सप्तैव, अतः सप्तैव गणनीयाः, रोमसंजननादयश्चावश्यं पठनीयाः । अपरश्च गयदासः पाचनं न पठति । जेज्जटस्तु लोमापहरणं न पठति । ताभ्यां परमत्र विवादः कृतः । स च विस्तरभयात् न लिखितः । तौ च यया युक्त्या षष्टिं पूरयतः सापि विस्तरभयात् न लिखिता ॥ ८ ॥

**तेषु कषायो वर्तिः कल्कः सर्पिस्तैलं रसक्रियाऽवचूर्णनमिति शोधनरोपणानि । तेषु अष्टौ शस्त्रकृत्याः । शोणितास्थापनं क्षारोऽग्निर्यन्त्रमाहारो रक्षाविधानं बन्धविधानं चोक्तानि । स्नेहस्वेदनवमनविरेचनबस्त्युत्तरवस्तिशिरोविरेचननस्यधूम-**

**कवलधारणान्यन्यत्र वक्ष्यामः। यदन्यदवशिष्ट-मुपक्रमजातं तदिह वक्ष्यामस्ते॥ ९॥**

इदानीमुपक्रमेषु मध्ये कषायादीनामुभयार्थकारित्वमाह—तेष्वित्यादि। तेषु अपतर्पणादिषु मध्ये अष्टौ छेदनादयो दारणवर्ज्याः सीवनान्ताः शस्त्रकृत्याः शस्त्रेण कर्तुं शक्या उपक्रमाः अष्टविधशस्त्रकर्मीये उक्ताः। शोणितेत्यादि शोणितास्थापनं चतुर्विधं कषायशीतक्रियापचनदहनभेदेन, तदुक्तं शोणितवर्णनीये। क्षारः पानीयप्रतिसारणीयभेदेन द्विविधोऽप्युक्तः। जीर्णसात्म्योदनमित्यादिना व्रणितोपासनीयोक्तेराहारश्चोक्तः। रक्षाविधानं द्विविधं रक्षोघ्नगुग्गुल्वादिना धूपनैः लक्ष्मीगुह्याद्योषधिधारणेन चेत्येतदु[illegible]पहरणीये व्रणितोपासनीये च, मन्त्रेण च 'कृत्यानां प्रति[illegible]धार्थे' इत्यादिनाऽग्रोपहरणीये। बन्धविधानं व्रणालेपनाध्याये। शोणितस्थापनादयः सप्त। स्नेहेत्यादि अन्यत्रेति पंचकर्मनिर्देशे इत्यर्थः। स्नेहादयो दश। यदित्यादि अवशिष्टमुपक्रमजातं उर्वरित उपक्रमसमूहः अष्टाविंशतिसंख्यः, एवं सर्वमीलने षष्टिरुपक्रमा भवन्ति॥ ९॥

**षड्विधः प्रागुपदिष्टः शोफः, तस्यैकादशोपक्रमा भवन्ति अपतर्पणादयो विरेचनान्ताः, ते च विशेषेण शोथप्रतीकारा वर्तन्ते, व्रणभावमापन्नस्य च न विरुध्यन्ते, शेषास्तु प्रायेण व्रणप्रतीकारहेतव एव॥ १०॥**

इदानीमपतर्पणादीनि एकादश व्रणकारणशोफविषयत्वेन विषयभेदेनापि निर्दिशन्नाह—षड्विध इत्यादि। अपतर्पणादय इत्यत्र बहुव्रीहेरतद्गुणसंविज्ञानत्वाच्छेषा एकादश ग्राह्याः। अपतर्पणं उपक्रममध्ये प्राधान्याद् गृह्यते। ननु अपतर्पणादीनां शोफविषयत्वात् शोफस्य च व्रणाद् भिन्नत्वेन कथं षष्टिरुपक्रमा भवन्तीत्याह—व्रणभावमित्यादि। आपन्नस्य प्राप्तस्य, शोफस्येति शेषः। शेषा इत्यादि एकादशभ्य उपक्रमेभ्योऽन्ये शेषाः, ते व्रणप्रतीकारभूता एव॥ १०॥

**अपतर्पणं तु आद्य उपक्रम एष सर्वशोफानां सामान्यः प्रधानतमश्च॥ ११॥**

प्रथममपतर्पणं निर्दिशन्नाह—अपतर्पण इत्यादि। अपतर्पणं अभोजनं, नतु यत्किंचिदेवापतर्पणं वमनादि, वमनादीनां पृथगुपादानात्। सर्वशोफानामिति पञ्चदशानां, नागन्तोः; दोषोच्छ्रायोपशान्त्यर्थमिति वचनात्। अत्र वातजेऽपि शोफेऽपतर्पणं विकारप्रत्यनीकत्वात्, अथवा वातेऽपि प्रागामताभावात्। तदुक्तं,—'वाते सामेऽपि लङ्घनं'—इति। सामान्यः सर्वशोफहितः। प्रधानतमः आशुरोगहरत्वात्॥ ११॥

**दोषोच्छ्रायोपशान्त्यर्थं दोषानद्धस्य देहिनः॥
अवेक्ष्य दोषं प्राणं च कार्यं स्यादपतर्पणम्॥ १२॥**

अपतर्पणस्यैव फलं विषयं कालावधिं च दर्शयन्नाह—दोषेत्यादि। दोषोच्छ्रायोपशान्तिः फलं, दोषानद्धं विषयः, अवेक्ष्य दोषं प्राणं चेति कालावधिः। दोषोच्छ्रायो दोषौत्कव्यम्। दोषानद्धस्य दोषैरामैः आनद्धस्य। दोषाः कफादयः, तद्दुष्टा धातवो मलाश्च। देहिनः उपचितशरीरस्येत्यर्थः। दोषं प्राणं चेति युगपदेव लङ्घनावधिः। प्राणं चेत्यत्र चकारात् वयःप्रकृत्यादीनि चेष्टानि, अवेक्ष्य विविच्य॥ १२॥

**ऊर्ध्वमारुततृष्णाक्षुन्मुखशोषश्रमान्वितैः॥
न कार्यं गर्भिणीवृद्धबालदुर्बलभीरुभिः॥ १३॥**

अपतर्पणस्य निषेधविषयं निर्दिशन्नाह—ऊर्ध्वमारुतेत्यादि। उर्ध्वमारुताः श्वासकासादिरोगिणः, अन्ये तु उर्ध्वमारुतं रोगान्तरमाहुः। तद्यथा—"भुक्तेऽभुक्ते तथा सुप्ते यस्योद्गारो भृशं भवेत्। उर्ध्ववातं तु तं विद्यादुदानव्यानसंभवम्"—इति। अपरे तु तद्धि मारुतेत्यादि पठन्ति। मारुतोऽत्र मारुतकृताक्षेपकादिरामयः। क्षुत् बुभुक्षा। मुखशोषो निरामवातपित्तकृतः। 'श्रमान्वितैः' इत्यत्र केचित् 'भ्रमान्वितैः' इति पठन्ति। भ्रमो निरामवातपित्तकृतः। सामवातपित्तकृतमार्गावरणजौ तु तावपि लङ्घ्यावेव। गर्भिण्यादिष्वप्यनात्ययिके व्याधौ लङ्घनप्रतिषेधः॥ १३॥

**शोफेषूत्थितमात्रेषु व्रणेषूग्ररुजेषु च॥
यथास्वैरौषधैर्लेपं प्रत्येकं चैव कारयेत्॥ १४॥**

आलेपनविषयं दर्शयन्नाह—शोफेष्वित्यादि। उत्थितमात्रेषु जातमात्रेषु। यथास्वैरिति वातादिशोफे मातुलुङ्गादिदूर्वाद्यजगन्धादिभिरात्मीयैरित्यर्थः। यथोक्तैरिति केचित्पठन्ति; तत्रापि स एवार्थः॥ १४॥

**यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम्॥
क्षिप्रं प्रशमयत्यग्निमेवमालेपनं रुजः॥ १५॥**

प्रत्येकस्य एकैकेन दृष्टान्तदर्शनेन आलेपस्य फलमाह—यथेत्यादि। एवमालेपनं रुज इति आलेपनं शोफस्य रुजः वेदनाः शमयतीत्यर्थः॥ १५॥

**प्रह्लादने शोधने च शोफस्य हरणे तथा॥
उत्सादने रोपणे च लेपः स्यात्तु तदर्थकृत्॥ १६॥**

न केवलमालेपः शोफस्य रुजापहः; किंतु प्रह्लादनादीन्यपि करोतीत्याह—प्रह्लादन इत्यादि। प्रह्लादने सुखकरणे, रुजापनयनात्। शोधने व्रणस्य दोषप्रकोपस्फोटनात्। उत्सादने निम्नव्रणस्योन्नतिकरणे। रोपणे चेति चकारात् अवसादनसवर्णकरणादीनि समुच्चीयन्ते। तदर्थकृत् प्रह्लादनादिप्रयोजनकारी। अस्य प्रयोगः पुनरालेपाध्याये; द्रव्याणि तु मिश्रकादिषु॥ १६॥

**वातशोफे तु वेदनोपशमार्थं सर्पिस्तैलधान्याम्लमांसरसवातहरौषधनिःक्काथैरशीतैः परिषेकान् कुर्वीत, पित्तरक्ताभिघातविषनिमित्तेषु क्षीरघृतमधुशर्करोदकेक्षुरसमधुरौषधक्षीरवृक्षनिःक्काथैरनुष्णैः परिषेकान् कुर्वीत, श्लेष्मशोफे तु तैलमूत्रक्षा-**

**रोदकसुराशुक्तकफघ्नौषधनिःक्काथैरशीतैः परिषेकान् कुर्वीत ॥ १७ ॥**

**यथाम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति ॥**
**दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥ १८ ॥**

परिषेकस्य फलं प्रयोगं च दर्शयन्नाह—वातेत्यादि । वातशोफादिर्विषयः, वेदनोपशमः फलं, सर्पिरित्यादिप्रयोगः । धान्याम्लं काञ्जिकं; वातहरौषधानि भद्रदार्वादीनि; शर्करामिश्रमुदकं शर्करोदकं; मधुरौषधानि काकोल्यादीनि; क्षीरवृक्षाः वटादयः; क्षारोदकमिति क्षारं गालयित्वा यदुदकं गृह्यते तत्क्षारोदकं; कफघ्नानि कालेयकागुरुप्रभृतीनि ॥ १७ ॥ १८ ॥

**अभ्यङ्गस्तु दोषमालोक्योपयुक्तो दोषोपशमं मृदुतां च करोति ॥ १९ ॥**

अभ्यङ्गस्य फलं प्रयोगं च दर्शयन्नाह—अभ्यङ्ग इत्यादि । वाते कफे च तैलेन पित्ते रक्ते विषादिषु च शतधौतादिघृतेन ॥ १९ ॥

**स्वेदविम्लापनादीनां क्रियाणां प्राक् स उच्यते ॥**
**पश्चात् कर्मसु चादिष्टः स च विस्रावणादिषु ॥ २० ॥**

तस्य कालावधारणं निर्दिशन्नाह—स्वेदेत्यादि । स्वेदविम्लापनादीनां विरेचनान्तानां स्नेहवर्जितानां सप्तानां उपक्रमाणां प्राग्भवति; विस्रावणादिषु सेचनान्तेषु स्नेहवमनविरेचनव्यतिरिक्तेषु कर्मसु सोऽभ्यङ्गः पश्चादादिष्टः ॥ २० ॥

**रुजावतां दारुणानां कठिनानां तथैव च ॥**
**शोफानां स्वेदनं कार्यं ये चाप्येवंविधा व्रणाः ॥ २१ ॥**

स्वेदविषयं दर्शयन्नाह—रुजावतामित्यादि । रुजायुक्तानां वातकफवेदनायुक्तानां, दारुणादिविशेषणस्य तद्विषयत्वात् । दारुणत्वं वायुना रूक्षजरठीभावः, प्रबलवत्वमित्यन्ये । प्रयोगः पञ्चकर्मनिर्देशे वक्ष्यमाणः ॥ २१ ॥

**स्थिराणां रुजतां मन्दं कार्यं विम्लापनं भवेत् ॥**
**अभ्यज्य स्वेदयित्वा तु वेणुना वा शनैः शनैः ॥ २२ ॥**
**विमर्दयेद्भिषक् प्राज्ञस्तलेनाङ्गुष्ठकेन वा ॥**

विम्लापनविषयं प्रयोगं च दर्शयन्नाह— स्थिराणामित्यादि । स्थिराणां कठिनानाम् । मन्दं रुजतां कफाधिकानामित्यर्थः; वातकफाधिकानामित्यन्ये । तलेन पाणिपादतलेनेत्यर्थः । विम्लापनं अङ्गुल्यादिमर्दनेन शोफविलयनम् ॥ २२ ॥–

**शोफयोरुपनाहं तु कुर्यादामविदग्धयोः ॥ २३ ॥**
**अविदग्धः शमं याति विदग्धः पाकमेति च ॥**

उपनाहमाह—शोफयोरित्यादि । उपनाहो वातकफशोफविषय एव । अविदग्धः आमः । विदग्धः किञ्चित्पक्वः ॥ २३ ॥–

**निवर्तते न यः शोफो विरेकान्तैरुपक्रमैः ॥**
**तस्य संपाचनं कुर्यात् समाहृत्यौषधानि तु ॥ २४ ॥**
**दधितक्रसुराशुक्तधान्याम्लैर्योजितानि तु ॥**

**स्निग्धानि लवणीकृत्य पचेदुत्कारिकां शुभाम् ॥ २५ ॥**
**सैरण्डपत्रया शोफं नाहयेदुष्णया तया ॥**
**हितं सम्भोजनं चापि पाकायाभिमुखो यदि ॥ २६ ॥**

पाचनविषयमाह—विरेकान्तैरित्यादि । अपतर्पणाद्यैर्विरेकान्तैरित्यर्थः । समाहृत्यौषधानीति औषधानि मिश्रकोक्तानि शणमूलकबीजादीनि समभागप्रमाणानि, तथा चतुर्गुणदध्यादिद्रवाणि च समाहृत्य एकीकृत्य, लवणीकृत्य स्पष्टलवणीकृत्य, नातिशुष्कामुपनाहयोग्यामुत्कारिकां पाचयेत् । उत्कारिका लप्सिकाकृतिः, अन्ये पूपलिकाकृतिमाहुः । नाहयेद्बध्नीयात् । तया उत्कारिकया । हितं संभोजनमिति संभोजनं यथेष्टभोजनम् । तच्च कीदृशं ? हितं हितकारि नात्यर्थकफकारि नचोपद्रवकारीत्यर्थः । एतेनाहारविधानोक्तिरुष्णस्निग्धादिभिरेव संभोजनं कार्यमिति । सुधीरस्तु 'पथ्यापथ्यमिहैकत्र भुक्तं संभोजनं मतं'—इत्याह; तच्च जेज्जटगयदासौ नेच्छतः । उपनाहनिष्पाद्यं कर्म पाचनमिति मत्वा पाचनं पृथगुपक्रमं गयदासो न पठति ॥ २४–२६ ॥

**वेदनोपशमार्थाय तथा पाकशमाय च ॥**
**अचिरोत्पतिते शोफे कुर्याच्छोणितमोक्षणम् ॥ २७ ॥**

विस्रावणविषयमाह—वेदनेत्यादि । अचिरोत्पतिते तत्कालोत्पन्ने । जलौकोभिः प्रच्छनैर्वा शोणितमोक्षणं कुर्यात् ॥ २७ ॥

**सशोफे कठिने श्यामे सरक्ते वेदनावति ॥**
**संरब्धे विषमे वापि व्रणे विस्रावणं हितम् ॥ २८ ॥**
**सविषे च विशेषेण जलौकोभिः पदैस्तथा ॥**
**वेदनायाः प्रशान्त्यर्थं पाकस्याप्राप्तये तथा ॥ २९ ॥**

व्रणेऽपि यादृशे शोणितं स्रावणीयं तादृशमाह—सशोफ इत्यादि । श्यामे कृष्णारुणे । सरक्ते रक्तवर्णे । वेदनावति वेदनायुक्ते । संरब्धे विशालमूले । विषमे निम्नोन्नते । विशेषेण अतिशयेन, सविषे च विशेषेण रक्तमोक्षणम् ॥ २८ ॥ २९ ॥

**सोपद्रवाणां रूक्षाणां कृशानां व्रणशोषिणाम् ॥**
**यथास्वमौषधैः सिद्धं स्नेहपानं विधीयते ॥ ३० ॥**

स्नेहपानविषयं दर्शयन्नाह—सेत्यादि । सोपद्रवाणामिति नात्र व्रणोपद्रवाः गन्धवर्णस्राववेदनाकृतयः पञ्च; किंतर्हि व्रणितस्योपद्रवाः वेपथुपक्षवधादयः । व्रणशोषिणां व्रणनिमित्तक्षीणाम् । यथास्वमौषधैरिति यस्य यदात्मीयमौषधं तेन सिद्धस्य स्नेहस्य पानं; नावचारणाभिन्नाच्छपानमित्यर्थः ॥ ३० ॥

**उत्सन्नमांसशोफे तु कफजुष्टे विशेषतः ॥**
**संक्लिष्टश्यामरुधिरे व्रणे प्रच्छर्दनं हितम् ॥ ३१ ॥**

वमनविषयं दर्शयन्नाह—उत्सन्नेत्यादि । उत्सन्नमांसशोफे इति उच्छ्रितमांसशोफे । कफजुष्टे कफाक्रान्ते । संक्लिष्टं दुष्टं, श्यामं ईषत्कृष्णं रुधिरं यस्मिन्नेवंभूते व्रणे प्रच्छर्दनं वमनं हितम् ॥ ३१ ॥

**वातपित्तप्रदुष्टेषु दीर्घकालानुबन्धिषु ॥**
**विरेचनं प्रशंसन्ति व्रणेषु व्रणकोविदाः ॥ ३२ ॥**

विरेचनविषयमाह—वातेत्यादि । वातेन सहितं पित्तं वातपित्तं पित्तप्रधानसंसर्गः, नतु वातश्च पित्तं चेति, केवलवाते बस्तिविधानात् । अनेनैव न्यायेन वातोपसर्जने कफसंसर्गे वमनं हितम् । एषु स्नेहादिषु त्रिषु शोफस्यानुक्तावपि शोफाधिकारत्वादेव स्नेहादयस्त्रयो विशिष्टावस्थायां शोफस्याप्युक्रमाः बोद्धव्याः । व्रणकोविदाः व्रणपण्डिताः ॥ ३२ ॥

**अपाकेषु तु रोगेषु कठिनेषु स्थिरेषु च ॥**
**स्नायुकोथादिषु तथा छेदनं प्राप्तमुच्यते ॥ ३३ ॥**

छेदनमाह—अपाकेष्वित्यादि । अपाकेषु अविद्यमानपाकेषु मेदःकफग्रन्थिमांसकन्यादिषु; अथवा अपाकेषु ईषत्पाकेषु वल्मीकादिष्वित्यर्थः; नञ्शब्दस्योभयार्थत्वात् । गयी तु 'अपाकवत्सु' इति पठति तत्रापि स एवार्थः, परं तं पाठं न साधुं मन्यते जेज्जटः । कठिनेषु दृढेषु । स्थिरेषु अचलेषु । स्नायुकोथादिष्वित्यत्र आदिशब्दात् शिराधमन्यादिपरिग्रहः । प्राप्तं युक्तमित्यर्थः ॥ ३३ ॥

**अन्तःपूयेष्ववक्त्रेषु तथैवोत्सङ्गवत्स्वपि ॥**
**गतिमत्सु च रोगेषु भेदनं प्राप्तमुच्यते ॥ ३४ ॥**

भेदनविषयं दर्शयन्नाह—अन्त इत्यादि । अवक्त्रेषु अविद्यमानमुखेषु । उत्सङ्गवत्सु चिरस्थितपूयावदारणगम्भीरशुषिरव्रणवस्तुप्रदेश उत्सङ्गतुल्यत्वादुत्सङ्ग इत्युच्यते, तद्वत्सु रोगेषु व्रणेषु । गतिमत्सु गतियुक्तेषु । प्राप्तं युक्तम् ॥ ३४ ॥

**बालवृद्धासहक्षीणभीरूणां योषितामपि ॥**
**मर्मोपरि च जातेषु रोगेषूक्तेषु दारणम् ॥ ३५ ॥**
**सुपक्वे पिशिते शोफे पीडनैरुपपीडिते ॥**
**पाकोद्वृत्तेषु दोषेषु तत्तु कार्यं विजानता ॥ ३६ ॥**
**सुपिष्टैर्दारणद्रव्यैर्युक्तैः क्षारेण वा पुनः ॥**

दारणविषयमाह—बालेत्यादि । पीडनैरिति पीडनद्रव्यैरित्यर्थः । पाकोद्वृत्तेषु उत्तानेषु लगतेष्वित्यर्थः । दारणद्रव्यैर्मिश्रकोत्कैश्चिरबिल्वादिभिः । क्षारेण प्रतिसारणीयेन, यवक्षारेणेत्यन्ये ॥ ३५ ॥ ३६ ॥—

**कठिनान् स्थूलवृत्तौष्ठान् दीर्यमाणान् पुनः पुनः ॥**
**कठिनोत्सन्नमांसांश्च लेखनेनाचरेद्भिषक् ॥ ३७ ॥**
**समं लिखेत् सुलिखितं लिखेन्निरवशेषतः ॥**
**वर्त्मनानुप्रमाणेन समं शस्त्रेण निर्लिखेत् ॥ ३८ ॥**

लेखनविषयमाह—कठिनानित्यादि । कठिनान् मांसहीनान् समं लिखेत्, स्थूलवृत्तौष्ठान् सुलिखितं अतिशयलिखितं लिखेत्, पुनः पुनर्दीर्यमाणान् निरवशेषतो लिखेत्, कठिनोत्सन्नमांसान् वर्त्मनानुप्रमाणेन समं लिखेत् । श्रीसुवीरजेज्जटब्रह्मदेवास्त्रीन् विषयानाहुः, तथाहि—कठिनान् स्थूलवृत्तौष्ठान् इत्येको विषयः, दीर्यमाणान् पुनः पुनरिति द्वितीयः, कठिनोत्सन्नमांसांश्चेति तृतीयः । निर्लिखेत् पुनः पुनर्लिखेत् इति भणनं बहुशो लेखने शस्त्रावचारणं सूचयति । अत्र व्रणवर्त्मशब्देन व्रणगताश्चत्वारः पार्श्वा वाच्याः । शस्त्रेण निर्लिखेत्, न तु गोजीशेफालिकादिपत्रेण ॥ ३७ ॥ ३८ ॥

**क्षौमं प्लोतं पिचुं फेनं यावशूकं ससैन्धवम् ॥**
**कर्कशानि च पत्राणि लेखनार्थे प्रदापयेत् ॥ ३९ ॥**

शस्त्राभावे क्षौमादिभिर्लिखेदित्याह—क्षौममित्यादि । क्षौमं अतसीवस्त्रम् । प्लोतं कर्पटम् । पिचुं कार्पासतूलाम् । फेनं समुद्रफेनम् । यावशूकं यवक्षारः ॥ ३९ ॥

**नाडीव्रणान् शल्यगर्भानुन्मार्ग्युत्सङ्गिनः शनैः ॥**
**करीरबालाङ्गुलिभिरेषण्या वैषयेद्भिषक् ॥ ४० ॥**

एषणमाह—नाडीत्यादि । नाड्यश्च व्रणाश्च इति नाडीव्रणास्तान् । शल्यगर्भान् अभ्यन्तरे शल्यानित्यर्थः । उन्मार्गी भगन्दरः, उत्सङ्गी शम्बूकवर्ताभिध इत्येके; तन्न, तयोरसाध्यत्वेन एषणानर्हत्वात् । तत्र उत्सृष्टो मार्गो विद्यते येषां ते उन्मार्गिणो व्रणाः, ऋजुं मार्गं परित्यज्य कुटिलया गत्या ये यान्तीत्यर्थः; उत्सङ्गिनः ऊर्ध्वसङ्गिनः । करीराः चुच्चूपोदकादीनां कोमला नालाः । वालाः करिशूकरादीनाम् । अङ्गुल्या वा एषयेदित्यर्थः । एषणी शलाकाशस्त्रम् । एषयेत् करीरादिनिक्षेपणेन तत्र मध्यनिश्चयं कुर्यादित्यर्थः ॥ ४० ॥

**नेत्रवर्त्मगुदाभ्यासनाड्योऽवक्त्राः सशोणिताः ॥**
**चुच्चूपोदकजैः श्लक्ष्णैः करीरैरेषयेत् तु ताः ॥ ४१ ॥**

करीराणां विषयं निर्दिशन्नाह—नेत्रवर्त्मेत्यादि । गुदाभ्यासः गुदसमीपम् । अवक्त्राः अल्पवक्त्राः । चुच्चूः चीचुरिति लोके । उपोदकः 'पोइ' 'पुँइ' इति वा लोके ॥ ४१ ॥

**संवृतासंवृतास्येषु[1] व्रणेषु मतिमान् भिषक् ॥**
**यथोक्तमाहरेत् शल्यं प्राप्तोद्धरणलक्षणम् ॥ ४२ ॥**

आहरणविषयमाह—संवृतासंवृतेत्यादि ॥ ४२ ॥

**रोगे व्यधनसाध्ये तु यथोद्देशं प्रमाणतः ॥**
**शस्त्रं निदध्यात् दोषं च स्रावयेत् कीर्तितं यथा ॥४३॥**

व्यधनस्रावणविषयमाह—रोग इत्यादि । व्यधनसाध्यो रोगः दकोदरमूत्रवृद्ध्यादि । यथोद्देशं प्रमाणत इति उद्देशानतिक्रान्तप्रमाणमित्यर्थः । तत्र दकोदरोद्दिष्टं प्रमाणमङ्गुष्ठोदरप्रमाणमवगाढमिति ज्ञेयम् । विद्रध्यादिषु पुनः 'महत्स्वपि च केषुचित् द्व्यङ्गुलं शस्त्रनिपातनं' इति । शस्त्रप्रणिधानं रोगे इत्यादिना शस्त्रं निदध्यात् इत्यन्तेन व्यधनमुक्तं, 'दोषं च स्रावयेत् कीर्तितं यथा' इति स्रावणमुक्तम् । एवमनेन श्लोकेनोपक्रमद्वयमुक्तम् ॥ ४३ ॥

**अपाकोपद्रुता ये च मांसस्था विवृताश्च ये ॥**
**यथोक्तं सीवनं तेषु कार्यं सन्धानमेव च ॥ ४४ ॥**

[1] 'संवृतापवृतास्येषु' इति पाठान्तरम् ।

सीवनसन्धानविषयमाह—अपाकेत्यादि । अपाकोपद्रुताः पाकोपद्रवरहिताः । विवृताः व्यात्तमुखाः । यथोक्तमष्टविधशस्त्रकर्मीये । सन्धानमेव चेति न केवलं सीवनं सन्धानमपि । सन्धानं व्रणौष्ठादिसंयोजनम् । अनेन श्लोकेनोपक्रमद्वयमुक्तम् ॥ ४४ ॥

**पूयगर्भानणुद्वारान् व्रणान्मर्मगतानपि ॥**
**यथोक्तैः पीडनद्रव्यैः समन्तात् परिपीडयेत्॥ ४५ ॥**
**शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति ॥**
**न चाभिमुखमालिम्पेत् तथा दोषः प्रसिच्यते॥४६॥**

पीडनमाह—पूयेत्यादि । यथोक्तैः मिश्रकपठितैः । पीडनद्रव्यैः त्वङ्मूलादिभिः । समन्तात् सर्वतः । प्रदेहं प्रलेपनमित्यर्थः । दोषः पूयः । प्रसिच्यते स्वयं प्रक्षरति । पीडनं औषधैः पचनम् ॥ ४५ ॥ ४६ ॥

**तैस्तैर्निमित्तैर्बहुधा शोणिते प्रस्रुते भृशम् ॥**
**कार्यं यथोक्तं वैद्येन शोणितास्थापनं भवेत् ॥ ४७ ॥**

शोणितास्थापनमाह—तैस्तैरित्यादि । तैस्तैः शिराव्यधादिभिः । यथोक्तं शोणितास्थापनं शोणितातिप्रवृत्तिस्तम्भनम् । तच्चतुर्विधम् "सन्धानं स्कन्दनं चैव पाचनं दहनं तथा" इति॥४७॥

**दाहपाकज्वरवतां व्रणानां पित्तकोपतः ॥**
**रक्तेन चाभिभूतानां कार्यं निर्वापणं भवेत् ॥ ४८ ॥**
**यथोक्तैः शीतलद्रव्यैः क्षीरपिष्टैर्घृतप्लुतैः ॥**
**दिह्यादबहलान् लेपान् सुशीतांश्चावचारयेत् ॥४९॥**

निर्वापणमाह—दाहेत्यादि । पित्तरक्तव्रणस्य पच्यमानस्य ज्वरेणाभिभूतस्य औषधादिभिर्वेदनोपशमः । यथोक्तैः मिश्रकोक्तैर्दूर्वादिभिः । क्षीरपिष्टैरिति क्षीरेण पिष्टैः । श्लक्ष्णस्य दाहपाककारित्वात् । दिह्यात् लिम्पेत् । अबहलान् लेपान् स्वल्पान् लेपान् । अनेन श्लोकेन सेकलेपौ द्वौ निर्वापणावुक्तौ ॥ ४८ ॥ ४९ ॥

**व्रणेषु क्षीणमांसेषु तनुस्राविष्वपाकिषु ॥**
**तोदकाठिन्यपारुष्यशूलवेपथुमत्सु च ॥**
**वातघ्नवर्गेऽम्लगणे काकोल्यादिगणे तथा ॥ ५० ॥**
**स्नैहिकेषु च बीजेषु पचेदुत्कारिकां शुभाम् ॥**
**तेषां च स्वेदनं कार्यं स्थिराणां वेदनावताम्॥ ५१ ॥**

उत्कारिकाविषयमाह—व्रणेष्वित्यादि । क्षीणमांसत्वादिकं वातकार्यम् । वातघ्नवर्गः काकोल्यादिगणः । अम्लगणे सौवीरकतुषोदकादौ । स्नैहिकेषु च बीजेषु तिलातसीसर्षपैरण्डादिबीजेषु । स्नैहिकबीजानि समभागानि तच्चतुर्गुणमम्लानां गृहीत्वा नातिघनां नातिसान्द्रां पेयानुकारिणीं उत्कारिकां पचेत् ॥ ५० ॥ ५१ ॥

**दुर्गन्धानां क्लेदवतां पिच्छिलानां विशेषतः ॥**
**कषायैः शोधनं कार्यं शोधनैः प्रागुदीरितैः ॥ ५२ ॥**

इदानीं कषायादींश्चूर्णान्तान् सप्त शोधनरोपणान् विषयभेदेन दर्शयन्नाह—दुर्गन्धानामित्यादि । शोधनैः कषायैः प्रागुदीरितैर्मिश्रकोक्तैः शङ्खिन्यङ्कोटसुमनादिभिः कृतैः क्वाथैः शोधनं कार्यम् ॥ ५२ ॥

**शोधनद्रव्ययुक्ताभिर्वर्तिभिस्तान् यथाक्रमम् ॥ ५३ ॥**
**अन्तःशल्यानणुमुखान् गम्भीरान् मांससंश्रितान् ॥**

शोधनद्रव्ययुक्ताभिरिति शोधनद्रव्याणि अजगन्धाजशृङ्ग्यादीनि मिश्रकोक्तानि । तान् व्रणान् शोधयेदिति शेषः । यथाक्रममिति प्रथमं सूक्ष्माभिस्ततः स्थूलस्थूलतराभिरित्यर्थः ॥ ५३ ॥

**पूतिमांसप्रतिच्छन्नान् महादोषांश्च शोधयेत् ॥**
**कल्कीकृतैर्यथालाभं वर्तिद्रव्यैः पुरोदितैः ॥ ५४ ॥**

पूतिमांसप्रतिच्छन्नानिति अवगाढान्, न पुनरभ्यन्तरान् । महादोषांश्चेति अतिदुष्टानित्यर्थः । दोषौ चात्र वातकफौ गृह्येते न पुनः पित्तं, पित्तदुष्टस्तु सर्पिर्विषयः ॥ ५४ ॥

**पित्तप्रदुष्टान् गम्भीरान् दाहपाकप्रपीडितान् ॥**
**कार्पासीफलमिश्रेण जयेत् शोधनसर्पिषा ॥ ५५ ॥**

शोधनद्रव्याणि कासीसाजगन्धादीनि तैः सिद्धेन सर्पिषा घृतेन । कल्पना चेयं—यावन्ति कासीसाजगन्धादीनि शोधनद्रव्याणि तावन्मात्रं कार्पासफलं, एतान्येकीकृत्य कल्कचतुर्गुणं घृतं घृतचतुर्गुणं जलं गृहीत्वा घृतं साधनीयम् ॥ ५५ ॥

**उत्सन्नमांसानस्निग्धानल्पस्रावान् व्रणांस्तथा ॥**
**सर्षपस्नेहयुक्तेन धीमांस्तैलेन शोधयेत् ॥ ५६ ॥**

व्रणानिति कफवाताधिकानित्यर्थः । तिलतैलेन मिश्रकोक्तेन पूयादिशोधनद्रव्यसिद्धेनेति शेषः ॥ ५६ ॥

**तैलेनाशुध्यमानानां शोधनीयां रसक्रियाम् ॥**
**व्रणानां स्थिरमांसानां कुर्याद् द्रव्यैरुदीरितैः॥ ५७ ॥**
**कषाये विधिवत्तेषां कृते व्यामिश्रयेत्पुनः ॥**
**सुराष्ट्रजां सकासीसां दद्यात् चापि मनःशिलाम्॥५८**
**हरितालं च मतिमांस्ततस्तामवचारयेत् ॥**
**मातुलुङ्गरसोपेतां सक्षौद्रामतिमर्दिताम् ॥ ५९ ॥**
**व्रणेषु दत्त्वा तां तिष्ठेत् त्रींस्त्रींश्च दिवसान् परम् ॥**

द्रव्यैः उदीरितैरिति मिश्रकोक्तैः शालसारादिभिर्द्रव्यैः । कल्पनामाह—कषाये विधिवत् तेषामिति ।—तेषां शालसारादीनां विधिवत् कृते कषाये द्रव्यापेक्षया षोडशगुणोदके, अष्टगुणोदके षोडशभागावशिष्टे वा । अधिश्रयेत् पुनरिति पूतं कषायं पुनरधिश्रयेत् पचेदित्यर्थः । सुराष्ट्रजादीनि चूर्णितानि शेषकषायपादे मात्रया कषायस्य पुनःपाकात् फाणितीभावे सति आवपेत् । सुराष्ट्रजां तुवरमृत्तिकाम् । ततस्तामवचारयेदिति ततोऽनन्तरं रसक्रियां समवचारयेत् प्रयोजयेत । अतिमर्दितां औषधानामेकीभावार्थम् । मातुलुङ्गमधुमात्रा तु संस्कारमात्रैव ।

'सेकान्' इति पाठान्तरम् ।

त्रींस्त्रींश्च दिवसान् परमिति परमित्यवधारणे, तान् त्रींस्त्रीनेव दिवसान् तिष्ठेत् नाधिकं, व्रणवस्त्ववदारणभयात्॥५७–५९॥–

**गम्भीरान् मेदसा जुष्टान् दुर्गन्धांश्चूर्णशोधनैः ॥६०॥**
**उपाचरेत् भिषक् प्राज्ञः श्लक्ष्णैः शोधनवर्तिजैः ॥**

अगम्भीरान् मेदसा जुष्टानित्येके पठन्ति; तन्नेच्छति गयी । चूर्णशोधनैः कासीसादिभिः । शोधनवर्तिजैः अजगन्धादिभिः ॥ ६० ॥—

**शुद्धलक्षणयुक्त[illegible] रोपणं हितम् ॥ ६१ ॥**
**तत्र कार्यं यथ[illegible]त्मा ॥**

अशुद्धव्रणस्य [illegible] भागानि निर्दिश्य शुद्धस्य तान्येव रो[illegible] शुद्धलक्षणयुक्तानामिति। शुद्धव्रणलक्षणानि 'त्रिभिर्दोषैरनाक्रान्त' इत्यादीनि जिह्वातलाभ इत्यादीनि चोक्तानि। यथोद्दिष्टैः वटादिभिः ॥ ६१ ॥—

**अवेदनानां शुद्धानां गम्भीराणां तथैव च ॥ ६२ ॥**
**हिता रोपणवर्त्यङ्गकृता रोपणवर्तयः ॥**

अवेदनानां सर्वथा वेदनाहीनानामित्यर्थः; अन्ये अवेदनानां अल्पवेदनानामित्याहुः । रोपणवर्त्यङ्गकृता इति रोपणवर्त्यङ्गानि सोमामृताश्वगन्धाकाकोल्यादीनि च तैः कृता रोपणवर्तयो हिताः ॥ ६२ ॥—

**अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ६३ ॥**
**कल्कः संरोहणः कार्यस्तिलजो मधुसंयुतः ॥**
**स माधुर्यात् तथौष्ण्याच्च स्नेहाच्चानिलनाशनः ॥**
**कषायभावान्माधुर्यात् तिक्तत्वाच्चापि पि[illegible]**
**औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च [illegible]**
**शोधयेत् रोपयेच्चापि युक्तः शोधनरो[illegible]**
**निम्बपत्रमधुभ्यां तु युक्तः संशोधनः स्मृतः ॥[illegible]॥**
**पूर्वाभ्यां सर्पिषा चापि युक्तः संरोपणो भवेत् ॥**
**तिलवद्यवकल्कं तु केचिदाहुर्मनीषिणः ॥ ६७ ॥**
**शमयेदविदग्धं च विदग्धमपि पाचयेत् ॥**
**पक्वं भिनत्ति भिन्नं च शोधयेत् रोपयेत्तथा[1] ॥ ६८ ॥**

अपेतपूतिमांसानामित्यादि निर्गतशटितमांसानाम् । मांसस्थानां मांसमात्रस्थितानामित्यर्थः । कल्कः मिश्रकाध्याये कथितः, स तु समङ्गासोमसरलेत्यादिः । विशेषार्थमत्रापि कल्कं निर्दिशन्नाह—तिलजो मधुसंयुत इति । तिलकल्कस्य त्रिदोषहरत्वमाह—स इति तिलकल्कः। तिलकल्कस्य तिक्तकषायत्वे उष्णत्वे स्निग्धत्वे च सत्यपि कथं वाताद्यप्रकोपकत्वं ? उच्यते, स्वभावात्, आमलकवत् । अस्यैव तिलकल्कस्य योगवाहित्वं सविशेषं दर्शयन्नाह—शोधयेदित्यादि । अशुद्धान् शोधयेत्, रोपयेच्चेत्ययमर्थश्चकारेण ज्ञेयः। केन शोधनेन युक्तः शोधयेदित्याह—निम्बपत्रमधुभ्यामित्यादि । मधुसंयुत इत्यनेनैव लब्धे पुनरिह मधुग्रहणं केवलस्यैव तिलकल्कस्य प्रागुक्ता माधुर्यादयोऽवगन्तव्याः, न मधुयुक्तस्येति ज्ञापयति । केन रोपणेन शोधनेन युक्तः व्रणान् शोधयेत् रोपयेच्चेत्याह—पूर्वाभ्यामित्यादि । पूर्वाभ्यां निम्बपत्रमधुभ्यामित्यर्थः । युक्तश्चापि संरोपण इत्यपिशब्दो भिन्नक्रमे; तेन निम्बपत्रमधुघृतयुक्तः शुष्यतो व्रणस्य शोधनो रोपणोऽपि, तिलकल्कस्य योगवाहित्वात् इत्यर्थः । अन्ये तु 'युक्तः संरोपणो भवेत्' इति च पठन्ति । ते तु पूर्वोक्तं चकारार्थं न मन्यन्ते, किंच निम्बपत्रमधुघृतयुक्तस्य तिलकल्कस्य रोपणत्वमेवाङ्गीकुर्वन्तीति न शोधनत्वम् । इदानीमन्यमपि कल्कं सर्वावस्थासु सर्वव्रणयोगित्वेन सविशेषमेकीयमतेन निर्दिशन्नाह—तिलवदित्यादि ।—तिलवत् तिलसदृशो यवकल्कोऽपि त्रिदोषघ्न इत्यनेन प्रकारेण केचित् एकीयमतं व्याख्यानयन्ति। जेज्जटगयदासौ तु अन्यथा; यथा—तिला विद्यन्तेऽस्मिन्निति तिलवान्, तिलवांश्चासौ यवकल्कश्च तिलवद्यवकल्कः, तं तिलवद्यवकल्कं केचिदाहुरिति । सर्वावस्थासु सर्वशारीरव्रणीययोगमाह—शमयेदविदग्धं चेत्यादि । एतेन तिलयुक्तः कल्कः पञ्चानामुपक्रमाणां विम्लापनपाचनपाटनशोधनरोपणानामर्थं करोतीत्युक्तं; तिलकल्कस्तु रोपणशोधनकरणेनोपक्रमद्वयार्थकरः, तदुभयकरणेनोपक्रमत्रयार्थकरो वा, अतएवानयोः कल्कयोर्भेदः । रोपयेच्चेति चकारेण तिलकल्कतिलयवकल्कयोरपि व्रणवैकृत्यापहत्वं भवतीति समुच्चीयते ॥ ६३—६८ ॥

**पित्तरक्तविषागन्तून् गभीरानपि च व्रणान् ॥**
**रोपयेत् रोपणीयेन क्षीरसिद्धेन सर्पिषा ॥ ६९ ॥**

शस्त्राद्यभिघातनिमित्ता व्रणाः सप्ताहादर्वागेव आगन्तवः । रोपणीयेनेति मिश्रकोदितेन ॥ ६९ ॥

**कफवाताभिभूतानां व्रणानां मतिमान् भिषक् ॥**
**कारयेत् रोपणं तैलं भेषजैस्तद्यथोदितैः ॥ ७० ॥**

यथोदितैरिति मिश्रकोक्तैः कालानुसार्यागुरुप्रभृतिभिः ॥७०॥

**अबन्ध्यानां चलस्थानां शुद्धानां च प्रदुष्यताम् ॥**
**द्विहरिद्रायुतां कुर्यात् रोपणार्थां रसक्रियाम् ॥७१॥**

अबन्ध्याः पित्तरक्तविषाभिघातजादयः । चलस्थानामिति चलाः चेष्टावन्तः[2] सन्धयः, तत्रस्थानां; शुद्धानां च प्रदुष्यतां इत्यत्र चाप्ररोहतामिति केचित्पठन्ति । तत्र चलस्थानत्वादिना अप्ररोहतामिति द्रष्टव्यम् । अत्र कल्पना—न्यग्रोधादिवर्गस्य त्रिफलाद्रव्यापेक्षया अष्टगुणे चतुर्गुणे वाऽम्भसि अष्टभागावशिष्टे चतुर्भागावशिष्टे वा कषायं पुनरधिश्रित्य फाणितीभावे अवशिष्टकषायपादमात्रया हरिद्राद्वयचूर्णं प्रक्षिप्य सुमर्दितां मधुयुतां अवतारयेत् । अत्र शोधनरसक्रियावत् कालावधिर्नास्त्येव । यावत् ग्रहणमेव कार्यमिति ॥ ७१ ॥

**समानां स्थिरमांसानां त्वक्स्थानां रोपणं भिषक् ॥**
**चूर्णं विदध्यात् मतिमान् प्राक्स्थानोक्तो विधिर्यथा**

१ 'रोपयेच्च तम्' इति पाठान्तरम् ।

२ 'स्वेच्छावन्तः' इति पाठान्तरम् ।

सीवनसन्धानविषयमाह—अपाकेत्यादि । अपाकोपद्रुताः पाकोपद्रवरहिताः । विवृताः व्यात्तमुखाः । यथोक्तमष्टविधशस्त्रकर्मीये । सन्धानमेव चेति न केवलं सीवनं सन्धानमपि । सन्धानं व्रणौष्ठादिसंयोजनम् । अनेन श्लोकेनोपक्रमद्वयमुक्तम् ॥ ४४ ॥

**पूयगर्भानणुद्वारान् व्रणान्मर्मगतानपि ॥**
**यथोक्तैः पीडनद्रव्यैः समन्तात् परिपीडयेत्॥ ४५ ॥**
**शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति ॥**
**न चाभिमुखमालिम्पेत् तथा दोषः प्रसिच्यते॥४६॥**

पीडनमाह—पूयेत्यादि । यथोक्तैः मिश्रकपठितैः । पीडनद्रव्यैः त्वङ्मूलादिभिः । समन्तात् सर्वतः । प्रदेहं प्रलेपनमित्यर्थः । दोषः पूयः । प्रसिच्यते स्वयं प्रक्षरति । पीडनं औषधैः पचनम् ॥ ४५ ॥ ४६ ॥

**तैस्तैर्निमित्तैर्बहुधा शोणिते प्रस्रुते भृशम् ॥**
**कार्यं यथोक्तं वैद्येन शोणितास्थापनं भवेत् ॥ ४७ ॥**

शोणितास्थापनमाह—तैस्तैरित्यादि । तैस्तैः शिराव्यधादिभिः । यथोक्तं शोणितास्थापनं शोणितातिप्रवृत्तिस्तम्भनम् । तच्चतुर्विधम् "सन्धानं स्कन्दनं चैव पाचनं दहनं तथा" इति॥४७॥

**दाहपाकज्वरवतां व्रणानां पित्तकोपतः ॥**
**रक्तेन चाभिभूतानां कार्यं निर्वापणं भवेत् ॥ ४८ ॥**
**यथोक्तैः शीतलद्रव्यैः क्षीरपिष्टैर्घृतप्लुतैः ॥**
**दिह्यादबहलान् लेपान् सुशीतांश्चावचारयेत् ॥४९॥**

निर्वापणमाह—दाहेत्यादि । पित्तरक्तव्रणस्य पच्यमानस्य ज्वरेणाभिभूतस्य औषधादिभिर्वेदनोपशमः । यथोक्तैः मिश्रकोक्तैर्दूर्वादिभिः । क्षीरपिष्टैरिति क्षीरेण पिष्टैः । श्लक्ष्णस्य दाहपाककारित्वात् । दिह्यात् लिम्पेत् । अबहलान् लेपान् स्वल्पान् लेपान् । अनेन श्लोकेन सेकलेपौ द्वौ निर्वापणावुक्तौ ॥ ४८ ॥ ४९ ॥

**व्रणेषु क्षीणमांसेषु तनुस्राविष्वपाकिषु ॥**
**तोदकाठिन्यपारुष्यशूलवेपथुमत्सु च ॥**
**वातघ्नवर्गेऽम्लगणे काकोल्यादिगणे तथा ॥ ५० ॥**
**स्नैहिकेषु च बीजेषु पचेदुत्कारिकां शुभाम् ॥**
**तेषां च स्वेदनं कार्यं स्थिराणां वेदनावताम्॥ ५१ ॥**

उत्कारिकाविषयमाह—व्रणेष्वित्यादि । क्षीणमांसत्वादिकं वातकार्यम् । वातघ्नवर्गः काकोल्यादिगणः । अम्लगणे सौवीरकतुषोदकादौ । स्नैहिकेषु च बीजेषु तिलातसीसर्षपैरण्डादिबीजेषु । स्नैहिकबीजानि समभागानि तच्चतुर्गुणमम्लानां गृहीत्वा नातिघनां नातिसान्द्रां पेयानुकारिणीं उत्कारिकां पचेत् ॥ ५० ॥ ५१ ॥

**दुर्गन्धानां क्लेदवतां पिच्छिलानां विशेषतः ॥**
**कषायैः शोधनं कार्यं शोधनैः प्रागुदीरितैः ॥ ५२ ॥**

* 'सेकान्' इति पाठान्तरम् ।

इदानीं कषायादींश्चूर्णान्तान् सप्त शोधनरोपणान् विषयभेदेन दर्शयन्नाह—दुर्गन्धानामित्यादि । शोधनैः कषायैः प्रागुदीरितैर्मिश्रकोक्तैः शङ्खिन्यङ्कोटसुमनादिभिः कृतैः क्वाथैः शोधनं कार्यम् ॥ ५२ ॥

**शोधनद्रव्ययुक्ताभिर्वर्तिभिस्तान् यथाक्रमम् ॥५३॥**
**अन्तःशल्यानणुमुखान् गम्भीरान् मांससंश्रितान् ॥**

शोधनद्रव्ययुक्ताभिरिति शोधनद्रव्याणि अजगन्धाजशृङ्ग्यादीनि मिश्रकोक्तानि । तान् व्रणान् शोधयेदिति शेषः । यथाक्रममिति प्रथमं सूक्ष्माभिस्ततः स्थूलस्थूलतराभिरित्यर्थः ॥ ५३ ॥

**पूतिमांसप्रतिच्छन्नान् महादोषांश्च शोधयेत् ॥**
**कल्कीकृतैर्यथालाभं वर्तिद्रव्यैः पुरोदितैः ॥ ५४ ॥**

पूतिमांसप्रतिच्छन्नानिति अवगाढान्, न पुनरभ्यन्तरान् । महादोषांश्चेति अतिदुष्टानित्यर्थः । दोषौ चात्र वातकफौ गृह्येते न पुनः पित्तं, पित्तदुष्टस्तु सर्पिर्विषयः ॥ ५४ ॥

**पित्तप्रदुष्टान् गम्भीरान् दाहपाकप्रपीडितान् ॥**
**कार्पासीफलमिश्रेण जयेत् शोधनसर्पिषा ॥ ५५ ॥**

शोधनद्रव्याणि कासीसाजगन्धादीनि तैः सिद्धेन सर्पिषा घृतेन । कल्पना चेयं—यावन्ति कासीसाजगन्धादीनि शोधनद्रव्याणि तावन्मात्रं कार्पासफलं, एतान्येकीकृत्य कल्कचतुर्गुणं घृतं घृतचतुर्गुणं जलं गृहीत्वा घृतं साधनीयम् ॥ ५५ ॥

**उत्सन्नमांसानस्निग्धानल्पस्रावान् व्रणांस्तथा ॥**
**सर्षपस्नेहयुक्तेन धीमांस्तैलेन शोधयेत् ॥ ५६ ॥**

व्रणानिति कफवाताधिकानित्यर्थः । तिलतैलेन मिश्रकोक्तेन पूयादिशोधनद्रव्यसिद्धेनेति शेषः ॥ ५६ ॥

**तैलेनाशुध्यमानानां शोधनीयां रसक्रियाम् ॥**
**व्रणानां स्थिरमांसानां कुर्याद् द्रव्यैरुदीरितैः॥ ५७ ॥**
**कषाये विधिवत्तेषां कृते व्यामिश्रयेत्पुनः ॥**
**सुराष्ट्रजां सकासीसां दद्यात् चापि मनःशिलाम्॥५८**
**हरितालं च मतिमांस्ततस्तामवचारयेत् ॥**
**मातुलुङ्गरसोपेतां सक्षौद्रामतिमर्दिताम् ॥ ५९ ॥**
**व्रणेषु दत्त्वा तां तिष्ठेत् त्रींस्त्रींश्च दिवसान् परम् ॥**

द्रव्यैः उदीरितैरिति मिश्रकोक्तैः शालसारादिभिर्द्रव्यैः । कल्पनामाह—कषाये विधिवत् तेषामिति ।—तेषां शालसारादीनां विधिवत् कृते कषाये द्रव्यापेक्षया षोडशगुणोदके, अष्टगुणोदके षोडशभागावशिष्टे वा । अधिश्रयेत् पुनरिति पूतं कषायं पुनरधिश्रयेत् पचेदित्यर्थः । सुराष्ट्रजादीनि चूर्णितानि शेषकषायपादे मात्रया कषायस्य पुनःपाकात् फाणितीभावे सति आवपेत् । सुराष्ट्रजां तुवरमृत्तिकाम् । ततस्तामवचारयेदिति ततोऽनन्तरं रसक्रियां समवचारयेत् प्रयोजयेत् । अतिमर्दितां औषधानामेकीभावार्थम् । मातुलुङ्गमधुमात्रा तु संस्कारमात्रैव ।

त्रींस्त्रींश्च दिवसान् परमिति परमित्यवधारणे, तान् त्रींस्त्रीनेव दिवसान् तिष्ठेत् नाधिकं, व्रणवस्त्ववदारणभयात्॥५७-५९॥—

**गम्भीरान् मेदसा जुष्टान् दुर्गन्धांश्चूर्णशोधनैः ॥६०॥**
**उपाचरेत् भिषक् प्राज्ञः श्लक्ष्णैः शोधनवर्तिजैः ॥**

अगम्भीरान् मेदसा जुष्टानित्येके पठन्ति; तन्नेच्छति गयी । चूर्णशोधनैः कासीसादिभिः । शोधनवर्तिजैः अजगन्धादिभिः ॥ ६० ॥—

**शुद्धलक्षणयुक्तानां कषायं रोपणं हितम् ॥ ६१ ॥**
**तत्र कार्यं यथोद्दिष्टैर्द्रव्यैर्वैद्येन जानता ॥**

अशुद्धव्रणस्य शोधनानि कषायादीनि योगानि निर्दिश्य शुद्धस्य तान्येव रोपणानि निर्दिशन्नाह—शुद्धलक्षणयुक्तानामिति। शुद्धव्रणलक्षणानि 'त्रिभिर्दोषैरनाक्रान्त' इत्यादीनि जिह्वातलाभ इत्यादीनि चोक्तानि। यथोद्दिष्टैः वटादिभिः ॥ ६१ ॥—

**अवेदनानां शुद्धानां गम्भीराणां तथैव च ॥ ६२ ॥**
**हिता रोपणवर्त्यङ्गकृता रोपणवर्तयः ॥**

अवेदनानां सर्वथा वेदनाहीनानामित्यर्थः; अन्ये अवेदनानां अल्पवेदनानामित्याहुः । रोपणवर्त्यङ्गकृता इति रोपणवर्त्यङ्गानि सोमामृताश्वगन्धाकाकोल्यादीनि च तैः कृता रोपणवर्तयो हिताः ॥ ६२ ॥—

**अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ६३ ॥**
**कल्कः संरोहणः कार्यस्तिलजो मधुसंयुतः ॥**
**स माधुर्यात् तथौष्ण्याच्च स्नेहाच्चानिलनाशनः॥६४॥**
**कषायभावान्माधुर्यात् तिक्तत्वाच्चापि पित्तहृत् ॥**
**औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः ६५**
**शोधयेत् रोपयेच्चापि युक्तः शोधनरोपणैः ॥**
**निम्बपत्रमधुभ्यां तु युक्तः संशोधनः स्मृतः॥ ६६ ॥**
**पूर्वाभ्यां सर्पिषा चापि युक्तः संरोपणो भवेत् ॥**
**तिलवद्यवकल्कं तु केचिदाहुर्मनीषिणः ॥ ६७ ॥**
**शमयेद्विदग्धं च विदग्धमपि पाचयेत् ॥**
**पक्वं भिनत्ति भिन्नं च शोधयेत् रोपयेत्तथा ॥ ६८ ॥**

अपेतपूतिमांसानामित्यादि निर्गतशटितमांसानाम् । मांसस्थानां मांसमात्रस्थितानामित्यर्थः । कल्कः मिश्रकाध्याये कथितः, स तु समङ्गासोमसरलेत्यादिः । विशेषार्थमत्रापि कल्कं निर्दिशन्नाह—तिलजो मधुसंयुत इति । तिलकल्कस्य त्रिदोषहरत्वमाह—स इति तिलकल्कः। तिलकल्कस्य तिक्तकषायत्वे उष्णत्वे स्निग्धत्वे च सत्यपि कथं वाताद्यप्रकोपकत्वं ? उच्यते, स्वभावात्, आमलकवत् । अस्यैव तिलकल्कस्य योगवाहित्वं सविशेषं दर्शयन्नाह—शोधयेदित्यादि । अशुद्धान् शोधयेत्, रोपयेच्चेत्ययमर्थश्चकारेण ज्ञेयः । केन शोधनेन युक्तः शोधयेदित्याह—निम्बपत्रमधुभ्यामित्यादि । मधुसंयुत इत्यनेनैव लब्धे पुनरिह मधुग्रहणं केवलस्यैव तिलकल्कस्य प्रागुक्ता माधुर्यादयोऽवगन्तव्याः, न मधुयुक्तस्येति ज्ञापयति । केन रोपणेन शोधनेन युक्तः व्रणान् शोधयेत् रोपयेच्चेत्याह—पूर्वाभ्यामित्यादि । पूर्वाभ्यां निम्बपत्रमधुभ्यामित्यर्थः । युक्तश्चापि संरोपण इत्यपिशब्दो भिन्नक्रमे; तेन निम्बपत्रमधुघृतयुक्तः शुष्यतो व्रणस्य शोधनो रोपणोऽपि, तिलकल्कस्य योगवाहित्वात् इत्यर्थः । अन्ये तु 'युक्तः संरोपणो भवेत्' इति च पठन्ति । ते तु पूर्वोक्तं चकारार्थं न मन्यन्ते, किंच निम्बपत्रमधुघृतयुक्तस्य तिलकल्कस्य रोपणत्वमेवाङ्गीकुर्वन्तीति न शोधनत्वम् । इदानीमन्यमपि कल्कं सर्वावस्थासु सर्वव्रणयोगित्वेन सविशेषमेकीयमतेन निर्दिशन्नाह—तिलवदित्यादि ।—तिलवत् तिलसदृशो यवकल्कोऽपि त्रिदोषघ्न इत्यनेन प्रकारेण केचित् एकीयमतं व्याख्यानयन्ति। जेज्जटगयदासौ तु अन्यथा; यथा—तिला विद्यन्तेऽस्मिन्निति तिलवान्, तिलवांश्चासौ यवकल्कश्च तिलवद्यवकल्कः, तं तिलवद्यवकल्कं केचिदाहुरिति । सर्वावस्थासु सर्वशारीरव्रणीययोगमाह—शमयेदविदग्धं चेत्यादि । एतेन तिलयुक्तः कल्कः पञ्चानामुपक्रमाणां विम्लापनपाचनपाटनशोधनरोपणानामर्थं करोतीत्युक्तं; तिलकल्कस्तु रोपणशोधनकरणेनोपक्रमद्वयार्थकरः, तदुभयकरणेनोपक्रमत्रयार्थकरो वा, अतएवानयोः कल्कयोर्भेदः । रोपयेच्चेति चकारेण तिलकल्कतिलयवकल्कयोरपि व्रणवैकृत्यापहत्वं भवतीति समुच्चीयते ॥ ६३—६८ ॥

**पित्तरक्तविषागन्तून् गभीरानपि च व्रणान् ॥**
**रोपयेत् रोपणीयेन क्षीरसिद्धेन सर्पिषा ॥ ६९ ॥**

शस्त्राद्यभिघातनिमित्ता व्रणाः सप्ताहादर्वागेव आगन्तवः । रोपणीयेनेति मिश्रकोदितेन ॥ ६९ ॥

**कफवाताभिभूतानां व्रणानां मतिमान् भिषक् ॥**
**कारयेत् रोपणं तैलं भेषजैस्तद्यथोदितैः ॥ ७० ॥**

यथोदितैरिति मिश्रकोक्तैः कालानुसार्यागुरुप्रभृतिभिः ॥७०॥

**अबन्ध्यानां चलस्थानां शुद्धानां च प्रदुष्यताम् ॥**
**द्विहरिद्रायुतां कुर्यात् रोपणार्थां रसक्रियाम् ॥७१॥**

अबन्ध्याः पित्तरक्तविषाभिघातजादयः । चलस्थानामिति चलाः चेष्टावन्तः सन्धयः, तत्रस्थानां; शुद्धानां च प्रदुष्यतां इत्यत्र चाप्ररोहतामिति केचित्पठन्ति । तत्र चलस्थानत्वादिना अप्ररोहतामिति द्रष्टव्यम् । अत्र कल्पना—न्यग्रोधादिवर्गस्य त्रिफलाद्द्रव्यापेक्षया अष्टगुणे चतुर्गुणे वाऽम्भसि अष्टभागावशिष्टे चतुर्भागावशिष्टे वा कषायं पुनरधिस्रत्य फाणितीभावे अवशिष्टकषायपादमात्रया हरिद्राद्वयचूर्णं प्रक्षिप्य सुमर्दितां मधुयुतां अवतारयेत् । अत्र शोधनरसक्रियावत् कालावधिर्नास्त्येव । यावत् ग्रहणमेव कार्यमिति ॥ ७१ ॥

**समानां स्थिरमांसानां त्वक्स्थानां रोपणं भिषक् ॥**
**चूर्णं विदध्यात् मतिमान् प्राक्स्थानोक्तो विधिर्यथा**

१ 'रोपयेच्च तम्' इति पाठान्तरम् ।

२ 'स्वेच्छावन्तः' इति पाठान्तरम् ।

समानामित्यादि । स्थिरमांसानां अमृदुमांसानाम् । प्राक्स्थानोक्तो विधिर्यथेति प्राक्स्थाने सूत्रस्थाने उक्तो विधिः येन प्रकारेण, सच प्रकारः त्रिफलारोध्रमित्यादिना निर्दिष्टः इत्यर्थः ॥ ७२ ॥

**शोधनो रोपणश्चैव विधिर्योऽयं प्रकीर्तितः ॥**
**सर्वव्रणानां सामान्येनोक्तो दोषविशेषतः ॥ ७३ ॥**

इदानीं कषायादि प्रत्येकं सप्तविधानस्य शोधनस्य रोपणस्य च सर्वव्रणविषयत्वं दर्शयन्नाह—शोधन इत्यादि । अत्र सुधीरः एष सर्वव्रणानां शारीरागन्तूनां सामान्येनोक्तो विधिः । कस्मात् ? दोषाविशेषतः अविशिष्टा हि वातपित्तश्लेष्मणो दूषकाः शारीराणामागन्तूनां च व्रणानाम् । उक्तं च,—'कालान्तरेण दोषोपप्लवविशेषाच्छारीरवत् प्रतिकार' इति । दोषविशेषत इति पाठे दोषविशेषतः दोषविभेदतः । शेषं समम् । केचित्तु सामान्येनोक्तो कल्कादिः, तथा दोषविशेषतश्चोक्तः आद्ये द्वे पञ्चमूल्यावित्यादि इति लुप्तनिर्दिष्टं चकारं वर्णयन्ति । गयी तु सर्वव्रणानामयमेव विधिरुक्तः; यतो व्रणसामान्योक्तः, स च विधिर्दोषविशेषत इति दोषविशेषमपेक्ष्य कार्य इति व्याख्यानयति॥७३

**एष आगमसिद्धत्वात् तथैव फलदर्शनात् ॥**
**मन्त्रवत् संप्रयोक्तव्यो न मीमांस्यः कथञ्चन ॥ ७४ ॥**

एषः शोधनरोपणविधिः । आगमसिद्धत्वादिति आगमः शास्त्रं तेन सिद्धत्वात् प्रसिद्धत्वादित्यर्थः । फलदर्शनात् आरोग्यदर्शनात् । न मीमांस्यः न विचार्य इत्यर्थः ॥ ७४ ॥

**स्वबुद्ध्या चापि विभजेत् कषायादिषु सप्तसु ॥**
**भेषजानि यथायोगं यान्युक्तानि पुरा मया ॥ ७५ ॥**

आगमोक्तियोगविषयिणीममीमांसां निर्दिश्य अनिर्दिष्टयोगविषयिणीं मीमांसामेव कथयन्नाह—स्वबुद्ध्येति । कषायादिषु सप्तसु कषायवर्तिकल्कसर्पिस्तैलरसक्रियाचूर्णेषु ॥ ७५ ॥

**आद्ये द्वे पञ्चमूल्यौ तु गणो यश्चानिलापहः ॥**
**स वातदुष्टे दातव्यः कषायादिषु सप्तसु ॥ ७६ ॥**
**न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यः स्मृतः ॥**
**तौ पित्तदुष्टे दातव्यौ कषायादिषु सप्तसु ॥ ७७ ॥**
**आरग्वधादिस्तु गणो यश्चोष्णः परिकीर्तितः ॥**
**तौ देयौ कफदुष्टे तु संसृष्टे संयुता गणाः ॥ ७८ ॥**

उष्णः उष्णकारी । संयुता गणाः सर्वेऽपि शोधनरोपणविषयाः ॥ ७६—७८ ॥

**वातात्मकानुग्ररुजान् स्रास्रावानपि च व्रणान् ॥**
**सक्षौमयवसर्पिर्भिर्धूपनाङ्गैश्च धूपयेत् ॥ ७९ ॥**

धूपनविषयमाह—वातात्मकानित्यादि । उग्ररुजान् स्रास्रावान् इति पदद्वयेन वातकफात्मकत्वमुक्तम् । सक्षौमेत्यादि क्षौमम् अतसीवस्त्रम् । धूपनाङ्गानि 'श्रीवेष्टके सर्जरसे' इत्यादीनि ॥ ७९ ॥

**परिशुष्काल्पमांसानां गम्भीराणां तथैव च ॥**
**कुर्यादुत्सादनीयानि सर्पींष्यालेपनानि च ॥ ८० ॥**

उत्सादनविषयमाह—परिशुष्केत्यादि । परिशुष्काल्पमांसानां वातात्मकानाम् । गम्भीराणां रक्तपित्तात्मकानाम् । प्रयोगे उत्सादनीयानि इति अपामार्गाश्वगन्धादीनि उत्सादनद्रव्याणीत्यर्थः । एतैः संस्कार आलेपनं च कर्तव्यम् । उत्सादनं निम्नव्रणस्योन्नतिकरणम् ॥ ८० ॥

**मांसाशिनां च मांसानि भक्षयेद्विधिवन्नरः ॥**
**विशुद्धमनसस्तस्य मांसं मांसेन वर्धते ॥ ८१ ॥**

आभ्यन्तरमुत्सादनमाह—मांसाशिनामित्यादि ।—व्याघ्रादीनामित्यर्थः । विशुद्धमनसः शोकक्रोधाद्यनभिभूतमनस इत्यर्थः, जेज्जटस्तु व्याघ्रादीनां मांसानि छद्मोपहितानि, एवं विशुद्धमनस इति व्याख्यानयति ॥ ८१ ॥

**उत्सन्नमृदुमांसानां व्रणानामवसादनम् ॥**
**कुर्याद्द्रव्यैर्यथोद्दिष्टैश्चूर्णितैर्मधुना सह ॥ ८२ ॥**

अवसादनविषयमाह—उत्सन्नमृदुमांसानामिति । उत्सन्नं उद्धृतं मृदु मांसं येषां ते तथा । अवसादनं उन्नतव्रणस्य निम्नत्वकरणम् । यथोद्दिष्टैर्द्रव्यैः कासीसादिभिः ॥ ८२ ॥

**कठिनानाममांसानां दुष्टानां मातरिश्वना ॥**
**मृद्वी क्रिया विधातव्या शोणितं चापि मोक्षयेत् ८३**
**वातघ्नौषधसंयुक्तान् स्नेहान् सेकांश्च कारयेत् ॥**

द्रव्या[illegible]कर्मविषयमाह—कठिनानामित्यादि । अमांसानां अल्पमांघृतं घृतचतु[illegible]मातरिश्वना वायुना । मृद्वीक्रिया मधुरस्निग्धकोष्णलउत्सन्नमांस[illegible] क्रियमाणैर्लेपादिभिः । शोणितमित्यादि तत्र सर्षपस्नेहयु[illegible]रिश्वनि रक्तमोक्षणं, कफानुगते स्नेहान् सेकांव्रणानिति कफव

पूयादिशोधनद्रुव्यांसेषु दारुणीकरणं हितम् ॥ ८४ ॥

**धवप्रियङ्ग्वशोकानां रोहिण्याश्च त्वचस्तथा ॥**
**त्रिफलाधातकीपुष्परोध्रसर्जरसान् समान् ॥**
**कृत्वा सूक्ष्माणि चूर्णानि व्रणं तैरवचूर्णयेत् ॥ ८५ ॥**

दारुणकर्मविषयमाह—व्रणेष्वित्यादि । दारुणीकरणं कठिनीकरणम् । रोहिण्याः कटुतुम्ब्याः वल्कलस्य ॥ ८४ ॥ ८५ ॥

**उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान् ॥**
**तथैव खलु दुःशोध्यान् शोधयेत् क्षारकर्मणा॥८६॥**

क्षारविषयमाह—उत्सन्नमांसानित्यादि ॥ ८६ ॥

**स्रवतोऽश्मभवान्मूत्रं ये चान्ये रक्तवाहिनः ॥**
**निःशेषच्छिन्नसन्धींश्च साधयेदग्निकर्मणा ॥ ८७ ॥**

अग्निकर्मविषयमाह—स्रवत इत्यादि । अश्मभवान् अश्मरीनिर्हरणच्छेदसंभवान् व्रणान् अग्निकर्मणा साधयेदिति संबन्धः । किंविशिष्टान् व्रणान् मूत्रं स्रवतः यद्यपि ते व्रणाः मूत्रस्राविणः तथापि सद्योव्रणे मूत्रं यावत् तावत्तेऽदहनीयाः । सप्ताहादूर्ध्वं पुनर्यदा व्रणानामसन्धानेन मूत्रं स्वमार्गं न प्रतिपद्यते, तदैवाग्निना दहेत् ॥ ८७ ॥

**पित्थशिरीषपलाशपाठामूर्वादुस्पर्शाकषायं मधुमिश्रं हस्त्यश्वशूकरोष्ट्रास्थिक्षारं चेति, दह्यमानमौदककन्दक्वाथसिद्धां यवागूं क्षीरेक्षुरसमधुरां पाययेत् ॥ ८ ॥**

विशेषत इत्यादि । अत ऊर्ध्वं वक्ष्यते इति वाक्यशेषः । तत्रेत्यादि पारिजातः पारिभद्रकः । इक्ष्वित्यादि । वैजयन्ती अरणिका । सुरेत्यादि शैवलं शेवालम् । प्लवः गोपालदमनकः । हठः जलकुम्भिका । ककुभः सुगन्धिमूलो विटपी । कफजेषु मधुमधुरमिति अन्ते स्थितं दशस्वपि सम्बध्नन्ति, एवं पैत्तिकेष्वपि; मधुनो योगवाहित्वात् मेहहरत्वाच्च । पैत्तिकेत्यादि । राजवृक्षः किरमालकः । अत इत्यादि । कदरः आपीतसारः खदिराकारः । क्रमुकः पूगफलम् । मूर्वा चौरस्नायुः । दुःस्पर्शा दुरालभा । मधुमधुरमिति वचनं सर्पिर्मेहादिकषायेष्वपि द्रष्टव्यम् । हस्त्यश्वादिक्षारोदकस्य शीतस्य पानं खरतीक्ष्णत्वात् । प्रमेहिणोऽल्पाग्नौ क्षीणे तद्विरोधिनि पित्ते विवृद्धे दाहो भवतीति तच्चिकित्सितमुपदिशन्नाह—दह्यमानमित्यादि । औदककन्दक्वाथेनादि पङ्कजकल्पकथितेन शालूकादिक्वाथेन सह क्षीरेक्षुरससिद्धां शीतां मधुमधुरां यवागूं पाययेत् । तथाचोक्तम्, "यवागूं मधुशीतासु षडङ्गादि प्रयुज्यते । कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ॥ अर्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ" । पूर्वनिषिद्धस्य यवागूपानस्यापवादः । क्षीरेक्षुरसमधुराया यवाग्वाः पानं पित्तमेहे एव, वातश्लेष्ममेहेषु पुनर्यवागूपानस्य प्रतिषेध एव ॥ ८ ॥

**ततः प्रियङ्ग्वनन्तायूथिकापद्मात्रायन्तिकालोहितिकाम्बष्ठादाडिमत्वक्शालपर्णीपद्मतुङ्गकेशरधातकीबकुलशाल्मलीश्रीवेष्टकमोचरसेष्वरिष्टानयस्कृतीर्लेहानासवान् कुर्वीत; शृङ्गाटकगिलोड्यबिसमृणालकसेरुकमधुकाम्रजम्ब्वसनतिनिशककुभकट्वङ्गरोध्रभल्लातकचर्मिवृक्षगिरिकर्णिकाशीतशिवनिचुलदाडिमाजकर्णहरिद्रवृक्षराजादनगोपघोण्टाविकङ्कतेषु वा । यवान्नविकारांश्च सेवेत । यथोक्तकषायसिद्धां चास्मै यवागूं प्रयच्छेत्, कषायाणि वा पातुम् ॥ ९ ॥**

तत्र सर्वेषां मेहानां प्रथमं सामान्यान् ततो वैशेषिकांश्च योगानभिधाय पुनररिष्टादीन् सामान्येनैव निर्दिशन्नाह—तत इत्यादि । अनन्ता उत्पलसारिवा । पद्मा भार्गी । त्रायन्तिका मदयन्तिका । लोहितिका मञ्जिष्ठा, रामतरुणीत्यन्ये । अम्बष्ठा माचिका, 'साकुर' इति लोके । शालपर्णीत्यत्र केचित् तालपर्णीति पठन्ति, तालपर्णी मुषली । तुङ्गः पुन्नागः । केशरं नागकेशरम् । श्रीवेष्टकः नवनीतधूपः सरलनिर्यासः । मोचरसः शाल्मलीचोपनिर्यासः । तत्रारिष्टादयः पूर्वेणैव विधानेन विधेयाः । शृङ्गाटकेत्यादि शृङ्गाटकं जलमध्ये त्रिकण्टकम् । गिलोड्यः कन्दः प्रावृड्जातः [illegible] नर्मदावतीनदीभवश्चेद् वर्तुलपाषाणसदृशः 'गुगिलोड' इति लोके । बिसं पद्ममूलम् । तस्य स्थूलप्ररोहो मृणालम् । असनः बीजकः । तिनिशः स्यन्दनः । कट्वङ्गः अरलुकः । चर्मिवृक्षः चर्मलोह इति प्रसिद्धः लकुचद्रुमाकारो महावृक्षः । गिरिकर्णिका श्वेतस्यन्दः । शीतशिवः शतपुष्पाभेदः । निचुलः जलवेतसः । अजकर्णः सर्जः, पूर्वदेशप्रसिद्धः । हरिद्रवः इन्द्रवृक्षः, भषाकार इत्येके, कुटज इत्यन्ये पठन्ति. हरिद्रावृक्ष इत्यपरे पठन्ति, तत्र हरिद्रा प्रसिद्धा, वृक्षः कुटजः । राजादनः क्षीरिका । गोपघोण्टा घोटाबदरी । विकङ्कतः कण्टकिका । एतेषु वा पूर्वकल्पेनारिष्टादयः कर्तव्याः । यवेत्यादि यवान्नविकाराः [illegible] । यथोक्तेत्यादि । अनन्तरोक्तप्रियङ्ग्वनन्तादिशृङ्गाटकादिवर्गैः कृतानीति ॥ ९ ॥

**महाधनमहिताहाग्रमेपथ्धेष्विणमीश्वरं वा पाठाभयाचित्रकप्रगाढमनल्पमाक्षिकमन्यतममास्यं पाययेत्, अङ्गारशूल्यावदंशं वा मार्द्वीकमभीक्ष्णम् । मधुकपित्थमरिचानुविद्धानि चास्मै पानान्युपहरेत् । उष्ट्राश्वतरखरपुरीषचूर्णानि चास्मै दद्याद्ग्रासेषु । हिङ्गुसैन्धवयुक्तैर्यूषैः सार्षपैश्च शाकैर्भोजयेत् । अविरुद्धानि चास्मै पानभोजनान्युपहरेद्द्रवन्ति । प्रवृद्धमेहास्तु व्यायामनियुद्धक्रीडागजतुरगरथपदातिचर्यापरिक्रमणानि अस्त्रोपास्त्रं वा सेवेरन् ॥ १० ॥**

महाधनो विपुलधनशाली । ईश्वर ईशिता राजा । [illegible] गुडस्थाने माक्षिकम् । अनल्पं प्रभूतं [illegible] । पाठाभयाचित्रकाणामनुज्ञानां [illegible] देयमिति प्रगाढार्थः । अन्ये तु [illegible] प्रियङ्ग्वाद्यासवम् । अङ्गारशूल्यानदंशाभिः [illegible] । मार्द्वीकं मधुयोनिराद्यं [illegible] । जेज्जटाचार्यस्तु द्राक्षासवमाह । [illegible] । उष्ट्रादिपुरीषचूर्णान्याहारेषु [illegible] । [illegible] भिना केचित् राजिकाक्वाथे शाकेषु सर्षपाः, अन्ये तु पठन्ति 'सार्षपैस्तु शाकैर्भोजयेत्' इति । अन्यानि पानभोजनानि [illegible] रुद्धानि प्रमेहिणस्तानि स्रवन्ति [illegible] प्रदद्यात् । निर्दिष्टः कृशस्य प्रायशो विधिः । अतःपरं स्थूलस्याप्रमेहिणोऽभिधानमाह—प्रवृद्धमेहा इत्यादि । व्यायामः अङ्गानां [illegible] आयामः । तथाचोक्तम् "[illegible] । आयामो विविधोऽङ्गानां व्यायाम इति कीर्तितः ।" नियुद्धं बाहुयुद्धम् । धनुर्वेदेऽन्यथा नियुद्धं व्याख्यातं, तच्च विस्तरभयान्न लिखितम् । क्रीडा लोकप्रसिद्धहस्तपादप्रक्षेपैर्नैर्मल्यपूर्वकं क्रीडनम् । गजानामारोहणं हस्तिशिक्षायामतिविस्तृतं सांयात्रिकमाध्यात्मिकं च, विक्रमवाञ्छितोपदान्यसंहितासु हयारोहणं, रथचर्या पदा-

१ "पित्तमेहिन इति वा" इति पा० ।

१ 'चिरसंचितं' इति पा० ।

[illegible] जमदग्निराह ।"सर्वदिग्भागभागेषु हस्त्यश्वरथपत्तिषु । शस्त्रार्थैर्यस्तु संयोगः स चर्येति प्रकीर्त्यते ।" परिक्रमणं चङ्क्रमणं गतागतमित्यर्थः, सर्वतो भ्रमणमित्यन्ये । अस्त्रं शास्त्रितं धनुः; उपास्त्रं शास्त्रनियमवर्जितं धनुरेव ॥ १० ॥

**अधनस्तु अबान्धवो वा पादत्राणातपत्रविरहितो भैक्ष्याशी ग्रामैकरात्रानुवासी मुनिरिव संयतात्मा योजनशतमधिकं वा गच्छेत्, महाधनो वा श्यामाकनीवारवृत्तिरामलककपित्थतिन्दुकाश्मन्तकफलाहारो मृगैः सह वसेत्, तन्मूत्रशकृद्भक्षी सततमनुव्रजेत् गां, ब्राह्मणो वा शिलोञ्छवृत्तिर्भूत्वा ब्रह्मरथमुपधारयन् पठेत् सततं, इतरः खनेद्वा कूपं, कृशं तु सततं रक्षेत् ॥ ११ ॥**

भवति चात्र ।

अधनो वैद्यसन्देशादेवं कुर्वन्नतन्द्रितः ॥
संवत्सरादन्तराद्वा प्रमेहात्प्रतिमुच्यते ॥ १२ ॥

[illegible] वा । नीवारं उलिकाधान्यं तद्धि [illegible], [illegible] धान्यम[illegible]धान्यं क्षेत्रजं, द्वितीयं महादलका-[illegible] शालिजं; तत्र सलिलजं सलिलवृद्धिमात्रस्तम्बप्ररोहं [illegible], [illegible] प्रमाणिकेति तन्त्रान्तरे पठ्यते । तन्मूत्रशकृद्-[illegible] [illegible] गवामेव मूत्रशकृती ग्राह्ये । भूमिपति-[illegible] शस्यग्रहणं शिलः कणशो धान्यग्रहणं [illegible] भूमि[illegible] शस्यग्रहणं उञ्छः । ब्रह्मरथं ब्राह्मणा-[illegible] शकटमुद्धरेत् । अथवा ब्रह्म एव रथो ब्रह्मरथस्तमु-[illegible], [illegible] वेदमित्यर्थः, पापरोगप्रायः प्रमेहो वेदाभ्य-[illegible] । इतरः शूद्रः । अधन इत्यादि । यावत् मृगैः सह [illegible] विधिः ॥ ११ ॥ १२ ॥

इति [illegible] निबन्धसंग्रहाख्यायां सुश्रु-[illegible] चिकित्सितस्थाने एकादशोऽध्यायः ।

## द्वादशोऽध्यायः ।

**अथातः प्रमेहपिडकाचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

**शराविकाद्या नव पिडकाः प्रागुक्तास्ताः प्राणवतोऽल्पास्त्वङ्मांसप्राप्ताः मृद्व्योऽल्परुजः क्षिप्रपाकभेदिन्यश्च साध्याः; ताभिरुपद्रुतं प्रमेहिणमुपचरेत् ॥ ३ ॥**

एताः शराविकाद्याः प्रमेहपिडकाः प्रमेहं विनापि भवन्ति । उक्तं च "विना प्रमेहमप्येता जायन्ते दुष्टमेदसः" इति । यद्यप्येवं तथापि प्रमेहानन्तरकालजातानां प्रमेहं विनापि जातानां चैकमिह चिकित्सितमासां, तुल्यदोषदूष्यत्वात् । ताभिरित्यादि । "पिडकानां पूर्वरूपं प्रमेहा" इति तन्त्रान्तरोक्तत्वात् पिडकाचिकित्सितेऽपि प्रमेहचिकित्सितमुक्तं, अथवा प्रमेहचिकित्सितेनैव पिडकोपशमो भवतीति ॥ १—३ ॥

**तत्र पूर्वरूपेषु अपतर्पणं कषायं बस्तमूत्रं चोपदिशेत् । एवमकुर्वतस्तस्य मधुराहारस्य मूत्रं स्वेदः श्लेष्मा च मधुरीभवति प्रमेहश्चाभिव्यक्तो भवति; तत्रोभयतः संशोधनमासेवेत । एवमकुर्वतस्तस्य दोषाः प्रवृद्धाः मांसशोणितं प्रदूष्य शोफं जनयन्त्युपद्रवान् वा कांश्चित्, तत्रोक्तः प्रतीकारः शिरामोक्षश्च । एवमकुर्वतस्तस्य शोफो वृद्धोऽतिमात्ररुजो विदाहमापद्यते, तत्र शस्त्रप्रणिधानमुक्तं व्रणक्रियोपसेवा च । एवमकुर्वतस्तस्य पूयोऽभ्यन्तरमवदार्योत्सङ्गं महान्तमवकाशं कृत्वा प्रवृद्धो भवत्यसाध्यः । तस्मादादित एव प्रमेहिणमुपक्रमेत् ॥ ४ ॥**

तत्रेत्यादि । अपतर्पणं उपवासादि । वनस्पतिकषायं बस्तमूत्रं चोपदिशेत् ; वनस्पतयः वटादयः, बस्तः छागः । एवमित्यादि एवमकुर्वतस्तस्य हीनप्रथमकर्मगुणस्य मधुराहारस्य मूत्रादयो मधुरीभवन्ति । तत्रोभयतः संशोधनमासेवेत वमनं विरेचनं च । एवमित्यादि एवमकुर्वतस्तस्य हीनद्वितीयकर्मगुणस्य तत्रोक्तः प्रतीकारः तत्र शोफे उक्तः प्रतीकारः सूत्रस्थाने द्विव्रणीये च, स पुनरपतर्पणादिरेकादशविधो विरेकान्तः । शिरामोक्षश्चेति न जलौकापातनमधःकायस्य पिडकाधिष्ठानस्यातिविपुलत्वात् । अत्र शोफप्रतिपादनेन तदनन्तरामाविनी प्रमेहपिडकापि प्रतिपादिता । एवमित्यादि एवमकुर्वतस्तस्य हीनतृतीयकर्मगुणस्य शस्त्रप्रणिधानं छेद्यभेद्यादिना, व्रणक्रियोपसेवा चेति षष्टिव्रणोपक्रमाणां च यथास्वमुपसेवनमित्यतीतात्रेक्षणम् । अत्र शोफस्य विदग्धस्य याप्यत्वेनासाध्यत्वम् । एवमित्यादि । एवमकुर्वतस्तस्य हीनचतुर्थकर्मगुणस्य (नातिसर्केलोपद्रवस्यानतिमहाशयोत्सङ्गादौ शिलाजत्वाद्यनभ्यासे तु प्रयत्नाद्यतिशयात् । याप्यत्वेनासाध्यवत्त्वम् । शिलाजत्वाद्यभ्यासे तु हीनपञ्चकर्मगुणस्य) अनुपक्रम्यत्वात् असाध्यतमत्वम् । उत्सङ्ग इव उत्सङ्गः, व्रणाशयेऽहि चिरकालपूयावस्थानेऽवदारितमन्तःप्रदेशान्तरं निम्नमुत्सङ्गतुल्यत्वात् उत्सङ्ग इत्युच्यते, उत् ऊर्ध्वं पूयस्य सङ्ग उत्सङ्ग इत्यन्ये । तस्मादित्यादि आदित इति ल्यब्लोपे पञ्चमी । तस्मात् आद्यं पूर्वरूपमेव वीक्ष्य प्रमेहिणमुपक्रमेत इत्यर्थः ॥ ४ ॥

**भल्लातकबिल्वाम्बुपिप्पलीमूलौदकीर्यावर्षाभूपुनर्नवाचित्रकशठीस्नुहीवरुणकपुष्करदन्तीपथ्या दशपलोन्मितान् यवकोलकुलत्थांश्च प्रास्थिकान् सलिलद्रोणे निःक्वाथ्य चतुर्भागावशिष्टेऽवतार्य वचात्रिवृत्कम्पिल्लकभार्गीनिचुलशुण्ठीगजपिप्पली-**

---

१ 'विरुद्धस्य' इति पा० । २ ( ) एतच्चिह्नान्तर्गतः पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

**विडङ्गशिरीषाणां भागैरर्धपलिकैर्घृतप्रस्थं विपाचयेत्, मेहश्वयथुकुष्ठगुल्मोदरार्शःप्लीहविद्रधिपिडकानां नाशनं नाम्ना धान्वन्तरम् ॥ ५ ॥**

भल्लातकेत्यादि । अनार्षोऽयं योगः जेज्जटाचार्येण नोक्तत्वात्, तस्मान्न पठनीयः ॥ ५ ॥

**दुर्विरेच्या हि मधुमेहिनो भवन्ति मेदोऽभिव्याप्तशरीरत्वात्, तस्मात् तीक्ष्णमेतेषां शोधनं कुर्वीत । पिडकापीडिताः सोपद्रवाः सर्व एव प्रमेहा मूत्रादिमाधुर्ये मधुगन्धसामान्यात्पारिभाषिकीं मधुमेहतां लभन्ते ॥ ६ ॥**

दुर्विरेच्या इत्यादि ॥ ६ ॥

**न चैतान् कथंचिदपि स्वेदयेत्, मेदोबहुत्वादेतेषां विशीर्यते देहः स्वेदेन ॥ ७ ॥**

नचेत्यादि । स्वेदावचारणीये प्रमेहिणां निषिद्धत्वेऽपि महादोषत्वप्रतिपादनाय पुनरपि निषिद्धम् ॥ ७ ॥

**रसायनीनां च दौर्बल्यात् नोर्ध्वमुत्तिष्ठन्ति प्रमेहिणां दोषाः, ततो मधुमेहिनामधःकाये पिडकाः प्रादुर्भवन्ति ॥ ८ ॥**

कुतः पुनरधोदेहे एव पिडकासम्भव इत्याह—रसायनीनां च दौर्बल्यादित्यादि । रसायनीनामित्यत्रादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन रसपित्तकफशोणितवहानां धमनीनामित्यर्थः । दौर्बल्यादिति सर्वशरीरगतस्य सर्वद्रवधातोरपानव्यानाभ्यामधोऽनुलोम्यमानत्वात् रसादिवहानामपि धमनीनामध एव बलवत्त्वं नतूर्ध्वमित्यर्थः; रसहारिणीनामिति केचित् पठन्ति॥८॥

**अपक्वानां पिडकानां शोफवत् प्रतीकारः पक्वानां व्रणवदिति । तैलं तु व्रणरोपणादौ कुर्वीत, आरग्वधादिकषायमुत्सादनार्थे, शालसारादिकषायं परिषेचने, पिप्पल्यादिकषायं पानभोजनेषु, पाठाचित्रकशार्ङ्गेष्टाक्षुद्रबृहतीसारिवासोमवल्कसप्तपर्णारग्वधकुटजमूलचूर्णानि मधुमिश्राणि प्राश्नीयात् ॥ ९ ॥**

अपक्वानामित्यादि । व्रणरोपणमिति रोपणद्रव्यसिद्धं मिश्रकाद्युक्तं, रोपणावस्थायां रोपणे कर्तव्ये आदौ तैलमेव, नान्यत्कषायादिकं, सर्वेष्वेव मेहेष्वतिप्रवृत्त्या तावद्वृद्धेः, तैलस्य वातदोषप्रत्यनीकत्वात्, तथा बद्धमूत्रत्वेन प्रमेहव्याधिप्रत्यनीकत्वाच्च । अन्ये तु एलादौ कुर्वीतेति पठन्ति, एलातगरकुष्ठेत्यादिः एलादिः । उत्सादनं निम्नव्रणस्य उन्नतिकरणम् । उत्सादनोपक्रमावस्थायामारग्वधादिनैवोत्सादनम् । एवं वक्ष्यमाणेषु परिषेचनादिषु अत्रोक्तवर्गेणैव नियमः । पाठाचित्रकेत्यादि । शार्ङ्गेष्टा काकतिक्ता 'घुम्घुरुदाक' इति लोके । क्षुद्रबृहती लघुकण्टकारिका । सोमवल्कः वाक्लः । अयं योगः सामान्यचूर्णयोजनपरिभाषया योज्यः । तथाहि "चूर्णितस्य कल्कस्य गुटिकानां च सर्वशः । द्रवमुक्त्वा लेहस्य पानस्य च चतुर्गुणः" ॥ ९ ॥

**शालसारादिवर्गकषायं चतुर्भागावशिष्टमवतार्य परिस्राव्य पुनरुपनीय साधयेत्, सिद्ध्यति चामलकरोध्रप्रियङ्गुदन्तीकृष्णायस्ताम्रचूर्णानि आवपेत्, एतदनुपदग्धलेहीभूतमवतार्यानुगुणं निदध्यात्, ततो यथायोगमुपयुञ्जीत, एष लेहः सर्वमेहानां हन्ता ॥ १० ॥**

शालसारेत्यादि । शालसारादिवर्गः पलशतं षोडशगुणे जले क्वथितं पादावशेषं तस्मिन् सिध्यति आमलकादीनां पादिकमित्येके । अपरे तु कृष्णायसलोहप्रमाणोक्तेन आमलकादीनां षण्णां प्रत्येकं पलमात्राः ॥ १० ॥

**त्रिफलाचित्रकत्रिकटुविडङ्गमुस्तानां नव भागास्तावन्त एव कृष्णायश्चूर्णस्य, तत्सर्वमेकध्यं कृत्वा यथायोगं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत; एतत्नवायसमेतेन जाड्यं न भवति सद्योऽग्निराप्यायते दुर्नामशोफपाण्डुकुष्ठरोगाविपाककासश्वासप्रमेहाश्च न भवन्ति ॥ ११ ॥**

नवायसमाह—त्रिफलेत्यादि । कृष्णायश्चूर्णस्य कृष्णलोहचूर्णस्य । जाड्यं स्थौल्यम् ॥ ११ ॥

**शालसारादिनिर्यूहे चतुर्थांशावशेषिते ॥**
**परिस्रुते ततः शीते मधु माक्षिकमावपेत् ॥ १२ ॥**
**फाणितीभावमापन्नं गुडं शोधितमेव च ॥**
**श्लक्ष्णपिष्टानि चूर्णानि पिप्पल्यादिगणस्य च ॥ १३ ॥**
**ऐकध्यमावपेत् कुम्भे संस्कृते घृतभाविते ॥**
**पिप्पलीचूर्णमधुभिः प्रलिप्तेऽन्तःसुखं दृढे ॥ १४ ॥**
**श्लक्ष्णानि तीक्ष्णलोहस्य तत्र पत्राणि बुद्धिमान् ॥**
**खदिराङ्गारतप्तानि बहुशः सन्निमज्जयेत् ॥ १५ ॥**
**सुपिधानं तु तं कृत्वा यवपल्ले निधापयेत् ॥**
**मासांस्त्रींश्चतुरो वापि यावल्लोहसंक्षयात् ॥ १६ ॥**
**ततो जातरसं तं तु प्रातः प्रातर्यथाबलम् ॥**
**निषेवेत यथायोगमाहारं चास्य कल्पयेत् ॥ १७ ॥**
**कार्श्यकृद्बलिनामेष सन्नस्याग्नेः प्रसाधकः ॥**
**शोफगुल्मोदरहरः कुष्ठमेहपाण्ड्वामयापहः ॥ १८ ॥**
**प्लीहोदरहरः शीघ्रं विषमज्वरनाशनः ॥**
**अभिष्यन्दापहरणो लोहारिष्टो महागुणः ॥ १९ ॥**

शालसारादीत्यादि । शालसारादिद्रव्यशतपलस्य अष्टचतुर्गुणे पक्वस्य चतुर्थांशावशेषितो निर्यूहः क्वाथः । तस्मिन् पूते शीते पञ्चशतपलप्रमाणं मधु मदं माक्षिकमेव माक्षिकं, मध्वासवं प्रक्षिपेत् । गयी तु मध्वेव मन्यते । फाणितीभावमापन्नमिति क्रियाविशेषणम् । गुडं शोधितमेव इति गुडमलमिश्रेव कषाये विलापितः पुनः शोधितः उच्यते, आरक्ताम्य

गुडस्यापि पञ्चाशत्पलानि । पिप्पल्यादिचूर्णस्य पञ्चविंशतिपलानि, तावन्ति एव लोहपत्राणाम् । गयी तु तत्र पुराणस्य मधुनः कषायमधुरीभावमात्रं प्रमाणम् । मधुमान एव जीर्णगुडः । पिप्पल्यादिचूर्णमानं तु यावता नातिव्यक्तं कटुत्वं भवति । मधुप्रमाणपादिकं पिप्पल्यादिचूर्णस्य मानं, लौहपत्रप्रमाणमपि तावदेव इत्यन्ये । आहारं चास्य कल्पयेत् विशिष्टदोषारब्धरोगजातिप्रत्यनीकम् । अत्राभिष्यन्दशब्देन मूत्रनिःष्यन्दोऽभिधीयते ॥ १२—१९ ॥

**प्रमेहिणो यदा मूत्रमपिच्छलमनाविलम् ॥**
**विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते ॥ २० ॥**

प्रमेहिण इत्यादि । अनाविलं प्रसन्नम् । विशदं रूक्षम् । मूत्रस्य कटुतिक्तत्वं पिपीलिकामक्षिकादीनामपसर्पणेन ज्ञातव्यम् । अन्येत्वेवं पठन्ति,—"प्रमेहिणो यदामूत्रमनाविद्धमपिच्छिलम् ।" तत्रापि अनाविद्धम् प्रसन्नम् ॥ २० ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने द्वादशोऽध्यायः ॥

## त्रयोदशोऽध्यायः ।

**अथातो मधुमेहचिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**
**मधुमेहित्वमापन्नं भिषग्भिः परिवर्जितम् ॥**
**योगेनानेन मतिमान् प्रमेहिणमुपाचरेत् ॥ ३ ॥**
**मासे शुक्रे शुचौ चैव शैलाः सूर्यांशुतापिताः ॥**
**जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ॥ ४ ॥**
**शिलाजत्विति विख्यातं सर्वव्याधिविनाशनम् ॥**

मधुमेहित्वमित्यादि । शुक्रो मासः ज्यैष्ठः । शुचिः आषाढः । यद्यपि अन्यस्मिन् काले शिलाजतु प्रस्रवं दृश्यते तथापि शुचिशुक्रमासपरिगृहीतं खरतरतरणिकिरणतापिताभ्यः शिलाभ्यो गुणवत्तरं भवति । जतुप्रकाशं लाक्षाप्रकाशम् । सर्वव्याधिः मधुमेहादिः ॥ १—४ ॥—

**त्रप्वादीनां तु लोहानां षण्णामन्यतमान्वयम् ॥५॥**
**ज्ञेयं स्वगन्धतश्चापि षड्योनिप्रथितं क्षितौ ॥**

ननु शिलानां रूक्षकठिनानां कथं स्निग्धद्रवः स्वरसः संभवतीत्याह—त्रप्वादीनामित्यादि । त्रप्वादीनि त्रपुसीसताम्ररूप्यसुवर्णकृष्णलोहानि षट्, तेषामन्यतमान्वयं एकतमान्वयम् । षड्योनिः षट्कारणकम् । यत्तु शिलाजतुचतुष्टयं तन्त्रान्तरे प्रोक्तं, तत् तेषां चतुर्णामपि मुख्यानां गुणख्यापनाय, न अन्ययोनिशिलाजतुनिवारणाय ॥ ५ ॥—

**लोहाद्द्रवति तद्यस्मात् शिलाजतु जतुप्रभम् ॥ ६ ॥**
**तस्य लोहस्य तद्वीर्यं रसं चापि बिभर्ति तत् ॥**

लोहादित्यादि । रसं चापीति चकारेण वर्णप्रभावं च बिभर्तीत्यनुक्तं समुच्चीयते । तत्र यल्लौहजातं स्यात् तल्लौहस्यैव वीर्यरसौ बिभर्ति । तानि च लौहानि सुवर्णादीनि, तद्गुणांस्तु सुश्रुताध्यायिनोऽन्नपानविध्यध्यायान्ते पठन्ति । यद्यपि जतुप्रकाशो लाक्षासदृशः शिलास्रावः शिलाजतुशब्देनोक्तः, तथापि सुवर्णादिनिर्यासेऽपि शिलाजत्विति प्रयोगः सर्षपादितैलवदौपचारिको द्रष्टव्यः ॥ ६ ॥—

**त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् ॥ ७ ॥**
**यथा तथा प्रयोगेऽपि श्रेष्ठे श्रेष्ठगुणाः स्मृताः ॥**

तेषां परस्परापेक्षं प्राधान्यं निर्दिशन्नाह—त्रप्वित्यादि । त्रपुसीसयोर्लौहत्वस्य नातिप्रसिद्धत्वादय इति विशेषणम् । त्रपुसीसायःसमुद्भवं शिलाजतु त्रपुसीसायसं, तत् आदिभूतं येषां तानि त्रपुसीसायसादीनि त्रपुसीसताम्ररूप्यसुवर्णकृष्णलोहजानि । प्राधान्यं तेषां कुत इत्याह—श्रेष्ठे श्रेष्ठगुणा इति ।—श्रेष्ठे श्रेष्ठद्रव्ये ॥ ७ ॥—

**यत्सर्वं तिक्तकटुकं कषायानुरसं सरम् ॥ ८ ॥**
**कटुपाक्युष्णवीर्यं च शोषणं छेदनं तथा ॥**

इदानीं सामान्यलक्षणाभिधानमाह—यत्सर्वमित्यादि । शोषणं दुष्टरक्तादेः छेदनं कफग्रन्थ्यादिच्छेदकृत् ॥ ८ ॥—

**तेषु यत् कृष्णमलघु स्निग्धं निःशर्करं च यत् ॥९॥**
**गोमूत्रगन्धि यच्चापि तत् प्रधानं प्रचक्षते ॥**

तेषां प्रधानलक्षणमुपादानार्थमुपदिशन्नाह—तेष्वित्यादि ॥९॥

**तद्भावितं सारगणैर्हृतदोषो दिनोदये ॥ १० ॥**
**पिबेत् सारोदकेनैव श्लक्ष्णपिष्टं यथाबलम् ॥**
**जाङ्गलेन रसेनान्नं तस्मिन् जीर्णे तु भोजयेत् ॥ ११ ॥**
**उपयुज्य तुलामेवं गिरिजादमृतोपमात् ॥**
**वपुर्वर्णबलोपेतो मधुमेहविवर्जितः ॥ १२ ॥**
**जीवेद्वर्षशतं पूर्णमजरोऽमरसन्निभः ॥**
**शतं शतं तुलायां तु सहस्रं दश तौलिके ॥ १३ ॥**
**भल्लातकविधानेन परिहारविधिः स्मृतः ॥**
**मेहं कुष्ठमपस्मारमुन्मादं श्लीपदं गरम् ॥ १४ ॥**
**शोषं शोफार्शसी गुल्मं पाण्डुतां विषमज्वरम् ॥**
**अपोहत्यचिरात्कालात् शिलाजतु निषेवितम् ॥१५॥**
**न सोऽस्ति रोगो यं चापि निहन्यान्न शिलाजतु ॥**
**शर्करां चिरसंभूतां भिनत्ति च तथाश्मरीम् ॥१६॥**
**भावनालोडने चास्य कर्तव्ये भेषजैर्हितैः ॥**

इदानीमस्योपयोगविधिं निर्दिशन्नाह—तद्भावितमित्यादि । सारगणैः शालसारादिभिः । तत्र भाव्यद्रव्यसमं क्वथनीयमष्टगुणे जले निःक्वाथ्याष्टभागावशिष्टेन कषायमानम् । दशाहं विंशतिदिनानि त्रिंशद्दिनानि वा भावयेत् । हृतदोषः संशुद्धदेहः । दिनोदये प्रभाते एव सारोदकेनैव पिबेत् । जाङ्गलेन रसेन भोजयेत्, अन्यथा शोषणच्छेदनत्वाद् वातकोपः स्यात् । तुला पलशतम् । गिरिजा शिलाजतोः । न सोऽस्ति रोगः

**विडङ्गशिरीषाणां भागैरर्धपलिकैर्घृतप्रस्थं विपाचयेत् मेहश्वयथुकुष्ठगुल्मोदरार्शःप्लीहविद्रधिपिडकानां नाशनं नाम्ना धान्वन्तरम् ॥ ५ ॥**

भल्लातकेत्यादि । अनार्षोऽयं योगः जेज्जटाचार्येण नोक्तत्वात्, तस्मान्न पठनीयः ॥ ५ ॥

**दुर्विरेच्या हि मधुमेहिनो भवन्ति मेदोऽभिव्याप्तशरीरत्वात्, तस्मात् तीक्ष्णमेतेषां शोधनं कुर्वीत । पिडकापीडिताः सोपद्रवाः सर्व एव प्रमेहा मूत्रादिमाधुर्ये मधुगन्धसामान्यात्पारिभाषिकीं मधुमेहतां लभन्ते ॥ ६ ॥**

दुर्विरेच्या इत्यादि ॥ ६ ॥

**न चैतान् कथंचिदपि स्वेदयेत्, मेदोबहुत्वादेतेषां विशीर्यते देहः स्वेदेन ॥ ७ ॥**

नचेत्यादि । स्वेदावचारणीये प्रमेहिणां निषिद्धस्यापि महादोषत्वप्रतिपादनाय पुनरपि निषिद्धम् ॥ ७ ॥

**रसायनीनां च दौर्बल्यात् नोर्ध्वमुत्तिष्ठन्ति प्रमेहिणां दोषाः, ततो मधुमेहिनामधःकाये पिडकाः प्रादुर्भवन्ति ॥ ८ ॥**

कुतः पुनरधोदेहे एव पिडकासम्भव इत्याह—रसायनीनां च दौर्बल्यादित्यादि । रसायनीनामित्यत्रादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन रसपित्तकफशोणितवहानां धमनीनामित्यर्थः । दौर्बल्यादिति सर्वशरीरगतस्य सर्वद्रवधातोरपानव्यानाभ्यामधोऽनुलोम्यमानत्वात् रसादिवहानामपि धमनीनामध एव बलवत्त्वं नतूर्ध्वमित्यर्थः; रसहारिणीनामिति केचित् पठन्ति॥८॥

**अपक्कानां पिडकानां शोफवत् प्रतीकारः पक्कानां व्रणवदिति । तैलं तु व्रणरोपणार्थं कुर्वीत, आरग्वधादिकषायमुत्सादनार्थे, शालसारादिकषायं परिषेचने, पिप्पल्यादिकषायं पानभोजनेषु, पाठाचित्रकशार्ङ्गेष्टाक्षुद्रबृहतीसारिवासोमवल्कसप्तपर्णारग्वधकुटजमूलचूर्णानि मधुमिश्राणि प्राश्नीयात् ॥ ९ ॥**

अपक्कानामित्यादि । व्रणरोपणमिति रोपणद्रव्यसिद्धं मिश्रकाद्युक्तं, रोपणावस्थायां रोपणे कर्तव्ये आदौ तैलमेव, नान्यत्कषायादिकं, सर्वेष्वेव मेहेष्वतिप्रवृत्त्या वातवृद्धेः, तैलस्य वातदोषप्रत्यनीकत्वात्, तथा बद्धमूत्रत्वेन प्रमेहव्याधिप्रत्यनीकत्वाच । अन्ये तु एलादौ कुर्वीतेति पठन्ति, एलातगरकुष्ठेत्यादिः एलादिः । उत्सादनं निम्नव्रणस्य उन्नतिकरणम् । उत्सादनोपक्रमावस्थायामारग्वधादिनैवोत्सादनम् । एवं वक्ष्यमाणेषु परिषेचनादिषु अत्रोक्तवर्गेणैव नियमः । पाठाचित्रकेत्यादि । शार्ङ्गेष्टा काकतिक्ता 'भुम्भुरुदाक' इति लोके । क्षुद्रबृहती लघुकण्टकारिका । सोमवल्कः वाकलः । अयं योगः सामान्यचूर्णयोजनपरिभाषया योज्यः । तथाहि "[illegible] सर्वशः । द्रवतुल्यान् [illegible] पानस्य चतुर्थः" ॥ ९ ॥

**शालसारादिवर्गकषायं चतुर्भागावशिष्टमवतार्य परिस्राव्य पुनरुपनीय साधयेत्, सिद्धति चामलकरोध्रप्रियङ्गुदन्तीकृष्णायस्ताम्रचूर्णानि आवपेत्, एतदनुपदग्धलेहीभूतमवतार्यानुगुप्तं निदध्यात्, ततो यथायोगमुपयुञ्जीत, एष लेहः सर्वमेहानां हन्ता ॥ १० ॥**

शालसारेत्यादि । शालसारादिवर्गः पलशतं [illegible] जले क्वथितं पादावशेषं तस्मिन् सिध्यति आमलकादिचूर्णं पलिकमित्येके । अपरे तु [illegible] आमलकादीनां षण्णां प्रत्येकं पलमानाय ॥ १० ॥

**त्रिफलाचित्रकत्रिकटुविडङ्गमुस्तानां नव भागास्तावन्त एव कृष्णायश्चूर्णस्य, तत्सर्वमेकध्यं कृत्वा यथायोगं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीतः एतन्नवायसमेतेन जाड्यं न भवति सद्योऽग्निराप्यायते दुर्नामशोफपाण्डुकुष्ठरोगाविपाककासश्वासप्रमेहाश्च न भवन्ति ॥ ११ ॥**

[illegible] कृष्णायश्चूर्णस्य । आर्षं [illegible] ॥ ११ ॥

**शालसारादिनिर्यूहे चतुर्भागावशेषिते ॥**
**परिस्रुते ततः शीते मधु माक्षिकमावपेत् ॥ १२ ॥**
**फाणितीभावमापन्नं गुडं शोधितमेव च ॥**
**श्लक्ष्णपिष्टानि चूर्णानि पिप्पल्यादिगणस्य च ॥ १३ ॥**
**ऐकध्यमावपेत् कुम्भे संस्कृते घृतभाविते ॥**
**पिप्पलीचूर्णमधुभिः प्रलिप्ते त्वन्तःस्थितं दृढे ॥ १४ ॥**
**श्लक्ष्णानि तीक्ष्णलोहस्य तत्र पत्राणि बुद्धिमान् ॥**
**खदिराङ्गारतप्तानि बहुशः सन्निपातयेत् ॥ १५ ॥**
**सुपिधानं तु तं कृत्वा यवपल्ये निधापयेत् ॥**
**मासांस्त्रींश्चतुरो वापि यावदालोहसंक्षयात् ॥ १६ ॥**
**ततो जातरसं तं तु प्रातः प्रातर्यथाबलम् ॥**
**निषेवेत यथायोगमाहारं चास्य कल्पयेत् ॥ १७ ॥**
**कार्श्यकृद्बलिनामेष सप्तस्यायं प्रसाधकः ॥**
**शोफनुद्गुल्महृत् कुष्ठमेहपाण्ड्वामयापहः ॥ १८ ॥**
**प्लीहोदरहरः शीघ्रं विषमज्वरनाशनः ॥**
**अभिष्यन्दापहरणो लोहारिष्टो महागुणः ॥ १९ ॥**

शालसारादीत्यादि । शालसारादि[illegible] जलद्रोणे पक्कस्य चतुर्भागावशेषितो निर्यूहः क्वाथः । तस्मिन् पूते शीते पञ्चशतपलप्रमाणं मधु मधु माक्षिकमेव माक्षिक, मध्वासवं प्रक्षिपेत् । [illegible] अन्यत्र । फाणितीभावमापन्नमिति क्रियाविशेषणम् । गुडं शोधितमेव [illegible] क्वाथे विलापितः पुनः शोधितः उच्यते, [illegible]

गुडस्यापि पञ्चाशत्पलानि। पिप्पल्यादिचूर्णस्य पञ्चविंशतिपलानि, तावन्ति एव लोहपत्राणाम्। गयी तु तत्र पुराणस्य मधुनः कषायमधुरीभावमात्रं प्रमाणम्। मधुमान एव जीर्णगुडः। पिप्पल्यादिचूर्णमानं तु यावता नातिव्यक्तं कटुत्वं भवति। मधुप्रमाणपादिकं पिप्पल्यादिचूर्णस्य मानं, लौहपत्रप्रमाणमपि तावदेव इत्यन्ये। आहारं चास्य कल्पयेत् विशिष्टदोषारब्धरोगजातिप्रत्यनीकम्। अत्राभिष्यन्दशब्देन मूत्रनिःस्यन्दोऽभिधीयते॥ १२—१९॥

**प्रमेहिणो यदा मूत्रमपिच्छलमनाविलम्॥**
**विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते॥ २०॥**

प्रमेहिण इत्यादि। अनाविलं प्रसन्नम्। विशदं रूक्षम्। मूत्रस्य कटुतिक्तत्वं पिपीलिकामक्षिकादीनामपसर्पणेन ज्ञातव्यम्। अन्येत्वेवं पठन्ति,—"प्रमेहिणो यदामूत्रमनाविद्धमपिच्छलम्।" तत्रापि अनाविद्धम् प्रसन्नम्॥ २०॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने द्वादशोऽध्यायः॥

---

## त्रयोदशोऽध्यायः।

**अथातो मधुमेहचिकित्सितं व्याख्यास्यामः॥ १॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुवाय)॥ २॥**
**मधुमेहित्वमापन्नं भिषग्भिः परिवर्जितम्॥**
**योगेनानेन मतिमान् प्रमेहिणमुपाचरेत्॥ ३॥**
**मासे शुक्रे शुचौ चैव शैलाः सूर्यांशुतापिताः॥**
**जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि॥ ४॥**
**शिलाजत्विति विख्यातं सर्वव्याधिविनाशनम्॥**

मधुमेहित्वमित्यादि। शुक्रो मासः ज्यैष्ठः। शुचिः आषाढः। यद्यपि अन्यस्मिन् काले शिलाजतु प्रस्रवं दृश्यते तथापि शुचिशुक्रमासपरिगृहीतं खरतरतरणिकिरणतापिताभ्यः शिलाभ्यो गुणवत्तरं भवति। जतुप्रकाशं लाक्षाप्रकाशम्। सर्वव्याधिः मधुमेहादिः॥ १—४॥—

**त्रप्वादीनां तु लोहानां षण्णामन्यतमान्वयम्॥५॥**
**ज्ञेयं स्वगन्धतश्चापि षड्योनिप्रथितं क्षितौ॥**

ननु शिलानां रूक्षकठिनानां कथं स्निग्धद्रवः स्वरसः संभवतीत्याह—त्रप्वादीनामित्यादि। त्रप्वादीनि त्रपुसीसताम्ररूप्यसुवर्णकृष्णलोहानि षट्, तेषामन्यतमान्वयं एकतमान्वयम्। षड्योनिः षट्कारणकम्। यत्तु शिलाजतुचतुष्टयं तन्त्रान्तरे प्रोक्तं, तत् तेषां चतुर्णामपि मुख्यानां गुणख्यापनाय, न अन्ययोनिशिलाजतुनिवारणाय॥ ५॥—

**लोहाद्भवति तद्यस्मात् शिलाजतु जतुप्रभम्॥ ६॥**
**तस्य लोहस्य तद्वीर्यं रसं चापि बिभर्ति तत्॥**

लोहादित्यादि। रसं चापीति चकारेण वर्णप्रभावं च बिभर्तीत्यनुक्तं समुच्चीयते। तत्र यल्लौहजातं स्यात् तल्लौहस्यैव वीर्यरसौ बिभर्ति। तानि च लौहानि सुवर्णादीनि, तद्गुणांश्च सुश्रुताध्यायिनोऽन्नपानविध्यध्यायान्ते पठन्ति। यद्यपि जतुप्रकाशो लाक्षासदृशः शिलास्रावः शिलाजतुशब्देनोक्तः, तथापि सुवर्णादिनिर्यासेऽपि शिलाजत्विति प्रयोगः सर्षपादितैलवदौपचारिको द्रष्टव्यः॥ ६॥—

**त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम्॥ ७॥**
**यथा तथा प्रयोगेऽपि श्रेष्ठे श्रेष्ठगुणाः स्मृताः॥**

तेषां परस्परापेक्षं प्राधान्यं निर्दिशन्नाह—त्रप्वित्यादि। त्रपुसीसयोर्लौहत्वस्य नातिप्रसिद्धत्वादय इति विशेषणम्। त्रपुसीसायःसमुद्भवं शिलाजतु त्रपुसीसायसं, तत् आदिभूतं येषां तानि त्रपुसीसायसादीनि त्रपुसीसताम्ररूप्यसुवर्णकृष्णलोहजानि। प्राधान्यं तेषां कुत इत्याह—श्रेष्ठे श्रेष्ठगुणा इति।—श्रेष्ठे श्रेष्ठद्रव्ये॥ ७॥—

**यत्सर्वं तिक्तकटुकं कषायानुरसं सरम्॥ ८॥**
**कटुपाक्युष्णवीर्यं च शोषणं छेदनं तथा॥**

इदानीं सामान्यलक्षणाभिधानमाह—यत्सर्वमित्यादि। शोषणं दुष्टरक्तादेः छेदनं कफग्रन्थ्यादिच्छेदकृत्॥ ८॥—

**तेषु यत् कृष्णमलघु स्निग्धं निःशर्करं च यत्॥९॥**
**गोमूत्रगन्धि यच्चापि तत् प्रधानं प्रचक्षते॥**

तेषां प्रधानलक्षणमुपादानार्थमुपदिशन्नाह—तेष्वित्यादि॥९॥

**तद्भावितं सारगणैर्हृतदोषो दिनोदये॥ १०॥**
**पिबेत् सारोदकेनैव श्लक्ष्णपिष्टं यथाबलम्॥**
**जाङ्गलेन रसेनान्नं तस्मिन् जीर्णे तु भोजयेत्॥ ११॥**
**उपयुज्य तुलामेवं गिरिजादमृतोपमात्॥**
**वपुर्वर्णबलोपेतो मधुमेहविवर्जितः॥ १२॥**
**जीवेद्वर्षशतं पूर्णमजरोऽमरसन्निभः॥**
**शतं शतं तुलायां तु सहस्रं दश तौलिके॥ १३॥**
**भल्लातकविधानेन परिहारविधिः स्मृतः॥**
**मेहं कुष्ठमपस्मारमुन्मादं श्लीपदं गरम्॥ १४॥**
**शोषं शोफार्शसी गुल्मं पाण्डुतां विषमज्वरम्॥**
**अपोहत्यचिरात्कालात् शिलाजतु निषेवितम्॥१५॥**
**न सोऽस्ति रोगो यं चापि निहन्यान्न शिलाजतु॥**
**शर्करां चिरसंभूतां भिनत्ति च तथाश्मरीम्॥१६॥**
**भावनालोडने चास्य कर्तव्ये भेषजैर्हितैः॥**

इदानीमस्योपयोगविधिं निर्दिशन्नाह—तद्भावितमित्यादि। सारगणैः शालसारादिभिः। तत्र भाव्यद्रव्यसमं क्वथनीयमष्टगुणे जले निःक्वाथ्याष्टभागावशिष्टेन कषायमानम्। दशाहं विंशतिदिनानि त्रिंशद्दिनानि वा भावयेत्। हृतदोषः संशुद्धदेहः। दिनोदये प्रभाते एव सारोदकेनैव पिबेत्। जाङ्गलेन रसेन भोजयेत्, अन्यथा शोषणच्छेदनत्वाद् वातकोपः स्यात्। तुला पलशतम्। गिरिजा शिलाजतोः। न सोऽस्ति रोगः

इत्यत्र रोगशब्दो दोषेषु वर्तते, अथवा शस्त्रसाध्येषु अश्मर्यादिषु । नानाविधस्वास्थ्यकरद्रव्यभावनां चोपदिशन्नाह—भावनालोडने इत्यादि ॥ १०—१६ ॥—

**एवं च माक्षिकं धातुं तापीजममृतोपमम् ॥ १७ ॥**
**मधुरं काञ्चनाभासमम्लं वा रजतप्रभम् ॥**
**पिबन् हन्ति जराकुष्ठमेहपाण्ड्वामयक्षयान् ॥ १८ ॥**
**तद्भावितः कपोतांश्च कुलत्थांश्च विवर्जयेत् ॥**

शिलाजतुप्रयोगेणैव माक्षिकधातुप्रयोगमतिदिशन्नाह—एवं च माक्षिकमित्यादि । तापीजं तापीनदीजं सुवर्णमाक्षिकं रजतमाक्षिकं च । तद्भावित इत्यादि ताभ्यां शिलाजतुमाक्षिकधातुभ्यां भावितो व्याप्तदेहः । कुलत्थकपोतौ यावज्जीवं विवर्जयेत् ॥ १७—१८ ॥—

**पञ्चकर्मगुणातीतं श्रद्धावन्तं जिजीविषुम् ॥ १९ ॥**
**योगेनानेन मतिमान् साधयेत् कुष्ठिनं नरम् ॥**

इदानीं मधुमेहहरमपि योगमुद्दिशन्नाह—पञ्चेत्यादि । पञ्चकर्मगुणातीतमित्यत्र वमनादीनां पञ्चकर्मगुणानामप्राप्तफलमित्येके; तत्तु न सम्यक्, यतः पञ्चमध्याय्वस्थिश्रितं कुष्ठमुक्तं, तत्र कर्माणि संशोधनसंशमनाभ्यवहारगुग्गुलुशिलाजतुप्रभृतीनि, तेषां गुणाः फलानि, तान्यतीतं, एतदुक्तं भवति,—अस्थिगतं कुष्ठं संशोधनादिभिरप्राप्तविशेषं साध्यमेवेति । अन्ये तु, पूर्वरूपक्रियया सह रसादिधातूनां चतुर्णां क्रियासमूहः पञ्चकर्माणीति मन्यन्ते । प्रमेहस्य तु पञ्च कर्मगुणाः पश्चिमाध्याये कथिताः । जिजीविषुं प्रमेहिणं साधयेत्, कुष्ठिनमपीत्यपिशब्दार्थः ॥ १९ ॥—

**वृक्षास्तुवरका ये स्युः पश्चिमार्णवभूमिषु ॥ २० ॥**
**वीचीतरङ्गविक्षेपमारुतोद्धूतपल्लवाः ॥**
**तेषां फलानि गृह्णीयात् सुपक्वान्यम्बुदागमे ॥ २१ ॥**
**मज्जस्तेभ्योऽपि संहृत्य शोषयित्वा विचूर्ण्य च ॥**
**तिलवत् पीडयेद्द्रोण्यां क्वाथयेद्वा कुसुम्भवत् ॥२२॥**
**तत्तैलं संहृतं भूयः पचेत्तातोयसंक्षयात् ॥**
**अवतार्य करीषे च पक्षमात्रं निधापयेत् ॥ २३ ॥**
**स्निग्धः स्विन्नो हृतमलः पक्षादूर्ध्वं प्रयत्नवान् ॥**
**चतुर्थभक्तान्तरितः शुक्लादौ दिवसे शुभे ॥ २४ ॥**
**मन्त्रपूतस्य तैलस्य पिबेन्मात्रां यथाबलम् ॥**
**तत्र मन्त्रं प्रवक्ष्यामि येनेदमभिमन्त्र्यते ॥ २५ ॥**
**मज्जसार ! महावीर्य सर्वान् धातून् विशोधय ॥**
**शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः ॥ २६ ॥**
**तेनास्योर्ध्वमधश्चापि दोषा यान्त्यसकृत् ततः ॥**
**अस्नेहलवणां सायं यवागूं शीतलां पिबेत् ॥ २७ ॥**
**पञ्चाहं प्रपिबेत् तैलमनेन विधिना नरः ॥**
**पक्षं परिहरेच्चापि मुद्गयूषौदनाशनः ॥ २८ ॥**
**पञ्चभिर्दिवसैरेवं सर्वकुष्ठैर्विमुच्यते ॥**
**तदेव खदिरक्काथे त्रिगुणे साधु साधितम् ॥ २९ ॥**
**निहन्ति पूर्ववत् पक्वं पिबेन् मासमतन्द्रितः ॥**
**तेनाभ्यक्तशरीरश्च कुर्वीताहारमीरितम् ॥ ३० ॥**
**भिन्नस्वरं रक्तनेत्रं विशीर्णं कृमिभक्षितम् ॥**
**अनेनाशु प्रयोगेण साधयेत् कुष्ठिनं नरम् ॥ ३१ ॥**
**सर्पिर्मधुयुतं पीतं तदेव खदिराम्बुना ॥**
**पक्षिमांसरसाहारं करोति द्विशतायुषम् ॥ ३२ ॥**
**तदेव नस्यं पञ्चाशद्दिवसाननुपयोजितम् ॥**
**वपुष्मन्तं श्रुतिधरं करोति त्रिशतायुषम् ॥ ३३ ॥**
**शोधयन्ति नरं पीता मज्जानस्तस्य मात्रया ॥**
**महावीर्यस्तुवरकः कुष्ठमेहापहः परः ॥ ३४ ॥**

इदानीं जन्मभूमिमारभ्य तुवरकरसायनकल्पं प्रवर्तयि- वृक्षा इत्यादि । पश्चिमार्णवभूमिषु पश्चिमसमुद्रभूमिषु । वीचीतरङ्ग इत्यादि । ऊर्मिपरम्पराविक्षेपपवनोत्कम्पितपल्लवाः, समुद्रोदकसमीपस्था इत्यर्थः । तेषां फलेभ्यो मज्जानमादाय कुसुम्भवत् कुसुम्भकुसुमवत् तैलं वा ग्राहयेत् । [illegible] ग्राहयेत् । [illegible] पक्षं निधाय प्रवीजयेत्, निश्चितमसंशयं पादनार्थं । [illegible] ऽपि शम्य [illegible] वमनमेव, वमनानन्तरं विरेचनं, यदाहुः—पक्षाद्विरेको वान्तस्येति, विरेचनादेव पश्चादेव तौवरकं तैलं, तस्यापि शोधनत्वात्; एतेन [illegible] नकमन्तरेण सञ्जातबलः तुवरकस्नेहं पिबेदित्यर्थः । चतुर्थभक्तान्तरित इति पक्षादूर्ध्वं प्रथमेऽह्नि सायंप्रातःश्च [illegible] भोजनद्वयं, द्वितीयेऽह्नि प्रातर्भुक्त्वा सायं भोजनं न कार्यं, [illegible] णोदकं वा पाययेत् सायं भोजनस्थाने, [illegible] लघुकोष्णाय प्रातः स्नेहं दद्यात्, एवं चतुर्थभक्तमन्तरितं भवतीत्यर्थः । तैलस्यापि पिबेन्मात्रां पलिकामथवा कर्षप्रमाणामित्यर्थः । अस्नेहलवणां अल्पस्नेहलवणां, यतो नञ् ईषदर्थे । पक्षं परिहरेत्, क्रोधादीनिति शेषः । महावीर्यः महाप्रभावः । परः उत्कृष्टतमः ॥ २०—३४ ॥

**सान्तर्धूमस्तस्य मज्जा तु दग्धः**
**क्षिप्तस्तैले सैन्धवं चाञ्जने च ॥**
**[illegible] हन्यादर्मकाचान्ध्यकाचान्**
**नीलीरोगं तैमिरं चाञ्जनेन ॥ ३५ ॥**

सान्तर्धूम इत्यादि । तैले तुवरकतैले सैन्धवं लवणम् । अञ्जनं स्रोतोञ्जनं, [illegible] सिन्धुश्च महानदः, अथवा वर्णोत्कर्षाञ्जनपरिहाराय सैन्धवमुक्तं, तेन सिन्धुमहानदोद्भवमञ्जनमेव ग्राह्यम् । मज्जादिकं [illegible] मन्तर्धूमेन दग्धम् । एतेन तुवरकस्य बहुविधः प्रयोग उक्तः । तद्यथा—तैलं पक्षाहिकप्रयोगेण कुष्ठहर एकः, तथा तदेव खदिराम्बुसिद्धं विशिष्टावस्थकुष्ठे द्वितीयः, तथा तदेव सर्पिर्मधुखदिरकषायविधिना तृतीयः, तथा परोऽपि पञ्चाशाहिको नस्यप्रयोगः रासायनिकश्चतुर्थः, मज्जप्रयोगः पञ्चमः तथाहि

'शोधयन्ति नरं पीताः' इत्यादि, अञ्जनप्रयोगः षष्ठः 'सान्तधूम' इत्यादि ॥ ३५ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने त्रयोदशोऽध्यायः ॥

## चतुर्दशोऽध्यायः ।

**अथात उदराणां चिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

**अष्टौ उदराणि पूर्वमुद्दिष्टानि । तेषु असाध्यं बद्धगुदं परिस्रावि च; अवशिष्टानि कृच्छ्रसाध्यानि; सर्वाण्येव प्रत्याख्यायोपक्रमेत । तेषु आद्यश्चतुर्वर्गो भेषजसाध्यः, कालप्रकर्षात् सर्वाण्येव शस्त्रसाध्यानि वर्जयितव्यानि वा ॥ ३ ॥**

निदानस्थाने कथितेऽप्यष्टत्वेऽत्र पुनरष्टसंख्याख्यापनं प्लीहोदरयकृद्दाल्युदरयोश्चिकित्सितैकत्वप्रख्यापनाय[1] । अवशिष्टानि कृच्छ्रसाध्यानीति तेष्वपि यथोत्तरं कृच्छ्रकृच्छ्रतरत्वं ज्ञेयम् । तथाच,—'वातात् पित्तात् कफात् प्लीह्नः सन्निपातात् तथोदकात् । परं परं कृच्छ्रतरमुदरं भिषगादिशेत् ।' सर्वाण्येवेति षडिति केचित्, षट्स्वेव कृच्छ्रत्वप्रतिपादनात्; बद्धगुदपरिस्राविभ्यां सहाष्टावपीत्यन्ये, तयोरपि चिकित्सितोक्तेः, सर्वग्रहणाच्च । तेष्वित्यादि आद्यश्चतुर्वर्गः वातपित्तकफदूषीविषनिमित्तानि चत्वारि उदराणि; उत्तरस्तु प्लीहोदरबद्धगुदच्छिद्रोदकोदराणि । कालप्रकर्षादिति भेषजसाध्यकालातिक्रमात् शस्त्रसाध्यकालातिक्रमाच्च । 'शस्त्रसाध्यानि वर्जयितव्यानीति' शस्त्रसाधनानि वर्जनार्हाणि वेत्यर्थः ॥ १—३ ॥

**उदरी तु गुर्वभिष्यन्दिरूक्षविदाहिस्निग्धपिशितपरिषेकावगाहान् परिहरेत्; शालिषष्टिकयवगोधूमनीवारान् नित्यमश्नीयात् ॥ ४ ॥**

उदरीत्यादि । दोषधातुमलस्रोतसां क्लेदप्राप्तिजननं अभिष्यन्दि । विदाहि काञ्जिकादि । स्निग्धं पिशितं मेदुरमांसम् । नीवारः उलिधान्यम् ॥ ४ ॥

**तत्र वातोदरिणं विदारिगन्धादिसिद्धेन सर्पिषा स्नेहयित्वा, तिल्वकविपक्वेनानुलोम्य, चित्राफलतैलप्रगाढेन विदारिगन्धाकषायेण आस्थापयेत् अनुवासयेच्च, शाल्वणेन चोपनाहयेदुदरं, भोजयेच्चैनं विदारिगन्धादिसिद्धेन क्षीरेण जाङ्गलरसेन च, अभीक्ष्णं स्वेदयेत् ॥ ५ ॥**

तत्रेत्यादि । तिल्वकः पट्टिकारोध्रः । अनुलोम्य विरेच्य । चित्राफलतैलं दन्तीफलतैलम् । आस्थापयेत् निरूहयेत्, अनुवासयेच्च चित्राफलतैलेनैव । शाल्वणेनोपनाहयेत् बध्नीयात् स्वेदयेच्चाभीक्ष्णमिति । एवमग्रेतने कफारब्धेऽपि स्वेदो विधेयः, नतु पित्तारब्धे; स च स्वेद आजलप्राप्तेः, अत ऊर्ध्वं सर्वेषामस्वेद्यत्वम् । कथमत्रोदरिणः स्नेहस्वेदास्थापनानुवासनानि सुश्रुताचार्यः प्राह, अग्रे अस्नेह्या अस्वेद्या नानुवास्या नास्थाप्या इति पठितत्वात् । एतन्न, यतश्छिद्रोदकोदरिणोरेव तत्र निषेधोऽन्येषु यथावस्थं स्नेहादयः प्रयोज्या इति ॥ ५ ॥

**पित्तोदरिणं तु मधुरगणविपक्वेन सर्पिषा स्नेहयित्वा, श्यामात्रिफलात्रिवृद्विपक्वेनानुलोम्य, शर्करामधुघृतप्रगाढेन न्यग्रोधादिकषायेणास्थापयेदनुवासयेच्च, पायसेनोपनाहयेदुदरं, भोजयेच्चैनं विदारिगन्धादिसिद्धेन पयसा ॥ ६ ॥**

पित्तोदरिणमित्यादि । मधुरगणाः काकोल्यादीनि । श्यामा वृद्धदारकः । क्षीरसिद्धास्तण्डुलाः पायसः ॥ ६ ॥

**श्लेष्मोदरिणं पिप्पल्यादिकषायसिद्धेन सर्पिषोपस्नेह्य, स्नुहीक्षीरविपक्वेनानुलोम्य, त्रिकटुकमूत्रक्षारतैलप्रगाढेन मुष्ककादिकषायेणास्थापयेदनुवासयेच्च, शणातसीधातकीकिण्वसर्षपमूलकबीजकल्कैश्चोपनाहयेदुदरं, भोजयेच्चैनं त्रिकटुकप्रगाढेन कुलत्थयूषेण पायसेन वा, स्वेदयेच्चाभीक्ष्णम् ॥ ७ ॥**

श्लेष्मोदरिणमित्यादि । मुष्ककपलाशधावन्यादिः मुष्ककादिः । आस्थापनवर्गसिद्धेन तैलेनानुवासनम् । किण्वं सुराबीजम् ॥ ७ ॥

**दूष्योदरिणं तु प्रत्याख्याय सप्तलाशङ्खिनीस्वरससिद्धेन सर्पिषा विरेचयेत् मासमर्धं मासं वा, महावृक्षक्षीरसुरागोमूत्रसिद्धेन वा, शुद्धकोष्ठं तु मद्येन अश्वमारकगुञ्जाकाकादनीमूलकल्कं[1] पाययेत् इक्षुकाण्डानि वा, कृष्णसर्पेण दंशयित्वा भक्षयेत् वल्लीफलानि वा, मूलजं कन्दजं वा विषमासेवयेत्, तेनागदो भवत्यन्यं वा भावमापद्यते ॥ ८ ॥**

सान्निपातिकचिकित्सितमुपदिशन्नाह—दूष्योदरिणमित्यादि । शङ्खिनी यवतिक्ताभेदः । सान्निपातिकोदरे स्नेहादि यदुक्तं तद्वाताद्युदरोदितभेषजगणैः सर्वं साधनीयम् । यदाह चरकः,—'सन्निपातोदरे सर्वास्तथोक्ताः कारयेत् क्रियाः'—इति । लघुवाग्भटेऽपि 'सन्निपातोदरे कुर्यान्नातिक्षीणबलाऽनले । दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमां' इति । 'शङ्खिनी' यवतिक्ताभेदः । महावृक्षेत्यादि । विरेचयेदिति शेषः । महावृक्षः सेहुण्डः । शुद्धेत्यादि । गुञ्जा चिरिहिण्टिका । काकादनी वायसतिन्दुका । इक्षुकाण्डानीत्यादि । यथा मदात्यये मद्यपानं अग्निदग्धेऽग्निस्वेदोऽतीसारे स्विन्नपथ्यादि छर्द्यां वमनं सर्पविषे विषभक्षणं तद्वद्विषाद्युत्पन्नोदरेऽपि कृष्णसर्पदष्टेक्षुकाण्डभक्षणं विषभ-

1 'चिकित्सितैकत्वप्रत्याख्यापनाय' इति पा० ।

1 'महावृक्षक्षीरमात्रा कल्कप्रमाणं' इति पा० ।

क्षणं वा । वल्लीफलानि कर्कटीप्रभृतीनि । अन्यं वा भावमापद्यते मरणं प्राप्नोति । कर्मेदं दारुणं, अक्रियायां ध्रुवं मरणं क्रियायां संशये सत्येव कुर्यात्, तत्रापीश्वरानुज्ञातेनैव कार्यम् ॥८॥

भवति चात्र ।

**कुपितानिलमूलत्वात् सञ्चयित्वात् मलस्य च ॥**
**सर्वोदरेषु शंसन्ति बहुशस्त्वनुलोमनम् ॥ ९ ॥**

कुपितेत्यादि । सर्वोदररोगाण्येव मलवृद्ध्या वर्तन्ते, तस्मात् संशोधनं शस्तं; तच्च बहुशोऽनल्पशः[1] ॥ ९ ॥

**अत ऊर्ध्वं सामान्ययोगान् वक्ष्यामः । तद्यथा— एरण्डतैलमहरहर्मासं द्वौ वा केवलमूत्रयुक्तं क्षीरयुक्तं वा सेवेत, उदकवर्जी माहिषं वा मूत्रं क्षीरेण निराहारः सप्तरात्रं, उष्ट्रीक्षीराहारो वाऽन्नवारिवर्जी पिप्पलीं वा मासं पूर्वोक्तेन विधानेनासेवेत, सैन्धवाजमोदायुक्तं वा निकुम्भतैलं, आर्द्रकशृङ्गवेररसपात्रशतसिद्धं वा वातशूलेऽवचार्यं, शृङ्गवेररसविपक्वं क्षीरमासेवेत, चव्यशृङ्गवेरकल्कं वा पयसा, सरलदेवदारुचित्रकमेव वा, सुरङ्गीशालपर्णीश्यामापुनर्नवाकल्कं वा, ज्योतिष्कफलतैलं वा क्षीरेण स्वर्जिकाहिङ्गुमिश्रं पिबेत्, गुडद्वितीयां वा हरीतकीं भक्षयेत्, स्नुहीक्षीरभावितानां वा पिप्पलीनां सहस्रं कालेन, पथ्याकृष्णचूर्णं वा स्नुहीभावितामुत्कारिकां पक्वां दापयेत्; हरीतकीचूर्णं प्रस्थमाढके घृतस्याङ्गारेष्वभिविलाप्य खजेनाभिमथ्यानुगुप्तं कृत्वार्धमासं यवपल्ले वासयेत्, ततश्चोद्धृत्य परिस्राव्य हरीतकीक्वाथाम्लदधीन्यावाप्य विपचेत्, तद्यथायोगं मासमर्धमासं वा पाययेत्; गव्ये पयसि महावृक्षक्षीरमावाप्य विपचेद्विपक्वं चावतार्य शीतीभूतं मन्थानेनाभिमथ्य नवनीतमादाय भूयो महावृक्षक्षीरेणैव विपचेत्, तद्यथायोगं मासं मासार्धं वा पाययेत्; चव्यचित्रकदन्त्यतिविषाकुष्ठसारिवात्रिफलाजमोदहरिद्राशङ्खिनीत्रिवृत्त्रिकटुकानामर्धकार्षिका भागा राजवृक्षफलमज्जनामष्टौ कर्षा महावृक्षक्षीरपले द्वे गवां क्षीरमूत्रयोरष्टावष्टौ पलानि एतत् सर्वं घृतप्रस्थे समावाप्य विपचेत्, तद्यथायोगं मासमर्धमासं वा पाययेत्; एतानि तिल्वकघृतचतुर्थानि सर्पींष्युदरगुल्मविद्रध्यष्ठीलानाहकुष्ठोन्मादापस्मारेषूपयोज्यानि विरेचनार्थम्; मूत्रासवारिष्टसुराश्चाभीक्ष्णं महावृक्षक्षीरसंभृताः सेवेत; विरेचनद्रव्यकषायं वा शृङ्गवेरदेवदारुप्रगाढम् ॥१०॥**

व्रत इत्यादि । सप्ताहं माहिषं मूत्रं क्षीरेणाकृतोदकाहाराय । केचिदत्र माहिषमेव क्षीरमाहुः, अपरे पुनर्माहिषस्याग्निमान्द्यादिकरणाद्गव्यमेवाहुः । गूढपदभङ्गटिप्पणे ईदृशं व्याख्यातं—माहिषं मूत्रं क्षीरेण गव्येन पिबेत् । प्रमादव्याख्यानमिदं, यस्माज्जेज्जटाचार्यादीनामनुमतं न भवति । उष्ट्रीत्यादि केचिदत्र क्षारं त्रिकटुकसंयुक्तमाहुः, तन्त्रान्तरप्रामाण्यात् । पिप्पलीमित्यादि पूर्वोक्तेन वातशोणितोक्तेन । सैन्धवाजमोदाप्रक्षेपयुक्तं वा दन्तीतैलम्; तदेव तैलं आर्द्रकशृङ्गवेररसपात्रशतपक्वं वातशूले पानार्थं अवचार्यं; अन्ये तु तिलतैलमेव साधयन्ति, तन्त्रान्तरप्रामाण्यात् । आर्द्रशृङ्गवेरमार्द्रकं, तद्रसं चतुर्गुणम् । विपक्वं क्षीरावशिष्टं पक्वम् । चव्येत्यादि पयसा चतुर्गुणेन । सरलदेवदारुचित्रकमेव पयसेत्यर्थः; सुरङ्ग्यादयो वा तथैव च । सुरङ्गी शोभाञ्जनकः । श्यामा वृद्धदारुकः । ज्योतिष्कः काकमर्दनिका । हिङ्गुमाषकं स्वर्जिकाक्षारमाषकचतुष्टयसंयुक्तं मासमर्धमासं [illegible] । स्नुहीत्यादि । अत्र त्रिःसप्तकृत्वो भावना । स्नुही सेहुण्डः, स च बहुकण्टकः श्रेष्ठः । कालेनेति यावता कालेन [illegible]यितुं, पिप्पलीसहस्रमेकादित्रिवर्धमानक्रमेण विरेकार्थम् । पथ्येत्यादि उत्कारिकां लप्सिकाम् । हरीतकीत्यादि खजः मन्थानम् । हरीतकीक्वाथकाञ्जिकदधीनि प्रत्येकं [illegible]चतुर्गुणानि । गव्य इत्यादि गव्ये पयसीति आढकप्रमाणे, महावृक्षक्षीरं प्रस्थम् । महावृक्षः सेहुण्डः, तत्र च नवनीतं महावृक्षक्षीरपादम् । द्रवानुक्तौ जलमत्र चतुर्गुणम् । चव्येत्यादि [illegible] द्रव्याणां प्रत्येकमर्धकार्षिका भागाः, न हि [illegible] त्रिकटुकं वा द्रव्यमेकमिति । [illegible] चतुर्गुणमित्याहुः । एषां विषयमाह—एतानीत्यादि । [illegible] चतुर्थं येषां तानि [illegible] । मूत्रेत्यादि मूत्रद्रवणासवादयोऽनुक्तेन महावृक्षक्षीरप्रस्थप्रक्षेपेण सम्यक्कृताः । विरेचनद्रव्यकषायमित्यादि [illegible] शुण्ठीदेवदारुचूर्णकर्षप्रक्षेपाढ्यम् ॥ १० ॥

**वमनविरेचनद्रव्याणां पालिका भागाः पिप्पल्यादिवचादिहरिद्रादिपरिपठितानां च द्रव्याणां श्लक्ष्णपिष्टानां यथोक्तानां च लवणानां तत्सर्वं मूत्रगणे प्रक्षिप्य महावृक्षक्षीरप्रस्थं च मृद्वग्निना घट्टयन् विपचेदप्रदग्धकल्कं, तत्साधुसिद्धमवतार्य शीतीभूतमक्षमात्रां गुटिकां वर्तयेत्, तासामेकां द्वे तिस्रो वा गुटिका बलापेक्षया मासांस्त्रीश्चतुरो वा सेवेत, एषानाहवर्तिक्रिया विशेषेण महाव्याधिषूपयुज्यते कोष्ठजांश्च कृमीनपहन्ति काममश्वासकृमिकुष्ठप्रतिश्यायारोचकाविपाकोदावर्तांश्च नाशयति । मदनफलमज्जकुटजजीमूतकेक्ष्वाकुधामार्गववत्रिवृत्त्रिकटुसर्षपलवणानि महावृक्षक्षीरमूत्रयोरन्यतरेण पिष्ट्वाङ्गुष्ठमात्रां वर्तिं कृत्वोदरिण आनाहे तैललवणाभ्यक्तगुदस्यैकां द्वे वा पायौ निदध्यात्,**

१ 'अल्पशः' इति पाठान्तरम् ।

एषानाहवर्तिक्रिया वातमूत्रपुरीषोदावर्ताध्मानानाहेषु विधेया ॥ ११ ॥

इदानीमनलदीपनीं गुदानिलसंवलितमलानुलोमनीमाभ्यन्तरीं मूत्रवर्तिं निर्दिशन्नाह—वमनेत्यादि । संशोधनसंशमनीयाध्यायोदितानि वमनविरेचनद्रव्याणि मदनफलादित्रिवृदादीनि, द्रव्यसंग्रहणीयाध्याये पिप्पल्यादिवचादिहरिद्रादयो निर्दिष्टाः, लवणानि अन्नपानाध्याये परिपठितानि सैंधवादीनि; मूत्रगणो गोमूत्रादिः द्रवद्रव्यपठितः; तेषां यथालाभं पालिका भागाः। यथालाभमेव गवादीनां मूत्रेण व्यस्तसमस्तेन पिष्ट्वा चतुर्गुणैरष्टगुणैर्वा विपाच्यम् । अङ्गुष्ठप्रमाणा वर्तयः कर्तव्याः । ताः पुनरधममध्यमोत्तमपुरुषादिबलापेक्षया एकद्वित्रिसंख्योपलक्षिताः भक्षयितव्याः । तत्र च गवादिमूत्रमेवानुपानम् । तासामभ्यासे कालावधिः मासास्त्रयश्चत्वारो वा; फलं तु मेहादिमहाव्याधिहरणं कोष्ठकृमिहरणं च । अभ्यन्तरवर्तिप्रसङ्गेन फलवर्तिं निर्दिशन्नाह—मदनफलेत्यादि । जीमूतकः देवदाली । इक्ष्वाकुः कटुतुम्बी । धामार्गवः महाकोशातकी। विपाच्येत्यनुवर्तनीयम् । पाके तु मूत्रमेवानुवर्तनीयम् । पायौ गुदे । न केवलं उदरानाहे वातमूत्रपुरीषोदावर्ताध्मानानाहेषु विधेयेति। 'क्षारमूत्रयोरन्यतरेण' इत्यन्ये पठन्ति; तत्र क्षारः क्षारोदकं, पेषणे वर्तनात् ॥ ११ ॥

प्लीहोदरिणः स्निग्धस्विन्नस्य दध्ना भुक्तवतो वामबाहौ कूर्पराभ्यन्तरतः शिरां विध्येत्, विमर्दयेत् पाणिना प्लीहानं रुधिरस्यन्दनार्थं, ततः संशुद्धदेहः समुद्रशुक्तिकाक्षारं पयसा पाययेत, हिङ्गुसौवर्चिकाक्षारेण स्रुतेन पलाशक्षारेण वा यवक्षारं, पारिजातकेक्षुरकापामार्गक्षारं वा तैलसंसृष्टम् । शोभाञ्जनकषायं वा पिप्पलीसैन्धवचित्रकयुक्तं, पूतिकरञ्जक्षारं वाऽम्लस्रुतं विडङ्गलवणपिप्पलीप्रगाढम् ॥ १२ ॥

प्लीहेत्यादि । दधिभोजनं रक्तक्लेशाय कफव्याधौ वमने कर्तव्ये प्राक् कफोत्क्लेशकरद्रवोपयोगवत् । कूर्परं भुजमध्यम् । रुधिरस्यन्दनार्थं शिराव्यधविध्युक्तोऽपि शिराव्यधः पुनरिहोक्तः, अधिकरणवशात्; अतो न पुनरुक्तदोषमावहति । तत इत्यादि संशुद्धदेहः वमनविरेचनाभ्याम् । पारिजातः प्रसिद्धः । इक्षुरकः कोकिलाक्षकः । पारिभद्रकेक्षुरकेति केचित् पठन्ति । शोभाञ्जनेत्यादि अम्लं काञ्जिकम् । पूतिकरञ्जः चिरबिल्वः, कण्टकीकरञ्ज इत्यन्ये। कल्पनामाह—कण्टकीकरञ्जक्षारमर्धपलमात्रं षड्गुणाम्लकाञ्जिकेन बहुशः परिस्रुतं पिप्पलीविड्लवणादिप्रक्षेपम् । विडस्थाने सैन्धवमिति केचित् पठन्ति ॥ १२ ॥

पिप्पलीपिप्पलीमूलचित्रकशृङ्गवेरयवक्षारसैन्धवानां पालिका भागा घृतप्रस्थं तत्तुल्यं क्षीरं तदैकध्यं विपाचयेत्, एतत् षट्पलकं नाम सर्पिः प्लीहाग्निसङ्गगुल्मोदरोदावर्तश्वयथुपाण्डुरोगकासश्वासप्रतिश्यायोर्ध्ववातविषमज्वरानपहन्ति । मन्दाग्निर्वा हिङ्ग्वादिकं चूर्णमुपयुञ्जीत ॥ १३ ॥

पिप्पलीत्यादि केचिदत्र भिषजः चतुर्गुणपानीयमाददते; तन्न, जेज्जटेन निषिद्धत्वात् । अस्मिन्योगे कोलकुलत्थपूतिकरोहिणीक्काथसिद्धं द्विगुणमावाप्येति केचित् पठन्ति; तन्न, सोऽपि जेज्जटेन निषिद्धत्वात् ॥ १३ ॥

यकृद्दाल्येऽप्येष एव क्रियाविभागः । विशेषतस्तु दक्षिणबाहौ शिराव्यधः॥ १४॥
मणिबन्धं सकृन्नाम्य वामाङ्गुष्ठसमीरिताम् ॥
दहेत् शिरां शरेणाशु प्लीह्नो वैद्यः प्रशान्तये ॥ १५ ॥

यकृद्दाल्य इत्यादि । मणिबन्धः पाणिमूलम् । सकृत् किञ्चित् नामयित्वा वामाङ्गुष्ठं प्रति सम्यगीरितां सिरां, शरः प्रसिद्धः, तं अग्निवर्णं कृत्वा दहेत् ॥ १४ ॥ १५ ॥

बद्धगुदे परिस्राविणि च स्निग्धस्विन्नस्याभ्यक्तस्याधोनाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या उदरं पाटयित्वा चतुरङ्गुलप्रमाणानि अन्त्राणि निष्कृष्य निरीक्ष्य बद्धगुदस्यान्त्रप्रतिरोधकरमश्मानं बालं वाऽपोह्य मलजातं वा ततो मधुसर्पिर्भ्यामभ्यज्यान्त्राणि यथास्थानं स्थापयित्वा बाह्यं व्रणमुदरस्य सीव्येत् । परिस्राविणि अप्येवमेव शल्यमुद्धृत्यान्त्रस्रावान् संशोध्य तच्छिद्रमन्त्रं समाधाय कालपिपीलिकाभिर्दंशयेत, दष्टे च तासां कायानपहरेत् न शिरांसि, ततः पूर्ववत् सीव्येत् सन्धानं च यथोक्तं कारयेत् यष्टीमधुकमिश्रया च कृष्णमृदावलिप्य बन्धेनोपचरेत्, ततो निवातमागारं प्रवेश्याचारिकमुपदिश्योद्वासयेच्चैनं तैलद्रोण्यां सर्पिर्द्रोण्यां वा पयोवृत्तिमिति ॥ १६ ॥

ततो बद्धगुदपरिस्राविणोरुपक्रमप्राप्तां चिकित्सामुपदिशन्नाह—बद्धगुद इत्यादि । स्विन्नस्येति द्रवस्वेदेन । नाभेर्वामत इत्यादि। वामभागे नाभेरधस्ताच्चतुरङ्गुलमपहाय रोमराज्याश्चतुरङ्गुलप्रमाणस्तिर्यगङ्गच्छेदः। तत्र लोम्नि तिर्यगवस्थितेऽनुलोमगं च शस्त्रपातनम् । अन्त्रप्रतिरोधकरमश्मानं बालं वापोह्य मलजातं वेति तत्र मलदोषाणामाभ्यन्तरमश्मतृणादिबाह्यवस्तुवत् विषमविहाराभिघातेनात्र परस्परमूर्छनम् । (अन्त्रान्तरच्छेदनात् अतएव परिस्राविणि पृथगनुबन्धेन विशेषे एव क्षुभितस्याभ्यन्तरेऽश्मनः अल्पपरिमितमेवात्र छेदं कृत्वा अश्मादिवत् शल्यमुद्धरेत् । अत्र हि प्रवेक्ष्यमाणशल्यसंशये सर्पिषा अभ्यज्य कराङ्गुलिस्पर्शेन अन्त्राणि यथास्थानं स्थापयेत् । मूर्च्छितमन्त्रं तु वीक्ष्य पाणिना बन्धमोक्षेणानुलोमयेत्, बाह्यव्रणरक्तसीवनादिविधिमपेक्ष्य सम्यक् सीव्येत् । तैलस-

१ 'कुपितानिलसेवितमलानुलोमनीं' इति पा० ।

पिर्द्रोणे वा वासयेत्। तच्छशल्यत्रणत्वेनाधानं क्लेशनिवृत्त्यर्थम्। पयसा केवलेन वृत्तिर्यावत् गुदपिष्टान्त्रनिवृत्त्या सम्यक् तस्य विधानं दृढीभावंनिश्चयार्थम्। अन्यथा शल्यधारणेन तत् क्ष-तेन च पिपीलिकामुखस्य दंशनसन्धानं समुद्वीक्ष्य सम्यक् सन्धानम्। तस्मादनुक्रमेणैव पयो जाङ्गलमांसभोजनेन वारिणा च प्राकृतभोजनप्राप्तिः(?)। सांशयिकं चैतत् कर्म, तस्मादापृच्छयेश्वरं प्रत्याख्यायाचरेत्)॥ १६॥

**उदकोदरिणस्तु वातहरतैलाभ्यक्तस्य उष्णोदकस्विन्नस्य स्थितस्याप्तैः सुपरिगृहीतस्याकक्षात्परिवेष्टितस्याधोनाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येत्, तत्र त्रप्वादीनामन्यतमस्य नाडीं द्विद्वारां पक्षनाडीं वा संयोज्य आदोषोदकमवसिञ्चेत्, ततो नाडीमपहृत्य तैललवणेनाभ्यज्य व्रणबन्धेनोपचरेत्, न चैकस्मिन्नेव दिवसे सर्वं दोषोदकमपहरेत्, सहसा ह्यपहृते तृष्णाज्वराङ्गमर्दातीसारश्वासपाददाहा उत्पद्येरन्नापूर्यते वा भृशतरमुदरमसञ्जातप्राणस्य, तस्मात् तृतीयचतुर्थपञ्चमषष्ठाष्टमदशमद्वादशषोडशरात्राणामन्यतममन्तरीकृत्य दोषोदकमल्पाल्पमवसिञ्चेत्। निःस्रुते च दोषे गाढतरमाविककौशेयचर्मणामन्यतमेन परिवेष्टयेदुदरं, तथा नाध्मायति वायुः, षण्मासांश्च पयसा भोजयेत् जाङ्गलरसेन वा, तत्र त्रीन्मासानर्धोदकेन पयसा फलाम्लेन जाङ्गलरसेन वाऽवशिष्टं मासत्रयमन्नं लघु हितं वा सेवेतैवं संवत्सरेणागदो भवति॥१७॥**

षण्मासानित्यादि। मासान् षट् जीवन् लघु हितमन्नं पयसा क्षीरेण भोजयेत्। क्षीरेणैवोदककार्यं, अर्धोदकेन पयसा दोषापेक्षया जाङ्गलरसेन वा लघुहितमन्नं भोजयेत्। ताभ्यामेवोदककार्यं कारयेत्। अवशिष्टं मासत्रयं लघु हितमन्नं भोजयेत्। उदकेनैवोदककार्यम्। चरकमतानुसारिणा वाग्भटेन क्षीरेणैव षण्मासान्। "स्यात् क्षीरवृत्तिः षण्मासांस्त्रीन् पेयां पयसा पिबेत्। त्रींश्चान्यान् पयसैवाद्यात् फलाम्लेन रसेन वा। अल्पशः स्नेहलवणं जीर्णश्यामाककोद्रवं" इति॥ १७॥

**भवति चात्र।**

**आस्थापने चैव विरेचने च**
**पाने तथाहारविधिक्रियासु॥**
**सर्वोदरिभ्यः कुशलैः प्रयोज्यं**
**क्षीरं शृतं जाङ्गलजो रसो वा॥ १८॥**

कृतकर्मणः जलनिषेधं तदभावे चोक्तं द्रवं निर्दिशन्नाह—भवतीत्यादि। चकारद्वयकरणेन पाटनादौ युक्तेऽपीति समुच्चीयते १८

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने चतुर्दशोऽध्यायः।

---

## पञ्चदशोऽध्यायः।

**अथातो मूढगर्भचिकित्सितं व्याख्यास्यामः॥१॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥२॥**

**नातः कष्टतममस्ति यथा मूढगर्भशल्योद्धरणं; अत्र हि योनियकृत्प्लीहान्त्रविवरगर्भाशयानां मध्ये कर्म कर्तव्यं स्पर्शेन, उत्कर्षणापकर्षणस्थानापवर्तनोत्कर्तनभेदनच्छेदनपीडनर्जूकरणदारणानि च एकहस्तेन गर्भं गर्भिणीं चाऽहिंसता, तस्मादधिपतिमापृच्छ्य परं च यत्नमास्थायोपक्रमेत॥ ३॥**

उत्कर्षणं अधोगतस्योर्ध्वीकरणम्। अपकर्षणं ऊर्ध्वगतस्याधःकर्षणम्। स्थानापवर्तनं स्थानेषु सक्तस्य गर्भशय्यात उत्तानस्यावाङ्मुखीकरणम्। उद्वर्तनं अवाङ्मुखस्योत्तानीकरणम्। अत्र केचित् स्थानव्यावर्तनमिति पठन्ति, तत्र स्थाने गर्भशय्यायां तिर्यगादिस्थितस्योत्तानस्याधोव्यावृत्त्या स्थापनम्। ऊर्ध्वस्य कस्यचिदङ्गस्य छेदनं उत्कर्तनं, छेदनमिति मृतस्य तु तेषु स्थानेषु सक्तस्य तस्याङ्गस्य छेदनं द्वैधीकरणम्। गर्भकोष्ठादेराध्मानस्य विदारणं भेदनम्। पीडनं वलनम्। ऋजूकरणं वक्रस्य प्राञ्जलीकरणम्। दारणं विदारणम्॥ १—३॥

**तत्र समासेनाष्टविधा मूढगर्भगतिरुद्दिष्टा; स्वभावगता अपि त्रयः सङ्गा भवन्ति शिरसो वैगुण्यादंसयोर्जघनस्य वा॥ ४॥**

तत्रेत्यादि। शिरसो वैगुण्योपादानात् अंसयोर्जघनस्य वैगुण्यमनुवर्तते। अंशो बाहुशिरः, तस्य जघनं अग्रभागः॥ ४॥

**जीवति तु गर्भे सूतिकागर्भनिर्हरणे प्रयतेत। निर्हर्तुमशक्ये च्यवनान् मन्त्रानुपश्रृणुयात्; तान् वक्ष्यामः॥ ५॥**

**'इहामृतं च सोमश्च चित्रभानुश्च भामिनि!॥**
**उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते॥ ६॥**
**इदममृतमपां समुद्धृतं वै**
**तव लघु गर्भमिमं प्रमुञ्चतु स्त्री॥**
**तदनलपवनार्कवासवास्ते**
**सह लवणाम्बुधरैर्दिशन्तु शान्तिम्॥ ७॥**
**मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्येन्दुरश्मयः॥**
**मुक्तः सर्वभयात् गर्भ एह्येहि माचिरं स्वाहा॥८॥**

जीवतीत्यादि। प्रयतेत यत्नं कुर्वीत। केचिदाचार्या मन्त्रव्याख्यानं कुर्वन्ति तदाह—इहेत्यादि। अमृतं समुद्रमन्थनोद्धृतं, चित्रभानुरादित्यः, भामिनि! हे वरस्त्रि, उच्चैःश्रवाः अमृतमन्थनोत्पन्नस्तुरगः शक्रवाहनः, शीघ्रं दिशन्तु प्रयच्छन्तु॥ ५—८॥

**औषधानि च विदध्यात् यथोक्तानि। मृते चोत्तानाया आभुग्नसक्थ्या वस्त्राधारकोन्नमित-**

कृत्वा धन्वननगवृत्तिकाशाल्मलीमृत्स्नघृताभ्यां प्रक्षयित्वा हस्तं योनौ प्रवेश्य गर्भमुपहरेत् । तत्र सक्थिभ्यामागतमनुलोममेवाञ्छेत्, एकसक्थ्या-प्रपन्नस्येतरसक्थि प्रसार्यापहरेत्, स्फिग्देशेनागतस्य स्फिग्देशं प्रपीड्योर्ध्वमुत्क्षिप्य सक्थिनी प्रसार्यापहरेत्, तिर्यगागतस्य परिघस्येव तिरश्चीनस्य पश्चादर्धमूर्ध्वमुत्क्षिप्य पूर्वार्धमपत्यपथं प्रत्यार्जवमानीयापहरेत्, पार्श्वापवृत्तशिरसमंसं पीड्योर्ध्वमुत्क्षिप्य शिरोऽपत्यपथमानीयापहरेत्, बाहुद्वयप्रतिपन्नस्योर्ध्वमुत्पीड्यांसौ शिरोऽनुलोममानीयापहरेत्, द्वावन्त्यावसाध्यो मूढगर्भौ; एवमशक्ये शस्त्रमवचारयेत् ॥ ९ ॥

सचेतनं च शस्त्रेण न कथञ्चन दारयेत् ॥
दार्यमाणो हि जननीमात्मानं चैव घातयेत्॥१०॥

तत्र स्त्रियमाश्वास्य मण्डलाग्रेण अङ्गुलीशस्त्रेण वा शिरो विदार्य, शिरःकपालान्याहृत्य, शङ्कुना गृहीत्वोरसि कक्षायां वापहरेत्, अभिन्ने शिरसि चाक्षिकूटे गण्डे वा; अंससंसक्तस्यांसदेशे बाहुं छित्त्वा, दृतिमिवाततं वातपूर्णोदरं वा विदार्य निरस्यान्त्राणि शिथिलीभूतमाहरेत्, जघनसक्तस्य वा जघनकपालानीति ॥ ११ ॥

यद्यदङ्गं हि गर्भस्य तस्य सजति तद्भिषक् ॥
सम्यग्विनिर्हरेत् छित्त्वा रक्षेन्नारीं च यत्नतः ॥१२॥
गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः ॥
तत्रानल्पमतिर्वैद्यो वर्तेत विधिपूर्वकम् ॥ १३ ॥
नोपेक्षेत मृतं गर्भं मुहूर्तमपि पण्डितः ॥
स ह्याशु जननीं हन्ति निरुच्छ्वासं पशुं यथा ॥१४॥
मण्डलाग्रेण कर्तव्यं छेद्यमन्तर्विजानता ॥
वृद्धिपत्रं हि तीक्ष्णाग्रं नारीं हिंस्यात् कदाचन॥१५॥
अथापतन्तीमपरां पातयेत् पूर्ववद्भिषक् ॥
हस्तेनापहरेद्वापि पार्श्वाभ्यां परिपीड्य वा ॥ १६ ॥
धुनुयाच्च मुहुर्नारीं पीडयेत् वांसपिण्डिकाम् ॥
तैलाक्तयोनेरेवं तां पातयेत् मतिमान् भिषक् ॥१७॥
एवं निहृतशल्यां तु सिञ्चेदुष्णेन वारिणा ॥
ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत् ॥१८॥
एवं मृद्वी भवेद्योनिस्तच्छूलं चोपशाम्यति ॥

मन्त्रान् निर्दिश्य औषधानि निर्दिशन्नाह—औषधानीत्यादि । तानि पुनः शारीरे अपरापातनोदितानि । वृथाभूते जलव्यापारे भिषजा शल्याहरणोपायं निर्दिशन्नाह—मृते चेति । चकारात् अफलीभूतेषु मन्त्रव्यापारेषु जीवत्यपीति अनुक्तं समुच्चीये । आभुग्नसक्थ्या इति सङ्कुचितसक्थ्याः । धन्वनः धनुर्वृक्षः, नगवृत्तिका शल्लकी, शाल्मलीमृत्तिकायां बोद्धव्यः ॥ ९—१८ ॥—

कृष्णातन्मूलशुण्ठ्येलाहिङ्गुभार्गीः सदीप्यकाः॥१९॥
वचामतिविषां रास्नां चव्यं सञ्चूर्ण्य पाययेत् ॥
स्नेहेन दोषस्यन्दार्थं वेदनोपशमाय च ॥ २० ॥
क्वाथं चैषां तथा कल्कं चूर्णं वा स्नेहवर्जितम् ॥
शाकत्वक्हिङ्ग्वतिविषापाठाकटुकरोहिणीः ॥२१॥
तथा तेजोवतीं चापि पाययेत् पूर्ववद्भिषक् ॥
त्रिरात्रं पञ्चसप्ताहं ततः स्नेहं पुनः पिबेत् ॥ २२ ॥
पाययेद्वाऽऽसवं नक्तमरिष्टं वा सुसंस्कृतम् ॥
शिरीषककुभाभ्यां च तोयमाचमने हितम् ॥२३॥
उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥
सर्वतः परिशुद्धा च स्निग्धपथ्याल्पभोजना ॥ २४ ॥
स्वेदाभ्यङ्गपरा नित्यं भवेत् क्रोधविवर्जिता ॥
पयो वातहरैः सिद्धं दशाहं भोजने हितम् ॥ २५ ॥
रसं दशाहं शेषे तु यथायोगमुपाचरेत् ॥
व्युपद्रवां विशुद्धां च ज्ञात्वा च बलवर्णिनीम्॥२६॥
ऊर्ध्वं चतुर्भ्यो मासेभ्यो विसृजेत् परिहारतः ॥
योनिसन्तर्पणेऽभ्यङ्गे पाने बस्तिषु भोजने ॥ २७ ॥
बलातैलमिदं वास्यै दद्यादनिलवारणम् ॥

विकल्पा ह्येते देशप्रकृतिसात्म्यापेक्षया । कृष्णा पिप्पली, तन्मूलं पिप्पलीमूलं, दीप्यकः अजमोदा । प्रसवकाल एव जातमूढगर्भायाः पुनरत्र काले उद्दालकादीनां अन्नानाम-स्नेहलवणाभिर्यवागूभिरुपचारः । त्रिरात्रमित्यादि एवं त्रिरात्रं कृष्णादिचूर्णपानेन नवाहृतकोष्ठरक्तक्लेदादिदोषयोः उपशमार्थं सप्ताहं यूषमात्रया स्नेहपानम् । तेन विद्धवाताशयायाः दशाहादूर्ध्वं स्निग्धपथ्याल्पभोजनम् । तत्र नित्यं स्वेदाभ्यङ्गौ अवश्यं कार्यौ । ककुभः सुगन्धिमूलो विटपः । प्रसवे स्नानादौ षडङ्गकल्पनाकल्पितशिरीषककुभसलिलम् । यथास्वं यथायोगमिति ॥ १९—२७ ॥—

बलामूलकषायस्य दशमूलीकृतस्य च ॥ २८ ॥
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः ॥ २९ ॥
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥
तथागुरुं सर्जरसं सरलं देवदारु च ॥ ३० ॥
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम् ॥
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम् ॥ ३१ ॥
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥
तत्साधु सिद्धं सौवर्णे राजते मृण्मयेऽपि वा॥३२॥
प्रक्षिप्य कलशे सम्यक् स्वनुगुप्तं निधापयेत् ॥
बलातैलमिदं ख्यातं सर्ववातविकारनुत् ॥ ३३ ॥
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान्॥३४॥

त्यर्थः । भोजेनाप्युक्तम्,—"दोषमल्पं च शमयेत् चलितं चापि दुर्बले । बहुदोषं तु चलितं शनैरल्पं प्रवाहयेत्" ॥ ३६ ॥

**हरेद्दोषांश्चलान् पक्वान् बलिनो दुर्बलस्य च ॥**
**चला ह्युपेक्षिता दोषाः क्लेशयेयुश्चिरं नरम् ॥ ३७ ॥**

ते दोषा बलिनो दुर्बलस्यापि पाकप्रवणा निर्हर्तव्या एवेत्याह—हरेदित्यादि ॥ ३७ ॥

**मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः ॥**
**सन्धुक्षिताग्निं स्निग्धं च स्विन्नं चैव विरेचयेत् ॥३८॥**

मन्दाग्नेः क्रूरकोष्ठस्य संशोधनमाह—मन्दाग्निमित्यादि ॥३८

**स्निग्धस्विन्नस्य भैषज्यैर्दोषस्तूत्क्लेशितो बलात् ॥**
**विलीयते न मार्गेषु स्निग्धे भाण्ड इवोदकम् ॥३९॥**

कुतः पुनः स्नेहस्वेदपूर्वं शोधनमित्याह—स्निग्धेत्यादि । भैषज्यैः जलौषधरूपैः, अतो भैषज्यग्रहणेन भोजनमपि गृह्यते । बलात् बलादिकमभिसमीक्ष्य उत्क्लेशितः । न मार्गेषु विलीयते न लग्नो भवतीत्यर्थः ॥ ३९ ॥

**न चातिस्नेहपीतस्तु पिबेत् स्नेहविरेचनम् ॥**
**दोषाः प्रचलिताः स्थानाद्भूयः श्लिष्यन्ति वर्त्मसु ४०॥**

विरेचनस्य स्निग्धरूक्षपुरुषविशेषवारणमुद्दिशन्नाह—न चातिस्निग्धेत्यादि । भूय इत्यादि पुनर्निलीयन्ते मार्गेष्वित्यर्थः । "न चातिस्निग्धकायस्तु" इति केचित् पठन्ति ॥ ४० ॥

**विषाभिघातपिडकाशोफपाण्डुविसर्पिणः ॥**
**नातिस्निग्धा विशोध्याः स्युस्तथा कुष्ठप्रमेहिणः ४१॥**

केषाञ्चिदतिस्निग्धानां विशोधनप्रतिषेधनमाह—विषाभिघातेत्यादि । नातिस्निग्धा इति ईषत् स्निग्धा विशोध्या इत्यर्थः ॥ ४१ ॥

**विरूक्ष्य स्नेहसात्म्यं तु भूयः संस्नेह्य शोधयेत् ॥**
**तेन दोषा हृतास्तस्य भवन्ति बलवर्धनाः ॥ ४२ ॥**

स्वभावतः स्निग्धमानवमाह—विरूक्ष्येत्यादि ॥ ४२ ॥

**प्रागपीतं नरं शोध्यं पाययेतौषधं मृदु ॥**
**ततो विज्ञातकोष्ठस्य कार्यं संशोधनं पुनः ॥ ४३ ॥**

अविज्ञातकोष्ठस्य मृदु विरेचनं देयमित्याह—प्रागित्यादि । प्राक् पूर्वं न पीतं विरेचनं येन सः तम् ॥ ४३ ॥

**सुखं दृष्टफलं हृद्यमल्पमात्रं महागुणम् ॥**
**व्यापत्स्वल्पात्ययं चापि पिबेन्नृपतिरौषधम् ॥ ४४ ॥**

सुकुमारतरेऽपि विशेषेण विरेचनविशेषमाह—सुखमित्यादि । व्यापत्स्वल्पात्ययमिति व्यापदां स्वल्पात्ययोऽल्पविनाशो यस्मिन्नौषधे ॥ ४४ ॥

**स्नेहस्वेदावनभ्यस्य यस्तु संशोधनं पिबेत् ॥**
**दारुशुष्कमिवानामे देहस्तस्य विशीर्यते ॥ ४५ ॥**
**स्नेहस्वेदप्रचलिता रसैः स्निग्धैरुदीरिताः ॥**
**दोषाः कोष्ठगता जन्तोः सुखा हर्तुं विशोधनैः ॥४६॥**

तथा रूक्षस्याकृतस्नेहस्वेदस्य शोधनेन दोषं दर्शयन्नाह—स्नेहस्वेदावित्यादि ॥ ४५ ॥ ४६ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने त्रयस्त्रिंशत्तमोऽध्यायः ।

---

## चतुस्त्रिंशत्तमोऽध्यायः ।

**अथातो वमनविरेचनव्यापच्चिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः( सुश्रुताय ) ॥२॥**

**वैद्यातुरनिमित्तं वमनं विरेचनं च पञ्चदशधा व्यापद्यते । तत्र वमनस्याधो गतिरूर्ध्वं विरेचनस्येति पृथक्, सामान्यमुभयोः—सावशेषौषधत्वं, जीर्णौषधत्वं, हीनदोषापहृतत्वं, वातशूलं, अयोगो, अतियोगो, जीवादानं, आध्मानं, परिकर्तिका, परिस्रावः, प्रवाहिका, हृदयोपसरणं, विबन्ध इति ॥ ३ ॥**

वैद्यातुरग्रहणेनैव भेषजपरिचारकयोर्ग्रहणमतस्तयोरपि व्यापन्निमित्तता स्यात् । तत्रेत्यादि । तत्र वमनस्याधोगतिर्व्यापदिति शेषः । ऊर्ध्वगतिर्विरेचनस्येत्यत्रापि व्यापदिति शेषः । उभयोस्तु वमनविरेचनयोः सावशेषौषधादिकं त्रयोदशसंख्योपेतं व्यापत्त्वेन सामान्यम् । पञ्चदशसंख्याकरणं तन्त्रान्तरोक्तसंख्यानिषेधार्थम् ॥ १—३ ॥

**तत्र बुभुक्षापीडितस्यातितीक्ष्णाग्नेर्मृदुकोष्ठस्य चावतिष्ठमानं दुर्बलस्य वा गुणसामान्यभावाद् वमनमधो गच्छति, तत्रेप्सितानवाप्तिर्दोषोत्कर्षश्च, तमाशु स्नेहयित्वा भूयस्तीक्ष्णतरैर्वामयेत् ॥ ४ ॥**

वमनस्याधोगव्यापदं दर्शयन्नाह—तत्रेत्यादि । प्रथमं क्षुत्पीडितस्य पीतमात्रमेवाधो याति, तीक्ष्णाग्नेरग्निबलात् पाकं याति, मृदुकोष्ठस्यापि कोष्ठमार्दवादधो याति, दुर्बलस्य चावतिष्ठमानं पाकं गच्छत् वातादिगुणसाम्यादधो याति । दोषोत्क्लेशश्चेति दोषस्य सामान्यत्वेऽपि कफो गृह्यते, तस्य वमनार्हत्वात् । स्नेहयित्वेत्यत्र स्नेहेनैव स्वेद आक्षिप्तो बोद्धव्यः ॥ ४ ॥

**अपरिशुद्धामाशयस्योत्कृष्टश्लेष्मणः सशेषान्नस्य वाऽहृद्यमतिप्रभूतविरेचनं पीतमूर्ध्वं गच्छति, तत्राशुद्धामाशयमुल्बणश्लेष्माणमाशु वामयित्वा भूयस्तीक्ष्णतरैर्विरेचयेत्, आमाशये त्वामवत् संविधानं, अहृद्येऽतिप्रभूते च हृद्यं प्रमाणयुक्तं च, अत ऊर्ध्वमुत्तिष्ठत्यौषधे न तृतीयं पाययेत् । ततस्त्वेनं मधुघृतफाणितयुक्तैर्लेहैर्विरेचयेत् ॥ ५ ॥**

विरेचनस्योर्ध्वगतिव्यापदं दर्शयन्नाह—अपरिशुद्धेत्यादि । दोषोऽत्र पित्तम् । आमवत् संविधानं लङ्घनपाचनादि । न

तृतीयं पाययेत् विरेचनमत्रौषधमिति शेषः । अथ केन विरेचयेत् तदाह—ततस्त्वेनमित्यादि ॥ ५ ॥

**दोषविग्रथितमल्पमौषधमवस्थितमूर्ध्वभागिकमधोभागिकं वा न स्रंसयति दोषान्, तत्र तृष्णा पार्श्वशूलं छर्दिर्मूर्च्छा पर्वभेदो हृल्लासारत्युद्गाराविशुद्धिश्च भवति, तमुष्णाभिरद्भिराशु वामयेत्; सावशेषौषधमतिप्रधावितदोषमतिबलमसम्यग्विरिक्तमप्येवं वामयेत् ॥ ६ ॥**

सावशेषौषधव्यापदं सामान्येनोभयोः दर्शयन्नाह—दोषेत्यादि । दोषविग्रथितं दोषमिश्रितम् । न स्रंसयति न च्यावयति । पर्वभेदः ग्रन्थिस्फुटनम् । हृल्लासः थूत्करणम् । ऊर्ध्वभागेन वमनद्रव्यविषये वामयेत् ॥ ६ ॥

**क्रूरकोष्ठस्यातितीक्ष्णाग्नेरल्पमौषधमल्पगुणं वा भक्तवत् पाकमुपैति, तत्र समुदीर्णा दोषा यथाकालमनिर्ह्रियमाणा व्याधिं बलविभ्रमं चापादयन्ति, तमनल्पममन्दमौषधं च पाययेत् ॥ ७ ॥**

जीर्णौषधव्यापदं दर्शयन्नाह—क्रूरेत्यादि । बलविभ्रंशं सन्धिविश्लेषादिलक्षणं दोषादिविज्ञानीयोक्तम् । तमनल्पमित्यादि प्रभूतं तीक्ष्णं च पातुं प्रयच्छेत् ॥ ७ ॥

**अस्निग्धस्विन्नेनाल्पगुणं वा भेषजमुपयुक्तमल्पान् दोषान् हन्ति; तत्र वमने दोषशेषः गौरवमुत्क्लेशं हृदयाविशुद्धिं व्याधिवृद्धिं करोति, तत्र यथायोगं पाययित्वा वामयेद् दृढतरं, विरेचने गुदपरिकर्तनमाध्मानं शिरोगौरवमनिःसरणं वा वायोर्व्याधिवृद्धिं करोति । तमुपपाद्य भूयः स्नेहस्वेदाभ्यां विरेचयेद् दृढतरं, दृढं बहुप्रचलितदोषं वा तृतीये दिवसेऽल्पगुणं चेति ॥ ८ ॥**

अल्पदोषहृतव्यापदं दर्शयन्नाह—अस्निग्धस्विन्नेत्यादि । अल्पः अतिसूक्ष्मः गुणो यस्य तत्तथा तम् । यथायोगं योगानतिक्रमेण । स्नेहादिविषयमित्यर्थः । पाययित्वा आतुरं वमनद्रव्यमिति शेषः । दृढतरं यथा भवति तथा विरेचयेत् वा इति अत्रापि दोषशेषं इति संबध्यते । गुदपरिकर्तनं गुदस्य सर्वतः कर्तनमिव वेदनाविशेषः । दृढदेहं बहुदोषं प्रचलितदोषं च पूर्वं स्नेहेन तृतीयेऽह्नि; अन्ये तु वमनदिवसाद् विरेचनदिवसाद्वा तृतीयदिवसे वामयेत् ॥ ८ ॥

**अस्निग्धस्विन्नेन रूक्षकौषधमुपयुक्तमब्रह्मचारिणा वा वायुं कोपयति, तत्र वायुः प्रकुपितः पार्श्वपृष्ठश्रोणिमन्यामर्मशूलं मूर्च्छां भ्रमं संज्ञानाशं च करोति, तमभ्यज्य धान्यस्वेदेन स्वेदयित्वा यष्टीमधुकविपक्वेन तैलेनानुवासयेत् ॥ ९ ॥**

श्रोणिः कटिः । मर्मात्र हृदयम् । भ्रमः चक्रारूढस्येव भ्रमणं; अथवा पूगफलादनेनेव मत्तता । मूर्च्छाभ्रमयोरनुवासनप्रतिषेधव्यवस्थापेक्षया शीतलेन यष्टिमधुकतैलेनानुवासनं वेदितव्यमिति ॥ ९ ॥

**स्नेहस्वेदाभ्यामविभावितशरीरेणाल्पमौषधमल्पगुणं वा पीतमूर्ध्वमधो वा नाभ्येति दोषांश्चोत्क्लिश्य तैः सह बलक्षयमापादयति, तत्राध्मानं हृदयग्रहस्तृष्णा मूर्च्छा दाहश्च भवति, तमयोगमित्याचक्षते, तमाशु वामयेन्मदनफललवणाम्बुभिर्विरेचयेत्तीक्ष्णतरैः कषायैश्च । दुर्वान्तस्य तु समुत्क्लिष्टा दोषा व्याप्य शरीरं कण्डूश्वयथुकुष्ठपिडकाज्वराङ्गमर्दनिस्तोदनानि कुर्वन्ति, ततस्तानवशेषान्महौषधेनापहरेत् । अस्निग्धस्विन्नस्य मृदुविरिक्तस्याधोनाभेः स्तब्धपूर्णोदरता शूलं वातपुरीषसङ्गः कण्डूमण्डलप्रादुर्भावो भवति, तमास्थाप्य पुनः संस्नेह्य विरेचयेत्तीक्ष्णेन । नातिप्रवर्तमाने तिष्ठति वा दुष्टसंशोधने तत्सन्तेजनार्थमुष्णोदकं पाययेत्, पाणितापैश्च पार्श्वोदरमुपस्वेदयेत्, ततः प्रवर्तन्ते दोषाः । अनुप्रवृत्ते चाल्पदोषे जीर्णौषधं बहुदोषमहःशेषं बलं चावेक्ष्य भूयो मात्रां विदध्यात् । अप्रवृत्तदोषं दशरात्रादूर्ध्वमुपसंस्कृतदेहं स्नेहस्वेदाभ्यां भूयः शोधयेत् । दुर्विरेच्यमास्थाप्य पुन संस्नेह्य विरेचयेत् । ह्रीभयलोभैर्वेगाघातशीलाः प्रायशः स्त्रियो राजसमीपस्था वणिजः श्रोत्रियाश्च भवन्ति; तस्मादेते दुर्विरेच्याः, बहुवातत्वात्; अत एव तानतिस्निग्धान् स्वेदोपपन्नान् शोधयेत् ॥ १० ॥**

अयोगव्यापदं दर्शयन्नाह—स्नेहेत्यादि । बहुव्यापदत्वात् एतान् सुस्निग्धस्विन्नान् स्वैरं रेचयेत् । स्नेहस्वेदाभ्यामविभावितशरीरेण सर्वथैवास्निग्धस्विन्नेनेत्यर्थः । नाभ्येति न गच्छति । दोषांश्चोत्क्लिश्य तैर्दोषैः सह बलक्षयमापादयति । तत्राध्मानादिकं करोति । तमयोगमित्याचक्षते इति । अनेन पारिभाषिकमयोगस्य लक्षणं दर्शयति । मदनादिभिर्वामयेत् वमनायोगे; तीक्ष्णतरकषायैर्विरेचनायोगे च । तत्र बलक्षयाध्मानादिकं सर्वथाऽप्रवृत्तयोर्वमनविरेचनयोः । अवसितयोर्वमनविरेचनयोः पृथक् लिङ्गं चिकित्सितं चाह—दुर्वान्तस्येत्यादि । वातपूर्णोदरादिदुर्विरिक्तलिङ्गिनमास्थाप्य निरूह्य, संस्नेह्य स्नेहबस्तिना, ततो तीक्ष्णेन निरूहणेन विरेचनेन च विरेचयेत् । अत्रायोगप्रसङ्गेन अल्पदोषहृतत्वेन च प्रवर्तनोपायं दर्शयन्नाह—नेत्यादि । तथाल्पप्रवृत्तौ द्वितीयं करणं दर्शयन्नाह—अनुप्रवृत्ते इत्यादि । जीर्णौषधं प्रभूतदोषं पुरुषं तथा देहस्य बलं च वीक्ष्य द्वितीयौषधं विदध्यात् । अल्पदोषप्रवृत्तौ तदहरेव भेषजमभिधाय सर्वथा दोषाप्रवृत्तौ विधिमाह—अप्रवृत्तदोषमित्यादि । पथ्याहारस्नेहादिना दशरात्रादूर्ध्वं वमनविरेचनाभ्यां शोधयेत् ।

सुखविरेच्यस्य क्रियामभिधाय दुर्विरेच्यस्याह—दुर्विरेच्यमित्यादि। स्वभावाद् दुर्विरेच्यान् निर्दिशन्नाह—ह्रीभयेत्यादि। तत्र ह्रिया लज्जया ॥ १० ॥

**स्निग्धस्विन्नस्यातिमात्रमतिमृदुकोष्ठस्य वा तीक्ष्णाधिकदत्तमौषधमतियोगं कुर्यात्। तत्र वमनातियोगे पित्तातिप्रवृत्तिर्बलविस्रंसो वातकोपश्च बलवान् भवति, तं घृतेनाभ्यज्यावगाह्य शीताम्बुषु शर्करामधुमिश्रैर्लेहैरुपचरेद्यथास्वं; विरेचनातियोगे कफस्यातिप्रवृत्तिरुत्तरकालं च सरक्तस्य, तत्रापि बलविस्रंसो वातकोपश्च बलवान् भवति, तमतिशीताम्बुभिः परिषिच्यावगाह्य वा शीतैस्तण्डुलाम्बुभिर्मधुमिश्रैश्छर्दयेत, पिच्छाबस्तिं चास्मै दद्यात्, क्षीरसर्पिषा चैनमनुवासयेत्, प्रियङ्ग्वादिं चास्मै तण्डुलाम्बुना पातुं प्रयच्छेत्, क्षीररसयोश्चान्यतरेण भोजयेत् ॥ ११ ॥**

इदानीमतियोगव्यापदं दर्शयन्नाह—स्निग्धेत्यादि। बलविस्रंसः शक्तिविस्रंसः। यथास्वमिति यस्य यदात्मीयं तद्यथास्वम्। तेन लाजशक्तूपकल्पितैः क्वचिच्छर्करामिश्रैः क्वचिन्मधुमिश्रैरित्यर्थः। पिच्छाबस्तिर्वक्ष्यमाणः। क्षीरसर्पिषा क्षीराक्तेन घृतेन। तण्डुलाम्बुना सह प्रियङ्ग्वादिप्रयोगः कर्षप्रमाणः संग्रहणाय। क्षीररसैश्च भोजनं बलप्रतिलम्भाय ॥ ११ ॥

**तस्मिन्नेव वमनातियोगे प्रवृद्धे शोणितं ष्ठीवति छर्दयति वा, तत्र जिह्वानिःसरणमक्ष्णोर्व्यावृत्तिर्हनुसंहननं तृष्णा हिक्का ज्वरो वैसंज्ञ्यमित्युपद्रवा भवन्ति; तमजासृक्चन्दनोशीराञ्जनलाजचूर्णैः सशर्करोदकैर्मन्थं पाययेत्, फलरसैर्वा सघृतक्षौद्रशर्करैः, शुङ्गाभिर्वा वटादीनां पेयां सिद्धां सक्षौद्रां वर्चोग्राहिभिर्वा, पयसा जाङ्गलरसेन वा भोजयेत्, अतिस्रुतशोणितविधानेनोपचरेत्; जिह्वामतिसर्पितां कटुकलवणचूर्णप्रघृष्टां तिलद्राक्षाप्रलिप्तां वा पीडयेत्, प्रविष्टायामम्लमन्ये तस्य पुरस्तात् खादयेयुः, व्यावृत्ते चाक्षिणी घृताभ्यक्ते पीडयेत्, हनुसंहनने वातश्लेष्महरं नस्यं स्वेदांश्च विदध्यात्, तृष्णादिषु च यथास्वं प्रतिकुर्वीत, विसंज्ञे वेणुवीणागीतस्वनं श्रावयेत् ॥ १२ ॥**

**विरेचनातियोगे च सचन्द्रकं सलिलमधः स्रवति, ततो मांसधावनप्रकाशमुत्तरकालं जीवशोणितं च, ततो गुदनिःसरणं वेपथुर्वमनातियोगोपद्रवाश्चास्य भवन्ति; तमपि निःस्रुतशोणितविधानेनोपचरेत्, निःसर्पितगुदस्य गुदमभ्यज्य परिस्वेद्यान्तः पीडयेत् क्षुद्ररोगचिकित्सितं वा वीक्षेत, वेपथौ वातव्याधिविधानं कुर्वीत, जिह्वानिःसरणादिषूक्तः प्रतीकारः, अतिप्रवृत्ते वा जीवशोणिते काश्मरीफलबदरीदूर्वोशीरैः शृतेन पयसा घृतमण्डाञ्जनयुक्तेन सुशीतेनास्थापयेत्, न्यग्रोधादिकषायक्षीरेक्षुरसघृतशोणितसंसृष्टैश्चैनं बस्तिभिरुपाचरेत्, शोणितष्ठीवने रक्तपित्तरक्तातीसारक्रियाश्चास्य विदध्यात्, न्यग्रोधादिं चास्य विदध्यात् पानभोजनेषु ॥ १३ ॥**

**जीवशोणितरक्तपित्तयोश्च जिज्ञासार्थं तस्मिन् पिचुं प्लोतं वा क्षिपेत्, यद्युष्णोदकप्रक्षालितमपि वस्त्रं रञ्जयति तज्जीवशोणितमवगन्तव्यं, सभक्तं च शुने दद्यात् शक्तुसंमिश्रं वा, स यद्युपभुञ्जीत तज्जीवशोणितमवगन्तव्यम् ॥ १४ ॥**

इदानीं तयोर्वमनविरेकातियोगयोरुत्तमावस्थाजीवादानव्यापदं कष्टचिकित्सितार्थमाह—तस्मिन्नेवेत्यादि। जिह्वाया निःसरणं अपसर्पणं जिह्वानिःसर्पणं, अथवा जिह्वाया बहिर्निर्गमनं, बहिर्गतिः अन्तरप्रवेश इत्यर्थः। अम्लफलमन्ये तस्य पुरस्तात्खादयेयुरिति एतद्दर्शनात् मुखप्रसेकेन मृदुभूता जिह्वा यथास्थानमागच्छति। विरेचनातियोगे च इत्यादि। चन्द्रकं मयूरपिच्छचन्द्रकाकारम्। जीवशोणितं शरीरेन्द्रियसत्त्वात्मसंयोगाश्रयं रक्तम्। वेपथुः कम्पः। वमनातियोगोपद्रवा इत्यादि द्रवधातुक्षयेण वातकृता वमनातियोगोपद्रवा जिह्वानिःसर्पणाक्षिव्यावृत्तिबलविभ्रंशवातकोपतृष्णादयः। उक्तः प्रतीकार इति वमनातियोगे इत्यर्थः। अञ्जनं स्रोतोऽञ्जनम्। बस्तिकल्पना चात्र सामान्यनिरूहकल्पेन। विरेचनातियोगे जीवशोणितातिप्रवृत्तौ चिकित्सितमुपदिश्य वमनातियोगेऽपि शोणितनिष्ठीवनादौ रक्तातिसाररक्तपित्तक्रियामाह—शोणितेत्यादि। पानभोजनसंस्कारे चास्य न्यग्रोधादिं षडङ्गोदककल्पेन। तस्मिन् तेजःप्रवृत्ते धातुद्रवे पिचुं अर्कतूलकं, प्लोतं वस्त्रं शुक्लं क्षिपेत्, तद्यदि शुक्लमुष्णोदकप्रक्षालितं रागरञ्जितं भवेत्तदा जीवशोणितं विवर्णे च पित्तरक्तमिति। वमनविरेचनजीवादानयोः पुनः क्रियां निर्दिशन्नाह—तयोश्च पित्तक्रियां कुर्वीतेत्यादि। अयं पाठोऽभावान्नलिखितः ॥ १२—१४ ॥

**सशेषान्नेन बहुदोषेण रूक्षेणानिलप्रायकोष्ठेनानुष्णमस्निग्धं वा पीतमौषधमाध्मापयति, तत्रानिलमूत्रपुरीषसङ्गः समुन्नद्धोदरता पार्श्वभङ्गो गुदबस्तिनिस्तोदनं भक्तारुचिश्च भवति, तं चाध्मानमित्याचक्षते; तमुपस्वेद्यानाहवर्तिदीपनबस्तिक्रियाभिरुपचरेत् ॥ १५ ॥**

जीवादानव्यापदमभिधाय द्वयोरपि शुद्ध्योराध्मानाख्यामुपदिशन्नाह—सशेषान्नेनेत्यादि। समुन्नद्धोदरतेति वमनकृतं समुन्नद्धोदरत्वमामाशये, विरेचनकृतं पक्वाशये ॥ १५ ॥

**क्षामेणातिमृदुकोष्ठेन मन्दाग्निना रूक्षेण वाऽतितीक्ष्णोष्णातिलवणमतिरूक्षं वा पीतमौषधं पित्ता-**

निलौ प्रदूष्य परिकर्तिकामापादयति, तत्र गुदनाभिमेढ्रबस्तिशिरःसु परिकर्तनमनिलसङ्गो वायुविष्टम्भो भक्तारुचिश्च भवति; तत्र पिच्छाबस्तिर्यष्टीमधुककृष्णतिलकल्कमधुघृतयुक्तः, शीताम्बुपरिषिक्तं चैनं पयसा भुक्तवन्तं घृतमण्डेन यष्टीमधुकसिद्धेन तैलेन वाऽनुवासयेत् ॥ १६ ॥

परिकर्तिकाव्यापदं दर्शयन्नाह—क्षामेत्यादि । क्षामः क्षीणबलः । परि सर्वतो भावेन कृन्ततीव छिनत्तीव बस्त्यादीनि इति परिकर्तिका । तत्र पित्तोल्बणपरिकर्तिकायां घृतमण्डेनानुवासनं, वातोल्बणायां तु तैलेनेति । वमने पुनः कण्ठोरसि सदाहपरिकर्तनम् । तत्र घृतमधुमधुरैः सशीतैर्लेपैरुपचारः पयःसिताभोजनं च ॥ १६ ॥

क्रूरकोष्ठस्यातिप्रभूतदोषस्य मृद्वौषधमवचारितं समुत्क्लिश्य दोषान्न निःशेषानपहरति, ततस्ते दोषाः परिस्रावमापादयन्ति, तत्र दौर्बल्योदरविष्टम्भारुचिगात्रसदनानि भवन्ति, सवेदनौ चास्य पित्तश्लेष्माणौ परिस्रवतस्तं प्ररिस्रावमित्याचक्षते; तमजकर्णधवतिनिशपलाशकषायैर्मधुरसंयुक्तैरास्थापयेत्, उपशान्तदोषं स्निग्धं च भूयः संशोधयेत् ॥ १७ ॥

परिस्रावाख्यां व्यापदं दर्शयन्नाह—क्रूरेत्यादि । अजकर्णः शवकर्णः प्रसिद्ध एव पूर्वदेशे । तिनिशः स्यन्दनः । उपशान्तदोषमिति उपशान्तपरिस्रावम् । भूयः पुनरपि । स्निग्धतीक्ष्णैः संशोधनैः संशोधयेत् । वमने पुनः मूर्धकप्रसेकः । तत्राध्याहारेणोपशान्तदोषं सुस्निग्धस्विन्नमिति रूक्षस्निग्धकोष्ठं संशमनपाचनाभ्यां शमितक्लिष्टदेहमास्थापयेत् (?)॥ १७ ॥

अतिरूक्षेऽतिस्निग्धे वा भेषजमवचारितमप्राप्तं वातवर्च उदीरयेत्, वेगाघातेन वा प्रवाहिका भवति, तत्र सवातं सदाहं सशूलं सश्वेतं सपिच्छिलं कृष्णं रक्तं वा भृशं प्रवाहमाणः कफमुपविशति; तं परिस्राववविधानेनोपाचरेत् ॥ १८ ॥

प्रवाहिकाख्यां व्यापदं दर्शयन्नाह—अतिरूक्ष इत्यादि । अतिरूक्षे पुरुषे भेषजमवचारितमप्राप्तवेगमेवोदीरयति प्रवर्तयति यदा तदा प्रवाहिका, अतिस्निग्धे पुरुषे भेषजमवचारितं तदा वेगाघातेन प्रवाहिका भवतीत्यर्थः । उपविशति अतिसारयति । परिस्रावविधानेनेत्यादि तत्रातिरुक्षजां क्रूरकोष्ठविधानेन, अतिस्निग्धजां मृदुकोष्ठ-प्रचुरदोष-परिस्रावविधानेन ॥ १८ ॥

यस्तूर्ध्वमधो वा भेषजवेगं प्रवृत्तमज्ञत्वाद्धिनिहन्ति तस्योपसरणं हृदि कुर्वन्ति दोषाः, तत्र प्रधानमर्मसन्तापाद्वेदनाभिरत्यर्थं पीड्यमानो दन्तान् किटकिटायते उद्वताक्षो जिह्वां खादति प्रताम्यत्यचेताश्च भवति, तं परिवर्जयन्ति मूर्खाः; तमभ्यज्य धान्यस्वेदेन स्वेदयेत्, यष्टिमधुकसिद्धेन च तैलेनानुवासयेत्, शिरोविरेचनं चास्मै तीक्ष्णं विदध्यात्, ततो यष्टिमधुकमिश्रेण तण्डुलाम्बुना छर्दयेत्, यथादोषोच्छ्रायेण चैनं बस्तिभिरुपाचरेत् ॥ १९ ॥

हृदयोपसरणाख्यां व्यापदं दर्शयन्नाह—य इत्यादि । प्रधानमर्मसन्तापात् हृदयसन्तापात् । प्रताम्यति मुह्यति । अचेताः नष्टसंज्ञः । परिवर्जयन्ति मूर्खाः कुवैद्याः । यष्टिमधुकमिश्रेण तण्डुलाम्बुना पित्तमूर्च्छार्तं छर्दयेत्; कफमूर्च्छायां तु कटुकद्रव्याणां क्वाथेन वामयेत् । बस्तिभिरिति नैरूहिकैः स्नैहिकैश्च॥१९॥

यस्तूर्ध्वमधो वा प्रवृत्तदोषः शीतागारमुदकमनिलमन्यद्वा सेवेत, तस्य दोषाः स्रोतःस्ववलीयमानाः घनीभावमापन्ना वातमूत्रशकृद्ग्रहमापाद्य विबध्यन्ते, तस्याटोपो दाहो ज्वरो वेदनाश्च तीव्रा भवन्ति; तमाशु वामयित्वा प्राप्तकालां क्रियां कुर्वीत, अधोभागे त्वधोभागहरद्रव्यसैन्धवाम्लमूत्रसंसृष्टं विरेचनं पाययेत्, आस्थापनमनुवासनं च यथादोषं विदध्यात्, यथादोषमाहारक्रमं च, उभयतोभागे तूपद्रवविशेषान् यथास्वं प्रतिकुर्वीत ॥ २० ॥

या तु विरेचने गुदपरिकर्तिका तद्वमने कण्ठक्षणनं, यदधः परिस्रवणं स ऊर्ध्वभागे श्लेष्मप्रसेको, या त्वधः प्रवाहिका सा तूर्ध्वशुष्कोद्गारा इति ॥ २१ ॥

विबन्धाख्यव्यापदं दर्शयन्नाह—य इत्यादि । विबध्यन्ते वमनविरेचनयोः प्रवृत्तिं निवारयन्तीत्यर्थः । प्राप्तकालां प्राप्तावस्थां क्रियां कुर्वीत । अधोभागे इत्यादि । विरेचने तु विबद्धे अधोभागहरद्रव्यं सैन्धवादिसंसृष्टं विरेकार्थं पाययेत् । यथादोषमेव यूषक्षीररसाद्याहारम् ॥ २० ॥ २१ ॥

भवति चात्र ।

यास्त्वेता व्यापदः प्रोक्ता दश पञ्च च तत्त्वतः ॥
एता विरेकातियोगदुर्योगायोगजाः स्मृताः॥२२

यास्त्वेता इत्यादि । तत्त्वतः परमार्थतः । विरेकोऽन्नदोषमलरेचनं वमनं च । जेज्जटाचार्यस्तु विपाकातियोगेत्यादि पठित्वा व्याख्यानयति—विषमः पाकः नष्टं फलं येषां ते विपाकाः, विपाकाश्च ते योगायोगाश्च तेभ्यो जायन्ते तथा । तत्रातियोजनमतियोग अतिप्रयोग इति यावत्; दुर्योगः दुष्प्रयोगो मिथ्याप्रयोगः; अयोजनमयोगः हीनप्रयोगः, नञ ईषदर्थत्वात् ॥ २२ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने चतुस्त्रिंशत्तमोऽध्यायः ।

## पञ्चत्रिंशत्तमोऽध्यायः ।

**अथातो नेत्रबस्तिप्रमाणप्रविभागचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥ २ ॥**

बस्तिरेणादीनां मूत्राधारः, तदाधेयं द्रव्यमपि, तयोः प्रमाणं प्रविभागश्च स एव चिकित्सितं व्याधेः प्रतीकारः यस्मिन् तत् ॥ १ ॥ २ ॥

**तत्र स्नेहादीनां कर्मणां बस्तिकर्म प्रधानतममाहुराचार्याः । कस्मात्? अनेककर्मकरत्वाद्बस्तेः; इह बस्तिर्नानाविधद्रव्यसंयोगाद्दोषाणां संशोधनसंशमनसंग्रहणानि करोति, क्षीणशुक्रं वाजीकरोति, कृशं बृंहयति, स्थूलं कर्षयति, चक्षुः प्रीणयति, वलीपलितमपहन्ति, वयः स्थापयति ॥ ३ ॥**

**शरीरोपचयं वर्णबलमारोग्यमायुषः ।**
**परिवृद्धिं करोति च बस्तिः सम्यगुपासितः॥४॥**

**तथा ज्वरातीसारतिमिरप्रतिश्यायशिरोरोगाधिमन्थार्दिताक्षेपकपक्षाघातैकाङ्गसर्वाङ्गरोगाध्मानोदरशर्कराशूलवृद्ध्युपदंशानाहमूत्रकृच्छ्रगुल्मवातशोणितवातमूत्रपुरीषोदावर्तशुक्रार्तवस्तन्यनाशहृद्ग्रहमन्याग्रहार्शोऽश्मरीमूढगर्भप्रभृतिषु चात्यर्थमुपयुज्यते ॥ ५ ॥**

**भवति चात्र ।**

**बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ॥**
**संसर्गे सन्निपाते च बस्तिरेव हितः सदा ॥ ६॥**

बस्तिकर्म तु मूत्राधारपुटकेन साध्यं कर्म । वमनविरेचने तु प्रधानतरे, बस्तिकर्म तु प्रधानतमम् । संग्रहणानीति दोषाणामेवातिप्रवर्तमानानामित्यर्थः । क्षीणशुक्रं वाजीकरोति तच्चाश्व इव बलकारिणी हर्षजा शक्तिः, कृशं बृंहयति इत्युपचयलक्षणं, वयः स्थापयतीत्यनेन आयुर्वृद्धिकरत्वं सूचयति । एतदेव प्रधानतमत्वसाधनं श्लोकेनापि दर्शयन्नाह—शरीरोपचयमित्यादि । अनेकव्याधिनिर्घातकत्वं दर्शयन्नाह—तथा ज्वरातीसारेत्यादि । ज्वरादिषु चावस्थाविषयः शास्त्रादेव ज्ञेयः, दोषकार्ये ज्वरादौ बस्तिप्रयोगमभिधाय ज्वरादिकारणेऽपि दर्शयन्नाह—भवति चात्रेत्यादि । संसर्गो दोषद्वयप्रकोपः, प्रकृतिसमसमवेतज्वराद्यारम्भकदोषत्रयप्रकोपः सन्निपातोऽत्राऽभिप्रेतः ॥ ३—६ ॥

**तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षडष्टदशाङ्गुलप्रमाणानि कनिष्ठिकानामिकामध्यमाङ्गुलिपरिणाहान्यग्रेऽध्यर्धाङ्गुलद्वयङ्गुलार्धतृतीयाङ्गुलसन्निविष्टकर्णिकानि कङ्कश्येनबर्हिपक्षनाडीतुल्यप्रवेशानि मुद्गमाषकलायमात्रस्रोतांसि विदध्यान्नेत्राणि । तेषु त्वास्थापनद्रव्यप्रमाणमातुरहस्तसम्मितेन प्रसृतेन सम्मितौ प्रसृतौ द्वौ चत्वारोऽष्टौ विधेयाः ॥ ७ ॥**

**वर्षोत्तरेषु नेत्राणां बस्तिमानस्य चैव हि ॥**
**वयोबलशरीराणि समीक्ष्य वर्धयेद्विधिम् ॥ ८ ॥**

**पञ्चविंशतेरूर्ध्वं द्वादशाङ्गुलं, मूलेऽङ्गुष्ठोदरपरीणाहं, अग्रे कनिष्ठिकोदरपरीणाहं, अग्रे त्र्यङ्गुलसन्निविष्टकर्णिकं, गृध्रपक्षनाडीतुल्यप्रवेशं, कोलास्थिमात्रछिद्रं, क्लिन्नकलायमात्रछिद्रमित्येके, सर्वाणि मूले बस्तिनिबन्धनार्थं द्विकर्णिकानि; आस्थापनद्रव्यप्रमाणं तु विहिता द्वादशप्रसृताः । सप्ततेस्तूर्ध्वं नेत्रप्रमाणमेतदेव, द्रव्यप्रमाणं तु द्विरष्टवर्षवत् ॥ ९ ॥**

नेत्रप्रमाणमास्थापनद्रव्यप्रमाणं च प्रदर्शयितुमाह—तत्र सांवत्सरिकेत्यादि । तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणामित्यत्र यथासंख्याव्याख्यानेन सांवत्सरिकबालस्य निरूहयन्त्रं षडङ्गुलप्रमाणं, तत्कनिष्ठिकापरिणाहं, अग्रेऽध्यर्धाङ्गुलसन्निविष्टकर्णिकं, कङ्कपक्षनाडीतुल्यप्रवेशं मूले, मुद्गस्रोतश्चाग्रे विदध्यात् । छत्रा-(चक्रा)कारगुदत्रिकान्तःप्रवेशरोधिनी कर्णिका कथ्यते । कङ्कः वकचञ्चुः कृष्णवर्णः प्रसिद्ध एव । अष्टवर्षस्य पुनरष्टाङ्गुलप्रमाणं, तदनामिकापरिणाहं, अग्रे द्व्यङ्गुलसन्निविष्टकर्णिकं, श्येनपक्षनाडीतुल्यप्रवेशं मूले, माषबहिःस्रोतश्चाग्रे विदध्यात् । द्विरष्टवर्षस्य षोडशवर्षस्येत्यर्थः, किम्भूतं यन्त्रं दशाङ्गुलप्रमाणं, तन्मध्याङ्गुलिपरिणाहं, अर्धतृतीयाङ्गुलसन्निविष्टकर्णिकं, बर्ही मयूरः तत्पक्षनाडीप्रवेशं मूले, कलायस्रोतश्चाग्रे, विदध्यात् । तेष्विति सांवत्सरिकाष्टद्विरष्टवर्षेषु बालेषु यथासंख्यमातुरहस्तेन द्वौ चत्वारोऽष्टौ च प्रसृता विधेयाः । प्रसृतोऽत्र कुञ्चिताङ्गुलिः पाणिः, न तु पलद्वयं इति गयदासाचार्यः । आतुरहस्तग्रहणं मध्यमपुरुषहस्तोपलक्षणं, तेन तत्प्रसृतेन पलद्वयप्रमितेनेति व्याख्यानयति । अत्र मध्यवर्तिवर्षाणां द्रव्यमानं निर्दिशन्नाह—वर्षोत्तरेष्वित्यादि । समीक्ष्य यथास्वमभ्यूह्य नेत्रप्रमाणं बस्तिद्रव्यप्रमाणं चोत्कर्षयेत् ॥ ७—९ ॥

**मृदुर्बस्तिः प्रयोक्तव्यो विशेषाद्बालवृद्धयोः ॥**
**तयोस्तीक्ष्णः प्रयुक्तस्तु बस्तिर्हिंस्याद् बलायुषी१०**

बालवृद्धयोर्हीनोपचयशक्तिलक्षणबलत्वेनास्थापनस्य मात्राकृतं हीनत्वं प्रदर्श्य तीक्ष्णादिगुणहीनत्वं दर्शयन्नाह—मृदुर्बस्तिः प्रयोक्तव्य इत्यादि । तत्र मृदुद्रव्यकृतो बस्तिर्मृदुः, तीक्ष्णश्च तद्विपर्ययः ॥ १० ॥

**तत्र नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयानि श्लक्ष्णानि दृढानि गोपुच्छाकृतीन्यृजूनि गुटिकामुखानि ॥ ११ ॥**

शल्यत्वादस्य व्रणनेत्रप्रमाणमाह—व्रणनेत्रमष्टाङ्गुलमित्यादि। तानि च नेत्राणि किंमयानि किमाकृतीनि वा तदाह—तत्र

नेत्राणीत्यादि । रीतिः पित्तलः, मणिः स्फटिकादिः । श्लक्ष्णानि अकर्कशानि । दृढानि अजर्जराणि । गुटिकामुखानि अतीक्ष्णाग्राणि ॥ ११ ॥

**बस्तयश्चावृद्धानां मृदवो नातिबहला दृढाः प्रमाणवन्तो गोमहिषवराहाजोरभ्राणाम् ॥ १२ ॥**

**नेत्रालाभे हिता नाडी नलवंशास्थिसंभवा ॥**
**बस्त्यलाभे हितं चर्म सूक्ष्मं वा तान्तवं घनम्॥१३**

कीदृशाश्च बस्तय इत्याह—बस्तयश्चावृद्धानामित्यादि । नातिबहलाः नात्युपचिताः, नातिदीर्घा इत्यन्ये । तान्तवं वस्त्रम् । ॥ १२ ॥ १३ ॥

**बस्तिं निरुपदिग्धं तु शुद्धं सुपरिमार्जितम् ॥**
**मृद्वनुद्धतहीनं च मुहुः स्नेहविमर्दितम् ॥ १४ ॥**
**नेत्रमूले प्रतिष्ठाप्य न्युब्जं तु विवृताननम् ॥**
**बद्ध्वा लोहेन तप्तेन चर्मस्रोतसि निर्दहेत् ॥ १५ ॥**
**परिवर्त्य ततो बस्तिं बद्ध्वा गुप्तं निधापयेत् ॥**
**आस्थापनं च तैलं च यथावत्तेन दापयेत् ॥१६॥**

ग्रहणयोग्यबस्तेः परिकर्म बन्धविधिं च दर्शयन्नाह—बस्तिं निरुपदिग्धमित्यादि । निरुपदिग्धं मांसाद्युपलेपवर्जितम् । शुद्धं कषायरञ्जितम् । सुपरिमार्जितं सुवृत्तिमार्जितम् । मृद्वनुद्धतहीनं एतेन द्रव्यमानं समीक्ष्याधारभूतस्य बस्तेः प्रमाणं विधेयमित्यर्थः । न्युब्जं अधोमुखम् । गोमहिषादिबस्तयो निरूहयन्त्रे यथालाभं संयोज्याः । उत्तरबस्तियन्त्रे पुनरजोरभ्रबस्ती एव योजनीयौ इति ॥ १४—१६ ॥

**तत्र द्विविधो बस्तिः—नैरूहिकः, स्नैहिकश्च । आस्थापनं, निरूह इत्यनर्थान्तरम् । तस्य विकल्पो माधुतैलिकः । तस्य पर्यायशब्दो यापनो, युक्तरथः, सिद्धबस्तिरिति । स दोषनिर्हरणाच्छरीररोगहरणाद्वा निरूहः, वयःस्थापनादायुःस्थापनाद्वा आस्थापनम् । माधुतैलिकविधानं च निरूहक्रमचिकित्सिते वक्ष्यामः । तत्र यथाप्रमाणगुणविहितः स्नेहबस्तिविकल्पोऽनुवासनः पादावकृष्टः । अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयत इत्यनुवासनः। तस्यापि विकल्पोऽर्धार्धमात्रावकृष्टोऽपरिहार्यो मात्राबस्तिरिति ॥ १७ ॥**

अनर्थान्तरमिति एकार्थमित्यर्थः । यथाप्रमाणमित्यनेन सूचितं प्रमाणं प्रकटयन्नाह–पादावकृष्ट इति । यथावय इत्यादि वक्ष्यमाणवाक्यदर्शनादास्थापनस्य पदैस्त्रिभिरपकृष्टो हीनः पादावकृष्टः। अयमर्थः—सांवत्सरिकका(वा)लापेक्षया द्विप्रसृतादि चतुर्विंशतिपलावसानं निरूहप्रमाणं, तच्चतुर्थांशेन पलमारभ्य षड्पलानि यावदनुवासनस्य प्रमाणमिति । तस्यापि विकल्प इत्यादि तस्यानुवासनस्य च षट्पलप्रमाणस्यार्धार्धमात्रावकृष्टोऽपरिहार्यो मात्राबस्तिरिति ॥ १७ ॥

**निरूहः शोधनो लेखी स्नेहनो बृंहणो मतः ॥**

तयोर्भेदं दर्शयन्नाह—निरूह इत्यादि । शोधनद्रव्यसंयुक्तः शोधनो निरूहः । सर्वनिरूहानुवासनधर्मोऽयं, द्रव्यविशेषसङ्गात्तु क्वचिच्छोधनादीनामुत्कर्षापकर्षः । जेज्जटाचार्यस्तु शोधनादि च तस्य निरूहस्य कर्मेति वर्णयति ॥—

**निरूहशोधितान्मार्गान् सम्यक् स्नेहोऽनुगच्छति१८**
**अपेतसर्वदोषासु नाडीष्विव वहज्जलम् ॥**
**सर्वदोषहरश्चासौ शरीरस्य च जीवनः ॥ १९ ॥**
**तस्माद्विशुद्धदेहस्य स्नेहबस्तिर्विधीयते ॥ २० ॥**

निरूहशोधितमार्गेषु सम्यक् स्नेहवीर्यानुसरणं दर्शयन्नाह—निरूहेत्यादि ॥ १८—२० ॥

**तत्रोन्मादभयशोकपिपासारोचकाजीर्णार्शःपाण्डुरोगभ्रममदमूर्च्छाच्छर्दिकुष्ठमेहोदरस्थौल्यश्वासकासकण्ठशोषशोफोपसृष्टक्षतक्षीणचतुस्त्रिमासगर्भिणीदुर्बलाग्न्यसहा बालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्याः ॥ २१ ॥**

तत्रेत्यादि। भ्रमः चक्रारूढस्येव भ्रमणम् । मदः पूगफलेनेव मत्तता । मूर्छा चेतनाच्युतिः । उपसृष्टशब्दः उन्मादादिभिः शोफान्तैः सह सम्बन्धनीयः । क्षतः क्षतोरस्कः, क्षीणः कृशः । चतुस्त्रिमासगर्भिणीति सप्तमासाद् यावद् गर्भिणीनां च । तथाच वाग्भटः "मासात् सप्त च गर्भिणी" । वातरोगादृते क्षीणा इति क्षीणशब्दस्य पुनरुपादानादतिकृशः । वातरोगं विना क्षीणा नानुवास्या इति । उन्मादादिषु सामान्येन बस्तिनिषेधोऽत्राभिहितः; केचित्तु केषांचित्प्रतिप्रसवमपवादरूपेणाहुः। तत्रोन्मादापस्मारभ्रममदमूर्च्छासु संज्ञानाशापगमे शुद्धस्य आतुरस्य अनुबन्धोपचरणाय बस्तिर्देयः, कुष्ठिनामर्शसां च मूढवातानां प्रयोज्यः, वाताद्युदरेषु निषिद्धोऽपि उदरादिषु पञ्चसु प्रयोक्तव्यः, शोथक्षतोरस्कयोरनुवासननिषेधो न निरूहस्य; वर्षादर्वाग् बालस्य, नवत्यूर्ध्वं वृद्धस्य मृदुरपि बस्तिर्निषिद्धः, अतोऽन्यथा तीक्ष्ण एव; एतेन अवस्थावशात् निषिद्धमपि कार्यं स्यात् ॥ २१ ॥

**उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः ॥**
**अवश्यं स्थापनीयाश्च नानुवास्याः कथञ्चन॥२२॥**

क्वचिदेवास्थापनस्यावस्थायां प्रतिप्रसवमुद्दिशन्नाह—उदरी चेत्यादि । सा चावस्था तन्त्रान्तरादनुसर्तव्या । तत्रोदरे वाग्भटः, "सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम् । सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ।" एवं प्रमेहादिषु चिकित्सितमालोच्य आस्थापनावस्था ज्ञातव्या ॥ २२ ॥

**असाध्यता विकाराणां स्यादेषामनुवासनात् ॥**
**असाध्यत्वेऽपि भूयिष्ठं गात्राणां सदनं भवेत्२३**

निषिद्धाचरणदोषमुद्दिशन्नाह—असाध्यता इत्यादि । एषां विकाराणामुदरादीनाम् । गात्रसदनं अङ्गग्लानिः ॥ २३ ॥

पक्काशये तथा श्रोण्यां नाभ्यधस्ताच्च सर्वतः ॥
सम्यक्प्रणिहितो बस्तिः स्थानेष्वेतेषु तिष्ठति२४
पक्काशयाद्बस्तिवीर्यं खैर्देहमुपसर्पति ॥
वृक्षमूले निषिक्तानामपां वीर्यमिव द्रुमम् ॥ २५॥

कथं तर्हि पक्काशयादिमात्रगतो बस्तिः क्वचित् सर्वेषामवयवानामवसादं, क्वचित् सर्वाङ्गगतानां सावशेषाणां हरणं शमनं च जनयतीत्याह—पक्काशय इत्यादि। पक्काशयाद्बस्तिवीर्यं स्रोतोभिरनुसर्पति कृत्स्नदेहे; वीर्यं, शक्तिः, प्रभाव, इत्यनर्थान्तरम् । तिष्ठति सर्वत्र गुणकारी भवति ॥ २४—२५ ॥

स चापि सहसा बस्तिः केवलः समलोऽपि वा।
प्रत्येति त्वनिलैर्वीर्यमपानाद्यैर्विनीयते ॥ २६ ॥

कथं निर्गतोऽपि तादृशः स्यादित्याह—स चापीत्यादि । प्रत्येति प्रत्यागच्छति । वीर्यं स्नेहादिगुणः। अपानाद्यैरिति अपानाद्यैः इति आद्यपदेन उदानादयो बोद्धव्याः । विनीयते विशेषेण सर्वशरीरादिषु नीयते॥ २६ ॥

वीर्येण बस्तिरादत्ते दोषानापादमस्तकात् ॥
पक्काशयस्थोऽम्बरगो भूमेरर्को रसानिव ॥ २७ ॥
स कटीपृष्ठकोष्ठस्थान् वीर्येणालोड्य संचयान् ॥
उत्खातमूलान् हरति दोषाणां साधुयोजितः॥ २८॥

सकलावयवगतदोषहरणं बस्तेरेकस्थानस्थितस्योपमानेन दर्शयन्नाह—वीर्येणेत्यादि । अन्ये तु अत्रामुं श्लोकं न पठन्ति ॥ २७ ॥ २८ ॥

दोषत्रयस्य यस्माच्च प्रकोपे वायुरीश्वरः ॥
तस्मात्तस्यातिवृद्धस्य शरीरमभिनिघ्नतः ॥ २९ ॥
वायोर्विषहते वेगं नान्या बस्तेर्ऋते क्रिया ॥
पवनाविद्धतोयस्य वेला वेगमिवोदधेः ॥ ३० ॥
शरीरोपचयं वर्णं बलमारोग्यमायुषः ॥
कुरुते परिवृद्धिं च बस्तिः सम्यगुपासितः ॥ ३१ ॥

दोषत्रयस्येत्यादि । यथा उदधेः समुद्रस्य, पवनाविद्धतोयस्य अनिलेनात्युग्रसलिलस्य, वेला कूलमर्यादा, वेगं विषहते विशेषेण सहते ॥ २९—३१ ॥

अत ऊर्ध्वं व्यापदो वक्ष्यामः ।

तत्र नेत्रं चलितं, विवर्तितं, पार्श्वावपीडितं, अत्युत्क्षिप्तं, अवसन्नं, तिर्यक्क्षिप्तमिति षट् प्रणिधानदोषाः; अतिस्थूलं, कर्कशं, अवनतं, अणु, भिन्नं, सन्निकृष्टविप्रकृष्टकर्णिकं, सूक्ष्मातिच्छिद्रं, अतिदीर्घं, अतिह्रस्वमित्येकादश नेत्रदोषाः; बहुलता; अल्पता, सच्छिद्रता, प्रस्तीर्णता, दुर्बद्धतेति पञ्च बस्तिदोषाः; अतिपीडितता, शिथिलपीडितता, भूयो भूयोऽवपीडनं, कालातिक्रम इति चत्वारः पीडनदोषाः; आमता, हीनता, अतिमात्रता, अतिशीतता, अत्युष्णता, अतितीक्ष्णता, अतिमृदुता, अतिस्निग्धता, अतिरूक्षता, अतिसान्द्रता, अतिद्रवता, इत्येकादश द्रव्यदोषाः; अवाक्शीर्षोच्छीर्षन्युब्जोत्तानसङ्कुचितदेहस्थितता, दक्षिणपार्श्वशायिनः प्रदानमिति सप्त शय्यादोषाः; एवमेताश्चतुश्चत्वारिंशद्व्यापदो वैद्यनिमित्ताः; आतुरनिमित्ताः पञ्चदश आतुरोपद्रवचिकित्सिते वक्ष्यन्ते, स्नेहस्त्वष्टाभिः कारणैः प्रतिहतो न प्रत्यागच्छति त्रिभिर्दोषैः, अशनाभिभूतो, मलव्यामिश्रो, दूरानुप्रविष्टो, अस्विन्नस्य, अनुष्णो, अल्पो, भुक्तवतो, अल्पाशनस्य चेति वैद्यातुरनिमित्ता भवन्ति; अयोगस्तूभयोराध्मानं, परिकर्तिका, परिस्रावः, प्रवाहिका, हृद्योपसरणं, अङ्गप्रग्रहो, अतियोगो, जीवादानमिति नव व्यापदो वैद्यनिमित्ता भवन्ति ॥ ३२ ॥

चलितं विशेषेण कम्पितम् । विवर्तितं प्रकृष्टमेव मोटितम् । अवसन्नं अधोभागगतिकम् । सूक्ष्मं सूक्ष्ममुखं, अतिदीर्घं बृहन्मुखमित्यर्थः। बहुलता मांसोपचितत्वं, अन्ये विपुलतमलमाहुः । अतिपीडितेत्यादि । आमतेत्यादि । आमः अपक्वस्नेहः । एकादश द्रव्यदोषा यथासम्भवं स्नेहबस्तिनिरूहोभयाश्रिताः वेदितव्याः । अवाक्शीर्षेत्यादि । अवाक्शीर्षः अधोमुखः । उच्छीर्षकः उर्ध्वमस्तकः । न्युब्जः अधोमुखः । स्थितः उपविष्टः। उपचारेण शय्या प्रतिपाद्यते। स्नेह इत्यादि । उभयोरिति निरूहानुवासनयोः । एतदुक्तं भवति अयोगादिव्यापत्सु काश्चित् निरूहाश्रिताः काश्चिद् व्यापदोऽनुवासनाश्रयाः काश्चिदुभयाश्रिता इति ॥ ३२ ॥

भवति चात्र ।

षट्सप्ततिः समासेन व्यापदः परिकीर्तिताः ॥
तासां वक्ष्यामि विज्ञानं सिद्धिं च तदनन्तरम्॥३३॥

विज्ञानं लक्षणम् । सिद्धिं चिकित्सितम् ॥ ३३ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने पञ्चत्रिंशत्तमोऽध्यायः ।

---

## षट्त्रिंशत्तमोऽध्यायः ।

अथातो नेत्रबस्तिव्यापच्चिकित्सितं व्याख्यास्यामः ॥ यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥

नेत्रानन्तरमादिशब्दो लुप्तो द्रष्टव्यः; तेन प्रणिधानद्रव्यशय्याव्यापदोऽपि गृह्यन्ते ॥ १ ॥ २ ॥

अथ नेत्रे विचलिते तथा चैव विवर्तिते ॥
गुदे क्षतं रुजा वा स्यात्तत्र सद्यःक्षतक्रियाः ॥ ३ ॥
अत्युत्क्षिप्तेऽवसन्ने च नेत्रे पायौ भवेद्रुजा ॥
विधिरत्रापि पित्तघ्नः कार्यः स्नेहैश्च सेचनम्॥ ४ ॥

तिर्यक्प्रणिहिते नेत्रे तथा पार्श्वावपीडिते ॥
मुखस्यावरणाद्बस्तिर्न सम्यक् प्रतिपद्यते ॥
ऋजु नेत्रं विधेयं स्यात्तत्र सम्यग्विजानता ॥ ५ ॥

क्षतक्रियाः मधुघृताभ्यङ्गाद्याः अत्युत्क्षिप्त इत्यादि। अत्रात्युत्क्षिप्तेऽवसन्ने च नेत्राभिघातेन वातपैत्तिकपायुवेदनायाम्। पित्तघ्न इति मधुरशीतादि, स्नेहैश्च सेचनमिति स्नेहावसेचनं अनिलापहम् ॥ ३—५ ॥

अतिस्थूले कर्कशे च नेत्रे चावनते तथा ॥
गुदे भवेत् क्षतं रुक् च साधनं पूर्ववत् स्मृतम्॥६॥
आसन्नकर्णिके नेत्रे भिन्नेऽणौ वाप्यपार्थकः ॥
अवसेको भवेद्बस्तेस्तस्माद्दोषान् विवर्जयेत् ॥ ७ ॥
प्रकृष्टकर्णिके रक्तं गुदमर्मप्रपीडनात् ॥
क्षरत्यत्रापि पित्तघ्नो विधिर्बस्तिश्च पिच्छिलः ॥८॥
ह्रस्वे त्वणुस्रोतसि च क्लेशो बस्तिश्च पूर्ववत् ॥
प्रत्यागच्छंस्ततः कुर्याद्रोगान् बस्तिविघातजान्॥९॥
दीर्घे महास्रोतसि च ज्ञेयमत्यवपीडवत् ॥

नेत्रदोषाभिधानमाह—अतिस्थूल इत्यादि। पूर्ववत् स्मृतं सद्यःक्षतक्रियेत्यर्थः। आसन्नकर्णिके बस्तिरपार्थकः व्यर्थः। भिन्नेऽणौ अणुभिन्ने नेत्रे। अवसेकः क्षरणम्। प्रकृष्टकर्णिकं त्र्यङ्गुलादूर्ध्वं चतुरङ्गुले सन्निविष्टकर्णिकम्। तत्रार्शोयन्त्रेण चतुरङ्गुलेनान्तःप्रविष्टेन स्थूलाग्रत्वात् गुदक्षरणं न स्यात्, बस्तिना पुनस्तीक्ष्णाग्रेण चतुरङ्गुलेन सद्यःप्राणहरगुदमर्म सम्पीड्यते, अतस्तच्चिकित्सितं युक्तम्। ह्रस्वे प्रमाणहीने। अणुस्रोतसि सूक्ष्मच्छिद्रे। क्लेश इति अणुस्रोतःप्रवाहेणोत्पन्नकालातिक्रमेण। बस्तिश्च पूर्ववदिति प्रकृष्टकर्णिके यथा अपार्थको बस्तिस्तद्वदिति। ह्रस्वत्वाद्धेतोरत्रापि तथावत्। प्रत्यागच्छन्नवघुटन्। बस्तिविघातजान् रोगान् मूत्राघातमूत्रकृच्छ्रादीन् कुर्यात्। चिकित्सितं चानुक्तमपि रोगापेक्षया मूत्राघातादिचिकित्सितवत् कर्तव्यम्। जेज्जटाचार्यस्तु ईदृशं व्याख्यानयति—पूर्ववद्बस्तिः पिच्छाबस्तिरित्यर्थः। दीर्घे महास्रोतसि च अत्यवपीडवन्नासामुखान्निर्गमनं, गलपीड़ादि चिकित्सितं च ज्ञेयम्॥६-९॥—

प्रस्तीर्णे बहले चापि बस्तौ दुर्बद्धदोषवत् ॥ १० ॥
बस्तावल्पेऽल्पता वापि द्रव्यस्याल्पगुणा मताः ॥
दुर्बद्धे चाणुभिन्ने च विज्ञेयं भिन्ननेत्रवत् ॥ ११ ॥

नेत्रदोषसाधनमभिधाय बस्तिदोषचिकित्सितं चाभिधातुमाह—प्रस्तीर्णे इत्यादि। अल्पे यथोचितप्रमाणहीने। यथाभिन्नबस्तिनेत्रे तद्वद्दुर्बद्धे भिन्ने च बस्तावित्यर्थः ॥ १० ॥ ११ ॥

अतिप्रपीडितो बस्तिः प्रयात्यामाशयं ततः ॥
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते ॥ १२ ॥
तत्र तूर्णं गलापीडं कुर्याच्चाप्यवधूननम् ॥
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् १३
शनैः प्रपीडितो बस्तिः पक्वाधानं न गच्छति ॥
न च सम्पादयत्यर्थांस्तस्माद्युक्तं प्रपीडयेत् ॥ १४ ॥
भूयो भूयोऽवपीडेन वायुरन्तः प्रपीड्यते ॥
तेनाध्मानं रुजश्चोग्रा यथास्वं तत्र बस्तयः ॥ १५ ॥
कालातिक्रमणात् क्लेशो व्याधिश्चाभिप्रवर्धते ॥
तत्र व्याधिबलघ्नं तु भूयो बस्तिं निधापयेत् ॥ १६ ॥

बस्तिदोषानभिधाय पीडनदोषानभिधातुमाह—अतिप्रपीडित इत्यादि। प्रपद्यते निर्गच्छतीत्यर्थः। अवधूननं केशादि उत्क्षिप्य चालनम्। सेकांश्च शीतलान् क्षीरेक्षुरसयष्टिमधुककषायधान्याम्लचुक्रादिशीतद्रव्यपरिषेकान्। अन्तः उदरस्येति शेषः। तेनेति उदरान्तर्गतेन वायुना आध्मानं रुजश्च। यथास्वं बस्तय इति ये यस्यात्मीया बस्तयः प्रतीकारहेतुत्वेन। कालातिक्रमणादित्यादि। व्याधिः अभिप्रवर्धते इति चिरकालनेत्रावस्थानहेतुकगुदमार्गावरोधत्वेन प्रवृत्त्यभिमुखं नाभिपद्यते, तेनानुलोमसाध्यो व्याधिः प्रवर्धत इत्यर्थः ॥१२—१६॥

गुदोपदेहशोफौ तु स्नेहोऽपक्वः करोति हि ॥
तत्र संशोधनो बस्तिर्हितं चापि विरेचनम् ॥ १७ ॥
हीनमात्रावुभौ बस्ती नातिकार्यकरौ मतौ ॥
अतिमात्रौ तथानाहक्लमातीसारकारकौ ॥ १८ ॥
मूर्च्छां दाहमतीसारं पित्तं चात्युष्णतीक्ष्णकौ ॥
मृदुशीतावुभौ वातविबन्धाध्मानकारकौ ॥ १९ ॥
तत्र हीनादिषु हितः प्रत्यनीकः क्रियाविधिः ॥
तत्र सान्द्रे तनुं बस्तिं तनौ सान्द्रं च दापयेत्॥२०॥
स्निग्धोऽतिजाड्यकृद्रूक्षः स्तम्भाध्मानकृदुच्यते ॥
बस्तिं रूक्षमतिस्निग्धे स्निग्धं रूक्षे च दापयेत् २१॥

पीडनदोषानभिधाय द्रव्यदोषान्निर्दिशन्नाह—गुदोपदेह इत्यादि। उपदेहः लेपः। हितं चापि विरेचनमिति रूक्षं चापि विरेचनमिति गयदासः। हीनमात्रावित्यादि। उभौ बस्ती स्नेहबस्तिनिरूहबस्ती। प्रत्यनीक इति हीनमात्रेऽधिकमात्रोऽतिमात्रे हीनमात्रः, तीक्ष्णे मृदुः, मृदौ तु तीक्ष्णः, उष्णे शीतः, शीते पुनरुष्णः। अतिजाड्यकृत् अतिशयेन क्लेदकारी ॥ १७—२१ ॥

अतिपीडितवद्दोषान् विधिं चाप्यवशीर्षके ॥
उच्छीर्षके समुन्नाहं बस्तिः कुर्याच्च मेहनम् ॥ २२ ॥
तत्रोत्तरो हितो बस्तिः सुस्विन्नस्य सुखावहः ॥
न्युब्जस्य बस्तिर्नाप्नोति पक्वाधानं विमार्गगः ॥ २३ ॥
हृद्गुदं बाधते चात्र वायुः कोष्ठमथापि च ॥
उत्तानस्यावृते मार्गे बस्तिर्नान्तः प्रपद्यते ॥ २४ ॥
नेत्रसंवेजनभ्रान्तो वायुश्चान्तः प्रकुप्यति ॥
देहे सङ्कुचिते दत्तः सक्थ्नोरप्युभयोस्तथा ॥ २५ ॥
न सम्यगनिलाविष्टो बस्तिः प्रत्येति देहिनः ॥
स्थितस्य बस्तिर्दत्तस्तु क्षिप्रमायात्यवाङ्मुखः ॥ २६ ॥

**न चाशयं तर्पयति तस्मान्नार्थकरो हि सः ॥**
**नाप्नोति बस्तिर्दत्तस्तु कृत्स्नं पक्वाशयं पुनः ॥ २७ ॥**
**दक्षिणाश्रितपार्श्वस्य वामपार्श्वानुगो यतः ॥**
**न्युब्जादीनां प्रदानं च बस्तेर्नैव प्रशस्यते ॥ २८ ॥**
**पश्चादनिलकोपोऽत्र यथास्वं तत्र कारयेत् ॥**
**व्यापदः स्नेहबस्तेस्तु वक्ष्यन्तेऽत्र चिकित्सिते ॥ २९ ॥**

द्रव्यदोषानभिधाय शय्यादिदोषानभिधातुमाह—अतिपीडितवदित्यादि । अतिप्रपीडितो बस्तिः प्रयात्यामाशयमित्यादिवदित्यर्थः । उच्छीर्षके उच्छ्रितशिरस्के पुरुषे बस्तिर्दत्तः । मेहनं मेढ्रम् । समुन्नाहं सम्यगुन्नाहो यत्र तत्तादृशमात्मानं कुर्यादित्यर्थः । तस्य मेढ्रादिसुस्निग्धस्य पुरुषस्योत्तरो बस्तिः । 'हितो बस्तिः सुखावह' इति गयी । जेज्जटाचार्यस्तु "उच्छीर्षके समुन्नाहं कुर्यात् सस्नेहमेहनम् । तत्रोत्तरो हितो बस्तिः सुस्निग्धश्च सुखावहः" इति पठित्वा व्याख्यानयति—सस्नेहमेहनं संसृष्टमूत्रप्रवर्धनं; तत्र प्रतीकार उत्तरो बस्तिरिति । सुस्निग्धस्य शोधनो निरूह इति, न पुनरुत्तरबस्तिरिति । वृद्धमते चायं पाठोऽन्यथा । तथाच,—"उच्छीर्षके समुन्नाहो बस्तेः कृच्छ्रूलमेहनं" इति । न्युब्जस्य विमार्गगः बस्तिः पक्वाधानं पक्वाशयं नाप्नोति । हृद्गुदं बाधते वायुः कोष्ठं च बाधते इत्यर्थः । उत्तानस्येत्यादि । नेत्रसंवेजनेन भ्रान्तो वायुः । अवाङ्मुखः अधोमुखः । दक्षिणाश्रितपार्श्वस्य पुरुषस्य बस्तिर्दत्तः सन् कृत्स्नं पक्वाशयं न प्राप्नोति । कुतः इत्याह,—यतः पक्वाशयो वामपार्श्वानुगो वामपार्श्वमनुगच्छति ॥ २२—२९ ॥

**अयोगाद्यास्तु वक्ष्यामि व्यापदः सचिकित्सिताः ॥**
**अनुष्णोऽल्पौषधो हीनो बस्तिर्नैति प्रयोजितः ॥ ३० ॥**
**विष्टम्भाध्मानशूलैश्च तमयोगं प्रचक्षते ॥**
**तत्र तीक्ष्णो हितो बस्तिस्तीक्ष्णं चापि विरेचनम् ३१**
**सशेषान्ने तथा भुक्ते बहुदोषे च योजितः ॥**
**अत्याशितस्यातिबहुर्बस्तिर्मन्दोष्ण एव च ॥ ३२ ॥**
**अनुष्णलवणस्नेहो ह्यतिमात्रोऽथवा पुनः ॥**
**तथा बहुपुरीषश्च क्षिप्रमाध्मापयेन्नरम् ॥ ३३ ॥**
**हृत्कटीपार्श्वपृष्ठेषु शूलं तत्रातिदारुणम् ॥**
**तत्र तीक्ष्णतरो बस्तिर्हितं चाप्यनुवासनम् ॥ ३४ ॥**
**अतितीक्ष्णोष्णलवणो रूक्षो बस्तिः प्रयोजितः ॥**
**सपित्तं कोपयेद्वायुं कुर्याच्च परिकर्तिकाम् ॥ ३५ ॥**
**नाभिबस्तिगुदं तत्र छिनत्तीवाति देहिनः ॥**
**पिच्छाबस्तिर्हितस्तस्य स्नेहश्च मधुरैः शृतः ॥ ३६ ॥**
**अत्यम्ललवणस्तीक्ष्णः परिस्रावाय कल्पते ॥**
**दौर्बल्यमङ्गसादश्च जायते तत्र देहिनः ॥ ३७ ॥**
**परिस्रवेत्ततः पित्तं दाहं सञ्जनयेद्गुदे ॥**
**पिच्छाबस्तिर्हितस्तत्र बस्तिः क्षीरघृतस्य च ॥ ३८ ॥**
**प्रवाहिका भवेत्तीक्ष्णान्निरूहात् सानुवासनात् ॥**
**सदाहशूलं कृच्छ्रेण वासृक् तत्रोपवेश्यते ॥ ३९ ॥**
**पिच्छाबस्तिर्हितस्तत्र पयसा चैव भोजनम् ॥**
**सर्पिर्मधुरकैः सिद्धं तैलं चाप्यनुवासनम् ॥ ४० ॥**
**अतितीक्ष्णो निरूहो वा सवाते चानुवासनः ॥**
**हृदयस्योपसरणं कुरुते चाङ्गपीडनम् ॥ ४१ ॥**
**दोषैस्तत्र रुजस्तास्ता मदो मूर्च्छाङ्गगौरवम् ॥**
**सर्वदोषहरं बस्तिं शोधनं तत्र दापयेत् ॥ ४२ ॥**
**रूक्षस्य बहुवातस्य तथा दुःशयितस्य च ॥**
**बस्तिरङ्गग्रहं कुर्याद्रूक्षो मृद्वल्पभेषजः ॥ ४३ ॥**
**तत्राङ्गसादः प्रस्तम्भो जृम्भोद्वेष्टनवेपकाः ॥**
**पर्वभेदश्च तत्रेष्टाः स्वेदाभ्यञ्जनबस्तयः ॥ ४४ ॥**
**अत्युष्णतीक्ष्णोऽतिबहुर्दत्तोऽतिस्वेदितस्य च ॥**
**अल्पदोषस्य वा बस्तिरतियोगाय कल्पते ॥ ४५ ॥**
**विरेचनातियोगेन समानं तच्चिकित्सितम् ॥**
**पिच्छाबस्तिप्रयोगश्च तत्र शीतः सुखावहः ॥ ४६ ॥**
**अतियोगात्परं यत्र जीवादानं विरिक्तवत् ॥**
**देयस्तत्र हितश्चापि पिच्छाबस्तिः सशोणितः ॥ ४७ ॥**
**नवैता व्यापदो यास्तु निरूहं प्रत्युदाहृताः ॥**
**स्नेहबस्तिष्वपि हि ता विज्ञेया कुशलैरिह ॥ ४८ ॥**
**इत्युक्ता व्यापदः सर्वाः सलक्षणचिकित्सिताः ॥**
**भिषजा च तथा कार्यं यथैता न भवन्ति हि ॥ ४९ ॥**

उपसंहारव्याजेन अयोगादिव्यापदः सचिकित्सिता आह—अयोगेत्यादि । परिस्रावाय कल्पान्तपरिस्रावोऽयमिति केवलपित्तजो न तु वमनविरेचनपरिस्राववत् कफपित्तसम्भवः । तत्र पित्तरक्तातिभूयिष्ठायां सर्पिषा, वातरक्तभूयिष्ठायां तैलेनानुवासनम् । क्षीरेण भोजनं वातपित्तकफप्रशमनीकम् । कफसंसर्गे तु कफहरद्रव्यसंस्कृतक्षीरभोजनमिति ज्ञेयं, तन्त्रान्तरदर्शनात् । रुजः तोदादयः कण्ड्वादयश्च । सर्वदोषहरमिति सर्वदोषहरद्रव्यक्काथं, गोमूत्रत्रिवृदादिकल्कं शोधनम् । शोधनं लङ्गतदोषमधो नयति । सर्वदोषहरं तु सद्य एव दोषान् दुष्टान् शमयति । रूक्षः वातप्रकृतिः । शीतः शीतोपचारः । विरिक्तशब्देनात्र विरेकातियोगोत्पन्नं जीवादानं, अतो विरेकातियोत्पन्नजीवादानवल्लिङ्गचिकित्सिताभ्यामेतद्बस्त्यतियोगोत्पन्नं जीवादानं ज्ञेयम् । तत्र विशेषं चिकित्सितमाह—देय इत्यादि । तथा पिच्छाबस्तिः सशोणितोऽपि जीवादाने देय इत्यर्थः ॥ ३०—४९ ॥

**पक्षाद्विरेको वान्तस्य ततश्चापि निरूहणम् ॥**
**सद्योनिरूढोऽनुवास्यः सप्तरात्राद्विरेचितः ॥ ५० ॥**

इदानीं पञ्चानां कर्मणां क्रमेण क्रियमाणानां यतो यतो यद्यद्यावता कालेन करणीयं तत्तदुपदिशन्नाह—पक्षादित्यादि । सम्यग्योगेन वान्तस्य पुरुषस्य विरेचनं पक्षान्नार्वाग् नापि परतः; तत्रार्वाक् क्रियमाणं पुरुषानलबलयोरबलत्वात् व्यापदमाव-

इति, अतिपरतः पुनः स्नेहस्वेदादिगुणोऽन्तरितः स्यात्; तस्मात् पक्षादेव वान्तो विरेचनीयः । तत्र प्रधानशुद्धिमपेक्ष्यान्नसंसर्गेण दिनानि षडतिक्रम्य मधुरादिरससंसर्गमाचरेत् । स्नेहपानेनापि दिनानि षडतिक्रमेत् । ततः स्वेदं समाचरन् लघूष्णं भुज्यमानस्त्र्यहं स्थितश्चतुर्थेऽहनि विरेकं कुर्यात् । ततस्तस्माद् विरेकादन्नसंसर्गेण दिनानि षडतिक्रम्यानन्तरं मधुरादिरससंसर्गं समाचरन् सप्तरात्राद्विरेचित इति वाक्यादष्टमादिदिवसेष्वनुवासनानि यथादोषं विदध्यात् । ततः षोडशेऽह्नि स्नेहाभ्यक्तः स्वेदितश्च आस्थापनं सेवेत । गयदासस्तु चरकाचार्याभिप्रायेण विरेचनादूर्ध्वं षडहं कृतान्नसंसर्गस्यावस्थाविशेषेण स्नेहपानमनुवासनं च द्वयमपि मन्यते । तथा च चरकाचार्यवचनम्,—"संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेताप्यनुवासयेद्वा" इति । तत्र विरेचनादूर्ध्वं अन्नसंसर्गेण दिनानि षट्, ततो मधुरादिरससंसर्गमाचरेत्, स्नेहपानेनापि दिनानि षड़तिक्रामेत्, ततो दिनत्रयं लघूष्णं भुञ्जानश्चतुर्थेऽहनि स्नेहाभ्यक्तः स्वेदितश्च आस्थापनं सेवेत । स्नेहपानपूर्वकस्यानुवासनपूर्वकस्य चास्थापनस्यावस्था गयदासेन दर्शिता । यथा हीनविरिक्तस्यावशिष्टपरिपक्वामसंचयावृते वायौ स्नेहपानपूर्वकमास्थापनं क्वचिद्व्याध्यवस्थावशात् प्राक् स्नेहनविरेचितस्यास्थापनमिति । निरूढः पुरुषः सद्य एव तद्दिवसे एवानुवास्यः । एतेन दत्तनिरूहो यथोक्तं भोजयित्वार्द्रपाणिरेवानुवास्यः । विरेचितस्तु सप्तरात्रात् परतोऽनुवास्यः नार्वाक् । उक्तं हि,—"विरेचनात्सप्तरात्रे गते जातबलाय वै । कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः"—इति । केचिदन्यादृशं व्याख्यानं कुर्वन्ति । तच्च गयदासाचार्येण बहुधा दूषितत्त्वादस्माभिरप्युपेक्षितम् ॥ ५० ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने षट्त्रिंशत्तमोऽध्यायः ॥

---

## सप्तत्रिंशत्तमोऽध्यायः ।

**अथातोऽनुवासनोत्तरबस्तिचिकित्सितं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**
**विरेचनात् सप्तरात्रे गते जातबलाय च ॥**
**कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः ॥ ३ ॥**

अनुवास्यः सप्तरात्राद् विरेचित इति यदुक्तं तद्बललाभे एव नान्यथेति दर्शयन्नाह—जातबलायेति । जातबलस्य चानुवासनं देयं, यत उत्पन्नबलस्यैवाग्निर्बलवाननुवासनहेतुः । तथाचोक्तम्,—"पश्चादग्निबलं ज्ञात्वा सम्यग् देयोऽनुवासनः" ॥ १—३ ॥

**यथावयोनिरूहाणां या मात्राः परिकीर्तिताः ॥**
**पादावकृष्टास्ताः कार्याः स्नेहबस्तिषु देहिनाम् ॥ ४ ॥**

वयोविशेषानुरूपमात्रामुपदिशन्नाह—यथा वयोनिरूहाणामित्यादि । पादावकृष्टाः चतुर्भागावशिष्टाः ॥ ४ ॥

**उत्सृष्टानिलविण्मूत्रे नरे बस्तिं विधापयेत् ॥**
**एतैर्हि विहतः स्नेहो नैवान्तः प्रतिपद्यते ॥ ५ ॥**
**स्नेहबस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ॥**
**स्नेहवीर्यं तथा दत्तं देहं चानुविसर्पति ॥ ६ ॥**

यस्मादेतैः कारणैः अनिलविण्मूत्रैः नेत्रद्वारावरकैः अन्तः विहितो दत्तः स्नेहो नैवान्तः प्रतिपद्यते नैवान्तः प्रविशतीत्यर्थः, अतो विण्मूत्रनिर्हरणे कृते स्नेहबस्तिर्विधीयेत इति दर्शयन्नाह—स्नेहेत्यादि । तथा तेन प्रकारेण शुद्धे शरीरे स्नेहबस्तिः स्नेहवीर्यं दत्ते इत्यर्थः । "स्नेहो दोषैरभिहतः स्रोतःसु न विसर्पति"—इति केचित् पठन्ति । अभिहतः आच्छादित इत्यर्थः ॥ ५ ॥ ६ ॥

**अत ऊर्ध्वं प्रवक्ष्यामि तैलानीह यथाक्रमम् ॥**
**पानान्वासननस्येषु यानि हन्युर्गदान् बहून् ॥ ७ ॥**
**शठीपुष्करकृष्णाह्वामदनामरदारुभिः ॥**
**शताह्वाकुष्ठयष्ट्याह्ववचाबिल्वहुताशनैः ॥ ८ ॥**
**सुपिष्टैर्द्विगुणं क्षीरं तैलं तोयचतुर्गुणम् ॥**
**पक्त्वा बस्तौ विधातव्यं मूढवातानुलोमनम् ॥ ९ ॥**
**अर्शांसि ग्रहणीदोषमानाहं विषमज्वरम् ॥**
**कट्यूरुपृष्ठकोष्ठस्थान् वातरोगांश्च नाशयेत् ॥ १० ॥**
**वचापुष्करकुष्ठैलामदनामरसिन्धुजैः ॥**
**काकोलीद्वययष्ट्याह्वमेदायुग्मनराधिपैः ॥ ११ ॥**
**पाठाजीवकजीवन्तीभार्गीचन्दनकट्फलैः ॥**
**सरलागुरुबिल्वाम्बुवाजिगन्धाग्निवृद्धिभिः ॥ १२ ॥**
**विडङ्गारग्वधश्यामात्रिवृन्मागधिकर्धिभिः ॥**
**पिष्टैस्तैलं पचेत् क्षीरपञ्चमूलरसान्वितम् ॥ १३ ॥**
**गुल्मानाहाग्निषङ्गार्शोग्रहणीमूत्रसङ्गिनाम् ॥**
**अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिणाम् ॥ १४ ॥**

अमरदारु देवदारु । सिन्धुजं सैन्धवम् । नराधिपः कृतमालः । सरतीति सरला त्रिवृत्, विरेचनीयत्वात् । पञ्चमूलं बिल्वादि, तस्य रसः क्वाथः । अत्र तैले नराधिपारग्वधसरलात्रिवृत् एतयोर्द्विगुणा मात्रा देया । उक्तं च,—"घृते तैले च युक्ते यद् द्रव्यं तु पुनरुच्यते । तद्द्यातव्यमिहाचार्यैर्भागतो द्विगुणं मतम् ॥" ७—१४ ॥

**चित्रकातिविषापाठादन्तीबिल्ववचामिषैः ॥**
**सरलांशुमतीरास्नानीलिनीचतुरङ्गुलैः ॥ १५ ॥**
**चव्याजमोदकाकोलीमेदायुग्मसुरद्रुमैः ॥**
**जीवकर्षभवर्षाभूबस्तगन्धशताह्वयैः ॥ १६ ॥**
**रेण्वश्वगन्धामञ्जिष्ठाशटीपुष्करतस्करैः ॥**
**सक्षीरं विपचेत्तैलं मारुतामयनाशनम् ॥ १७ ॥**

**गृध्रसीखञ्जकुब्जाढ्यमूत्रोदावर्तरोगिणाम् ॥**
**शस्यतेऽल्पबलाग्नीनां बस्तावाशु नियोजितम् ॥१८॥**
**भूतिकैरण्डवर्षाभूरास्नावृषकरोहिषैः ॥**
**दशमूलसहाभार्गीषड्ग्रन्थामरदारुभिः ॥ १९ ॥**
**बलानागबलामूर्वावाजिगन्धामृताद्वयैः ॥**
**सहाचरवरीविश्वाकाकनासाविदारिभिः ॥ २० ॥**
**यवमाषातसीकोलकुलत्थैः क्वथितैः शृतम् ॥**
**जीवनीयप्रतीवापं तैलं क्षीरचतुर्गुणम् ॥ २१ ॥**
**जङ्घोरुत्रिकपार्श्वांसबाहुमन्याशिरःस्थितान् ॥**
**हन्याद्वातविकारांस्तु बस्तियोगैर्निषेवितम् ॥ २२ ॥**
**जीवन्त्यतिबलामेदाकाकोलीद्वयजीवकैः ॥**
**ऋषभातिविषाकृष्णाकाकनासावचामरैः ॥ २३ ॥**
**रास्नामदनयष्ट्याह्वसरलाभीरुचन्दनैः ॥**
**स्वयङ्गुप्ताशठीशृङ्गीकलसीसारिवाद्वयैः ॥ २४ ॥**
**पिष्टैस्तैलघृतं पक्वं क्षीरेणाष्टगुणेन तु ॥**
**तच्चानुवासने देयं शुक्राग्निबलवर्धनम् ॥ २५ ॥**
**बृंहणं वातपित्तघ्नं गुल्मानाहहरं परम् ॥**
**नस्ये पाने च संयुक्तमूर्ध्वजत्रुगदापहम् ॥ २६ ॥**

आमिषं गुग्गुलुः । सुरद्रुमः देवदारुः । तस्करः चौरकः । भूतिकं कत्तृणापरपर्यायम् । गुडूची हरीतकी चेत्यमृताद्वयम् । सहाचरः शैलेयः । काकनासा वायसफला ॥ १८—२६ ॥

**मधुकोशीरकाश्मर्यकटुकोत्पलचन्दनैः ॥**
**श्यामापद्मकजीमूतशक्राह्वातिविषाम्बुभिः ॥ २७ ॥**
**तैलपादं पचेत् सर्पिः पयसाऽष्टगुणेन च ॥**
**न्यग्रोधादिगणक्वाथयुक्तं बस्तिषु योजितम् ॥ २८ ॥**
**दाहासृग्दरवीसर्पवातशोणितविद्रधीन् ॥**
**पित्तरक्तज्वरार्त्तांश्च हन्यात् पित्तकृतान् गदान् २९**
**मृणालोत्पलशालूकसारिवाद्वयकेशरैः ॥**
**चन्दनद्वयभूनिम्बपद्मबीजकसेरुकैः ॥ ३० ॥**
**पटोलकटुकारक्तागुन्द्रापर्पटवासकैः ॥**
**पिष्टैस्तैलमिदं पक्वं तृणमूलरसेन च ॥ ३१ ॥**
**क्षीरद्विगुणसंयुक्तं बस्तिकर्मणि योजितम् ॥**
**नस्येऽभ्यञ्जनपाने वा हन्यात् पित्तगदान् बहून् ३२**

श्यामा प्रियङ्गुः । जीमूतः मुस्तकः । तैलस्य पादः चतुर्थांशो यस्मिन् सर्पिषि तत्तैलपादम् । रक्ता मञ्जिष्ठा, गुन्द्रा पट्टेरकभेदः । तृणमूलं कुशादितृणपञ्चमूलम् ॥ २७—३२ ॥

**त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः ॥**
**निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥ ३३ ॥**
**गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः ॥**
**तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम् ॥ ३४ ॥**
**पानाभ्यञ्जनगण्डूषनस्यबस्तिषु योजितम् ॥**
**स्थूलतालस्यकण्ड्वादीन् जयेत्कफकृतान् गदान् ३५**

**पाठाजमोदाशार्ङ्गेष्टापिप्पलीद्वयनागरैः ॥**
**सरलागुरुकालीयभार्गीचव्यामरद्रुमैः ॥ ३६ ॥**
**मरिचैलाभयाकट्वीशठीग्रन्थिककट्फलैः ॥**
**तैलमेरण्डतैलं वा पक्वमेभिः समायुतम् ॥ ३७ ॥**
**वल्लीकण्टकमूलाभ्यां क्वाथेन द्विगुणेन च ॥**
**हन्यादन्वासनैर्दत्तं सर्वान् कफकृतान् गदान् ॥३८॥**
**विडङ्गोदीच्यसिन्धूत्थशठीपुष्करचित्रकैः ॥**
**कट्फलातिविषाभार्गीवचाकुष्ठसुराह्वयैः ॥ ३९ ॥**
**मेदामदनयष्ट्याह्वश्यामानिचुलनागरैः ॥**
**शताह्वानीलिनीरास्नाकदलीवृषरेणुभिः ॥ ४० ॥**
**बिल्वाजमोदकृष्णाह्वादन्तीचव्यनराधिपैः ॥**
**तैलमेरण्डतैलं वा मुष्ककादिरसाप्लुतम् ॥ ४१ ॥**
**प्लीहोदावर्तवातासृग्गुल्मानाहकफामयान् ॥**
**प्रमेहशर्कराशांसि हन्यादाश्वनुवासनात् ॥ ४२ ॥**

इन्द्रसुरा इन्द्रवारुणी । श्यामा वृद्धदारुकः । निचुलः जलवेतसः । रेणुः पर्पटकः । मुष्ककादिरसेन क्वाथेन चतुर्गुणेन प्लुतं मिश्रितं । तिलतैलं एरण्डतैलं वेति तैलद्वयं कल्प्यते । विडङ्गादितैलं कफभूरिसंसर्गसन्निपातेषु पुनरित्थं यथायथमभ्यूह्य योज्यमिति ज्ञेयम् । एतानि तैलानि सामान्यपरिभाषया साधनीयानीत्यर्थः ॥ ३३—४२ ॥

**अशुद्धमपि वातेन केवलेनातिपीडितम् ॥**
**अहोरात्रस्य कालेषु सर्वेष्वेवानुवासयेत् ॥ ४३ ॥**
**रूक्षस्य बहुवातस्य द्वौ त्रीनप्यनुवासनान् ॥**
**दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ॥४४॥**

पूर्वं विशुद्धदेहस्य स्नेहबस्तिं प्रदर्श्य क्वचिदशुद्धस्यापि दर्शयन्नाह—अशुद्धमित्यादि । केवलेन धातुक्षयहेतुना । रिक्ते हि शरीरे प्रायेण विवृतस्रोतोमुखमेव शरीरं तत्र शुद्ध्या पुनरतिधातुक्षयेण अतितरामेव वातरोगः स्यात्, तेनाशुद्धेऽपि तत्र स्नेहबस्तिरिति । अहोरात्रस्य कालेषु पूर्वाह्णादिषु, जीर्णान्नं भोजयित्वा अनुवासयेत् । द्वौ त्रीन् वाराननुवासनं दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ॥ ४३ ॥ ४४ ॥

**अस्निग्धमपि वातेन केवलेनातिपीडितम् ॥**
**स्नेहप्रगाढैर्मतिमान्निरूहैः समुपाचरेत् ॥ ४५ ॥**

किञ्चित् अस्निग्धोऽपि यथाऽऽस्थापनविशेषेण स्थापनीयः तथा दर्शयन्नाह—अस्निग्धमपीत्यादि ।—अस्निग्धं ईषत्स्निग्धं, नञ् ईषदर्थे । स्नेहप्रगाढैः स्नेहबहुलैः ॥ ४५॥

**अथ सम्यङ्निरूढं तु वातादिष्वनुवासयेत् ॥**
**बिल्वयष्ट्याह्वमदनफलतैलैर्यथाक्रमम् ॥ ४६ ॥**

निरूहस्य पश्चान्निर्दिशन्नाह—अथेत्यादि । केचित्तु बिल्वमूलादीनां कल्कैरिति पठन्ति ॥ ४६ ॥

**रात्रौ बस्तिं न दद्यात्तु दोषोत्क्लेशो हि रात्रिजः ॥**
**स्नेहो वीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरम् ॥४७ ॥**

रात्रौ बस्तिदाननिषेधमाह—रात्रावित्यादि । दोषोत्क्लेश इति यस्माद्रात्रौ दारुणकालशैत्यात् स्रोतोमुखसंवृतत्वेन दोषधातुमलेषु विक्लेदनलक्षण उत्क्लेशो भवति । अन्यत्राप्युक्तम्,—"अविशुद्धे तु हृदये निशि क्लिन्नेषु धातुषु । विदग्धैस्तै रसस्रोतःसूपलिप्तेषु देहिनाम्"—इत्यादि ॥ ४७ ॥

**अह्नि स्थानस्थिते दोषे वह्नौ चान्नरसान्विते ॥**
**स्फुटस्रोतोमुखे देहे स्नेहौजः परिसर्पति ॥ ४८ ॥**

दिवा बस्तिप्रदानगुणं सकारणं निर्दिशन्नाह—अह्नीत्यादि । अह्नि दिवा । विवृतस्रोतोमुखे शरीरे, तथा स्थानस्थिते दोषे, तथा निर्दोषपरिपक्वान्नरसेन अग्निसंवृद्धौ स्नेहवीर्यं शरीरं परिसर्पति अनुक्रामति ॥ ४८ ॥

**पित्तेऽधिके कफे क्षीणे रुक्षे वातरुगर्दिते ॥**
**नरे रात्रौ च दातव्यं काले चोष्णेऽनुवासनम् ॥४९॥**
**उष्णे पित्ताधिके वापि दिवा दाहादयो गदाः ॥**
**संभवन्ति यतस्तस्मात् प्रदोषे योजयेद्भिषक् ॥ ५० ॥**

रात्रावप्युद्दिशन्नाह—पित्ते इत्यादि । रात्रिशब्दोऽत्र प्रथमप्रहरवाचकः, प्रदोषे योजयेद्भिषगिति वक्ष्यमाणवचनात् । प्रदोषशब्दः सन्ध्याहारविषयवृत्तिः ॥ ४९—५० ॥

**शीते वसन्ते च दिवा ग्रीष्मे प्रावृड्घनात्यये ॥**
**स्नेह्यो दिनान्ते पानोक्तान् दोषान् परिजिहीर्षता ५१**

प्राप्तकालनियमं प्रकटयन्नाह—शीत इत्यादि । परिजिहीर्षता परिहर्तुमिच्छता ॥ ५१ ॥

**अहोरात्रेषु कालेषु सर्वेष्वेवानिलाधिकम् ॥**
**तीव्रायां रुजि जीर्णान्नं भोजयित्वाऽनुवासयेत् ॥५२॥**

अहोरात्रेष्वित्यादि । कालेषु सर्वेष्विति तत्तत्कालविरुद्धकृत्रिमगुणोपधानं कृत्वैवेति शेषः । प्रागशुद्धस्य केवलवातपीडितस्य सर्वेष्वपि अहोरात्रावयवेषु अनुवासनमभिहितं, इह तु शुद्धस्येति न पौनरुक्त्यम् ॥ ५२ ॥

**नचाभुक्तवतः स्नेहः प्रणिधेयः कथञ्चन ॥**
**शुद्धत्वाच्छून्यकोष्ठस्य स्नेह ऊर्ध्वमथोत्पतेत् ॥ ५३ ॥**

अभुक्तवतः प्रतिषेधमाह—नचेत्यादि । स्नेह ऊर्ध्वं समुत्क्षिपेदिति पाठे सम्यगूर्द्धं गच्छेत् । ततश्चातिपीडितवत् व्याप्तः स्यात् । शुद्धत्वादित्यत्र सूक्ष्मत्वादिति पठित्वा गयदासः सूक्ष्ममार्गानुसरणशीलत्वात्तस्येति व्याख्यानयति ॥ ५३ ॥

**सदाऽनुवासयेच्चापि भोजयित्वार्द्रपाणिनम् ॥**
**ज्वरं विदग्धभुक्तस्य कुर्यात् स्नेहः प्रयोजितः ॥५४॥**
**न चातिस्निग्धमशनं भोजयित्वाऽनुवासयेत् ॥**
**मदं मूर्च्छां च जनयेद् द्विधा स्नेहः प्रयोजितः ॥५५॥**
**रुक्षं भुक्तवतो ह्यन्नं बलं वर्णं च हापयेत् ॥**
**युक्तस्नेहमतो जन्तुं भोजयित्वाऽनुवासयेत् ॥ ५६ ॥**
**यूषक्षीररसैस्तस्माद्यथाव्याधिमवेक्ष्य वा ॥**
**यथोचितात् पादहीनं भोजयित्वाऽनुवासयेत् ॥५७॥**

भोजनोत्तरकालमेवानुवासनमविलम्बितमाह—सदेत्यादि । हापयेदित्यत्र स्नेहःप्रयोजित इति सम्बध्यते । युक्तस्नेहं अल्पस्नेहम् । यथाव्याधि व्याधीनां गतिक्रमेण, रोगानुसारेणेति यावत् । अत्र यूषः मुद्गयूषः स च रूक्षो ग्राह्यः, क्षीरं गव्यं, रसः मांसरसः, तैर्यथासंख्यं कफपित्तवातप्रत्यनीकैर्भोजयित्वा, यथोचितात् पादहीनमिति प्राक् संशुद्धस्य कृतसंसर्जनस्य उचितात् भक्तात् पादहीनमुत्तममध्यममन्दाग्निविशेषेण पादेन पादाभ्यां पादैर्वा हीनमिति ज्ञेयं, "अर्धहीनं त्रिभागं वा भोजयित्वाऽनुवासयेत्" इति मुनिना प्रोक्तत्वात् ॥ ५४—५७ ॥

**अथानुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः ॥**
**भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः ॥ ५८ ॥**
**विसर्ज्य च शकृन्मूत्रं योजयेत् स्नेहबस्तिना ॥**
**प्रणिधानविधानं तु निरूहे च प्रवक्ष्यते ॥ ५९ ॥**

अनुवासनविधिं दर्शयन्नाह—अथानुवास्यमित्यादि ॥ ५८—५९ ॥

**ततः प्रणिहितस्नेह उत्तानो वाक्शतं भवेत् ॥**
**प्रसारितैः सर्वगात्रैस्तथा वीर्यं विसर्पति ॥ ६० ॥**
**ताडयेत्तलयोरेनं त्रींस्त्रीन् वारान् शनैः शनैः ॥**
**स्फिचोश्चैनं ततः शय्यां त्रीन् वारानुत्क्षिपेत्ततः ॥**
**एवं प्रणिहिते बस्तौ मन्दायासोऽथ मन्दवाक् ॥**
**स्वास्तीर्णे शयने काममासीताचारिके रतः ॥ ६२ ॥**

प्रणिहितस्नेहस्य पश्चात्कर्म निर्दिशन्नाह—तत इत्यादि । आतुरस्य करणीयमभिधाय वैद्यस्य करणीयं निर्दिशन्नाह—ताडयेदित्यादि । तलयोः हस्तपादतलयोः शनैः शनैस्त्रीन् त्रीन् वारान् हन्यात्स्नेहशीघ्रागमननिषेधार्थं, स्फिजोश्चैनमिति ताडयेदिति संबन्धः । स्फिचोश्चेति चकारोऽभिन्नक्रमे, तेन ताडयेच्चेत्यत्र द्रष्टव्यः । अतस्तलयोर्गृहीतत्वात् कूर्परे जानुनी चोत्क्षिपेदित्यनुक्तो वृद्धवैद्यव्यवहारः शुद्धो भवति । शय्यामुत्क्षिपेदिति काष्ठफलकादिकृतां सहातुरेणोर्ध्वं नयेदित्यर्थः । शय्यास्थमातुरं स्फिग्देश इत्यन्ये । आसीताचारिके रत इति क्रोधादीन् वर्जयेदित्यर्थः ॥ ६०—६२ ॥

**स तु सैन्धवचूर्णेन शताह्वेन च योजितः ॥**
**देयः सुखोष्णश्च तथा निरेति सहसा सुखम् ॥६३॥**
**यस्यानुवासनो दत्तः सकृदन्वक्षमाव्रजेत् ।**
**अत्यौष्ण्यादतितैक्ष्ण्याद्वा वायुना वा प्रपीडितः ६४**
**सवातोऽधिकमात्रो वा गुरुत्वाद्वा सभेषजः ।**
**तस्यान्योऽल्पतरो देयो न हि स्निह्यत्यतिष्ठति ६५**
**विष्टब्धानिलविण्मूत्रः स्नेहहीनोऽनुवासनः ॥**
**दाहक्लमप्रवाहार्तिकरश्चात्यनुवासनः ॥ ६६ ॥**
**सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु ॥**
**ओषचोषौ विना शीघ्रं स सम्यगनुवासितः ॥६७॥**
**जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः ॥**

**लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि॥६८॥**
**प्रातरुष्णोदकं देयं धान्यनागरसाधितम् ॥**
**तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते ॥ ६९ ॥**

सर्वस्नेहबस्तिद्रव्यपूर्वकर्म निर्दिशन्नाह—स इत्यादि । स स्नेहः पुनः पक्वोऽपि सैन्धवशतपुष्पासमन्वितो देयः । मध्यमवयस्कमाश्रित्य चूर्णस्य मात्रामाह, "चूर्णमाषः पले स्नेहे सिन्धुजन्मशताह्वयोः" इति । तस्यानुवासनस्नेहस्य प्रणिधानमात्रप्रत्यावृत्त्याऽस्य निदानपरिहारार्थं हेतुं प्रतिकरणीयं च दर्शयन्नाह—यस्येत्यादि ॥ ६३—६९ ॥

**स्नेहबस्तिक्रमेष्वेवं विधिमाहुर्मनीषिणः ॥**

इदानीं शल्यतन्त्रस्य कर्ता सुश्रुताचार्यः चिकित्सितकार्यप्रधानस्य बस्तेरुक्तविधकायचिकित्सितमनुमतमिति दर्शयन्नाह—स्नेहेत्यादि । मनीषिणः स्नेहबस्तिक्रमविदः कायचिकित्सका इत्यर्थः॥

**अनेन विधिना षड् वा सप्त वाष्टौ नवैव वा ॥७०॥**
**विधेया बस्तयस्तेषामन्तरा तु निरूहणम् ॥**

तस्मिन्नेव क्रमबस्तिरित्युपदिशन्नाह—अनेनेत्यादि । षड् वेत्यादि संख्याविकल्पापेक्षया स्नेहस्वेदावधिकृत्य संसर्जनविधानेनोपबृंहितबलाय अन्तरा निरूहणं दद्याद् दोषसञ्चयसाधनाय । तथाच चरकः,—"त्रीन् पञ्च वाहुश्चतुरोऽथ षड् वा वाताधिकानामनुवासनीयान् । स्नेहान् प्रदत्त्वाशु भिषग् विदध्यात् स्रोतोविशुध्यर्थमतो निरूहान्—" इति ॥ ७० ॥—

**दत्तस्तु प्रथमो बस्तिः स्नेहयेद्बस्तिवङ्क्षणौ ॥ ७१ ॥**
**सम्यग्दत्तो द्वितीयस्तु मूर्धस्थमनिलं जयेत् ॥**
**जनयेद्बलवर्णौ च तृतीयस्तु प्रयोजितः ॥ ७२ ॥**
**रसं चतुर्थो रक्तं तु पञ्चमः स्नेहयेत्तथा ॥**
**षष्ठस्तु स्नेहयेन्मांसं मेदः सप्तम एव च ॥ ७३ ॥**
**अष्टमो नवमश्चास्थि मज्जानं च यथाक्रमम् ॥**
**एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत् ७४**

इदानीं स्नेहबस्तेः प्रथमादिदानेन कार्यं निर्दिशन्नाह—दत्त इत्यादि । बस्तिवङ्क्षणावित्युपलक्षणमधःकायस्य । मूर्धस्थमनिलं जयेदिति व्याख्यानयति । एवमनेन क्रमेण । शुक्रगतान् दोषान् व्याधिसमुद्देशीयोक्तान् । बस्त्यादिदेशरसादिधातुस्नेहनमाश्रित्य दत्ते स्नेहबस्तौ प्रथमादिदानमभिहितम् । दोषसमाश्रितस्नेहदानं तन्त्रान्तरात् ज्ञेयम्,—"एकं त्रीन्वा बलासे तु स्नेहबस्तिं प्रकल्पयेत् । पञ्च वा सप्त वा पित्ते नवैकादश वाऽनिले—"इति ॥ ७१—७४ ॥

**अष्टादशाष्टादशकान् बस्तीनां यो निसेवते ॥**
**यथोक्तेन विधानेन परिहारक्रमेण तु ॥ ७५ ॥**
**स कुञ्जरबलोऽश्वस्य जवैस्तुल्योऽमरप्रभः ॥**
**वीतपाप्मा श्रुतिधरः सहस्रायुर्नरो भवेत् ॥ ७६ ॥**

एवमेतैरष्टादशभिः स्नेहबस्तिभिर्धातुगतदोषहरणमभिधाय पुनः पुनरभ्यस्तैरेतैरेव विशिष्टं रसायनफलं दर्शयन्नाह—अष्टादशेत्यादि । यथोक्तेनेति इह चानन्तरातिक्रान्तेन । परिहारक्रमेणेति आतुरोपद्रवे वक्ष्यमाणेन । कुञ्जरबल इति उपचयशक्तिलक्षणबलयुक्तः । अश्वस्य जवैस्तुल्य इति गज इवोपचितधातुरपि क्रियाविशेषप्रभावात् तुरङ्गवत्तरस्वी । अमरवत् प्रकर्षेण भातीत्यमरप्रभोऽसद्भुतवर्णाद्युपेत इत्यर्थः । वीतपाप्मा क्रियाविशेषप्रभावादेव गतप्राक्तनजन्मकृतसकलकल्मषः । श्रुतिधर इति चित्तस्य शक्त्युत्कर्षयुक्तः । सहस्रायुरिति शरीरेन्द्रियसत्त्वात्मसंयोगोत्कर्षः । यद्यप्यत्र स्नेहबस्तीनामष्टादशकं अन्तरा तु निरूहणमिति पूर्ववाक्यादनियतनिरूहान्वितोऽभिहितस्तथापि तन्त्रान्तरदर्शनान्नियतद्वादशयापनाख्यनिरूहोपेतो ज्ञेयः । तादृशस्य च तन्त्रान्तरे कर्म इति संज्ञा । तथाहि,—"त्रिंशन्मता कर्मसु बस्तयो हि कालस्ततोऽर्धेन ततश्च योगः । सान्वासना द्वादश वै निरूहाः प्राक् स्नेह एकः परतस्तु पञ्च" इति; ततश्च "अष्टादशाष्टादशकान् बस्तीनां यो निषेवते"—इत्यनेन कर्मबस्तीन् अष्टादशवारान् यो निषेवते इत्यर्थो गम्यते । तथा श्रीवाग्भटेनापि कर्मकालयोगबस्तयोऽभिहिताः । तथाच, —"प्राक् स्नेह एकः पञ्चान्ते द्वादशास्थापनानि वा । सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ कालः पञ्चदशैकोऽत्र प्राक्स्नेहोऽन्ते त्रयस्तथा । षट्पञ्च बस्त्यन्तरिताः, योगोऽष्टौ बस्तयोऽत्र तु ॥ त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ"—इति । यापनवस्तिविषयोऽयं ग्रन्थः, निरूहा एव यापनबस्तयः; अत एवैकान्तरिताः स्नेहा यापनबस्तयो हिनातिस्निग्धरूक्षा नपुंसकबस्तय इत्युच्यन्ते । कर्मकालयोगसंज्ञया यथासंख्यं वातपित्तकफहरो बस्तिप्रयोगो ज्ञेयः । गयदासस्तु बलवद्विग्रहादिजनितोपचयपूर्वकवातादिदोषप्रकोपे बलीयसि त्रिंशद्बस्तयः, स्वस्थे पुनः कालिकप्रभावजनितवातादिप्रकोपे मध्यबले पञ्चदश, कालेनाप्यकृतदोषकोपस्य स्वस्थस्यापूर्ववृष्यत्वादिलाभार्थमष्टौ ॥७५॥७६॥

**स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत् ॥**
**स्नेहादग्निवधोत्क्लेशौ निरूहात् पवनाद्भयम् ॥७७॥**
**तस्मान्निरूढोऽनुवास्यो निरूह्यश्चानुवासितः ॥**
**नैवं पित्तकफोत्क्लेशौ स्यातां न पवनाद्भयम् ॥७८॥**
**रूक्षाय बहुवाताय स्नेहबस्तिं दिने दिने ॥**
**दद्याद्वैद्यस्ततोऽन्येषामग्न्याबाधभयात् त्र्यहात् ७९**

द्वयोरेकस्यातिशीलननिषेधाय दोषं दर्शयन्नाह—स्नेहबस्तिमित्यादि ॥ ७७—७९ ॥

**स्नेहोऽल्पमात्रो रूक्षाणां सर्वकालमनत्ययः ॥**
**तथा निरूहः स्निग्धानां स्वल्पमात्रः प्रशस्यते ॥८०॥**

अभ्यासेऽपि स्नेहबस्तिर्यथा निरापदस्तस्तथोपदिशन्नाह—स्नेहोऽल्पमात्र इत्यादि । अर्धहीनता चतुर्भागावशिष्टता वाल्पशब्दार्थः; तेन षट्पलप्रमाणः त्रिपलप्रमाणो वा स्नेहबस्तिः दीर्घकालमभ्यस्तो रूक्षाणां निरत्ययः । तथा निरूहो दीर्घकालं

स्निग्धानामल्पमात्र एव पादहीनस्त्रिभागहीनो वा शस्यते, अनल्पबलत्वादित्यर्थः ॥ ८० ॥

**अत ऊर्ध्वं प्रवक्ष्यामि व्यापदः स्नेहबस्तिजाः ॥**
**बलवन्तो यदा दोषाः कोष्ठे स्युरनिलादयः ॥ ८१ ॥**
**अल्पवीर्यं तदा स्नेहमभिभूय पृथग्विधान् ॥**
**कुर्वन्त्युपद्रवान् स्नेहः स चापि न निवर्तते ॥ ८२ ॥**
**तत्र वाताभिभूते तु स्नेहे मुखकषायता ॥**
**जृम्भा वातरुजस्तास्ता वेपथुर्विषमज्वरः ॥ ८३ ॥**
**पित्ताभिभूते स्नेहे तु मुखस्य कटुता भवेत् ॥**
**दाहस्तृष्णा ज्वरः स्वेदो नेत्रमूत्राङ्गपीतता ॥ ८४ ॥**
**श्लेष्माभिभूते स्नेहे तु प्रसेको मधुरास्यता ॥**
**गौरवं छर्दिरुच्छ्वासः कृच्छ्रः शीतज्वरोऽरुचिः ८५**

स्नेहबस्तिव्यापच्चिकित्सितलक्षणमाह—अत ऊर्ध्वमित्यादि। दोषाभिभूतस्नेहव्यापदसामान्यां संप्राप्तिमुद्दिशन्नाह—बलवन्त इत्यादि । न निवर्तते न निर्गच्छतीत्यर्थः ॥ ८१—८५ ॥

**तत्र दोषाभिभूते तु स्नेहे बस्तिं निधापयेत् ॥**
**यथास्वं दोषशमनान्युपयोज्यानि यानि च ॥ ८६ ॥**

तत्र प्रतीकारमाह—तत्र दोषाभिभूते इत्यादि । बस्तिमित्यादि मारुतादिहरकषायैः तथा संशोधनद्रव्यैश्च कृतं निरूहं दद्यात् । यानि च दोषशमनानि तानि च यथायथमुपयोज्यानि ॥ ८६ ॥

**अत्याशितेऽन्नाभिभवात् स्नेहो नैति यदा तदा ॥**
**गुरुरामाशयः शूलं वायोश्चाप्रतिसंचरः ॥ ८७ ॥**
**हृत्पीडा मुखवैरस्यं श्वासो मूर्च्छा भ्रमोऽरुचिः ॥**
**तत्रापतर्पणस्यान्ते दीपनो विधिरिष्यते ॥ ८८ ॥**

अत्याशितेत्यादि ॥ ८७ ॥ ८८ ॥

**अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ॥**
**तदाऽङ्गसदनाध्मानौ श्वासः शूलं च जायते ॥ ८९ ॥**
**पक्वाशयगुरुत्वं च तत्र दद्यान्निरूहणम् ॥**
**अतितीक्ष्णौषधैरेवं सिद्धं चाप्यनुवासनम् ॥ ९० ॥**
**शुद्धस्य दूरानुसृते स्नेहे स्नेहस्य दर्शनम् ॥**
**गात्रेषु सर्वेन्द्रियाणामुपलेपोऽवसादनम् ॥ ९१ ॥**
**स्नेहगन्धि मुखं तत्र कासश्वासावरोचकः ॥**
**अतिपीडितवत्तत्र विधिरास्थापनं तथा ॥ ९२ ॥**

अशुद्धस्येत्यकृतविरेचननिरूहस्य । शुद्धस्य दूरानुसृते उदरानुसृते । उपलेपो मलवृद्धिः । अवसादनं ग्लानिः । अतिपीडितवत्तत्र सिद्धिः साधनं चिकित्सितमित्यर्थः । तत् पुनर्गलावपीडादिशीतसेकान्तं, तथा आस्थापनमवस्थायां स्नेहाऽपकर्षकरशोधनद्रव्यकषायगोमूत्रावापम् ॥ ८९—९२ ॥

**अस्विन्नस्याविशुद्धस्य स्नेहोऽल्पः संप्रयोजितः ॥**
**शीतो मृदुश्च नाभ्येति ततो मन्दं प्रवाहयेत् ॥ ९३ ॥**
**विबन्धगौरवाध्मानशूलाः पक्वाशयं प्रति ॥**
**तत्रास्थापनमेवाशु प्रयोज्यं सानुवासनम् ॥ ९४ ॥**

अस्विन्नस्येत्यादि । तीक्ष्णं यथादोषप्रत्यनीकं आस्थापनं अनुवासनं च शीघ्रं प्रयोक्तव्यम् ॥ ९३ ॥ ९४ ॥

**अल्पं भुक्तवतोऽल्पो हि स्नेहो मन्दगुणस्तथा ॥**
**दत्तो नैति क्लमोत्क्लेशौ भृशं वाऽरतिमावहेत् ॥ ९५ ॥**
**तत्रैवास्थापनं कार्यं शोधनीयेन बस्तिना ॥**
**अन्वासनं च स्नेहेन शोधनीयेन शस्यते ॥ ९६ ॥**

अल्पमित्यादि । नैति न प्रत्यागच्छति ॥ ९५ ॥ ९६ ॥

**अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दूष्यति ॥**
**कुर्याद्बस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥ ९७ ॥**

स्नेहस्त्वष्टाभिः कारणैः नातिवर्तत इति अनिवृत्तिर्व्यापदुक्ता, तत् कियतः कालादित्याह—अहोरात्रादित्यादि । अपिशब्दात् त्रिचतुरादियामनिवृत्तिस्तावन्न दूष्यत्येवाहोरात्रादपीत्यपि शब्दार्थः ॥ ९७ ॥

**यस्य नोपद्रवं कुर्यात् स्नेहबस्तिरनिःसृतः ॥**
**सर्वोऽल्पो वाऽऽवृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥**

सर्वथाऽनिवृत्तः'ऽप्यवयवेन वा निरुपद्रवो न व्यापद्यते इति बोधयन्नाह—यस्येत्यादि। आवृतो रौक्ष्यादिति आभ्यां वा शब्दः प्रत्येकं सम्बन्धनीयः । तेनावृतो वा रौक्ष्याद्वा स्नेहबस्तिरनिःसृत इति सम्बन्धनीयम् । तत्रावृतो दोषत्रयेण, अत्यशनेन, मलसंचयेन वेत्यर्थः । रौक्ष्यादित्यनेन अस्विन्नस्याल्पं भुक्तवतोऽल्पश्चेति त्रितयमपि गृहीतं, एषु त्रिष्वपि अतिरौक्ष्येण वायुरेव विधारयतीत्येवमष्टौ व्यापदो गृहीताः । उपेक्ष्यः उपेक्षणीयः, तदाऽऽकृष्यां यत्नं न कुर्यादित्यर्थः ॥ ९८ ॥

**अनायान्तं त्वहोरात्रात् स्नेहं संशोधनैर्जयेत् ॥**

अनायान्तमित्यादि । सोपद्रवं स्नेहमहोरात्रादनागच्छन्तं जयेत् निर्हरेत् शोधनैरेव बस्तिभिः ॥—

**स्नेहबस्तावनायाते नान्यः स्नेहो विधीयते ॥ ९९ ॥**

स्नेहबस्तावनायाते इत्यादि । अनायते सोपद्रवस्नेहे निरूहबस्तिरेव शोधनार्थं दीयते नेतर इत्यर्थः ॥ ९९ ॥

**इत्युक्ता व्यापदः सर्वाः सलक्षणचिकित्सिताः**

उक्तं हि नियमयन्नाह—इत्युक्ता व्यापद इत्यादि । सर्वा व्यापदः सलक्षणचिकित्सिता इत्यनेन याः प्रागुद्दिष्टास्ता अशेषा इत्यर्थः ॥—

**बस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतः परम् ॥ १०० ॥**
**चतुर्दशाङ्गुलं नेत्रमातुराङ्गुलसम्मितम् ॥**
**मालतीपुष्पवृन्ताग्रं छिद्रं सर्षपनिर्गमम् ॥ १०१ ॥**

उत्तरबस्तेरिदानीमवसरः—बस्तेरुत्तरसंज्ञस्येत्यादि । नेत्रस्य प्राक् प्रमाणमाह—चतुर्दशेत्यादि । तच्च नेत्रं पुंसां चतुर्द-

शाङ्गुलं जातीपुष्पवृन्तसदृशाग्रं सर्षपच्छिद्रं मध्यसन्निविष्टकर्णिकं सुवर्णादिमयं मूले द्विकर्णिकं च । तन्त्रान्तरे—"तत् सौवर्णं राजतं वा श्लक्ष्णं गोपुच्छवत्समम् । अश्मघ्नकुन्दसुमनःपुष्पवृन्ताग्रमण्डलम् ॥ सिद्धार्थकप्रवेशाग्रं मूले मध्ये सुकर्णिकम् । चतुर्दशाङ्गुलं नेत्रं तत्र कार्यं विजानता" इति । सप्ताङ्गुलं च परमं प्रणिधानम् । तथाच क्षारपाणिः,—"अङ्गुलान्यथ चत्वारि पञ्च षट् सप्त वा तथा । सप्ताङ्गुलं परं नेत्रं प्रणिधेयं भिषग्विदा ॥ हिंस्याद्बस्तिं नरं चेह प्रमाणादधिकं ततः" इति ॥ १०० ॥ १०१ ॥

**स्नेहप्रमाणं परमं प्रकुञ्चश्चात्र कीर्तितः ॥**
**पञ्चविंशादधो मात्रां विदध्याद्बुद्धिकल्पिताम् १०२**

नेत्रमानमभिधाय स्नैहिकनैरूहिकभेदाभ्यां द्विविधे उत्तरबस्तौ वक्तव्ये स्नैहिकस्य प्राक् प्रयोज्यत्वात् स्नेहमानह—स्नेहप्रमाणमित्यादि । अत्रेति सुश्रुतमते । प्रकुञ्चः पलं, चरकाचार्यः पुनरर्धपलम् । पञ्चविंशादधो मात्रां विदध्यात् बुद्धिकल्पितामिति अयमर्थः—सांवत्सरिकबालकस्य स्नेहनस्य पञ्चविंशतितममंशमारभ्य द्विवत्सरिकादौ प्रतिवत्सरं पञ्चविंशतितमस्यांशस्य वृद्धिः स्यात् यावत् पञ्चविंशतिवर्षस्य पलम् । इति पुरुषाणां नेत्रादिमानमुक्तमिति ॥ १०२ ॥

**निविष्टकर्णिकं मध्ये नारीणां चतुरङ्गुले ॥**
**मूत्रस्रोतः परीणाहं मुद्गवाहि दशाङ्गुलम् ॥ १०३॥**
**मेढ्रायामसमं केचिदिच्छन्ति खलु तद्विदः ॥**

इदानीं पुरुषनेत्रेऽनुक्तं कर्णिकानिवेशस्थानं, तथा स्त्रीणां नेत्रकर्णिकास्थानपरिमाणमाह—निविष्टकर्णिकं मध्ये इति पुरुषस्येति वाक्यशेषः । नारीणां चतुरङ्गुले इति निविष्टकर्णिकमित्यत्रापि सम्बन्धनीयम् । मूत्रस्रोतः परिणाहं स्थौल्यं, मुद्गवाहीति अन्तश्छिद्रमानम् । मेढ्रायामसममिति अपत्यमार्गे पुरुषेन्द्रियस्थूलनेत्रं केचित् ॥ १०३ ॥—

**तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् ॥ १०४ ॥**
**द्व्यङ्गुलं मूत्रमार्गे तु कन्यानां त्वेकमङ्गुलम् ॥**
**विधेयं चाङ्गुलं तासां विधिवद्वक्ष्यते यथा ॥१०५॥**

नेत्रमानमभिधाय मार्गभेदेन प्रणिधानमाह—तासामित्यादि । तासां प्रसूतानामप्रसूतानां च प्राप्तगर्भग्रहणकालानां गर्भाशयशोधनार्थं अपत्यमार्गे चतुरङ्गुलं निदध्यात्; मूत्रकृच्छ्रादिविकारे च तासामुभयरूपाणामपि मूत्रवर्त्मनि द्व्यङ्गुलं निदध्यात् ॥ १०४—१०५ ॥

**स्नेहस्य प्रसृतं चात्र स्वाङ्गुलीमूलसम्मितम् ॥**
**देयं प्रमाणं परममर्वाग् बुद्धिविकल्पितम् ॥१०६॥**

स्त्रीणामुत्तरबस्तिस्नेहमानमाह—स्नेहस्येत्यादि । रोगे मध्यबले, हीनबलरोगे तु सर्वास्वपि वयोऽवस्थासूत्तमप्रमाणादर्वाक् मध्यं हीनं च बुद्ध्या विकल्पितं मानं ज्ञेयम् । गर्भाशयशोधनार्थं च स्नेहमात्राद्वैगुण्यमग्रे वक्ष्यति ॥ १०६ ॥

**औरभ्रः शौकरो वापि बस्तिराजश्च पूजितः ॥**
**तदलाभे प्रयुञ्जीत गलचर्म तु पक्षिणाम् ॥ १०७ ॥**
**तस्यालाभे दृतेः पादो मृदुचर्म ततोऽपि वा ॥**

औरभ्रः मेषस्य, शौकरः वन्यशूकरस्य, आजः छागस्य, बस्तिः पूजितः ॥ १०७ ॥—

**अथातुरमुपस्निग्धं सुस्विन्नं प्रथिताशयम् ॥ १०८ ॥**
**यवागूं सघृतक्षीरां पीतवन्तं यथाबलम् ॥**
**निषण्णमाजानुसमे पीठे स्थानाश्रये समे ॥ १०९ ॥**
**स्वभ्यक्तबस्तिमूर्धानं तैलेनोष्णेन मानवम् ॥**
**ततः समं स्थापयित्वा नालमस्य प्रहर्षितम् ॥११०॥**
**पूर्वं शलाकयान्विष्य ततो नेत्रमनन्तरम् ॥**
**शनैः शनैर्घृताभ्यक्तं विदध्यादङ्गुलानि षट् ॥ १११॥**
**ततोऽवपीडयेद्बस्तिं शनैर्नेत्रं च निर्हरेत् ॥**
**ततः प्रत्यागतस्नेहमपराह्णे विचक्षणः ॥ ११२ ॥**
**भोजयेत् पयसा मात्रां यूषेणाथ रसेन वा ॥**

प्रणिधानमाह—अथातुरमित्यादि । स्नैहिकस्योत्तरबस्तेः सघृतक्षीरयवागूभोजनं पूर्वकर्म, पयोयूषरसैरपराह्णभोजनं पश्चात्कर्म । पूर्वाह्णे चोत्तरबस्तिप्रणिधानम् । प्रशिथिलाशयमिति वातमूत्रपुरीषनिर्गमेन । स्थानाश्रये सावष्टम्भके, समं यथा स्यादेवं निषण्णम् । स्वभ्यक्तेत्यादि स्वभ्यक्तः बस्तेः मूत्राधारस्य मूर्धा उपरितनभागो यस्य तं तथा । अङ्गुलानि षडिति मध्यमप्रमाणमेढ्रस्य मध्यमं प्रणिधानमानमवेक्ष्य । पयोयूषरसैर्भोजनं कफपित्तवातापेक्षया ॥ १०८ ॥ ११२ ॥—

**अनेन विधिना दद्याद्बस्तींस्त्रींश्चतुरोऽपि वा ॥११३॥**

अनेन विधिनेति अनन्तरोक्तेन । बस्तींस्त्रींश्चतुरोऽपि वेति अयमर्थः—प्राग्दत्तस्नेहप्रत्यागमने कालान्तरितस्तदहरेव त्रिश्चतुरो वा मात्रामवधार्य स्नेहो देयः, एवं त्रीणि दिनानि स्नैहिकवत् उत्तरबस्तिं दत्त्वा त्र्यहमेव विश्रम्य पुनस्त्र्यहं दद्यात् आव्याधिनिवृत्तेः । तथाच वाग्भटः,—"बस्तींस्त्रिरात्रमेवं च स्नेहमात्रां विवर्धयेत् । त्र्यहमेव च विश्रम्य प्रणिदध्यात् पुनस्त्र्यहम्"—इति ॥ ११३ ॥

**ऊर्ध्वजान्वै स्त्रियै दद्यादुत्तानायै विचक्षणः ॥**
**सम्यक्प्रपीडयेद्योनिं दद्यात् सुमृदुपीडितम् ॥११४**
**त्रिकर्णिकेन नेत्रेण दद्याद् योनिमुखं प्रति ॥**

स्त्रीणामुत्तरबस्तिप्रणिधानविशेषमाह—ऊर्ध्वेत्यादि । 'विचक्षणः' इत्यत्र केचित् 'समाहित' इति पठन्ति; कामसङ्कल्परहितेनाचलितचित्तप्रकृतिनेत्यर्थः ॥ ११४ ॥

**गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु ॥ ११५ ॥**

कार्यविशेषे द्विगुणस्नेहेन स्नेहप्रकारमाह—गर्भाशयेत्यादि । दद्यादिति शेषः । त्रिकर्णिकेन नेत्रेणेत्यनेन अत्रापि बस्तिनिबन्धनं कर्णिकाद्वयमिति सूचयति । स्नेहेन द्विगुणेन तु पूर्वोक्तवदत्राङ्गुलीमूलसंमितप्रसृत्यपेक्षया द्विगुणेनेति ज्ञेयम् ॥ ११५॥

**क्राथप्रमाणं प्रसृतं, स्त्रिया द्विप्रसृतं भवेत् ॥**
**कन्येतरस्याः, कन्यास्तद्वद्बस्तिप्रमाणकम् ॥ ११६ ॥**

स्नैहिकोत्तरबस्तेः प्रमाणं निर्दिश्यावसरप्राप्तनिरूहोत्तरबस्तिप्रमाणमाह—क्राथप्रमाणमित्यादि। क्राथप्रमाणं प्रसृतमिति पुरुषस्येति शेषः, तेनातुरपुरुषस्य यथावयः स्वहस्तसंमितं प्रसृतं मात्राप्रमाणम् । कन्येतरस्याः अप्रसूताया प्रसूताया वा गर्भग्रहणायोग्यायाः, कन्यायाः अप्राप्तद्वादशवर्षायाः । तद्वदिति पुरुषवत् यथावयः स्वहस्तसंमितं प्रसृतं प्रमाणं, बस्तिशोधनार्थं विहितत्वादिति ॥ ११६ ॥

**अप्रत्यागच्छति भिषग् बस्तावुत्तरसंज्ञिते ॥**
**भूयो बस्तिं निदध्यात्तु संयुक्तं शोधनैर्गणैः ॥११७॥**
**गुदे वर्तिं निदध्याद्वा शोधनद्रव्यसंभृताम् ॥**
**प्रवेशयेद्वा मतिमान् बस्तिद्वारमथैषणीम् ॥ ११८ ॥**
**पीडयेद्वाऽप्यधोनाभेर्बलेनोत्तरमुष्टिना ॥**
**आरग्वधस्य पत्रेषु निर्गुण्ड्याः स्वरसेषु च ॥ ११९॥**
**कुर्याद्गोमूत्रपिष्टेषु वर्तीर्वापि ससैन्धवाः ॥**
**मुद्गैलासर्षपसमाः प्रविभज्य वयांसि तु ॥ १२० ॥**
**बस्तेरागमनार्थाय ता निदध्याच्छलाकया ॥**
**आगारधूमबृहतीपिप्पलीफलसैन्धवैः ॥ १२१ ॥**
**कृता वा शुक्तगोमूत्रसुरापिष्टैः सनागरैः ॥**
**अनुवासनसिद्धिं च वीक्ष्य कर्म प्रयोजयेत् ॥१२२॥**
**शर्करामधुमिश्रेण शीतेन मधुकाम्बुना ॥**
**दह्यमाने तदा बस्तौ दद्याद्बस्तिं विचक्षणः ॥**
**क्षीरवृक्षकषायेण पयसा शीतलेन च ॥ १२३ ॥**

अनागच्छति स्नेहे प्रत्यागमनोपायमाह—अप्रत्यागच्छतीति। अत्र गयदासः स्नैहिकस्योत्तरबस्तिदर्शनात् मात्राशतादूर्ध्वं प्रत्यागमनकालं वर्णयति । तथाहि भालुकिः,—"बस्तिर्मात्राशतादूर्ध्वमुस्ताधेन मटेत्तथा(?)। अनागच्छति वर्तिं च मेढ्रनाले प्रदापयेत्—" इति।दृढबलस्तु प्रत्यागमनमनुवासनबस्तेरिति मन्यते । तथा च तद्वाक्यम्,—"प्रत्यागते द्वितीयं च तृतीयं चैव दापयेत्। अनागच्छन्नुपेक्ष्यस्तु रजनीं व्युषितस्य च"—इति। अनागच्छति स्नैहिके निरूहोत्तरबस्तिः; संशोधनैस्त्रिवृदादिभिर्बस्तिशोधनैश्च तृणपञ्चमूलादिगणद्रव्यैः क्राथरूपैर्युक्तं बस्तिं प्रसृतिमात्रं मूत्रमार्गेण, स्त्रिया द्विप्रसृतिमात्रमपत्यमार्गेण स्नेहापकर्षणम् । शोधनद्रव्यसंभृतामिति विरेचनद्रव्यनिर्मिताम्। एषणीं शलाकाम्। अवशेषं बलेन सामर्थ्येन उत्तरमुष्टिना। पूर्वं सामान्येन गुदवर्तिमभिधाय गुदमूत्रमार्गयोर्भेदेन दर्शयन्नाह—आरग्वधेत्यादि। ता वर्तीः मूत्रमार्गे शलाकया निदध्यात् प्रवेशयेत् स्नेहापकर्षणार्थं, अपत्यमार्गे स्थूला वर्तिश्चतुरङ्गुला प्रणिधेया । प्रकारान्तरेण वर्तिमाह—आगारेत्यादि । फलं मदनफलम् । कृता वर्तिः मुद्गादिप्रमाणाः। शुक्तं चुक्रम्। अनुवासनचिकित्सावेक्षणमाह—अनुवासनसिद्धिमित्यादि। तथा च वाग्भटः,—"पीडितेऽन्तर्गते स्नेहे स्नेहबस्तिक्रमो हितः।" तत्र, स्नेहप्रदानकुपिते तीक्ष्णोष्णनिरूहकुपिते वा पित्तेऽनुगच्छति दाहस्य निर्वापणार्थं शर्करामधुमिश्रेणेति त्रिष्वपि योगेषु योजनीयमिति ॥ ११७—१२३ ॥

**शुक्रं दुष्टं शोणितं चाङ्गनानां**
**पुष्पोद्रेकं तस्य नाशं च कष्टम् ॥**
**मूत्राघातान्मूत्रदोषान् प्रवृद्धान्**
**योनिव्याधिं संस्थितिं चापरायाः ॥१२४॥**
**शुक्रोत्सेकं शर्करामश्मरीं च**
**शूलं बस्तौ वङ्क्षणे मेहने च ॥**
**घोरानन्यान् बस्तिजांश्चापि रोगान्**
**हित्वा मेहानुत्तरो हन्ति बस्तिः ॥ १२५ ॥**
**सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च ॥**
**बस्तेरुत्तरसंज्ञस्य समानं स्नेहबस्तिना ॥ १२६ ॥**

इदानीमुत्तरबस्तेर्विषयं दर्शयन्नाह—शुक्रमित्यादि । कष्टं कष्टसाध्यम् । अपरा गर्भावरणशेषः यस्य 'उल्वण' इति लोके प्रसिद्धिः । अशेषबस्तिरोगपरिहारार्थमाह—बस्तिजांश्चापि रोगानिति । क्रमः चिकित्सितमित्यर्थः ॥ १२४—१२६ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने सप्तत्रिंशत्तमोऽध्यायः ॥

---

## अष्टत्रिंशत्तमोऽध्यायः ।

**अथातो निरूहक्रमचिकित्सितं व्याख्यास्यामः ॥१॥**
**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**

निरूहस्य क्रमः निरूहक्रमः अनुक्तसंविधानं, स एव चिकित्सितं व्याधिप्रतीकारः । निरूहोपक्रमचिकित्सितमिति केचित् पठन्ति । तन्मतेऽपि निरूहोपक्रमो निरूहारम्भ एव चिकित्सितमिति व्याख्यानम् ॥ १ ॥ २ ॥

**अथानुवासितमास्थापयेत्; स्वभ्यक्तस्विन्नशरीरमुत्सृष्टबहिर्वेगमप्रवाते शुचौ वेश्मनि मध्याह्ने प्रततायां शय्यायामधः सुपरिग्रहायां श्रोणिप्रदेशव्यूढायामनुपधानायां वामपार्श्वशायिनमाकुञ्चितदक्षिणसक्थिमितरप्रसारितसक्थिं सुमनसं जीर्णान्नं वाग्यतं सुनिषण्णदेहं विदित्वा, ततो वामपादस्योपरि नेत्रं कृत्वेतरपादाङ्गुष्ठाङ्गुलिभ्यां कर्णिकामुपरि निष्पीड्य सव्यपाणिकनिष्ठिकानामिकाभ्यां बस्तेर्मुखार्धं सङ्कोच्य मध्यमप्रदेशिन्यङ्गुष्ठैरर्धं तु विवृतास्यं कृत्वा बस्तावौषधं प्रक्षिप्य दक्षिणहस्ताङ्गुष्ठप्रदेशिनीभ्यां चानुसिक्तमनायतमबुद्बुदमसङ्कुचितमवातमौषधासन्नमुपसंगृह्य पुनरितरेण गृहीत्वा दक्षिणेनावसिञ्चेत् ततः सूत्रेणैवौषधान्ते द्विस्त्रिर्वावेष्ट्य बध्नीयात्, अथ दक्षिणेनोत्तानेन पाणिना**

बस्तिं गृहीत्वा वामहस्तमध्यमाङ्गुलिप्रदेशिनीभ्यां नेत्रमुपसंगृह्याङ्गुष्ठेन नेत्रद्वारं पिधाय घृताभ्यक्ताग्रनेत्रं घृताक्तगुदाय प्रयच्छेदनुपृष्ठवंशं सममनुन्मुखमाकर्णिकं नेत्रं प्रणिधत्स्वेति ब्रूयात् ॥ ३ ॥

बस्तिं सव्ये करे कृत्वा दक्षिणेनावपीडयेत् ॥
एकेनैवावपीडेन न द्रुतं न विलम्बितम् ॥ ४ ॥

ततो नेत्रमपनीय त्रिंशन्मात्राः पीडनकालादुपेक्ष्योत्तिष्ठेत्यातुरं ब्रूयात् । आतुरमुपवेशयेदुत्कटुकं बस्त्यागमनार्थम् । निरूहप्रत्यागमनकालस्तु मूहूर्तो भवति ॥ ५ ॥

अनेन विधिना बस्तिं दद्याद्बस्तिविशारदः ॥
द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः ॥ ६ ॥

निरूहप्रणयनं दर्शयन्नाह—अथानुवासितमित्यादि । अनुवासितं दत्तानुवासनं स्निग्धस्रोतोमार्गतया सुखमेव दोषनिर्हरणार्थमास्थापयेत् । निरूहस्येतिविधानमाह—स्वभ्यक्तमित्यादि । उत्सृष्टबहिर्वेगं त्यक्तविण्मूत्रादिकम् । प्रततायां विस्तीर्णायामिति । केचिदधः सुपरिगृहीतायां पादतलयोः शोभनप्रतिवाहकायां, श्रोणि कटिप्रदेशस्तेन व्यूढायां शोभनोन्नतायामिति व्याख्यानयन्ति । अनुपधानायां अनुपशीर्षकायाम् । सुनिषण्णदेहं अंशोन्नतं यथा स्यात्तथा विश्रान्तशरीरम् । सव्यपाणिः वामकरः। औषधं प्रक्षिप्य उपसंग्रहणेन क्रियाविशेषेण । अनुत्सिक्तं ऊर्ध्वक्षरणरहितं यथा भवति तथा सिक्तम् । अनायतमनतिदीर्घं अचिरात्प्रवृत्तम् । असङ्कुचितं वस्तुसञ्चारणक्षमम् । इतरेण वामकरेण गृहीत्वा, दक्षिणकरेणैवमौषधान्ते सूत्रेण द्विस्त्रिर्वावेष्ट्य बध्नीयात् । आकर्णिकं कर्णिकां मर्यादां कृत्वा । नेत्रं प्रणिधत्स्व प्रवेशयेति आतुरं प्रति भिषग् ब्रूयादिति सम्बन्धः । नेत्रप्रणिधानमभिधाय बस्तिपीडनविधिमाह—बस्तिमित्यादि । त्रिंशन्मात्रा इति मात्रामानो हि अग्निवेशेन व्याख्यातः "यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् । निमेषोन्मेषकालो वा सा मात्रा परिकीर्तिता"—इति । पराशरस्तु बस्तिकर्मणि मात्रासंख्यामाह,—"जानुमण्डलमावेष्ट्य दत्तं दक्षिणपाणिना । कृष्टनेत्रच्छटाशब्दशतं तिष्ठेदवेगवान्"—इति । तत्र पराशरेण क्रूरकोष्ठपुरुषमङ्गीकृत्य शतमभिहितं, शेषयोर्मध्यमृदुकोष्ठयोः सप्ततिस्त्रिंशदित्यस्यानुक्रममप्यूहनीयं स्यादित्येके मन्यन्ते । यतः सुश्रुताचार्येण मृदुकोष्ठपुरुषापेक्षया प्रोक्तः त्रिंशन्मात्रापीडनकालः । अथवा त्रिंशन्मात्रानन्तरं वैद्येनोत्तिष्ठेत्युक्ते सति आतुरस्योत्थाने आसनोत्कटुकभवनादिकालविलम्बेनैव मात्राशतं पूर्णं स्यादिति शास्त्रयोरविरोधः । मुहूर्तः घटिकाद्वयम् । मुहूर्तादप्रवृत्तमानं शोधनीयनिरूहैरेव क्षाराम्ललवणैर्हरेत् । चतुर्थं वा यथार्थत इति अर्थस्य प्रयोजनतोऽनतिक्रमतो यथार्थतः । एतदुक्तं भवति—यदा सुनिरूढलिङ्गप्राप्तो भवति तदा तत्र निर्हरणीयाभावान्निरूहणमप्रयोजनं देयं, असम्यग्दानेन क्रूरकोष्ठतया प्रभूतदेयत्वेन वा सुनिरूढमप्राप्तस्य निर्हरणीयो दोषोऽस्तीति । चतुर्थं वा यथार्हत इति पाठे निरूहसाध्यप्रयोजनानुरोधाच्चतुर्थमपि पुटकं निरूढलिङ्गार्थं प्रयोजयेत् ॥ ३—६ ॥

सम्यङ्निरूढलिङ्गे तु प्राप्ते बस्तिं निवारयेत् ॥
अपि हीनक्रमं कुर्यान्न तु कुर्यादतिक्रमम् ॥ ७ ॥
विशेषात् सुकुमाराणां हीन एव क्रमो हितः ॥

अमुमेवार्थं प्रकटयन्नाह—सम्यङ् निरूढलिङ्गे त्वित्यादि । केचिद्व्रक्रमप्यत्र चतुर्थं शमनीयमस्तीति चतुर्थं वस्तिदानमाहुः । अपरे तु पश्चाद्दाहनिर्वापणार्थं मधुरशीतैश्चतुर्थोऽपि वस्तिर्देय इति वदन्ति । हीनक्रममिति अतियोगायोगव्यापदोः मध्ये अतियोगजा व्यापत् महात्ययं करोति ॥ ७ ॥—

यस्य स्याद्बस्तिरत्यल्पवेगो हीनमलानिलः ॥ ८ ॥
दुर्निरूढः स विज्ञेयो मूत्रार्त्यरुचिजाड्यवान् ॥

हीननिरूढलक्षणमाह—यस्येत्यादि । अल्पवेगः स्तोकवेगः । जाड्यं अपटुता ॥ ८ ॥—

यान्येव प्राक्प्रयुक्तानि लिङ्गान्यतिविरेचिते ॥ ९ ॥
तान्येवातिनिरूढेऽपि विज्ञेयानि विपश्चिता ॥

अतिनिरूढलिङ्गमाह—यानीत्यादि । यान्येव प्राक् प्रयुक्तानि शूलगुदभ्रंशकफातियोगादीनि ॥ ९ ॥—

यस्य क्रमेण गच्छन्ति विट्पित्तकफवायवः ॥ १० ॥
लाघवं चोपजायेत सुनिरूढं तमादिशेत् ॥

सम्यङ् निरूढलिङ्गमाह । यस्येत्यादि ॥ १० ॥—

सुनिरूढं ततो जन्तुं स्नातवन्तं तु भोजयेत् ॥ ११ ॥
पित्तश्लेष्मानिलाविष्टं क्षीरयूषरसैः क्रमात् ॥
सर्वं वा जाङ्गलरसैर्भोजयेदविकारिभिः ॥ १२ ॥
त्रिभागहीनमर्धं वा हीनमात्रमथापि वा ॥
यथाग्निदोषं मात्रेयं भोजनस्य विधीयते ॥ १३ ॥
अनन्तरं ततो युञ्ज्याद्यथास्वं स्नेहबस्तिना ॥

सुनिरूढस्य पश्चात्कर्म निर्दिशन्नाह—सुनिरूढेत्यादि । केचिदत्र सुनिरूढमित्यादि निरूढलिङ्गेषु पाठान्तरं पठन्ति । प्रत्यातुरं पीतनागरकषायस्य स्नानादिकं मन्यन्ते । तदुक्तम्,—"ततः प्रत्यागते बस्तौ वार्युष्णं नागरैः शृतम् । पाययेत् कृतशौचं च स्नापयेदुष्णवारिणा ॥" हीनमात्रमथापिवेत्यत्र मात्राशब्दोऽल्पार्थः; तेन हीनमात्रमल्पहीनम् । अनन्तरं जन्तुं तु योजयेत् स्नेहबस्तिना ततो मात्रावद्भोजनानन्तरं यथास्वं यो य आत्मीयदोषापेक्षया स्नेहबस्तिस्तेन स्नेहबस्तिना युञ्ज्यात् । परं सुनिरूढमेव पुरुषं नतु दुर्निरूढं, तत्र सदोषतया निरूहणमेव कार्यम् । नचातिरूढं, तत्रातिविरिक्ते शीतपरिषेकपिच्छाबस्त्यादिकं नतु स्नेहबस्तिः; तथा च विदेहः—"अतितीक्ष्णैर्निरूढस्य हतदोषस्य सर्वतः । कश्चिदेवानभिप्रेतं मार्गं स्नेहोऽनुगच्छति"

इति। गयदासस्तु परिभाषितं षट्पलप्रमाणं स्नेहबस्तिमत्र देयं न मन्यते, किन्त्वनुवासनाख्यपलत्रयप्रमाणं स्नेहवस्तिं देयमत्र मन्यते। यत्र तु स्नेहबस्तिः स्वतन्त्रः तत्रैव षट्पलप्रमाणः॥ ११—१३॥—

**विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः॥१४॥**
**आस्थापनस्नेहबस्त्योः सम्यग्दाने तु लक्षणम्॥**

इदानीमास्थापनस्य सम्यग्दत्तस्य लक्षणमाह—विविक्तेत्यादि। रसादेर्धातुस्रोतसामनावृतत्वं विविक्तता॥ १४॥—

**तदहस्तस्य पवनाद्भयं बलवदिष्यते॥ १५॥**
**रसौदनस्तेन शस्तस्तदहश्चानुवासनम्॥**

कुतः पुनर्निरूहशुद्धस्य मन्दाग्नेस्तदहरेव मांसरसभोजनमनुवासनयोजनं चेत्याह—तदित्यादि। निरूहणाद्विड्वातादिप्रवृत्तिलक्षणेन धातुक्षयेण कुपितानिलस्य बलवदेव भयमतः तदहरेव रसौदनभोजनं, तच्च निरूणमन्दीकृतानलभयात् मात्रावत्। तथा पवनभयात् तदहरेव द्वादशप्रसृतिनिरूहचतुर्थांशेन स्नेहेनानुवासनम्। गयदासस्तु सुनिरूढस्य तदहः पलत्रयमेवानुवासनम्। तथा तदहश्चेति चकारोऽभिन्नक्रमे, तेनानुवासनं चेत्यत्र सम्बन्धादनुक्तोऽपि मात्राबस्तिश्चात्र समुच्चीयत इति मन्यते, न षट्पलप्रमाणं स्नेहबस्तिं, भोजदर्शनादिति॥ १५॥—

**पश्चादग्निबलं मत्वा पवनस्य च चेष्टितम्॥ १६॥**
**अन्नोपस्तम्भिते कोष्ठे स्नेहबस्तिर्विधीयते॥**

निरूहणादनन्तरं चतुर्थांशबस्तिमाह—पश्चादित्यादि। अग्निबलं दीप्तं बलं वयःशक्त्यनुरूपमुपलभ्य, पवनस्य च चेष्टितं मत्वेति सञ्ज्वलनशब्दकरणस्फुरणादिकमवधार्य, अन्नपानेनावष्टब्धे कोष्ठे स्नेहबस्तिरुत्तममात्रारूपः षट्पलः क्रियते॥१६॥—

**अनायान्तं मुहूर्तात्तु निरूहं शोधनैर्हरेत्॥ १७॥**
**तीक्ष्णैर्निरूहैर्मतिमान् क्षारमूत्राम्लसंयुतैः॥**

ततः परं घटिकाद्वयादनागच्छतो निरूहस्य निर्हरणोपायं दर्शयति—अनायान्तमित्यादि। निरूहैर्मतिमान् हरेदिति सम्बन्धः। कथं शोधनैस्तीक्ष्णैः क्षारमूत्राम्लसंयुतैः क्षारो यवक्षारः, मूत्रं गोमूत्रं, अम्लं काञ्जिकम्॥ १७॥—

**विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम्॥ १८॥**
**शूलारतिज्वरानाहं मरणं वा प्रवर्तयेत्॥**

विगुणः विपरीतः। अरतिर्न कुत्रचिद्रतिः॥ १८॥—

**न तु भुक्तवते देयमास्थापनमिति स्थितिः॥ १९॥**
**विसूचिकां वा जनयेच्छर्दिं वापि सुदारुणाम्॥**
**कोपयेत् सर्वदोषान् वा तस्माद्दद्यादभोजिते॥ २०॥**

भुक्तवतः कस्मादास्थापनं निषिध्यते तदाह—नत्वित्यादि। न तु भुक्तवत इत्यादिना य आस्थापननिषेधोऽभिहितस्तस्य दृढीकरणार्थं भुक्तवतो विसूचिकादिदोषोद्भावनया अभोजिने दानमाह॥ १९॥ २०॥

**जीर्णान्नस्याशये दोषाः पुंसः प्रव्यक्तिमागताः॥**
**निःशेषाः सुखमायान्ति भोजनेनाप्रपीडिताः॥ २१॥**
**न वास्थापनविक्षिप्तमन्नमग्निः प्रधावति॥**
**तस्मादास्थापनं देयं निराहाराय जानता॥ २२॥**

विसूचिकेत्यादिदूषणोद्भावनद्वारेण अभोजिने दानमभिधाय जीर्णान्नस्येत्याद्युक्तगुणद्वारेणाऽप्यभोजिन एव दानमाह—जीर्णान्नस्येत्यादि। व्यक्तिः स्पष्टता निवारणमित्यर्थः॥२१॥२२॥

**आवस्थिकं क्रमं चापि मत्वा कार्यं निरूहणम्॥**
**मलेऽपकृष्टे दोषाणां बलवत्त्वं न विद्यते॥ २३॥**

तीव्रशूलाध्मानादिरोगावस्थस्योपक्रमेणापि नोर्ध्वं शुद्ध्यतः फलवर्त्यादिप्रणिधानपूर्वकं भुक्तवतोऽपि निरूहदानं कर्तव्यं स्यादत आह—आवस्थिकमित्यादि॥ २३॥

**क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा॥**
**लवणानि फलक्षौद्रं शताह्वा सर्षपं वचा॥ २४॥**
**एला त्रिकटुकं रास्ना सरलं देवदारु च॥**
**रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च॥ २५॥**
**कटुका शर्करा मुस्तमुशीरं चन्दनं शठी॥**
**मञ्जिष्ठा मदनं चण्डा त्रायमाणा रसाञ्जनम्॥ २६॥**
**बिल्वमध्यं यमानी च फलिनी शक्रजा यवाः॥**
**काकोली क्षीरकाकोली जीवकर्षभकावुभौ॥ २७॥**
**तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका॥**
**निरूहेषु यथालाभमेष वर्गो विधीयते॥ २८॥**

इदानीं बस्तियौगिकानि द्रव्याण्युपदिशन्नाह—क्षीराणीत्यादि। फलं त्रिफला। सरलं वृक्षविशेषः। संशोधनानि त्रिवृदादीनि। मदनं मदनफलम्। शक्रजा यवा इन्द्रयवाः। मधूलिका तृणविशेषः मर्कटिकेति लोके॥ २४—२८॥

**स्वस्थे क्वाथस्य चत्वारो भागाः स्नेहस्य पञ्चमः॥**
**क्रुद्धेऽनिले चतुर्थस्तु षष्ठः पित्ते कफेऽष्टमः॥२९॥**
**सर्वेषु चाष्टमो भागः कल्कानां लवणं पुनः॥**
**क्षौद्रं मूत्रं फलं क्षीरमम्लं मांसरसं तथा॥**
**युक्त्या प्रकल्पयेद्धीमान् निरूहे—**

सम्प्रति निरूहणेषु क्वाथादिषु प्रतिदोषं कियती कस्य मात्रेत्याह—स्वस्थ इत्यादि। स्वस्थे गतवातपित्तकफे पुरुषे। द्वादशप्रसृतस्य निरूहस्य क्वाथस्य चत्वारो भागाश्चत्वारः प्रसृताः अष्टौ पलानि। स्नेहस्य पञ्चम इति पञ्च पलानि। क्रुद्धेऽनिले चतुर्थ इति चतुर्थो भागः षट्पलानीत्यर्थः। षष्ठः पित्ते इति क्रुद्धे पित्ते स्नेहस्य षष्ठो भागः चत्वारि पलानीत्यर्थः। कफेऽष्टम इति क्रुद्धे कफे स्नेहस्याष्टमो भागः त्रीणि पलानीत्यर्थः। सर्वत्र कल्कस्याष्टमो भागः त्रीणि पलानीत्यर्थः। ततो लवणादीनां मात्रां दोषभेषजयोः सामान्यविशेषन्यायेन गुणमवलोक्य सम्यग् प्रकल्पयेत्। क्वचिद्वातादि विषयसात्म्यमन्यथा पठ्यते। तथाहि,—"मधुस्नेहनकल्काख्यकषायावापतः क्रमात्। त्रीणि षट् द्वे दश त्रीणि

पलान्यनिलरोगिणाम् । पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम् । षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणं—" इति पूर्वाचार्यभणितत्वात् द्वयमपि प्रमाणम् ॥ २९ ॥—

कल्पना त्वियम् ॥३०॥

**कल्कस्नेहकषायाणामविवेकाद्भिषग्वरैः ॥**
**बस्तिस्तु कल्पितः सम्यक् तस्य दानं यथार्थकृत्॥३१**

सम्यग्योगहेतुकमात्वां नियम्य समुदायकल्पनामुद्दिशन्नाह—कल्पना त्वियमिति । कल्कस्नेहकषायाणामिति अविवेकादिति ल्यब्लोपे पञ्चमी; तेन कल्कादीनां विवेकाभावमपृथग्भावं वीक्ष्य सुकल्पना भिषग्वरैः प्रोक्ता । एतेन हस्तप्रक्षालनादिकृन्मिथ्यायुक्तः । तथा चोक्तं,—"न धावत्यौषधं पाणिं न तिष्ठत्यवलिप्य च । न करोति च सीमन्तं स निरूहः सुयोजितः"—इति । तस्य दानं यथार्थकृदिति वातपित्तकफशोणितहरणशोधनसंग्रहणलेखनबृंहणवाजीकरणरसायनादियोगकृत् ॥ ३०—३१ ॥

**दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम् ॥**
**पात्रे तलेन मथ्नीयादनुस्नेहं शनैः शनैः ॥**
**सम्यक् सुमथिते दद्यात् फलकल्कमतः परम् ॥ ३२**
**ततो यथोचितान् कल्कान् भागैः स्वैः श्लक्ष्णपेषितान्**
**गम्भीरे भाजनेऽन्यस्मिन्मथ्नीयात्त खजेन च ॥ ३४ ॥**
**यथा च साधु मन्येत न सान्द्रो न तनुः समः ॥**
**कषायप्रसृतान् पञ्च सुपूतांस्तत्र दापयेत् ॥**
**रसक्षीराम्लमूत्राणां दोषावस्थामवेक्ष्य तु ॥ ३५ ॥**

बस्तिद्रव्याणि केन क्रमेण योज्यन्ते तमाह—दत्त्वेत्यादि । मधुनः प्रसृतद्वयं चत्वारि पलानि । तलेन हस्ततलेन । अक्षं कर्षम् । शनैः शनैरल्पमल्पं स्नेहं दत्त्वेत्यर्थः । फलकल्कमतःपरं अतःपरमस्मिंस्तु मथिते फलकल्कं मदनफलकल्कम् । तत इत्यादि ततः फलकल्कादिदानोत्तरम् । कल्कादीन् यथोचितान् उचितानतिक्रमेण । भागैः स्वैरिति अंशैरात्मीयैः, यथा मदनफलेन सह सर्वकल्कद्रव्याणां पलत्रयं, एवं कल्पितैः । श्लक्ष्णं पेषितान् सूक्ष्ममर्दितान् कल्कान् दद्यादिति संबन्धः । गम्भीरे इत्यादि पूर्वपात्रादन्यस्मिन् गम्भीरभाजने खजेन मथ्नीयात् । खजोऽत्र पञ्चाङ्गुलो हस्तः मन्थानश्च । यथेत्यादि मथ्नीयादित्यत्रापि संबन्धनीयम् । एतेन करेणापि मथ्नीयादित्यर्थः । रसेत्यादि रसादीनां दोषावस्थामवेक्ष्य मात्रामर्पयेदिति शेषः । तन्त्रान्तरे निरूहयोजना प्रोक्ता । "माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् । आवाप्यावाप्य पात्रे तन्मथ्नीयादन्तरान्तरा ॥ सम्यक् पाणितलेनैवं निरूहे योजनाविधिः"—इति ॥ ३२—३५ ॥

**अत ऊर्ध्वं द्वादशप्रसृतान् वक्ष्यामः ॥—**
**दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम् ॥**
**विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतित्रयम् ॥ ३६ ॥**
**एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत् ॥**
**संमूर्च्छिते कषायं तु चतुःप्रसृतिसंमितम् ॥ ३७ ॥**
**वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम् ॥**
**एवं प्रकल्पितो बस्तिर्द्वादशप्रसृतो भवेत् ॥ ३८ ॥**
**ज्येष्ठायाः खलु मात्रायाः प्रमाणमिदमीरितम् ॥**
**अपह्रासे भिषक्कुर्यात्तद्वत् प्रसृतिहापनम् ॥ ३९ ॥**
**यथावयो निरूहाणां कल्पनेयमुदाहृता ॥**
**सैन्धवादिद्रवान्तानां सिद्धिकामैर्भिषग्वरैः ॥ ४० ॥**

द्वादशप्रसृतप्रमाणसाधनं निर्दिशन्नाह—अत इत्यादि । संमूर्च्छिते मिलिते । वितरेत् दद्यात् । आवापः पश्चान्निक्षेप्यं क्षीरकाञ्जिकादि । द्विप्रसृतिसंमितं चतुःपलप्रमाणम् । सैन्धवकल्कस्तु स्तोकत्वाच्चतुर्विंशतिपलेष्वेवावन्तर्भवतीति त्यक्तदोषो न वाच्यः। अपह्रासे सविषये स्तोककरणादिभिः प्रयुक्ता हन्युः इति व्याधिषु वर्तते (?) ॥ ३६—४० ॥

**अत ऊर्ध्वं प्रवक्ष्यन्ते बस्तयोऽत्र विभागशः ॥**
**यथादोषं प्रयुक्ता ये हन्युर्नानाविधान् गदान् ॥ ४१॥**
**शम्पाकोरुबुवर्षाभूवाजिगन्धानिशाच्छदैः ॥**
**पञ्चमूलीबलारास्नागुडूचीसुरदारुभिः ॥ ४२ ॥**
**क्वथितैः पालिकैरेभिर्मदनाष्टकसंयुतैः ॥**
**कल्कैर्मागधिकाम्भोदहबुषामिसिसैन्धवैः ॥ ४३ ॥**
**वत्साह्वयप्रियङ्ग्वग्रयष्ट्याह्वयरसाञ्जनैः ॥**
**दद्यादास्थापनं कोष्णं क्षौद्राद्यैरभिसंस्कृतम् ॥ ४४ ॥**
**पृष्ठोरुत्रिकशूलाश्मविण्मूत्रानिलसङ्गिनाम् ॥**
**ग्रहणीमारुतार्शोघ्नं रक्तमांसबलप्रदम् ॥ ४५ ॥**

इदानीं कुपितानिलमधिकृत्य बस्तिदानमाह, तथा सर्वबस्तिद्रव्यनिक्षेपक्रमं च । शम्पाकः किरमालकः । निशाच्छदः शठी । पञ्चमूली अत्र ह्रस्वा । अम्भोदः मुस्ता । तत्र शम्पाकादीनि सुरदारुपर्यन्तानि चतुर्दशपलप्रमितानि, मदनाष्टकसंयुतानि चतुर्भिर्मदनफलैः पलं भवति, एवं षोडशपलानि द्रव्याणि जर्जरीकृत्याष्टगुणमष्टाविंशत्यधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत् यावद्द्वात्रिंशत् पलानि भवन्ति, ततो वस्त्रपूतं कृत्वा अष्टपलं क्वाथं गृह्णीयात् । ततश्च ताम्रभाजनमानीय, टङ्कत्रयपरिमितं सैन्धवं निक्षिप्य, क्षौद्रमित्युक्तत्वात्पलत्रयपरिमितं मधु, तैलस्य षट्पलानि, ततः सैन्धवमधुभ्यामेकीकृत्य, क्षौद्राद्यैरभिसंस्कृतमित्यत्राद्यशब्देन स्नेहक्षीरकाञ्जिकमूत्ररसानां प्रत्येकं पलप्रमाणं, सैन्धवटङ्कत्रयप्रमाणस्यादावेव च निक्षिप्तत्वात् कल्कः पलत्रयपरिमितो निक्षिप्तो भवति; एवं चतुर्विंशतिपलानि भवन्ति । एवं द्वितीयं तृतीयं चतुर्थं वा दद्यात् । अयं बस्तिर्वाते वातरोगे च प्रयोज्यः ॥ ४१—४५ ॥

**गुडूचीत्रिफलारास्नादशमूलबलापलैः ॥**
**क्वथितैः श्लक्ष्णपिष्टैस्तु प्रियङ्ग्वञ्जनसैन्धवैः ॥ ४६ ॥**
**शतपुष्पावचाकृष्णायवानीकुष्ठबिल्वजैः ॥**

**सगुडैरक्षमात्रैस्तु मदनार्धपलान्वितैः ॥ ४७ ॥**
**क्षौद्रतैलघृतक्षीरशुक्तकाञ्जिकमस्तुभिः ॥**
**समालोड्य च मूत्रैस्तु दद्यादास्थापनं परम् ॥ ४८॥**
**तेजोवर्णबलोत्साहवीर्याग्निप्राणवर्धनम् ॥**
**सर्वमारुतरोगघ्नं वयःस्थापनमुत्तमम् ॥ ४९ ॥**

गुडूचीत्यादि। पलं मांसम्। शेषं प्रसिद्धम्। गुडूच्यादीनि पलान्तानि सप्तदशद्रव्याणि प्रत्येकं पलमितानि, अष्टगुणं षट्त्रिंशदधिकशतपलप्रमाणं जलं दत्वा क्वाथयेत्, ततश्चतुर्थांशावशिष्टानि चतुस्त्रिंशत्पलानि ग्राह्याणि, ततः पुटकस्यार्थे पलाष्टकं ग्राह्यम्। प्रियङ्ग्वादिद्रव्यकल्को यथोक्तप्रमाणेन। बिल्वजं बिल्वफलम्। मधु पूर्ववत्, तैलघृते पूर्ववत्, क्षीरस्य द्विपलं, शुक्तकाञ्जिकमस्तुगोमूत्राणां प्रत्येकमर्धपलमित्येवं चतुर्विंशतिपलानि भवन्ति। द्रव्यनिक्षेपक्रमः पूर्ववत्। तेजोवर्ण इत्यादि तेजः त्वग्गतं भ्राजकाग्निसंज्ञं पित्तम्। बलं मांसोपचयः। उत्साहः चेतसिको धर्मः। वीर्यं शक्तिः। प्राणाः अग्निसोमादयः। अयमपि वातरोगे योज्यः ॥ ४६—४९ ॥

**कुशादिपञ्चमूलाब्दत्रिफलोत्पलवासकैः ॥**
**शारिवोशीरमञ्जिष्ठारास्नारेणुपरूषकैः ॥ ५० ॥**
**पालिकैः क्वथितैः सम्यग् द्रव्यैरेभिश्च पेषितैः ॥**
**शृङ्गाटकात्मगुप्तेभकेसरागुरुचन्दनैः ॥ ५१ ॥**
**विदारीमिसिमञ्जिष्ठाश्यामेन्द्रयवसिन्धुजैः ॥**
**फलपद्मकयष्ट्याह्वैः क्षौद्रक्षीरघृताप्लुतैः ॥ ५२ ॥**
**दत्तमास्थापनं शीतमम्लहीनैस्तथा द्रवैः ॥**
**दाहासृग्दरपित्तासृक्पित्तगुल्मज्वराञ्जयेत् ॥ ५३ ॥**

इदानीं कुपितपित्तमधिकृत्य वस्तिदानमाह—कुशादीत्यादि। कुशकाशनलदर्भेक्षव इति कुशादिपञ्चमूलम्। उत्पलं नीलोत्पलं, रेणुः, पर्पटकः, आत्मगुप्ता कपिकच्छूकः, मुस्ता 'मुथा' इति भाषा, श्यामा प्रियङ्गुः, फलं मदनफलम्। पेषितैः पिष्टैः। कुशादिसप्तदशद्रव्याणि पलप्रमितानि अष्टगुणं षट्त्रिंशदधिकपलशतप्रमाणं जलं दत्त्वा क्वाथयेत्, ततश्चतुर्थांशावशिष्टानि चतुस्त्रिंशत्पलानि ग्राह्याणि, अतएव पुटकस्यार्थे क्वाथपलाष्टकं ग्राह्यं, शृङ्गाटकादियष्टीमधुकान्तानां पञ्चदशद्रव्याणां कल्कं पलत्रयप्रमाणं, 'पित्ते नातिबहुक्षौद्रं' इत्युक्तत्वात् मधुनश्चत्वारि पलानि, 'क्रुद्धे पित्ते अष्टमो भागः स्नेहस्य' इत्युक्तत्वात् घृतस्य चत्वारि पलानि, क्षीरस्य पलद्वयं, 'अम्लहीनैस्तथा द्रव्यैः' इत्युक्तत्वात् मांसरसस्यैकं, इक्षुरसस्य पलद्वयं, एवं चतुर्विंशतिपलानि भवन्ति। द्रव्याणां निक्षेपक्रमः पूर्ववत्। अयं बस्तिः पित्ते पित्तरोगे च प्रयोज्यः। 'विदारी मिसि मञ्जिष्ठा' इत्यत्र मिसिस्थाने विषेति केचित् पठन्ति, तत्र विषमतिविषा; विषं वा जलं, तोयनामत्वात् ॥ ५०—५३ ॥

**रोध्रचन्दनमञ्जिष्ठारास्नानन्ताबलर्धिभिः ॥**
**सारिवावृषकाश्मर्यमेदामधुकपद्मकैः ॥ ५४ ॥**
**स्थिरादितृणमूलैश्च क्वाथैः कर्षत्रयोन्मितैः ॥**
**पिष्टैर्जीवककाकोलीशृङ्गवर्धिमधुकोत्पलैः ॥ ५५ ॥**
**प्रपौण्डरीकजीवन्तीमेदारेणुपरूषकैः ॥**
**अभीरुमिसिसिन्धूत्थवत्सकोशीरपद्मकैः ॥ ५६ ॥**
**कसेरुशर्करायुक्तैः सर्पिर्मधुपयःप्लुतैः ॥**
**द्रवैस्तीक्ष्णाम्लवर्ज्यैश्च दत्तो बस्तिः सुशीतलः ॥५७॥**
**गुल्मासृग्दरहृत्पाण्डुरोगान् सविषमज्वरान् ॥**
**असृक्पित्तातिसारौ च हन्यात्पित्तकृतानगदान् ५८**

रोध्रेत्यादि। अनन्ता उत्पलसारिवा। स्थिरादि लघुपञ्चमूली, तृणमूलं कुशादिपञ्चमूलं, अभीरुः शतावरी। रोध्रादितृणमूल्यन्तानां त्रयोविंशतिद्रव्याणां कर्षत्रयप्रमितत्वेन सप्तदशपलानि कर्षाधिकानि अष्टगुणमष्टत्रिंशदधिकपलशतप्रमाणं जलं दत्त्वा क्वाथयेत्, अतः सार्धचतुस्त्रिंशत्पलाणि ग्राह्याणि, अतएव पुटकार्थे क्वाथपलाष्टकं ग्राह्यं, जीवकादिशर्करान्तविंशतिद्रव्याणां कल्कं पलत्रयप्रमाणं, मधुघृते पूर्ववत्, 'द्रवैस्तीक्ष्णाम्ललवणवर्ज्यैः' इत्युक्तत्वात् क्षीरमांसरसेक्षुरसाः पूर्ववदित्येवं चतुर्विंशतिपलमेवेति। द्रव्यनिःक्षेपक्रमः पूर्ववत्। अयमपि बस्तिः पित्ते पित्तरोगे च प्रयोज्यः ॥ ५४—५८ ॥

**भद्रानिम्बकुलत्थार्ककोशातक्यमृतामरैः ॥**
**सारिवाबृहतीपाठामूर्वारग्वधवत्सकैः ॥ ५९ ॥**
**क्वाथः कल्कस्तु कर्तव्यो वलामदनसर्षपैः ॥**
**सैन्धवामरकुष्ठैलापिप्पलीबिल्वनागरैः ॥ ६० ॥**
**कटुतैलमधुक्षारमूत्रतैलाम्बुसंयुतैः ॥**
**कार्यमास्थापनं तूर्णं कामलापाण्डुमेहिनाम् ॥ ६१ ॥**
**मेदस्विनामनग्नीनां कफरोगाशनद्विषाम् ॥**
**गलगण्डगरग्लानिश्लीपदोदररोगिणाम् ॥ ६२ ॥**

कुपितकफस्य बस्तिदानमाह—भद्रेत्यादि। भद्रादिवत्सकान्तानां त्रयोदशद्रव्याणां षोडशपलानि अष्टगुणं अष्टाविंशत्यधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत्, अतो द्वात्रिंशत्पलानि ग्राह्याणि, अतएव पुटकस्यार्थे क्वाथपलाष्टकं, वचादिनागरान्तानां दशद्रव्याणां कल्कस्य पलत्रयं, कटुतैलतिलतैलयोस्त्रीणि पलानि कफेऽष्टम इत्युक्तत्वात्, मधुनः पुनः षट्पलानि, यवक्षारस्यैकपलं, मूत्रस्य सार्धपलं तथा काञ्जिकस्य, एवं चतुर्विंशतिपलानि। द्रव्यनिक्षेपक्रमः पूर्ववत्। अयं बस्तिः कफे कफरोगे च योज्यः ॥ ५९—६२ ॥

**दशमूलीनिशाबिल्वपटोलत्रिफलामरैः ॥**
**क्वथितैः कल्कपिष्टैस्तु मुस्तसैन्धवदारुभिः ॥ ६३ ॥**
**पाठामागधिकेन्द्राह्वैस्तैलक्षारमधुप्लुतैः ॥**
**कुर्यादास्थापनं सम्यग्मूत्राम्लफलयोजितम् ॥६४॥**
**कफपाण्डुमदालस्यमूत्रमारुतसंगिनाम् ॥**
**आमाटोपापचीश्लेष्मगुल्मक्रिमिविकारिणाम् ॥ ६५**

दशमूलीत्यादि। इन्द्राह्वः कुटजः। दशमूलाद्यमरान्त-

सप्तदशद्रव्याणि अष्टगुणं षट्त्रिंशदधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत्, अतश्चतुस्त्रिंशत्पलानि ग्राह्याणि, पुटकार्थे क्वाथपलाष्टकं ग्राह्यं, मुस्तादीन्द्राह्वान्तषड्द्रव्याणां कल्कं पूर्ववत्, तथा तैलमधुनोः प्रत्येकं चत्वारि पलानि, क्षारस्यार्धपलं, मूत्रस्य सार्धपलं, तथा काञ्जिकस्य सार्धपलं, मदनफलस्य सार्धपलमित्येवं चतुर्विंशतिपलानि भवन्ति । द्रव्यनिःक्षेपक्रमः पूर्ववत् । अयमपि कफे कफरोगे च प्रयोज्यः ॥ ६३—६५ ॥

**वृषाश्मभेदवर्षाभूधान्यगन्धर्वहस्तकैः ॥**
**दशमूलबलामूर्वायवकोलनिशाच्छदैः ॥ ६६ ॥**
**कुलत्थबिल्वभूनिम्बैः क्वथितैः पलसंमितैः ॥**
**कल्कैर्मदनयष्ट्याह्वषड्ग्रन्थामरसर्षपैः ॥ ६७ ॥**
**पिप्पलीमूलसिन्धूत्थयवानीमिसिवत्सकैः ॥**
**क्षौद्रेक्षुक्षीरगोमूत्रसर्पिस्तैलरसप्लुतैः ॥ ६८ ॥**
**तूर्णमास्थापनं कार्यं संसृष्टबहुरोगिणाम् ॥**
**गृध्रसीशर्कराष्ठीलातूणीगुल्मगदापहम् ॥ ६९ ॥**

वृषाश्मभेदेत्यादि । निशाच्छदः शठी, षड्ग्रन्था वचा । वृषादिभूनिम्बान्तानि त्रयोविंशतिद्रव्याणि षोडशपलप्रमितानि अष्टाविंशत्यधिकपलशतमितं जलं दत्वा क्वाथयेत्, अतो द्वात्रिंशत्पलानि ग्राह्याणि, अतएव पुटकस्यार्थे क्वाथस्याष्टौ पलानि, मदनक्षौद्रस्य त्रीणि पलानि, इक्षुक्षीरगोमूत्राणां प्रत्येकं सार्धपलं, घृतस्य द्वे पले, तैलस्य द्वे, मांसस्यार्धपलम् । संसृष्टबहुरोगिणामित्यनेन सन्निपातरोगप्रशमनत्वमुक्तं स्यात् । तत्र संसर्गो दोषद्वयसमुदायः, सन्निपातः त्रयाणां समुदायः । तत्र संसर्गे द्वयोः प्रकर्षविकल्पाद्यपेक्षया क्षौद्रस्नेहद्रव्याणि पूर्वोक्तन्यायेन स्वबुद्ध्या परिकल्प्य प्रयोज्यानीति । यदा तु संसर्गात् तस्य प्रकर्षो भवति तदा क्षौद्रादीनां गुणदोषान् निपुणबुद्धया विचार्योत्कर्षापकर्षतया स्नेहमिश्रमानेन निःक्षिप्य चतुर्विंशतिपलानि ग्राह्याणि । एवं दोषत्रयसंयोगेऽपि क्षौद्रादिद्रव्याणामुत्कर्षापकर्षः परिकल्पनीयः ॥ ६६—६९ ॥

**रास्नारग्वधवर्षाभूकटुकोशीरवारिदैः ॥**
**त्रायमाणामृतारक्तापञ्चमूलबिभीतकैः ॥ ७० ॥**
**सबलैः पालिकैः क्वाथः कल्कस्तु मदनान्वितैः ॥**
**यष्ट्याह्वमिसिसिन्धूत्थफलिनीन्द्रयवाह्वयैः ॥ ७१ ॥**
**रसाञ्जनरसक्षौद्रद्राक्षासौवीरसंयुतैः ॥**
**युक्तो बस्तिः सुखोष्णोऽयं मांसशुक्रबलौजसाम् ७२**
**आयुषोऽग्नेश्च संस्कर्ता हन्ति चाशु गदानिमान् ॥**
**गुल्मासृग्दरवीसर्पमूत्रकृच्छ्रक्षतक्षयान् ॥ ७३ ॥**
**विषमज्वरमर्शांसि ग्रहणीं वातकुण्डलीम् ॥**
**जानुजङ्घाशिरोबस्तिग्रहोदावर्तमारुतान् ॥ ७४ ॥**
**वातासृक्शर्कराष्ठीलाकुक्षिशूलोदरारुचीः ॥**
**रक्तपित्तकफोन्मादप्रमेहाध्मानहृद्ग्रहान् ॥ ७५ ॥**

रास्नारग्वधेत्यादि । सबलैः बलासहितैः । रसो मांसरसः । रास्नादिबलान्तषोडशद्रव्याणि पलप्रमितानि अष्टगुणे जले दत्त्वा क्वाथयेत्, ततो द्वात्रिंशत्पलानि ग्राह्याणि, अतएव पुटकस्यार्थे क्वाथस्य पलाष्टकं, मदनादीन्द्रयवान्तानां षण्णां द्रव्याणां कल्कस्य त्रीणि पलानि, स्नेहस्य निरूहणाङ्गत्वात् अत्र षट्पलप्रमाणानि निक्षेपणीयानि । तथाच हारीतः, "स्नेहो गुडो मांसरसः पयांसि साम्लानि मूत्रं मधु सैन्धवं च । एते निरूहे विदुषा प्रयोज्याः क्वाथश्च कल्को मदनात् फलं च" इति । मधुनस्त्रीणि पलानि, रसाञ्जनमांसरसक्षीरसौवीराणां प्रत्येकमेकपलमित्येवं चतुर्विंशतिपलानि भवन्ति । एष बस्तिः स्वस्थातुरविषयः सर्वरोगहरश्च ॥ ७०—७५ ॥

**वातघ्नौषधनिःक्वाथाः सैन्धवत्रिवृतायुताः ॥**
**साम्ला सुखोष्णा योज्याः स्युर्बस्तयः कुपितेऽनिले ॥**

तत्र बस्तिदानं आतुरविषयमाश्रित्य पुनः संक्षेपतो वातादिविषयान् बस्तीन् निर्दिशन्नाह—वातघ्नौषधेत्यादि । ततश्च बस्तय इत्यस्य विशेषणमत एव बहुवचनम् । तत्र वातघ्नौषधानां भद्रदार्वादीनां षोडशपलप्रमितानां अष्टगुणजले क्वथितानां चतुर्भागावशेषेण क्वाथस्य द्वात्रिंशत्पलानि, अतएव पुटकस्यार्थे क्वाथपलाष्टकं, सैन्धवस्य टङ्कत्रयं, वातव्याधावुक्तस्य त्रैवृतस्य स्नेहस्य षट्पलानि, क्षीराण्यम्लानि मूत्राणीत्यादिवर्गमध्ये यानि वातहरद्रव्याणि तानि प्रयोज्यानि अतो मांसरसस्यैकं पलं, गुडसहितस्य कल्कस्य पलत्रयं, तदङ्गत्वान्मधुनः पलत्रयं, अनुक्तानि आवापद्रव्याणि द्विपलानि, तथा काञ्जिकस्य सटङ्काधिकं पलमेवं चतुर्विंशतिपलानि भवन्ति । बस्तय इति त्रिपुटचतुःपुटप्रक्षेपे बहुवचनम् । एवं वक्ष्यमाणयोगेऽपि वाच्यम् ॥ ७६ ॥

**न्यग्रोधादिगणक्वाथाः काकोल्यादिसमायुताः ॥**
**विधेया बस्तयः पित्ते ससर्पिष्काः सशर्कराः॥७७॥**

न्यग्रोधादिगणक्वाथा इत्यादि । न्यग्रोधादीनां षोड़शपलप्रमितानां क्वाथः पूर्ववत्, अतएव पुटकस्यार्थे क्वाथपलाष्टकं, काकोल्यादेः कल्कीकृतस्य पलद्वयं, घृतस्य चत्वारि पलानि, शर्करायाः पलं, एतेन काकोल्यादिपलद्वयेन शर्करायाः पलसहितेन कल्कपलत्रयं, निरूहाङ्गत्वात् अनुक्तस्यापि सैन्धवस्याक्षं, तथा मधुनोऽपि चत्वारि पलानि, क्षीराण्यम्लानि मूत्राणि इत्यादिवर्गमध्ये यानि पित्तहरद्रव्याणि तान्येव क्षेपणीयानि, तेनेक्षुरसस्य पलं, क्षीरस्य पलचतुष्टयमित्येवं चतुर्विंशतिपलानि भवन्ति ॥ ७७ ॥

**आरग्वधादिनिःक्वाथाः पिप्पल्यादिसमायुताः ॥**
**सक्षौद्रमूत्रा देयाः स्युर्बस्तयः कुपिते कफे ॥ ७८ ॥**

आरग्वधेत्यादि । आरग्वधादीनां षोडशपलप्रमितानां क्वाथः पूर्ववत्, अतएव पुटकस्यार्थे क्वाथपलाष्टकं, पिप्पल्यादिकल्कस्य पलत्रयं, मधुनः षट्पलानि, अनुक्तस्यापि सैन्धवस्य टङ्कत्रयं,

तथा तैलस्य त्रीणि पलानि, मूत्रस्य सप्तटङ्काधिकानि त्रीणि पलानि, इत्येवं चतुर्विंशतिपलानि भवन्ति ॥ ७८ ॥

**शर्करेक्षुरसक्षीरघृतयुक्ताः सुशीतलाः ॥**
**क्षीरवृक्षकषायाढ्या बस्तयः शोणिते हिताः ॥ ७९ ॥**

शर्करेक्षुरसक्षीरेत्यादि । क्षीरवृक्षकषायाढ्याः स्फीताः प्रधाना इत्यर्थः । क्षीरवृक्षाणां न्यग्रोधादीनां षोड़शपलप्रमितानां क्वाथः पूर्ववत्, अनुक्तमपि सैन्धवं पूर्ववत्, क्षीरादिवर्गमध्ये कथितद्रव्याणां कल्कस्य पलद्वयं, अनुक्तस्यापि मधुनः चत्वारि पलानि तथाच घृतस्य, शर्करायाः पलं, तथेक्षुरसस्य, क्षारस्य टङ्कसप्ताधिकं पलत्रितयमानमित्येवं चतुर्विंशतिपलानि भवन्ति । तदेव पित्तं तदेव रक्तमिति मनसि पर्यालोच्य पित्तमानेनायमपि बस्तिः कल्पितः ॥ ७९ ॥

**शोधनद्रव्यनिःक्वाथास्तत्कल्कस्नेहसैन्धवैः ॥**
**युक्ताः खजेन मथिता बस्तयः शोधनाः स्मृताः॥८०**

शोधनद्रव्येत्यादि । शोधनद्रव्याणां विरेचनपठितानां क्वाथः पूर्ववत् सैन्धवं, तेषामेव शोधनद्रव्याणां कल्कस्य पलद्वयं, स्नेहस्य षट्पलानि, अनुक्तस्यापि मधुनः चत्वारि पलानि, क्षीरस्यैकं पलं, मूत्रस्य सार्धपलं तथा काञ्जिकस्यापि, इत्येवं चतुर्विंशतिपलानि भवन्ति । बस्तयः शोधनाः स्मृता इति सामान्यवाक्यत्वात् सामान्यपरिभाषामानेन अयं बस्तिः परिकल्पितः, तथा वक्ष्यमाणा अपि कल्पनीयाः, वातादिविशेषं च वीक्ष्य विशेषमानेन च प्रयोज्याः ॥ ८० ॥

**त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुताः ॥**
**ऊषकादिप्रतीवापा बस्तयो लेखनाः स्मृताः ॥ ८१ ॥**

त्रिफलाक्वाथेत्यादि । त्रिफलाक्वाथः पूर्ववत्, गोमूत्रस्य च पलं, निरूहणाङ्गत्वात् अनुक्तस्यापि सैन्धवस्याक्षं, क्षौद्रस्य चत्वारि पलानि, यवक्षारस्य कर्षत्रयं, तथा निरूहणाङ्गत्वात् स्नेहः प्राप्तो लेखनीयः तस्य चत्वारि पलानि, ऊषकादिद्रव्याणां पलद्वयमित्येवं चतुर्विंशतिः ॥ ८१ ॥

**बृंहणद्रव्यनिःक्वाथाः कल्कैर्मधुरकैर्युताः ॥**
**सर्पिर्मांसरसोपेता बस्तयो बृंहणाः स्मृताः ॥ ८२ ॥**

बृंहणेत्यादि । बृंहणद्रव्याणां विदारीगन्धादीनां कल्कपलद्वयं, मधुनः पूर्ववत्, घृतस्य षट्पलानि, सैन्धवं पूर्ववत्, मांसरसस्य सप्तटङ्काधिकं पलत्रयमित्येवं चतुर्विंशतिपलानि ॥ ८२ ॥

**चटकाण्डोच्चटाक्वाथाः सक्षीरघृतशर्कराः ॥**
**आत्मगुप्ताफलावापाः स्मृता वाजीकरा नृणाम्॥८३**

चटकेत्यादि । चटका ग्रामचटकाः, उच्चटा घुर्घुराख्या, ताः षोडशपलप्रमिताः, क्वाथः पूर्ववत्, अतएव पुटकस्यार्थे पलाष्टकं, क्षीरस्य पलचतुष्टयं, मधुघृते पूर्ववत्, शर्करायाः एकं पलं तथा कपिकच्छुकानां, मध्ये सैन्धवं चाल्पतरं प्रयोज्यम् । इत्येवं चतुर्विंशतिः । गयी तु चटकाण्डद्रवः, उच्चटाया क्वाथ इति व्याख्याति ॥ ८३ ॥

**बदर्यैरावतीशेलुशाल्मलीधन्वनाङ्कुराः ॥**
**क्षीरसिद्धाः क्षौद्रयुताः सास्राः पिच्छिलसंज्ञिताः ॥**
**वाराहमाहिषौरभ्रबैडालैणेयकौक्कुटम् ॥**
**सद्यस्कमसृगण्डं वा देयं पिच्छिलबस्तिषु ॥ ८५ ॥**

बदर्यैरावतीत्यादि । ऐरावती नागबला, श्लेष्मातकः शेलुः, धन्वनो धनुर्वृक्षः यस्य 'धामन' इति लोके प्रसिद्धिः, अङ्कुराः अग्रपल्लवाः, सास्राः सरुधिराः, बदर्यङ्कुरान् समुदायेन पलत्रयप्रमितान् चतुर्विंशतिपलप्रमितं दुग्धं दत्त्वा, चतुर्गुणं जलं निक्षिप्य क्वाथयेत्, ततः क्षीरशेषं चतुर्विंशतिपलानि ग्राह्याणि; तत्र सामान्यपरिभाषोक्तत्वात् मधुनश्चत्वारि पलान्यावाप्य, द्रवत्वाद्रुधिरस्य चत्वारि पलानीति । एवं पिच्छाबस्तेः द्वात्रिंशत्पलानि भवन्ति । तथाचोक्तम्,—' पिच्छाबस्तेर्भवेत् प्रस्थः पादोनः कीर्तितो परः । चतुर्विंशतिमुष्टिश्च निरूहः समुदाहृतः'' इति । एवमपरेष्वपि पुटकेषु पिच्छाबस्तिमानं कल्पनीयम् । सास्रा इति यदुक्तं तत् कस्यास्रमित्याह—वाराहेत्यादि । औरभ्रः मेषः, एणस्येदमैणेयमेणः कृष्णसार इति जेज्जटाचार्यः, ब्रह्मदेवस्तु एण्या इदमैणेयं, न पुनरेणस्येदं ऐणम् । सद्योजातं सद्यस्कं तत्कालीनं जीववतामेव ग्राह्यं जीवानुसन्धानार्थम् ॥ ८४ ॥ ८५ ॥

**प्रियङ्ग्वादिगणक्वाथा अम्बष्ठाद्येन संयुताः ॥**
**सक्षौद्राः सघृताश्चैव ग्राहिणो बस्तयः स्मृताः॥८६॥**

प्रियङ्ग्वादिगणक्वाथा इत्यादि । प्रियङ्ग्वादिगणस्य षोडशपलप्रमितानि द्रव्याणि अष्टगुणे जले दत्त्वा क्वाथयेत्, अतो द्वात्रिंशत्पलानि ग्राह्याणि, अतएव पुटकस्यार्थे क्वाथस्याष्टौ पलानि, अम्बष्ठाद्येन इति अम्बष्ठाद्योऽत्र कल्करूपो प्रयोज्यः, तथा च वृद्धवाग्भटः "ग्राही प्रियङ्ग्वम्बष्ठाद्यौ क्वाथकल्कैः क्रमेण"—इति । अतोऽम्बष्ठादिसंग्रहकारिद्रव्याणां कल्कस्य त्रीणि पलानि, मधुनश्चत्वारि, संग्राहकद्रव्यसिद्धघृतस्य षट्पलानि, अनुक्तो यद्यपीहावापः तथापि संग्राहकत्वात् तक्रस्य त्रीणि पलान्येवं चतुर्विंशतिः ॥ ८६ ॥

**एतेष्वेव च योगेषु स्नेहाः सिद्धाः पृथक् पृथक् ॥**
**समस्तेष्वथवा सम्यग्विधेयाः स्नेहबस्तयः ॥ ८७ ॥**

ननु य एव निरूहयोगास्तेषु स्नेहाः केनौषधेन सिद्धा विधेया इत्याह—एतेष्वेव योगेष्वित्यादि ॥ ८७॥

**वन्ध्यानां शतपाकेन शोधितानां यथाक्रमम् ॥**
**बलातैलेन देयाः स्युर्बस्तयस्त्रैवृतेन च ॥ ८८ ॥**

यथाक्रमशोधितानां यैः स्नेहैः स्नेहबस्तयो देयास्तानाह—वन्ध्यानां शतपाकेनेत्यादि । यथाक्रमं स्नेहस्वेदवमनविरेचनैः शोधितानां वन्ध्यानां नारीणां तैलेन शतपाकेन त्रैवृतेन वा बस्तयः स्युः । तदेषु शतपाकमुत्पादितं वातव्याधौ, बलातैलं मूढगर्भचिकित्सिते, त्रैवृतं महावातव्याधौ । तत्र त्रिभिः स्नेहैः घृततैलवसाख्यैः वृतं निर्मितं त्रिवृतं, त्रिवृतमेव त्रैवृतम् ॥ ८८

**नरस्योत्तमसत्त्वस्य तीक्ष्णं बस्तिं निधापयेत् ॥**
**मध्यमं मध्यसत्त्वस्य विपरीतस्य वै मृदुम् ॥ ८९ ॥**

सत्त्वभेदेन बस्तिभेदं प्रतिपादयन्नाह—नरस्योत्तमेत्यादि । विपरीतस्य हीनसत्त्वस्येत्यर्थः ॥ ८९ ॥

**एवं कालं बलं दोषं विकारं च विकारवित् ॥**
**बस्तिद्रव्यबलं चैव वीक्ष्य बस्तीन् प्रयोजयेत् ॥९०॥**

एवं कालमित्यादि । काले तीक्ष्णोष्णे मृदुः, वसन्तशरदोः साधारणे काले मध्यः; एवं बले शक्त्युपचयलक्षणे श्रेष्ठे तीक्ष्णः, मध्ये मध्यः, कनिष्ठे मृदुः; कफवाते दोषे तीक्ष्णः, पित्तरक्ते मृदुः, कफपित्ते मध्यः; एवं विकारेऽपि; विकारस्यानुक्तसमुच्चयार्थत्वात् क्रूरमध्यमृदुकोष्ठेष्वपि बोद्धव्यम् ॥ ९० ॥

**दद्यादुत्क्लेशनं पूर्वं मध्ये दोषहरं पुनः ॥**
**पश्चात् संशमनीयं च दद्याद्बस्तिं विचक्षणः ॥ ९१ ॥**

इदानीमुत्क्लेशनादिना बस्तिः त्रिधा भिद्यते, तेषां भेदानां कालविशेषे प्रदानमाह—दद्यादित्यादि । आदावुत्क्लेशनं, मध्ये दोषहरं, ततः पश्चात् दोषशेषस्य संशमनाय संशमनमिति । उत्क्लिष्टदोषस्य दोषहरणसंशमने कर्तव्ये । दोषहरस्य बस्तेः प्रथमपुटकदानेऽसम्यङ्निर्हरणे द्वितीयं तृतीयं वा पुटकं दद्यात्, एवं उत्क्लेशनसंशमनयोरपि । उत्क्लिष्टादिज्ञानं तु दोषाणां प्रकोपादिलक्षणेन ॥ ९१ ॥

**एरण्डबीजं मधुकं पिप्पलीसैन्धवं वचा ॥**
**हवुषाफलकल्कश्च बस्तिरुत्क्लेशनः स्मृतः ॥ ९२ ॥**
**शताह्वा मधुकं बीजं कौटजं फलमेव च ॥**
**सकाञ्जिकः सगोमूत्रो बस्तिर्दोषहरः स्मृतः ॥ ९३ ॥**
**प्रियङ्गु मधुकं मुस्ता तथैव च रसाञ्जनम् ॥**
**सक्षीरः शस्यते बस्तिर्दोषाणां शमनः परः ॥ ९४ ॥**

अन्ये सुश्रुताध्यायिनः उत्क्लेशनाद्यर्थमौषधान्यत्र पठन्ति-एरण्डबीजमित्यादि । एतानि एरण्डबीजेत्यादिश्लोकत्रयेण पठितानि औषधानि उत्क्लेशनाद्यर्थं कल्कावापरूपतया, ततो द्विबस्त्युक्तकल्कावापेषु कुशाग्रबुद्धीना दोषं मानं च विमृश्य अनुचितप्रत्यागोचितस्वीकरणे समवेतानि कार्याणि यथा मिथ्यामात्रायुक्तश्च बस्तिर्न भवति इति जेज्जटाचार्यः । गयी तु दद्यादित्यादिकं व्यापन्नबस्तिविषयं मन्यते । अपरे तु धातुगतदोषहरणं मन्यन्ते; तन्न, धातुगतदोषाणामुत्क्लेशनाभावात्, एते चोत्क्लेशनाद्यर्थमुपयुज्यन्ते । एरण्डबीजेत्यादिश्लोकत्रयेण कल्कावापो यथाक्रममुक्तः । अन्ये तु हीनसत्त्वस्य बलवद्विकारेषु कोष्ठविशेषे च मृदवो बस्तयो देयाः, तैश्चाप्युत्क्लेशने दोषाणां हरणं, शेषस्य तु दोषस्य शमनमित्याहुः ॥९२—९४॥

**नृपाणां तत्समानानां तथा सुमहतामपि ॥**
**नारीणां सुकुमाराणां शिशुस्थविरयोरपि ॥ ९५ ॥**
**दोषनिर्हरणार्थाय बलवर्णोदयाय च ॥**
**समासेनोपदेक्ष्यामि विधानं माधुतैलिकम् ॥ ९६ ॥**
**यानस्त्रीभोज्यपानेषु नियमश्चात्र नोच्यते ॥**
**फलं च विपुलं दृष्टं व्यापदां चाप्यसंभवः ॥ ९७ ॥**
**योज्यस्त्वतः सुखेनैव निरूहक्रममिच्छता ॥**
**यदेच्छति तदैवैष प्रयोक्तव्यो विपश्चिता ॥ ९८ ॥**

आतुरविषयान् निर्दिश्य स्वविषयं निर्दिशन्नाह—नृपाणामित्यादि । तत्समानां राजपुरुषतुल्यपुरुषाणां वाणिज्यव्यवहारिणां वार्धुषिकाणाम् । शिशुस्थविरयोः बालवृद्धयोः । दोषनिर्हरणार्थाय स्वस्थेऽपि कालकृतदोषनिर्हरणार्थाय, बलवर्णोदयाय च अपेतसकलदोषस्य इत्यर्थः । नियमो निषेधः । अत्र माधुतैलिकविधाने । यदेच्छतीति यदा यस्मिन् काले आतुर इच्छति तदा तस्मिन् काले विपश्चिता वैद्येन एष बस्तिः प्रयोक्तव्यः । एतेन सार्वकालिकत्वमुक्तं भवति ॥ ९५—९८ ॥

**मधुतैले समे स्यातां क्वाथश्चैरण्डमूलजः ॥**
**पलार्धं शतपुष्पायास्ततोऽर्धं सैन्धवस्य च ॥ ९९ ॥**
**फलेनैकेन संयुक्तः खजेन च विलोडितः ॥**
**देयः सुखोष्णो भिषजा माधुतैलिकसंज्ञितः ॥१००॥**

मधुतैले समे स्यातामित्यादि । ततश्च तथा कल्पनीयः यथा नव प्रसृता भवन्ति; अनया कल्पनया सर्व एव माधुतैलिका कल्पनीया इति । तत्र मृदुना मांसरसकाञ्जिकादिना प्रपूरणं कुर्यात्, एवमपरेषु चतुर्षु नव प्रसृताः पूरणीयाः ॥९९॥१००॥

**वचामधुकतैलं च क्वाथः सरससैन्धवः ॥**
**पिप्पलीफलसंयुक्तो बस्तिर्युक्तरथः स्मृतः ॥ १०१ ॥**

वचामधुकेत्यादि । वचासैन्धवपिप्पलीमूलानां प्रत्येकं कार्षिका भागाः, मधुतैलयोश्चत्वारः प्रसृताः कर्षद्वयाधिकाः, एरण्डमूलक्वाथः तावन्मात्र एव इति युक्तरथाभिधानो माधुतैलिकः ॥ १०१ ॥

**सुरदारु वरा रास्ना शतपुष्पा वचा मधु ॥**
**हिङ्गुसैन्धवसंयुक्तो बस्तिर्दोषहरः स्मृतः ॥ १०२ ॥**

सुरदार्वित्यादि । सुरदारुवरारास्नाशतपुष्पावचाहिङ्गुसैन्धवानां तुल्यमानेनैव पलं, मधुतैलयोः कर्षद्वयाधिकान्यष्टौ पलानि, एरण्डमूलक्वाथस्तावन्मात्र एव । दोषहराभिधानो माधुतैलिकः; केचिदत्र दोषस्थाने विषं पठन्ति ॥ १०२ ॥

**पञ्चमूलीकषायं च तैलं मागधिका मधु ॥**
**बस्तिरेष विधातव्यः सशताह्वः ससैन्धवः ॥ १०३ ॥**

पञ्चमूलीकषाय इत्यादि । पञ्चमूलीकषायस्य कर्षद्वयाधिकानि अष्टौ पलानि, मधुतैले अपि तावन्मात्रे, एवं मागधिकाशताह्वासैन्धवानामेकपलं; अयं च पाञ्चमूलिको माधुतैलिकः ॥ १०३ ॥

**यवकोलकुलत्थानां क्वाथो मागधिका मधु ॥**
**ससैन्धवः समधुकः सिद्धबस्तिरिति स्मृतः ॥१०४॥**

यवकोलकुलत्थानां पूर्ववत् क्वाथः, मधुतैलेऽपि पूर्ववत्, सैन्धवयष्ट्याह्वानामेकं पलम् । सिद्धबस्त्यभिधानोऽयं माधुतैलिकः ॥ १०४ ॥

**मुस्तापाठामृतातिक्ताबलारास्नापुनर्नवाः ॥**
**मञ्जिष्ठारग्वधोशीरत्रायमाणाख्यगोक्षुरान् ॥ १०५ ॥**
**पालिकान् पञ्चमूलाल्पसहितान्मदनाष्टकम् ॥**
**जलाढके पचेत् क्वाथं पादशेषं पुनः पचेत् ॥ १०६ ॥**
**क्षीरप्रस्थेन संयुक्तं क्षीरशेषं परिस्रुतम् ॥**
**पादेन जाङ्गलरसस्तथा मधुघृते समम् ॥ १०७ ॥**
**शताह्वाफलिनीयष्टीवत्सकैः सरसाञ्जनैः ॥**
**कार्षिकैः सैन्धवयुतैः कल्कैर्बस्तिः प्रयोजितः॥ १०८**
**वातासृङ्मोहशोफार्शोगुल्ममूत्रविबन्धनुत् ॥**
**विसर्पज्वरविड्भङ्गरक्तपित्तविनाशनः ॥ १०९ ॥**
**बल्यः संजीवनो वृष्यश्चक्षुष्यः शूलनाशनः ॥**
**स्थापनानामयं राजा बस्तिर्मुस्तादिको मतः ॥ ११०॥**

माधुतैलिकस्याग्रतो गयदासाचार्यमते मुस्तादिबस्तिर्नास्ति, जेज्जटाचार्यस्तु मुस्तादिबस्तिं पठति व्याख्यानयति च। तद्व्याख्यानं प्रायेण मयापि संभाव्यते—मुस्तापाठेत्यादि। पञ्चमूलाल्पसहितान्यष्टादशपलानि ततो मदनस्याष्टाभिः फलैः द्विपलमित्येवं विंशतिपलप्रमितानि जलाढकेऽष्टाविंशत्यधिकशतपलप्रमिते पचेत्, ततो द्वात्रिंशत्पलप्रमितः क्वाथोऽवशिष्टो भवति, ततस्तेषां क्वाथं पादशेषं क्षीरार्धाढकसंयुक्तं दुग्धस्य द्वात्रिंशत्पलोपेतं पुनः पचेत् तावद्यावत् क्षीरशेषं प्रस्थद्वयं भवति, ततो मधुमांसरसघृतानां प्रत्येकं अष्टौ पलानि, शताह्वादीनां षड्द्रव्याणां कर्षमितानां कल्कस्य सार्धं पलं, एवं पुटकस्यार्थे सप्तपञ्चाशत्पलानि भवन्ति। अयं मुस्तादिपाचनबस्तिः जेज्जटाचार्येण तन्त्रान्तरोक्तमध्यमानेन कल्पितः। तथा च पराशरः,—"निरूहस्य प्रमाणं तु प्रस्थं पादोत्तरं स्मृतम्। मध्यमं प्रस्थमुद्दिष्टं हीनं च कुडवास्त्रयः"—इति। गूढपदभङ्गटिप्पणकारेण पुनस्तथा व्याख्यातम्। तथाहि,—मुस्तादिद्रव्याणां पालिकान् भागान् द्रवत्वात् द्विगुणया कल्पनया जलस्याढके अष्टाविंशत्यधिके पक्त्वा पादशेषं द्वात्रिंशत्पलप्रमाणं क्षीरार्धाढकसंयुक्तं पुनः पचेद् यावद् क्षीरशेषं चतुःषष्टिपलानि भवन्ति। ततश्च सपादप्रस्थे जाङ्गलरसस्य पञ्च पलानि मधुघृतं पृथक् सार्धद्विपलसम्मितं शताह्वादिककल्कस्य मदनफलाष्टकेन युक्तं पलद्वयं प्रक्षिप्यैकध्यं षण्णवत्या पलैः पुटकत्रयं देयम् ॥ १०५—११० ॥

**अवेक्ष्य भेषजं बुद्ध्या विकारं च विकारवित् ॥**
**बीजेनानेन मतिमान् कुर्याद्बस्तिशतान्यपि ॥ १११ ॥**

अवेक्ष्य भेषजमित्यादि। तत्र बुद्ध्या भेषजं विकारं च व्रणज्वरादिकं वातपित्तकफसंसर्गसन्निपातजं शोणितजं च। चकारेणानुक्तं शल्यादि समुच्चीयते। वातघ्नौषधनिःक्वाथा इत्यादिषु बस्तिषु उक्तेन बीजेनेत्यर्थः ॥ १११ ॥

**अजीर्णे न प्रयुञ्जीत दिवास्वप्नं च वर्जयेत् ॥**
**आहाराचारिकं शेषमन्यद्युक्तं समाचरेत् ॥ ११२ ॥**

अजीर्णे नेत्यादि। अन्यच्छेषमाहाराचाराश्रितं कर्म कामं यथेष्टं समाचरेत् ॥ ११२ ॥

**यस्मान्मधु च तैलं च प्राधान्येन प्रदीयते ॥**
**माधुतैलिक इत्येवं भिषग्भिर्बस्तिरुच्यते ॥ ११३ ॥**
**रथेष्वपि च युक्तेषु हस्त्यश्वे चापि कल्पिते ॥**
**यस्मान्न प्रतिसिद्धोऽयमतो युक्तरथः स्मृतः ॥ ११४॥**
**बलोपचयवर्णानां यस्माद् व्याधिशतस्य च ॥**
**भवत्येतेन सिद्धिस्तु सिद्धबस्तिरतो मतः ॥ ११५ ॥**
**सुखिनामल्पदोषाणां नित्यं स्निग्धाश्च ये नराः ॥**
**मृदुकोष्ठाश्च ये तेषां विधेया माधुतैलिकाः ॥ ११६॥**

माधुतैलिकसंज्ञामाह—यस्मान्मधु च तैलमित्यादि ॥ ॥ ११३—११६ ॥

**मृदुत्वात् पादहीनत्वादकृत्स्नविधिसेवनात् ॥**
**एकबस्तिप्रदानाच्च सिद्धबस्तिष्वयन्त्रणा ॥ ११७ ॥**

कस्मादेतेषु न यन्त्रणास्तदाह—मृदुत्वादित्यादि। मृदुवीर्यैरौषधैः कल्पितो मृदुः। पादेन हीनः पादाभ्यां वा हीनः, ततश्च पादहीना नव प्रसृता भवन्ति, पादाभ्यां हीनाः षट्प्रसृता भवन्ति। अकृत्स्नविधिसेवनादिति वमनादिसंस्कारवर्जनात्। एकबस्तिप्रदानाच्चेति एकपुटकदानात्; 'एकाहं प्रणिधानाच्च' इति केचित् पठन्ति, एकाहमेव प्रणिधानं बस्तिदानमित्यर्थः। परं कालिकक्कृते दोषकोपे कदाचित् सम्यङ्निरूढलक्षणमनवेक्ष्य द्वित्र्यादिबस्तिदानमपीति पाठविशेषाद् विशिष्टोऽर्थः, अतो नैकाहप्रणिधानादित्यपरे। तत्र शोधननिरूहवदेकाहमेव प्रणिधानं नास्त्येव, तर्हि साधारणत्वात् समधातुषु वाजीकरणादौ असकृद्दानमपीति ॥ ११७ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने अष्टत्रिंशत्तमोऽध्यायः ॥

---

## एकोनचत्वारिंशत्तमोऽध्यायः।

**अथात आतुरोपद्रवचिकित्सितं व्याख्यास्यामः ॥ १**
**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**

अथात इत्यादि। उपद्रवन्तीत्युपद्रवाः रोगाः, तेनात्र प्रायेण पञ्चकर्मनिमित्ताः व्यापदः, तेषां चिकित्सितं कारणगुणप्रत्यनीकं विधानम्। आतुरोपक्रममिति केचित् पठन्ति। स्नेहादीनां निरूहान्तानां उपक्रमे अग्निमान्द्यमेवावश्यम्भावि तत्सन्धुक्षणार्थं पेयादिसंसर्जनोपदेशाय, वर्ज्यानां च प्रज्ञापराधात्करणे तद्व्याधिप्रशमनाय च आतुरोपद्रवचिकित्सिताभिधानम्॥ १॥२

**स्नेहपीतस्य वान्तस्य विरिक्तस्य स्रुतासृजः ॥**
**निरूढस्य च कायाग्निर्मन्दो भवति देहिनः ॥ ३ ॥**
**सोऽन्नैरत्यर्थगुरुभिरुपयुक्तैः प्रशाम्यति ॥**
**अल्पो महद्भिर्बहुभिश्छादितोऽग्निरिवेन्धनैः ॥ ४ ॥**
**स चाल्पैर्लघुभिश्चान्नैरुपयुक्तैर्विवर्धते ॥**
**काष्ठैरणुभिरल्पैश्च सन्धुक्षित इवानलः ॥ ५ ॥**

इदानीं स्नेहपानपूर्वकपञ्चकर्मणां सोपपत्तिककर्मकरणात् व्यापदां निवारणमुद्दिशन्नाह—स्नेहपीतस्येत्यादि । निरूढस्य चेति चकारेणानुवासितमनुक्तं समुच्चिनोतीति न दोषप्रसङ्गः । तस्य क्रमेण यथा प्राकृतावस्थापन्नत्वं भवति तथा निर्दिशन्नाह—सोऽग्निरित्यादि ॥ ३—५ ॥

**हृतदोषप्रमाणेन सदाहारविधिः स्मृतः ॥**

तत्रोक्तप्रमाणकारणमुद्दिशन्नाह—हृतदोषेत्यादि ॥—

**त्रीणि चात्र प्रमाणानि प्रस्थोऽर्धाढकमाढकम् ॥६॥**
**तत्रावरं प्रस्थमात्रं द्वे शेषे मध्यमोत्तमे ॥**

तदेव कतिविधं कियत्प्रमाणमित्याह—त्रीणि चात्रेत्यादि ॥ ६ ॥—

**प्रस्थे परिस्रुते देया यवागूः स्वल्पतण्डुला ॥ ७ ॥**
**द्वे चैवार्धाढके देये तिस्रश्चाप्याढके गते ॥**
**विलेपीमुचिताद्भक्ताच्चतुर्थांशकृतां ततः ॥ ८ ॥**
**दद्यादुक्तेन विधिना क्लिन्नसिक्थामपिच्छलाम् ॥**
**अस्निग्धलवणं स्वच्छमुद्गयूषयुतं ततः ॥ ९ ॥**
**अंशद्वयप्रमाणेन दद्यात् सुस्निग्धमोदनम् ॥**
**ततः सघृतमण्डेन हृद्येनेन्द्रियबोधिना ॥ १० ॥**
**त्रीनंशान् वितरेद्भोक्तुमातुरायौदनं मृदुम् ॥**
**ततो यथोचितं भक्तं भोक्तुमस्मै विचक्षणः ॥ ११ ॥**
**लावैणहरिणादीनां रसैर्दद्यात् सुसंस्कृतैः ॥**

तेषु चात्र दोषनिर्हरणप्रमाणानि त्रीण्येव क्रमेणाह—प्रस्थे परिस्रुते इत्यादि । प्रस्थश्चात्र सार्धत्रयोदशपलम् । यवागूः इत्यत्रैकवचननिर्देशादेकवारमिति बोद्धव्यम् । द्वे चैवार्धाढके इत्यत्र द्वे पेये द्वौ वारौ इति बोद्धव्यम् । तिस्रश्चाप्याढके गते इत्यत्र तिस्रः पेया इति बोद्धव्यम् । विलेपीत्यादि । उचितादन्नाच्चतुर्थभागेन कृताम् । उक्तेन विधिनेति एकद्वित्रिक्रमेण । क्लिन्नसिक्थामिति पक्वतण्डुलाम् । अपिच्छिलां तण्डुलरहितां यवागूं दद्यात् भिषक् इत्यध्याहारः । अंशद्वयप्रमाणेनेत्यादि । उचितात् अर्धभागतण्डुलात् कृतं भक्तमित्यर्थः । त्रीनंशानिति त्रिभागकल्पितं सम्यग्पक्वं घृतमण्डेन समन्वितम् । तत इत्यादि ततोऽनन्तरं कृतसंज्ञेन यूषेण सद्य आतुराय रोगिणे ओदनं भोक्तुमुचिततण्डुलांशत्रयकृतं भोक्तुं वितरेद् दद्यादिति संबन्धः । अस्य श्लोकस्यादौ "त्रिभागान्वितं सम्यक् कृतोऽयं संमित(?)" इति पुस्तकेषु पाठो दृश्यते स च न पठनीयः, जेज्जटादिनिबन्धकारैः सर्वैरपि परिहृतत्वात् । ततो यथोचितमित्यादि यथोचितमिति अंशचतुष्टयप्रमाणं परिपूर्णमित्यर्थः । हृतदोषप्रमाणेनेत्यादिसुसंस्कृतैरित्यन्तग्रहेण एतदुक्तं भवति—हीनशुद्धिशुद्धस्य पुरुषस्य तावत् प्रथमेऽन्नकाले उचितभक्तकृताष्टभागां पेयां दद्यात्, तस्मिन्नेव दिने द्वितीयेऽन्नकाले प्रकृतिस्थाज्जरणकालोचिताद्भक्तात् चतुर्थांशेन कृतामविपक्वतण्डुलावयवां मण्डरहितां विलेपीं दद्यात्; द्वितीयेऽह्नि तृतीयेऽन्नकालेऽस्निग्धालवणस्वच्छेनाकृतमुद्गयूषेणोचितादर्धभागतण्डुलकृतं सुस्विन्नमोदनं दद्यात्, तस्मिन्नेव दिने चतुर्थेऽन्नकाले हृद्येनेन्द्रियबोधिना कृतसंज्ञेन यूषेणोचिततण्डुलांशत्रयकृतमोदनं भोक्तुं दद्यात्; ततस्तृतीयेऽह्नि पञ्चमेऽन्नकाले लावैणहरिणादीनां सुसंस्कृतरसैरंशचतुष्टयप्रमाणं भक्तं भोक्तुं दद्यात्, तृतीयेऽह्नि षष्ठेऽन्नकाले प्रकृतिभोजनमागच्छेत् । मध्यशुद्धिशुद्धस्य च तावदादौ द्वयोरन्नकालयोः पेयां दद्यात्, द्वितीयेह्नि द्वयोरप्यन्नकालयोः विलेपिकां, तृतीयेह्नि कालद्वयेऽप्यकृतयूषं, चतुर्थेह्नि कालद्वयेऽपि कृतयूषं, पञ्चमेऽह्नि कालद्वयेऽपि मांसरसमित्यतः षष्ठेऽह्नि प्रकृतिभोजनमागच्छेत् । उत्तमशुद्धिशुद्धस्य च तावत् प्रथमेऽह्नि द्वयोरप्यन्नकालयोः पेयां दद्यात्, द्वितीयेऽह्नि प्रथमेऽन्नकाले पेयां, द्वितीये विलेपिकां; तृतीयेऽह्नि द्वयोरप्यन्नकालयोः विलेपिकां; चतुर्थेऽह्नि द्वयोरप्यन्नकालयोरकृतयूषं; पञ्चमेऽह्नि प्रथमेऽन्नकालेऽकृतयूषं, द्वितीयेऽन्नकाले कृतयूषं; षष्ठेऽह्नि द्वयोरप्यन्नकालयोः कृतयूषं; सप्तमेऽह्नि द्वयोरप्यन्नकालयोर्मांसरसं; अष्टमेऽह्नि प्रथमेऽन्नकाले मांसरसं, अतोऽष्टमदिवसस्य द्वितीयेऽन्नकाले प्रकृतभोजनमाहरेत् । गयी तु हीनशुद्धौ प्रथमेऽन्नकाले उचिततण्डुलाष्टभागकृता पेया, द्वितीयेऽन्नकाले तूचिततण्डुलचतुर्थभागकृता विलेपी, तृतीयेऽन्नकाले तूचिततण्डुलार्धभागकृतेन भक्तेन सह दकलावणिको यूषो रसो वा यथादोषं, चतुर्थेऽन्नकाले तूचिततण्डुलभागत्रयकृतेन भक्तेन सह कृतसंज्ञो यूषः पिप्पलीशृङ्गवेरसिद्धोऽकृतो रसो वा यथादोषं, तथा यथोचितं परिपूर्णभक्तं सुसंस्कृतेन रसेन यूषेण वा देयमिति तृतीये दिने प्रकृतिभोजनम् । एवं मध्यमोत्तमशुद्धौ पेयादीनां द्वित्रिकालदानेन यथाक्रमं पञ्चमे सप्तमे च दिने प्रकृतिभोजनम् । उक्तं च,—"पेयां विलेपीमकृतं कृतं च यूषं रसं त्रिर्द्विरथैकशश्च । क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः—" इति ॥ ७—११ ॥—

**हीनमध्योत्तमेष्वेषु विरेकेषु विधिः स्मृतः ॥ १२ ॥**
**एकद्वित्रिगुणः सम्यगाहारस्य क्रमस्त्वयम् ॥**
**कफपित्ताधिकान्मद्यनित्यान् हीनविशोधितान् ॥१३॥**
**पेयाऽभिष्यन्दयेत्तेषां तर्पणादिक्रमो हितः ॥**
**वेदनालाभनियमशोकवैचित्र्यहेतुभिः ॥ १४ ॥**
**नरानुपोषितांश्चापि विरिक्तवदुपाचरेत् ॥**

उक्तमेव नियमयन्नाह—हीनेत्यादि । प्रस्थे परिस्रुते हीनो विरेकस्तस्मिन् पेयादिरेकैकमन्नकालं देयः, अर्धाढके परिस्रुते मध्यो विरेकस्तस्मिन्पेयादिः प्रत्येकं द्वौ द्वावन्नकालौ देयः, आढके परिस्रुते उत्तमो विरेकस्तस्मिन्पेयादिः प्रत्येकं त्रींस्त्रीनन्नकालान्देयः । एषु पूर्वोक्तेषु हीनादिविरेकेषु हृतदोषमानापेक्षया एकद्वित्रिगुणोऽयमाहारक्रमः सम्यक् प्रकीर्तितः; नतु मिथ्याहीनातियोगेनासम्यगित्यर्थः । एतदुक्तं भवति—हीने विरेके चतुर्भिरन्न-

कालैः सायंप्रातिकभोजनाभ्यां द्वयहं, मध्ये तद्द्विगुणेन चतुरहं, उत्तमे तत्त्रिगुणेन षडहमिति ॥ १२–१४ ॥—

**आढकार्धाढकप्रस्थसंख्या ह्येषा विरेचने ॥ १५ ॥**
**श्लेष्मान्तत्वाद्विरेकस्य न तामिच्छति तद्विदः ॥**
**एको विरेकः श्लेष्मान्तो न द्वितीयोऽस्ति कश्चन ॥**

कफेत्यादि। अग्न्यधिष्ठानसंप्लवादत्यर्थमग्निमान्द्यहेतौ विरेचन एवाढकादिसंख्या, वमनास्थापनयोस्त्वग्न्यधिष्ठानानभिभवेन तादृशाग्निमान्द्याभावान्मानियमो नास्ति; अतएव तदहरेव कुलत्थमुद्गयूषभोजनं, आस्थापने मांसरसभोजनमनुवासनं च। एतन्मतं निरस्यन्नाह—श्लेष्मान्तत्वादित्यादि। अयमभिप्रायः—विरेचनं निःशेषपित्तनिर्हरणाय युज्यते, निःशेषपित्तनिर्हरणं च तदेवानुमीयते यदा पित्तप्रवर्तनानन्तरं तत्प्रदेशस्थ आमरूपकफः प्रवर्तते। तस्मात् कफान्तिकत्वाद्विरेकस्य तां प्रस्थादिकां संख्यां विरेचनविदो नेच्छन्ति। एतेन वैगिकोऽपि निराकृतः, लैङ्गिकः पुनरेकान्तेनाविरुद्ध एव। यतो लैङ्गिकेऽपि कफान्तिकत्वमस्ति। तथाच—'वमने प्रसेकौषधकफपित्तानिलाः क्रमेण गच्छन्ति, एवमेव विरेचने पुरीषपित्तौषधकफा' इति। अतो वैगिकमानिकौ विरेकौ गौणतया प्रतिपादितौ क्वचित् बालवृद्धादावस्थावशात् प्रयुक्तौ कर्तव्यौ। मुख्यः पुनरेकः कफान्तिक एवेत्याह—एको विरेक इत्यादि। न द्वितीयोऽस्तीति तृतीयस्य पुनः का कथा, एवं वमनमप्येकमेव। तथाच भोजः,—"तस्मान्मतिमता नित्यमात्मानं परिरक्षता। पित्तान्तं वमनं स्थाप्यं कफान्तं च विरेचनं" इति ॥ १५ ॥—

**बलं यत्त्रिविधं प्रोक्तमतस्तत्र क्रमस्त्रिधा ॥ १६ ॥**
**तत्रानुक्रममेकं तु बलस्थः सकृदाचरेत् ॥**
**द्विराचरेन्मध्यबलस्त्रीन् वारान् दुर्बलस्तथा ॥ १७ ॥**
**केचिदेवं क्रमं प्राहुर्मन्दमध्योत्तमाग्निषु ॥**

एवं तर्हि तदाश्रयान्नसंसर्जनत्वमपि नास्तीति प्रकारान्तरेणैवान्नसंसर्जनत्रित्वं तदाश्रयं दर्शयन्नाह—बलं यत् त्रिविधमित्यादि। बलमत्रोपचयलक्षणमेव। यस्मात् प्रागेक एव विरेक उत्पाद्य वर्णितः तत् त्रिविधे आहारक्रमे बलं यत् त्रिविधं प्रोक्तं तत्र ज्ञेयम्। तत्र त्रिविधेऽपि बले संसर्जनं प्राप्नोति क्वचिद्दर्शयन्नाह—तत्रानुक्रममित्यादि। तत्रैव मतान्तरं दर्शयन्नाह—केचिदेवमित्यादि ॥ १६ ॥ १७ ॥—

**संसर्गेण विवृद्धेऽग्नौ दोषकोपभयाद्व्रजेत् ॥ १८ ॥**
**प्राक् स्वादुतिक्तौ स्निग्धाम्ललवणान् कटुकं ततः ॥**
**स्वाद्वम्ललवणान् भूयः स्वादुतिक्तावतः परम् ॥**
**स्निग्धरूक्षान् रसांश्चैव व्यत्यासात् स्वस्थवत् ततः १९**

अतःपरं क्रमेणैव कृतसंसर्गस्य रसावचारणक्रममाह—संसर्गेण इत्यादि। अन्नसंसर्जन क्रमविवृद्धेऽग्नौ दोषकोपभयात् स्निग्धान् मधुराम्ललवणान्, रूक्षान् कटुतिक्तकषायान्, व्यत्यासात् विपर्ययात्, एवमत्रोक्तपरिपाट्या भजेत्। तत्र प्रवृद्धाग्निहेतुवातपित्तस्यावजयार्थमग्नेः समीकरणार्थं च पूर्वं स्वादुतिक्तौ, ततो वातकफजयार्थमग्नेः सन्धुक्षणार्थं च। व्यत्यासादिति यदा प्रागुक्तरसप्रत्यनीकान् स्निग्धाम्ललवणकटुकान्। ततश्चाम्ललवणकटुकजनितपित्तवातावजयार्थं स्वादुतिक्तौ। ततः भूयः कषायकटुकौ ततोऽन्योन्यप्रत्यनीकरसानां स्निग्धरूक्षयोः व्यत्यासादुपयोगेन प्रकृतिगो भिषक्। वृद्धवाग्भटस्तु आह—"द्व्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ। स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः॥ अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः। व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ॥१८॥१९॥

**केवलं स्नेहपीतो वा वान्तो यश्चापि केवलम् ॥**
**स सप्तरात्रं मनुजो भुञ्जीत लघु भोजनम् ॥ २० ॥**

एवं स्नेहवमनयोर्यथोक्तमन्नसंसर्जनक्रममतिदिशन्नाह—केवलमित्यादि। दोषरोगसंशमननिमित्तपीतस्नेहः केवलं स्नेहपीतः, तथा वान्तश्च अजीर्णभुक्तनिमित्तं कृतवमनः। लघुभोजनं मात्राद्रव्याभ्याम्। ततः अनन्तरोक्तेनैव विधानेन स्वाद्वादीनश्नीयात् ॥२०॥

**कृतः सिराव्यधो यस्य कृतं यस्य च शोधनम् ॥**
**स ना परिहरेन्मासं यावद्वा बलवान् भवेत् ॥ २१ ॥**
**त्र्यहं त्र्यहं परिहरेदेकैकं बस्तिमातुरः ॥**
**तृतीये तु परीहारे यथायोगं समाचरेत् ॥ २२ ॥**

स्नेहपीतस्येत्याद्येकवाक्योक्तानां पञ्चानां स्नेहपीतादीनां मध्ये कृतशिराव्यविरिक्तयोः परिहारकालं गौरवान्निर्दिशन्नाह—कृतः शिराव्यधो यस्येत्यादि। यस्य शिराव्यधः कृतः यस्य च शोधनं विरेचनाख्यं कृतं तस्योभयस्यापि शोधनानन्तरं सप्तरात्रं कृतसंसर्गस्य सप्ताहादूर्ध्वं परिपूर्णाहारत्वेन स्वाद्वादिरसानां क्रमविपर्ययाभ्यामुपसेवया रसस्य शनैः शनैः धात्वन्तरानुक्रमतो मासेन शुक्रस्य शनैर्बलावाप्तिरुत्पद्यते। अत उक्तम्—स ना परिहरेन्मासमिति। ना पुरुषो वक्ष्यमाणं क्रोधादिकं परिहरेत्। तत्र कस्यचिदत्यन्ततीक्ष्णाग्नेर्जलसन्तानवद्रसप्रसरणेन मांसानन्तरमपि बललाभः कस्य चित् दीप्ताग्नेः शब्दसन्तानवद्रसप्रसरणेन मासादर्वागपि बललाभः स्यादत उक्तम्। यावद्वा बलवान् भवेदिति। चतुर्षु स्नेहपीतादिषु पूर्वोक्तोऽन्नसंसर्गकालनियमः। बस्तौ तु तादृशो नियमो नास्ति कथं दोषव्याधिबलापेक्षया वस्तेः पुनः पुनः शीलनात्, तदुक्तं—अष्टादशाष्टदशकानित्यादि। अत एकैकं बस्तिमुद्दिश्य विशिष्टं नियममाह—त्र्यहं त्र्यहमित्यादि। एकैकं बस्ति सेवित्वा त्र्यहं वक्ष्यमाणं परिहार्यं परिहरेत्। तृतीये तु परीहार इत्यादिना विशेषेण परीहारे कृते सति अनन्तरं चतुर्थपञ्चमदिवसादौ यथायोगं योगानतिक्रमेण सम्यङ्निरूढानुवासितयोगलक्षणानतिक्रमेण समाचरेद्यथासात्म्यमुपसेवेतेत्यर्थः। अन्ये तु व्याख्यानयन्ति—एकैकं बस्तिमनुवासनं दत्त्वा त्रीणि अहानि परिहरेत्। तृतीये तु बस्तौ गते तृतीयादनुवासनादूर्ध्वं यथायोगं यथावस्थं अग्न्यादीनवेक्ष्य चतुःपञ्चदिवसानन्तरीकृत्वा अनुवासनं योजनीयम् ॥ २१ ॥ २२ ॥

**तैलपूर्णाममृद्भाण्डसधर्माणो व्रणातुराः ॥**
**स्निग्धशुद्धाक्षिरोगार्ता ज्वरातीसारिणश्च ये ॥२३॥**

शुद्धसमानधर्मिणोऽन्यानपि दृष्टान्तेनाह—तैलपूर्णमित्यादि । यथा तैलपूर्णाममृद्भाजनं हस्तेन चाल्यमानं विशीर्यते, तथाऽयत्नेनोपचार्यमाणा ज्वरादयोऽवस्थान्तरं प्राप्यन्ते; तस्मादेतेऽपि संशुद्धवदुपक्रम्या इति तात्पर्यार्थः ॥ २३ ॥

**क्रुध्यतः कुपितं पित्तं कुर्यात्तांस्तानुपद्रवान् ॥**
**आयास्यतः शोचतो वा चित्तं विभ्रममृच्छति॥२४॥**
**मैथुनोपगमाद्घोरान् व्याधीनाप्नोति दुर्मतिः ॥**
**आक्षेपकं पक्षघातमङ्गप्रग्रहमेव च ॥ २५ ॥**
**गुह्यप्रदेशे श्वयथुं कासश्वासौ च दारुणौ ॥**
**शुक्रवच्चापि रुधिरं सरजस्कं प्रवर्तते ॥ २६ ॥**
**लभते च दिवास्वप्नात्तांस्तान् व्याधीन् कफात्मकान्**
**प्लीहोदरं प्रतिश्यायं पाण्डुतां श्वयथुं ज्वरम् ॥२७॥**
**मोहं सदनमङ्गानामविपाकं तथारुचिम् ॥**
**तमसा चाभिभूतस्तु स्वप्नमेवाभिनन्दति ॥ २८ ॥**
**उच्चैः संभाषणाद्वायुः शिरस्यापादयेद्रुजम् ॥**
**आन्ध्यं जाड्यमजिघ्रत्वं बाधिर्यं मूकतां तथा ॥२९**
**हनुमोक्षमधीमन्थमर्दितं च सुदारुणम् ॥**
**नेत्रस्तम्भं निमेषं वा तृष्णां कासं प्रजागरम् ॥ ३० ॥**
**लभते दन्तचालं च तांस्तांश्चान्यानुपद्रवान् ॥**
**यानयानात्तु लभते छर्दिमूर्च्छाभ्रमक्लमान् ॥ ३१ ॥**
**तथैवाङ्गग्रहं घोरमिन्द्रियाणां च विभ्रमम् ॥**
**चिरासनात्तथा स्थानाच्छ्रोण्यां भवति वेदना॥३२॥**
**अतिचङ्क्रमणाद्वायुर्जङ्घयोः कुरुते रुजः ॥**
**सक्थिप्रशोषं शोफं वा पादहर्षमथापि वा ॥ ३३ ॥**
**शीतसंभोगतोयानां सेवा मारुतवृद्धये ॥**
**ततोऽङ्गमर्दविष्टम्भशूलाध्मानप्रवेपकाः ॥ ३४ ॥**
**वातातपाभ्यां वैवर्ण्यं ज्वरं चापि समाप्नुयात् ॥**
**विरुद्धाध्यशनान्मृत्युं व्याधिं वा घोरमृच्छति॥३५॥**
**असात्म्यभोजनं हन्याद्बलवर्णमसंशयम् ॥ ३६ ॥**
**अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणतः ॥**
**रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि ॥ ३७ ॥**

पूर्वेषु स्नेहपीतादिषु पञ्चसु परिहार्याणामपरिहारेण किं भवतीत्याह—क्रुध्यतः कुपितमित्यादि । उपद्रवान् दाहपिपासाप्रभृतीन् । आयास्यत इत्यादि । विभ्रमं विविधं भ्रमं संमोहमदापस्मारोन्मादादिकं मानसं विकारम् । मैथुनोपगमादित्यादि । तानेव घोरान् व्याधीन् विवृण्वन्नाह—आक्षेपकमित्यादि । लभते च दिवास्वप्नात्तानित्यादि । अधिमन्थो दृष्टिरोगः । यानयानात्तु लभते इत्यादि । यानयानेनाश्वादिगमनेन रथाद्य । चिरासनादित्यादि । असनं स्थितिभवनम् । स्थानमूर्ध्वीभवनम् । अतिचङ्क्रमणादित्यादि । शोफं वेत्यत्र स्वापं वेति पाठान्तरम् । शीतसंभोगतोयानामित्यादि । संभोगः स्रक्चन्दनादीनामुपभोगः । गयी तु शीतसंभोगतोयानामित्यत्र शीतभोजनतोयानामिति पठति । वातातपाभ्यामित्यादि । यथाक्रमं वातात् वैवर्ण्यं, आतपप्रकुपितात् पित्तात् ज्वरः । विरुद्धाध्यशनान्मृत्युमित्यादि । पयोमत्स्यादिभोजनं विरुद्धं, अध्यशनमजीर्णे भोजनं, ताभ्यां मरणं भयावहो रोगो वा । असात्म्यभोजनमित्यादि । ये अनात्मवन्तः पुरुषा अप्रमाणकं पशुवद्भुञ्जते ते अजीर्णं प्राप्नुवन्ति; किं विशिष्टं रोगानीकस्य रोगसमूहस्य मूलम् । क्रोधादिषु आयासशोकाभ्यां एकैका, चिरासनस्थानाभ्यामपि अन्ये, शीतसम्भोगतोयानां पुनरेकैका, वातातपेत्यादि द्वे, तथा विरुद्धाध्यशनाभ्यां द्वे, अन्याः सुबोध्याः, इत्येवं पञ्चदशान्तास्तु सर्वाः ॥२४—३७॥

**व्यापदां कारणं वीक्ष्य व्यापत्स्वेतासु बुद्धिमान् ॥**
**प्रयतेतातुरारोग्ये प्रत्यनीकेन हेतुना ॥ ३८ ॥**

संक्षेपेण चिकित्सितं निर्दिशन्नाह—व्यापदामित्यादि । व्यापदामुपद्रवाणां, कारणं विप्रकृष्टं क्रोधादिकं सन्निकृष्टं पित्तादिकं वीक्ष्य उपलभ्य, प्रत्यनीकेन विप्रकृष्टकारणप्रत्यनीकेन उपद्रवप्रत्यनीकेन वा बुद्धिमान् भिषक् आतुरारोग्यविषये प्रयत्नं कुर्वीत ॥ ३८ ॥

**विरिक्तवान्तैर्हरिणैणलावकाः**
**शशाश्च सेव्याः समयूरतित्तिरिः ॥**
**सषष्टिकाश्चैव पुराणशालय-**
**स्तथैव मुद्गा लघु यच्च कीर्तितम् ॥ ३९ ॥**

असात्म्यभोजनं बलवर्णहरं समुद्दिष्टं, तत् किमत्र सात्म्यं यदपेक्षयाऽन्यदसात्म्यमिति तदेवाह—विरिक्तवान्तैरित्यादि । लघु यच्च कीर्तितमिति वैष्किरजाङ्गलेषु शालिषष्टिकेषु मुद्गादिषु चोक्तादन्यदपि यच्च लघु प्रोक्तं तदपि सेव्यमित्यर्थः । जेज्जटाचार्यस्त्वन्यथा व्याख्यानयति । यथा विरिक्तवान्तैरित्याद्यारम्भप्रयोजनं विरिक्तकर्षितविभक्तनियमार्थं वमनानुक्तविधिप्रापणार्थं च । यतो विरिक्तस्य प्रमाणापेक्षया यवाग्वादिक्रम एकशो द्विशस्त्रिशश्च विहितो न वान्तस्य ॥ ३९ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायां चिकित्सितस्थाने एकोनचत्वारिंशोऽध्यायः ।

---

## चत्वारिंशत्तमोऽध्यायः ।

**अथातो धूमनस्यकवलग्रहचिकित्सितं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥२॥**

अथातो धूमनस्येत्यादि । कवलशब्देनात्र चिकित्सितमालोच्य गण्डूषप्रतिसारणेऽपि गृह्येते ॥ १ ॥ २ ॥

**धूमः पञ्चविधो भवति; तद्यथा—प्रायोगिकः, स्नैहनो, वैरेचनः, कासघ्नो, वामनीयश्चेति ॥ ३ ॥**

धूमस्य विषयभेदप्रतिपादनाय पाञ्चविध्यमाह—धूम इत्यादि । कासघ्नवामनीययोरत्रैवान्तर्भावात् त्रिविध इत्यन्ये । तत्र प्रयोगः स्वस्थस्य सततोपयोगस्तत्र साधुः प्रायोगिकः; स च श्लेष्माणमुत्क्लेशयति, उत्क्लिष्टं चापकर्षति, शमयति वातं, स्नेहनविरेचनाभ्यां तुल्यत्वात् । कासहरत्वात् कासघ्नः; स पुनरुरःकण्ठरोगहरोऽप्यावस्थिक एक एव । अभिष्यन्नशिरसि शिरोविरेचयतीति विरेचनः, विरेचन एव वैरेचनः; वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षयति, रौक्ष्यात्तैक्ष्ण्यादौष्ण्याद्वैशद्याच्च । रूक्षस्य स्नेहाय प्रभवतीति स्नैहिकः; स च वातं शमयति, स्नेहनादुपलेपनाच्च । वामयतीति वामनीयः, स पुनरुत्क्लिष्टकफाभिपन्नकण्ठोरसः ॥ ३ ॥

**तत्रैलादिना कुष्ठतगरवर्ज्येण श्लक्ष्णपिष्टेन द्वादशाङ्गुलं शरकाण्डं क्षौमेणाष्टाङ्गुलं वेष्टयित्वा लेपयेदेषा वर्तिः प्रायोगिके, स्नेहफलसारमधूच्छिष्टसर्जरसगुग्गुलुप्रभृतिभिः स्नेहमिश्रैः स्नेहने, शिरोविरेचनद्रव्यैर्वैरेचने, बृहतीकण्टकारिकात्रिकटुकासमर्दहिङ्ग्विङ्गुदीत्वङ्मनःशिलाच्छिन्नरुहाकर्कटशृङ्गीप्रभृतिभिः कासहरैश्च कासघ्ने, स्नायुचर्मखुरशृङ्गकर्कटकास्थिशुष्कमत्स्यवल्लूरकृमिप्रभृतिभिर्वामनीयैश्च वामनीये ॥ ४ ॥**

तस्य पञ्चविधस्यापि दहनबाह्याश्रयभूतवर्तिसाधनद्रव्याणि निर्दिशन्नाह—तत्रैलादिनेत्यादि । एलादिवर्गे कुष्ठतगरौ वर्ज्यौ । तथा च निमिः,—"धूमो हि वक्रकुष्ठाभ्यां विलालयति शक्तितः । मस्तिष्कं तद्धि विष्यन्नं नाशाय प्रतिपद्यते"—इति । तस्मात् कुष्ठतगरवर्जितैलादिनालेपयेत् । शरकाण्डः शरेषिका । अङ्गुलिपरिणाहं कनिष्ठिकाङ्गुलिमध्यस्थौल्यमनल्पं द्व्यङ्गुलं विहाय वर्तिः । शरकाण्डस्य सुखापकर्षणार्थं क्षौमेण वेष्टनम् । प्रायोगिकेऽष्टचत्वारिंशदङ्गुलं नेत्रं ज्ञातव्यं, सर्वधूमनेत्रेभ्यः षड्भागप्रमाणा वर्तिः कार्येति तन्त्रान्तरप्रतिपादनात् । तथा च विदेहः,—"अङ्गुल्याः परिणाहेन मध्ये स्थूलाऽन्तयोस्तनुः । धूमनेत्रस्य षड्भागं वर्तिमानं प्रचक्षते—" इति । स्नेहफलसारमधूच्छिष्टेत्यादि । स्नेहफलानां शिग्रुबिभीतकादिफलानां सारः तदन्तर्गतो मज्जा । तथा नेत्रचतुर्भागेन इषीका ग्राह्या, एवं स्नैहिकादिषु चतुर्ष्वपि धूमेषु यथास्वं नेत्रात् षष्ठभागेन वर्तिप्रमाणं उक्तं भवति । प्रभृतिग्रहणेन द्राक्षाक्षकफलादिकम् । शिरोविरेचनद्रव्याणि खरमञ्जरीशिग्रुसूर्यवल्लीपीलुपिप्पलीसिद्धार्थकसुरसार्जकप्रभृतीनि । कासहरैश्चेति कासहराणि गुणोपचारीणि शास्त्रे तत्प्रतिषेधप्रोक्तानि । स्नायुचर्मेत्यादि । वामनीयद्रव्याणि मदनफलादीनि संशोधनसंशमनीयोक्तानि ॥ ४ ॥

**तत्र बस्तिनेत्रद्रव्यैर्धूमनेत्रद्रव्याणि व्याख्यातानि भवन्ति । धूमनेत्रं तु कनिष्ठिकापरिणाहमग्रे कलायमात्रस्रोतो मूलेऽङ्गुष्ठपरिणाहं धूमवर्तिप्रवेशस्रोतोऽङ्गुलान्यष्टचत्वारिंशत् प्रायोगिके, द्वात्रिंशत् स्नेहने, चतुर्विंशतिर्वैरेचने, षोडशाङ्गुलं कासघ्ने वामनीये च । एतेऽपि कोलास्थिमात्रच्छिद्रे भवतः । व्रणनेत्रमष्टाङ्गुलं व्रणधूपनार्थं कलायपरिमण्डलं कुलत्थवाहिस्रोत इति ॥ ५ ॥**

अत्रैव धूमनेत्रद्रव्याण्याह—तत्र बस्तिनेत्रद्रव्यैरित्यादि । बस्तिनेत्रद्रव्यैः सुवर्णरूप्यत्रपुसीसताम्रकांस्यादिभिः । अत ऊर्ध्वं नेत्रस्य दीर्घत्वच्छिद्राणां प्रमाणमाह—धूमनेत्रमित्यादि । कनिष्ठिकापरिणाहमिति कनिष्ठिकासमस्थूलम् । धूमवर्तिप्रवेशस्रोत इति यावता स्रोतसा धूमवर्तिप्रवेशो भवति तावन्मात्रस्रोतस्कम् । पृथग् दैर्घ्यमानमाह—अङ्गुलान्यष्टचत्वारिंशदित्यादि । दशाङ्गुलं वा वामनीयमिति केचित् पठन्ति, तच्च गयदासेन विदेहमतानुसारिणा सम्यगिति प्रतिपादितम् । ऋजुत्रिकोषाफलितत्वं नेत्रस्य तन्त्रान्तरादवगन्तव्यम् । व्रणनेत्रमष्टाङ्गुलमित्यादि । [illegible]ऽायपरिमण्डलं गुटिकामुखम् ॥ ५ ॥

**अथ सुखोपविष्टः सुमना ऋज्वधोदृष्टिरतन्द्रितः स्नेहाक्तां प्रदीप्ताग्रां वर्तिं नेत्रस्रोतसि प्रणिधाय धूमं पिबेत् ॥ ६ ॥**

**मुखेन तं पिबेत् पूर्वं नासिकाभ्यां ततः पिबेत् ॥**
**मुखपीतं मुखेनैव वमेत् पीतं च नासया ॥ ७ ॥**
**मुखेन धूममादाय नासिकाभ्यां न निर्हरेत् ॥**
**तेन हि प्रतिलोमेन दृष्टिस्तत्र विहन्यते ॥ ८ ॥**

**विशेषतस्तु प्रायोगिकं घ्राणेनाददीत, स्नेहनं मुखनासाभ्यां, नासिकया वैरेचनं, मुखेनैवेतरौ ॥ ९**

अथानन्तरं धूमपानविधानमाह—अथ सुखोपविष्ट इत्यादि । मुखेनेत्यादि धूमपानार्हः मुखेन पूर्वं पिबेत् पश्चान्नासिकयेति । तदुभयपीतं पञ्चप्रकारमप्युरः प्राप्तं मुखेन वमनीयं न कथमपि नासिकयेति दर्शयन्नाह—मुखपीतमित्यादि । मुखेन पीतं मुखेनैव वमेत् । प्रतिलोमेनेत्यादि । तथाच विदेहः,—"निर्वमेत्तु मुखेनैव नासया न कथञ्चन । विलोमतो गतो धूमः कुर्याद्दर्शनविभ्रमम्"—इति । विशेषतस्तु प्रायोगिकमित्यादि । शिरोरोगसंभवानां लक्षणविशेषमाश्रित्य प्रायोगिकं घ्राणेनाददीत, सामान्येन पुनरुरःशिरोरोगसंभवानामुभयमार्गेणापि, तन्त्रान्तरदर्शनात्; तथाच विदेहः,—"प्रयोगपाने पूर्वं वा नासया धूममाचरेत्"—इति । पूर्वं वा नासया धूममाचरेदित्यनेन क्वचिन्मुखेनापि प्राक् पेय इत्यवगम्यते । स्नैहिकं मुखनासाभ्यामिति उरःकण्ठाश्रिते वाते मुखेन, शिरःसमाश्रिते वाते नासया, उभयमार्गे पानार्हो मुखेन पूर्वं पिबेत्पश्चान्नासिकयेति । वैरेचनिकमिति उत्क्लिष्टकफाभिव्याप्तकण्ठोरसो नासया, अनुत्क्लिष्टकफो पुनर्वैरेचनिकमपि प्राग्वक्त्रेण । इतरौ कासघ्नवामनीयौ मुखेनैव पेयौ, कासस्य वामनीयस्य च रोगयोरःकण्ठगत्वात् ॥ ६—९ ॥

**तत्र प्रायोगिके वर्तिं व्यपगतशरकाण्डां निवातातपशुष्कामङ्गारेष्ववदीप्य नेत्रमूलस्रोतसि प्रयुज्य धूममाहरेति ब्रूयात् । एवं स्नेहनं वैरेचनिकं च कुर्यादिति । इतरयोर्व्यपेतधूमाङ्गारे स्थिरे समाहिते शरावे प्रक्षिप्य वर्तिं मूलच्छिद्रेणान्येन शरावेण पिधाय तस्मिन् छिद्रे नेत्रमूलं संयोज्य धूममासेवेत, प्रशान्ते धूमे वर्तिमवशिष्टां प्रक्षिप्य पुनरपि धूमं पाययेदादोषविशुद्धेरेष धूमपानोपायविधिः ॥ १० ॥**

तत्र प्रायोगिके वर्तिमित्यादि । स्थिरे अचले । समाहिते शोभनकारितया स्थापिते । मूलच्छिद्रेणेति मूले छिद्रं यस्य तेन मूलच्छिद्रेणान्येन शरावेण कर्त्रा, वर्तिं धूमवर्तिं चूर्णं वा ॥१०॥

**तत्र शोकश्रमभयामर्षौष्ण्यविषरक्तपित्तमदमूर्च्छादाहपिपासापाण्डुरोगतालुशोषच्छर्दिशिरोऽभिघातोद्गारापतर्पिततिमिरप्रमेहोदराध्मानोर्ध्ववातार्ता बालवृद्धदुर्बलविरिक्तास्थापितजागरितगर्भिणीरूक्षक्षीणक्षतोरस्कमधुघृतदधिदुग्धमत्स्यमद्ययवागूपीताल्पकफाश्च न धूममासेवेरन् ॥ ११ ॥**

इदानीं धूमानर्होपदेशः—तत्र शोकश्रमभयेत्यादि । तत्र शोकादिभिरूर्ध्ववातान्तैः सहार्तशब्दः प्रत्येकमभिसंबध्यते॥११

**अकालपीतः कुरुते भ्रममूर्च्छाशिरोरुजः ॥**
**घ्राणश्रोत्राक्षिजिह्वानामुपघातं च दारुणम् ॥ १२ ॥**

अकालपीतस्य व्यापदुद्भवं दर्शयन्नाह—अकालपीत इत्यादि ॥ १२ ॥

**आद्यास्तु त्रयो धूमा द्वादशसु कालेषूपादेयाः । तद्यथा—क्षुतदन्तप्रक्षालननस्यस्नानभोजनदिवास्वप्नमैथुनच्छर्दिमूत्रोच्चाररुषितशस्त्रकर्मान्तेष्विति । तत्र मूत्रोच्चारक्षवथुरुषितमैथुनान्तेषु स्नैहिकः, स्नानच्छर्दनदिवास्वप्नान्तेषु वैरेचनः, दन्तप्रक्षालननस्यस्नानभोजनशस्त्रकर्मान्तेषु प्रायोगिक इति॥१३**

कः पुनर्धूमस्य पानकाल इत्याह—आद्यास्तु त्रयो धूमा इत्यादि ॥ १३ ॥

**तत्र स्नेहनो वातं शमयति, स्नेहादुपलेपाच्च; वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षति, रौक्ष्यात्तैक्ष्ण्यादौष्ण्याद्वैशद्याच्च; प्रायोगिकः श्लेष्माणमुत्क्लेशयत्युत्क्लिष्टं चापकर्षति, साधारणत्वात् पूर्वाभ्यामिति ॥ १४ ॥**

तेषां प्रत्येकं कार्यमाह—तत्र स्नैहिको वातमित्यादि । कुतः पुनरयं कफोत्क्लेशापकर्षणः? साधारणत्वादिति पूर्वाभ्यां स्नेहविरेचनाभ्यां तुल्यत्वादित्यर्थः ॥ १४ ॥

**भवति चात्र ।**

**नरो धूमोपयोगाच्च प्रसन्नेन्द्रियवाङ्मनाः ॥**
**दृढकेशद्विजश्मश्रुः सुगन्धिविशदाननः ॥ १५ ॥**

**कासश्वासारोचकास्योपलेपस्वरभेदमुखास्रावक्षवथुतन्द्रानिद्राहनुमन्यास्तम्भपीनसशिरोरोगकर्णाक्षिशूलवातकफनिमित्ताश्चास्य मुखरोगा न भवन्ति ॥ १६ ॥**

धूमोपयोगमाह—भवति चात्रेत्यादि ॥ १५ ॥ १६ ॥

**तस्य योगातियोगौ विज्ञातव्यौ । तत्र योगो रोगप्रशमनः, अतियोगो रोगाप्रशमनस्तालुगलशोषपरिदाहपिपासामूर्च्छाभ्रममदकर्णाक्षिदृग्निनासारोगदौर्बल्यान्यतियोगो जनयति ॥ १७ ॥**

तत्र योगो रोगप्रशमन इत्यादि । दृष्टिनासयोः रोगदौर्बल्याभ्यां संबन्धः । अतियोगो जनयतीत्यस्याग्रे 'तत्र सर्पिःपानाञ्जनतर्पणानि विदध्यात्' इति केचित् पठन्ति ॥ १७ ॥

**प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत मुखनासिकाभ्यां च पर्यायांस्त्रींश्चतुरो वेति, स्नैहिकं यावदश्रुप्रवृत्तिः, वैरेचनिकमादोषदर्शनात्, तिलतण्डुलयवागूपीतेन पातव्यो वामनीयः, ग्रासान्तरेषु कासघ्न इति ॥ १८ ॥**

**व्रणधूमं शरावसंपुटोपनीतेन नेत्रेण व्रणमानयेत्, धूपनाद्वेदनोपशमो व्रणवैशद्यमास्रावोपशमश्च भवति ॥ १९ ॥**

**विधिरेष समासेन धूमस्याभिहितो मया ॥**
**नस्यस्यातः प्रवक्ष्यामि विधिं निरवशेषतः ॥ २० ॥**

प्रायोगिकादीनां पानमर्यादामाह—प्रायोगिकमित्यादि । मुखनासिकाभ्यामिति दोषस्थानमवेक्ष्योचितमार्गेणाददीत । त्रींस्त्रीनुच्छ्वासान्कति संख्याकानाददीतेत्याह—पर्यायांस्त्रींश्चतुरो वेति—पर्यायः परिपाटी, उच्छ्वासत्रयेणैकः पर्यायः, तान्पर्यायान् त्रींश्चतुरो वा दोषपुरुषबलमवेक्ष्य; एतदुक्तं भवति—त्रिभिरादानविसर्गैः त्रीन् वारान् चतुरो वा धूमः पातव्यः । वाशब्दोऽत्र व्यवस्थायाम् । तेन तन्त्रान्तरव्यवस्थितोऽर्थोऽत्र ज्ञातव्यः । तथाच धूमपानमात्राविधाने निमिः—"धूमपाने तु विज्ञेय उच्छ्वासस्त्रिगुणः कलाः । तिस्रः कलाश्चात्र मात्राप्रमाणं स्यात्रिमात्रिकं ॥ पिबेत् स्वस्थविधौ, मात्रां दुर्बलस्तु कलां पिबेत् । अभिष्यन्ने प्रमाणं स्यात् प्रमाणं च पिबेद्रुजि—"इति । स्नैहिकमित्यादि । यावदश्रुप्रवृत्तिरिति बलवति पुरुषे, दुर्बले च प्रायोगिकवत् । तथाच भोजः,—"प्रमाणं स्नैहिके धूमे कृशो मात्रां पिबेन्नरः।सबलस्तु पिबेत्तावद्यावदश्रुर्न गच्छति"—इति । वैरेचनिकमादोषदर्शनादिति दोषस्य च कफाख्यस्य विकृतस्य दर्शनं यावत् । अत एव तन्त्रान्तरे शोधनस्यैकस्मिन् दिने त्रिश्चतुर्वा पानं प्रतिपादितम् । तथा च तन्त्रान्तरम्—"सकृत् पिबेत् स्नेहनीयं प्रयोगे सकृदेव च । द्विर्वा विरेचनीयं तु त्रिश्चतुर्वा पिबेन्नरः"—इति । विशिष्टधूमपाने पूर्वकरणीय-

माह—तिलतण्डुलेत्यादि । वमनकाल एवाकण्ठं तिलादियवागूपीतेन वामनीयो धूमः पातव्यो यावत् 'पित्ते कफस्यानुसुखं प्रवृत्ते' इत्यादिवाक्योक्तं सम्यग्वान्तलक्षणमिति । ग्रासान्तरेष्विति कवलयोः कवलानां वान्तरे, अन्तरं मध्यमित्यर्थः । 'ग्रासान्त' इत्यन्ये पठन्ति, तथा 'भोजनस्योत्तर' इत्यपरे पठन्ति। कासघ्नश्च वैरेचनिकवत् त्रिश्चतुर्वा यावद्भिन्नतकफहरणम् । तथा च चरकः,—"वैरेचनं सुखेनैव कासवान् धूममापिबेत्" । अतो व्रणधूपनविधानं—व्रणधूममित्यादि । समासेन संक्षेपेणेत्यर्थः ॥ १८—२० ॥

**औषधमौषधसिद्धो वा स्नेहो नासिकाभ्यां दीयत इति नस्यम् । तद्विविधं शिरोविरेचनं, स्नेहनं च । तद्विविधमपि पञ्चधा । तद्यथा—नस्यं, शिरोविरेचनं, प्रतिमर्शो, अवपीडः, प्रधमनं च । तेषु नस्यं प्रधानं शिरोविरेचनं च; नस्यविकल्पः प्रतिमर्शः, शिरोविरेचनविकल्पोऽवपीडः प्रधमनं च; ततो नस्यशब्दः पञ्चधा निपातितः ॥ २१ ॥**

नासिकाभ्यामिति द्विवचनं पुटयुग्मापेक्षया । तद्विविधमित्यादि । नस्यमत्र 'तत्र यः स्नेहनार्थं शून्यशिरसां' इत्यादिवक्ष्यमाणवाक्यप्रतिपादितं ज्ञेयम् । शिरोविरेचनद्रव्यैर्यो दीयते स शिरोविरेचनः । प्रतिमर्शस्त्विहैवाग्रे वक्ष्यते । शृतशीतक्वाथादीनां पिचुनाऽवपीडनादवपीडः । चूर्णस्य मुखेन नाड्या वा प्रध्मापनात् प्रधमनम् । चकारः पुनरत्र शिरोविरेचनस्यापि विकल्पः प्रतिमर्श इत्यनुक्तं समुच्चिनोति; तथा च दृढ़बलः-"प्रतिमर्शो भवेत् स्नेहो निर्दोष उभयार्थकृत्"—इति । तेषु नस्यमित्यादि ॥ २१ ॥

**तत्र यः स्नेहनार्थं शून्यशिरसां ग्रीवास्कन्धोरसां च बलजननार्थं दृष्टिप्रसादजननाय वा स्नेहो विधीयते तस्मिन् वैशेषिको नस्यशब्दः । तत्तु नस्यं देयं वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुणकर्णशूलकर्णक्ष्वेडतिमिरस्वरोपघातनासारोगास्यशोषापबाहुकाकालजवलीपलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु मुखरोगेष्वन्येषु च वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति ॥ २२ ॥**

तत्र नस्यविधौ स्नेहः सर्पिस्तैलवसामज्जाख्यः, स च यथास्वगुणैर्वातपित्तकफहरद्रव्यैः सिद्धः स्नेह इति तत्र तैलं नस्ये वातकफहरं, पित्तरक्तहरं तु क्षीरसर्पिरिति ज्ञेयम् । तत्तु देयमित्यादि । तत् स्नैहिकं नस्यं वातपित्तहरद्रव्यैः सिद्धेन स्नेहेन देयम् । तस्य कालावधिस्तन्त्रान्तरात् । तथाच भोजः,—"एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः । सप्ताहं तु परं देयं विश्रान्तस्य पुनः पुनः ॥ पक्षं विंशतिरात्रं वा यावद्वा साधु मन्यते" इति । अपरस्त्वाह—"त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितः । परं नवाहमूर्ध्वं तु नवाहात् सात्म्यतां व्रजेत् ॥ न तन्नस्यगुणं कुर्यात् सात्म्यत्वात् दोषकृन्न च । तस्मान्नस्यप्रयोगस्तु स्नैहिको न हितः सदा"—इति ॥ २२ ॥

**शिरोविरेचनं श्लेष्मणाभिव्याप्ततालुकण्ठशिरसामरोचकशिरोगौरवशूलपीनसार्धावभेदककृमिप्रतिश्यायापस्मारगन्धाज्ञानेष्वन्येषु चोर्ध्वजत्रुगतेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यैस्तत्सिद्धेन वा स्नेहेनेति ॥ २३ ॥**

अथ शिरोविरेचनविषयावसरः—शिरोविरेचनमित्यादि । केचित् स्नेहेनैव पठन्ति ॥ २३ ॥

**तत्रैतद्विविधमप्यभुक्तवतोऽन्नकाले पूर्वाह्णे श्लेष्मरोगिणां, मध्याह्ने पित्तरोगिणां, अपराह्णे वातरोगिणाम् ॥ २४ ॥**

तयोर्द्वयोः स्नैहिकवैरेचनिकयोः कालावधारणमुद्दिशन्नाह —तत्रैतद्विविधमित्यादि । तद्विविधमपि नस्यं पूर्वाह्णमध्याह्नापराह्णेषु कफपित्तवातरोगिणां देयमिति । स्वास्थ्यवृत्तिकनस्यकालावधारणं तन्त्रान्तरात् ज्ञेयम् । तथा च वृद्धवाग्भटः,—"स्वस्थवृत्ते तु शीते मध्याह्ने, शरद्वसन्तयोः पूर्वाह्ने, ग्रीष्मेऽपराह्ने, वर्षास्वादित्यदर्शने, पञ्च कर्माणि आचरतो वस्तिकर्मोत्तरकालमेव" इति ॥ २४ ॥

**अथ पुरुषाय शिरोविरेचनीयाय दन्तकाष्ठधूमपानाभ्यां विशुद्धवक्त्रस्रोतसे पाणितापपरिस्विन्नमृदितगलकपोलललाटप्रदेशाय वातातपरजोहीनवेश्मन्युत्तानशायिने प्रसारितकरचरणाय किञ्चित् प्रविलम्बितशिरसे वस्त्राच्छादितनेत्राय वामहस्तप्रदेशिन्यग्रोन्नामितनासाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णानुतप्तं रजतसुवर्णताम्रमृत्पात्रशुक्तीनामन्यतमस्थं शुक्त्या पिचुना वा सुखोष्णं स्नेहमद्रुतमासिञ्चेदविच्छिन्नधारं यथा नेत्रे न प्राप्नोति ॥ २५ ॥**

**स्नेहेऽवसिच्यमाने तु शिरो नैव प्रकम्पयेत् ॥**
**न कुप्येन्न प्रभाषेच्च न क्षुयान्न हसेत्तथा ॥ २६ ॥**
**एतैर्हि विहतः स्नेहो न सम्यक् प्रतिपद्यते ॥**
**ततः कासप्रतिश्यायशिरोऽक्षिगदसंभवः ॥ २७ ॥**

अथानन्तरं तद्दानविधानं—अथ पुरुषायेत्यादि । स्नेहमिति स्नेहस्योपलक्षणत्वात् क्वाथादिकमप्यनेनैव प्रकारेण देयम् । दत्तमात्रे च यत् कर्तव्यं तत्तन्त्रान्तरात् ज्ञेयं । तथा च वृद्धवाग्भटः,—"दत्तमात्रे नस्ये कर्णललाटकेशभूमिगण्डमन्यास्कन्धपाणिपादतलान्यनु सुखं मर्दयेत् शनैः शनैश्चोच्छिङ्घयात्" इति ॥ २५—२७ ॥

**तस्य प्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्वद्वयनिःसृताः प्रथममात्रा, द्वितीया शुक्तिः, तृतीया पाणिशुक्तिः, इत्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः॥२८

स्नेहस्य चाल्पमध्यमोत्तमप्रमाणमाह—तस्येत्यादि । तस्याष्टौ प्रत्येकं नासापुटयोरेवं षोडश बिन्दवः । अङ्गुष्ठसमीपवर्त्यङ्गुली प्रदेशिनी तत्पर्वद्वयच्युता । गयी तु भोजदर्शनात्स्वस्थस्यैव प्रायोगिके नस्ये प्रत्येकं नासापुटयोरष्टौ बिन्दवः, स्नेहनार्थे तद्द्विगुणा शुक्तिप्रमाणा इति प्रतिपादयति । तथा च भोजः—"प्रायोगिकं स्नैहिकं च द्विविधं नस्यमुच्यते । प्रायोगिके बिन्दवोऽष्टौ स्नैहिके शुक्तिरिष्यते ॥ दोषोच्छ्रायं समासाद्य दद्यात् द्वित्रिचतुर्गुणम्"—इति ॥ २८ ॥

**स्नेहनस्यं न चोपगिलेत् कथञ्चिदपि ॥ २९ ॥**
**शृङ्गाटकमभिप्लाव्य निरेति वदनाद्यथा ॥**
**कफोत्क्लेशभयाच्चैव निष्ठीवेदविधारयन् ॥ ३० ॥**

नोपगिलेन्न पिबेत् । तथा हि विदेहः,—"निष्ठीवेन्न पिबेन्नस्यं व्यापदः पिबतस्त्विमाः । भवन्ति कासश्छर्दिश्च कुत्साऽन्ने वमथुस्तथा" इति । क्वचिन्नस्यपानमप्युक्तं विदेहेनैव,—"क्षीणं मांसं बलं यस्य वातार्तिश्चोर्ध्वजत्रुजा । सुदीप्ताग्निः स्नेहसात्म्यः स नस्यं नासया पिबेत् ॥ धातूंश्च तर्पयेद्देहे पीतं नस्यं तु नस्ततः"—इति । शृङ्गाटकमित्यादि ।—नासाकर्णस्रोतोक्षिजिह्वातर्पणीनां शिराणां मध्ये शृङ्गाटकः । निष्ठीवेदिति वदनप्राप्तं मुञ्चेत्, वामदक्षिणयोरिति वाक्यशेषः। तथाच वृद्धवाग्भटः,—"अनभ्यवहरंश्च वामदक्षिणपार्श्वयोर्निष्ठीवेत्, एकपार्श्वष्ठीवने न सर्वाः सिरा भेषजेन सम्यग्व्याप्यन्ते"—इति ॥ २९ ॥ ३० ॥

**दत्ते च पुनरपि संस्वेद्य गलकपोलादीन् धूममासेवेत, भोजयेच्चैनमभिष्यन्दि, ततोऽस्याचारिकमादिशेत्; रजोधूमस्नेहातपमद्यद्रवपानशिरःस्नानातियानक्रोधादीनि च परिहरेत् ॥ ३१ ॥**

पश्चात्कर्माह—दत्ते च पुनरपि संस्वेद्येत्यादि । धूममासेवेतेति वाक्शतानन्तरं; तथाच भोजः,—"वाक्शतादूर्ध्वमुत्थाय धूमं प्रायोगिकं पिबेत्"—इति । अभिष्यन्दि उपलेपकारि । आचारिकमिति आचारप्राप्तं युक्तमित्यर्थः । अयुक्तांश्च रजोधूमेत्यादि ॥ ३१ ॥

**तस्य योगातियोगानां विज्ञानं भवति ॥ ३२ ॥**
**लाघवं शिरसो योगे सुखस्वप्नप्रबोधनम् ॥**
**विकारोपशमः शुद्धिरिन्द्रियाणां मनःसुखम् ॥ ३३ ॥**
**कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः ॥**
**लक्षणं मूर्ध्न्यतिस्निग्धे रूक्षं तत्रावचारयेत् ॥ ३४ ॥**
**अयोगे चैव वैगुण्यमिन्द्रियाणां च रूक्षता ॥**
**रोगाशान्तिश्च तत्रेष्टं भूयो नस्यं प्रयोजयेत् ॥ ३५ ॥**

गयी तु अयोगेन लक्षणेन प्रतिपादितस्य प्रायोगिकनस्यस्य स्वस्थविषयस्योपयोगे वातवैगुण्येन स भवति, तथा योगे वातवैगुण्यं तदवस्थाश्च विषये (?) ॥ ३२—३५ ॥

**चत्वारो बिन्दवः षड् वा तथाष्टौ वा यथाबलम् ॥**
**शिरोविरेकस्नेहस्य प्रमाणमभिनिर्दिशेत् ॥ ३६ ॥**

स्नेहनस्यविशेषमुद्दिशन्नाह—चत्वारो बिन्दव इत्यादि । प्रत्येकमेव नासापुटयोर्हीनमध्योत्तमेष्वेषु दोषपुरुषबलाबलेषु चतुःषडष्टबिन्दवः स्नैहिकस्य शिरोविरेचनस्य । तथा च विदेहः, "चतुरश्चतुरो बिन्दूनेकैकस्मिन् समाचरेत् । एषा लघ्वी मता मात्रा तथा शीघ्रं विरेचयेत् ॥ अध्यर्धां द्विगुणां वापि त्रिगुणां वा चतुर्गुणां । यथाव्याधि विदित्वा तु मात्रां समवचारयेत्"—इति ॥ ३६ ॥

**नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः ॥**
**शुद्धहीनातिसंज्ञानि विशेषाच्छास्त्रचिन्तकैः ॥ ३७ ॥**
**लाघवं शिरसः शुद्धिः स्रोतसां व्याधिनिर्जयः ॥**
**चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् ॥ ३८ ॥**
**कण्डूपदेहौ गुरुता स्रोतसां कफसंस्रवः ॥**
**मूर्ध्नि हीनविशुद्धे तु लक्षणं परिकीर्तितम् ॥ ३९ ॥**
**मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः ॥**
**शून्यता शिरसश्चापि मूर्ध्नि गाढविरेचिते ॥ ४० ॥**
**हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत् ॥**
**सम्यग्विशुद्धे शिरसि सर्पिर्नस्यं निषेचयेत् ॥ ४१ ॥**
**एकान्तरं द्व्यन्तरं वा सप्ताहं वा पुनः पुनः ॥**
**एकविंशतिरात्रं वा यावद्वा साधु मन्यते ॥ ४२ ॥**
**मारुतेनाभिभूतस्य वात्यन्तं यस्य देहिनः ॥**
**द्विकालं चापि दातव्यं नस्यं तस्य विजानता ॥ ४३ ॥**

नस्ये इत्यादि । सर्पिर्नस्ये निषेचयेदिति पित्तप्रकृतौ, वातप्रकृतौ तु पक्वतैलमेव ॥ ३७—४३ ॥

**अवपीडस्तु शिरोविरेचनवदभिष्यन्दसर्पदष्टविसंज्ञेभ्यो दद्याच्छिरोविरेचनद्रव्याणामन्यतममवपिष्यावपीड्य, शर्करेक्षुरसक्षीरघृतमांसरसानामन्यतमं क्षीणानां शोणितपित्ते च विदध्यात् ॥ ४४**
**कृशदुर्बलभीरूणां सुकुमारस्य योषिताम् ॥**
**शृताः स्नेहाः शिरःशुद्ध्यै कल्कस्तेभ्यो यथा हितः ४५**

यद्यप्यवपीडादौ प्रतिमर्शः पूर्वमुद्देशसूत्रे प्रतिपादितः, तथापि सर्वदोषयोज्यतया परिहार्यरहितत्वेन (पश्चात् दोषं करिष्यतीति ?) सर्वदोषोपयोज्यमपरिहारं चावपीडमाह—अवपीड इत्यादि । अभिष्यन्दः मेदःकफव्याप्तशिराः । पिप्पलीविडङ्गादिशिरोविरेचनद्रव्याणामेकतमं प्राप्य पिष्ट्वा कल्कमथवैषां क्वाथेनाक्तं पिचुनक्तकमवपीड्य शिरोविरेचनवत् यथाक्रमं चतुःषडष्टबिन्दुप्रमाणं हीनादिमात्रामवपीड्य दद्यात् । तस्य च तन्त्रान्तरे विषार्तादीनां संज्ञाप्रबोधनत्वेन रक्तपित्तादीनां स्तम्भनत्वेन द्वैविध्यम् । तथा च विदेहः,—"विषाभिभूतसंन्यासमूर्च्छामोहापतन्त्रके । मदापस्मारकामार्तिचित्तक्रोधभयादिषु । मानसेषु च रोगेषु मूढव्याकुलचेतसाम् । संज्ञाप्रबोधहेत्वर्थमवपीडं प्रयोजयेत् ॥ शिरोविरेचनस्नेहमुष्काख्यं (?) तद्विरेचनम् । क्षौद्रादिकल्कपिष्टं च स्तम्भनं त्ववपीडनं" इति ॥ ४४—४५ ॥

**चेतोविकारकृमिविषाभिपन्नानां चूर्णं प्रधमेत् ॥४६**

प्रधमनप्रयोगविषयावधारणं— चेतोविकारकृमिविषाभिपन्नानामित्यादि। अत्राह विदेहः,—"नाडी षडङ्गुलायामा द्विमुखी च तया धमेत्। त्रिश्चूर्णं मुचुटीमात्रमेष प्रधमने विधिः॥ शुक्तिप्रमाणं जिघ्रेद्वा बद्धं सूक्ष्मेण वाससा"—इति। तर्जन्यङ्गुष्ठाग्रमात्रं ग्राह्यं चूर्णं मुचूटीमात्रम्। गयी तु प्रतिमर्शानन्तरमवपीड़प्रधमने प्राह ॥ ४६ ॥

**नस्येन परिहर्तव्यो भुक्तवानपतर्पितोऽत्यर्थतरुणप्रतिश्यायी गर्भिणी पीतस्नेहोदकमद्यद्रवोऽजीर्णी दत्तबस्तिः क्रुद्धो गरार्तस्तृषितः शोकाभिभूतः श्रान्तो बालो वृद्धो वेगावरोधितः शिरःस्नातुकामश्चेति; अनार्तवे चाभ्रे नस्यधूमौ परिहरेत् ॥ ४७**

अतः परं नस्यानर्होपदेशः—नस्येनेत्यादि। अनार्तवे च इत्यादि चकारादार्तवे व्याधौ ॥ ४७ ॥

**तत्र हीनातिमात्रातिशीतोष्णसहसाप्रदानातिप्रविलम्बितशिरस उच्छिङ्खतो विचलतोऽभ्यवहरतो वा प्रतिषिद्धप्रदानाच्च व्यापदो भवन्ति तृष्णोद्गारादयो दोषनिमित्ताः क्षयजाश्च ॥ ४८ ॥**

इदानीं नस्यव्यापदः कारणसहिताः प्रतिपादयति—तत्र हीनातिमात्रातिशीतोष्णेत्यादि। दोषनिमित्ता इति दोषोत्क्लेशनिमित्ताः, क्षयजाश्चेति दोषक्षयजाः ॥ ४८ ॥

**भवतश्चात्र।**

**नस्ये शिरोविरेके च व्यापदो द्विविधाः स्मृताः ॥**
**दोषोत्क्लेशात् क्षयाच्चैव विज्ञेयास्ता यथाक्रमम् ४९**

उक्तमेवार्थं पद्येन स्पष्टीकुर्वन्नाह—भवतश्चात्रेत्यादि। यथाक्रममिति स्नैहिकनस्यभेदेन दोषोत्क्लेशजाः, शिरोविरेचनेन क्षयजा व्यापदो भवन्तीति ॥ ४९ ॥

**दोषोत्क्लेशनिमित्तास्तु जयेच्छमनशोधनैः ॥**
**अथ क्षयनिमित्तासु यथास्वं बृंहणं हितम् ॥ ५० ॥**

दोषोत्क्लेशनिमित्ता इत्यादि। शमनशोधनैरिति तत्राल्पे शमनं, प्रभूते शोधनम् ॥ ५० ॥

**प्रतिमर्शश्चतुर्दशसु कालेषूपादेयः; तद्यथा—तल्पोत्थितेन, प्रक्षालितदन्तेन, गृहान्निर्गच्छता, व्यायामव्यवायाध्वपरिश्रान्तेन, मूत्रोच्चारकवलाञ्जनान्ते, भुक्तवता, छर्दितवता, दिवास्वप्नोत्थितेन, सायं चेति ॥ ५१ ॥**

**तत्र तल्पोत्थितेनासेवितः प्रतिमर्शो रात्रावुपचितनासास्रोतोगतमलमुपहन्ति मनः प्रसादं च करोति, प्रक्षालितदन्तेनासेवितो दन्तानां दृढतां वदनसौगन्ध्यं चापादयति, गृहान्निर्गच्छता सेवितो नासास्रोतसः क्लिन्नतया रजो धूमो वा नाबाधते, व्यायाममैथुनाच्च परिश्रान्तेनासेवितः श्रममुपहन्ति, मूत्रोच्चारान्ते वा सेवितो दृष्टेर्गुरुत्वमपनयति, कवलाञ्जनान्ते सेवितो दृष्टिं प्रसादयति, भुक्तवता सेवितः स्रोतसां विशुद्धिं लघुतां चापादयति, वान्तेनासेवितः स्रोतोविलग्नं श्लेष्माणमपोह्य भक्तकाङ्क्षामापादयति, दिवास्वप्नोत्थितेनासेवितो निद्राशेषं गुरुत्वं मलं चापोह्य चित्तैकाग्र्यं जनयति, सायं चासेवितः सुखनिद्राप्रबोधं चेति ॥ ५२ ॥**

**ईषदुच्छिङ्खतः स्नेहो यावद्वक्त्रं प्रपद्यते ॥**
**नस्ये निषिक्तं तं विद्यात् प्रतिमर्शं प्रमाणतः ॥ ५३ ॥**
**उच्छिङ्खेन्न पिबेन्नस्यं निष्ठीवेन्मुखमागतम् ॥**

प्रतिमर्श इत्यादि। प्रतिमर्शप्रमाणमाह—ईषदित्यादि। वृद्धवाग्भटे चान्यथा प्रतिमर्शप्रमाणम्। तथा च,—"प्रमाणं प्रतिमर्शस्य बिन्दुद्वितयमिष्यते। बिन्दुर्वा येन चोत्क्लेशो नानुत्क्लिष्टस्य जायते॥ निहितो यत्र वा स्नेहो न साक्षादुपलभ्यते"—इति। शिरोविरेचनस्नेहवत् प्रतिमर्शस्नेहोऽपि नाभ्यवहरणीय इति दर्शयितुमाह—उच्छिङ्खेदित्यादि ॥५१—५३॥

**नस्येन रोगाः शाम्यन्ति नराणामूर्ध्वजत्रुजाः ॥**
**इन्द्रियाणां च वैमल्यं कुर्यादास्यं सुगन्धि च ॥५४॥**
**हनुदन्तशिरोग्रीवात्रिकबाहूरसां बलम् ॥**
**वलीपलितखालित्यव्यङ्गानां चाप्यसंभवः ॥ ५५ ॥**

इदानीं सामान्येन नस्यफलमाह—नस्येन रोगा इत्यादि ॥ ५४ ॥ ५५ ॥

**तैलं कफे सवाते स्यात् केवले पवने वसाम् ॥**
**दद्यात्सर्पिः सदा पित्ते मज्जानं च समारुते ॥ ५६ ॥**
**चतुर्विधस्य स्नेहस्य विधिरेवं प्रकीर्तितः ॥**
**श्लेष्मस्थानाविरोधित्वात्तेषु तैलं विधीयते ॥ ५७ ॥**

अतः स्नेहान् प्रत्यनीकेन विभजति—तैलं कफे सवाते स्यादित्यादि ॥ ५६ ॥ ५७ ॥

**अतः परं प्रवक्ष्यामि कवलग्रहणे विधिम् ॥**
**चतुर्धा कवलः स्नेही प्रसादी शोधिरोपणौ ॥ ५८ ॥**
**स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः ॥**
**पित्ते कट्वम्ललवणै रूक्षोष्णैः शोधनः कफे ॥ ५९ ॥**
**कषायतिक्तमधुरैः कटूष्णै रोपणो व्रणे ॥**
**चतुर्विधस्य चैवास्य विशेषोऽयं प्रकीर्तितः ॥ ६० ॥**

ततो नस्यमभिधाय शिरोरोगावजये एकानां (?) कवलग्रहमुद्दिशन्नाह—अत ऊर्ध्वमित्यादि। दोषभेदेन त्रिषु स्नैहिकादीनभिधाय रोपणो व्रण इत्यनेन शोणितं चतुर्थमभिहितम् ॥ ५८—६० ॥

**तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैलशुक्तसुरामूत्रक्षारमधूनामन्यतमेन सलवणम-**

भिप्रतप्तमुपस्विन्नमृदितगलकपोलललाटप्रदेशो धारयेत् ॥ ६१ ॥

मुखस्यात्र कफस्थानत्वात् कफहरं संशोधनमेव कवलं त्रिकटुकादिद्रव्यैः दर्शयन्नाह—तत्रेत्यादि ॥ ६१ ॥

**सुखं संचार्यते या तु मात्रा सा कवले स्मृता ॥**
**असंचार्या तु या मात्रा गण्डूषः स प्रकीर्तितः॥६२॥**

तत्र गण्डूषकवलयोः भेदमाह—सुखमित्यादि ॥ ६२ ॥

**तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन यावद्दोषपरिपूर्णकपोलत्वं नासास्रोतोनयनपरिस्रावश्च भवति तदा विमोक्तव्यः पुनश्चान्यो ग्रहीतव्य इति ॥ ६३ ॥**

कियन्तं कालं व्याप्य धारणीयस्तदाह—तावच्च धारयितव्य इत्यादि । दोषोऽत्र कफः नासास्रोतः नासारन्ध्रं ॥ ६३ ॥

**एवं स्नेहपयःक्षौद्ररसमूत्राम्लसंभृताः ॥**
**कषायोष्णोदकाभ्यां च कवला दोषतो हिताः॥६४॥**

नासाशोधनकवलस्य विधानं स्नेहादिष्वपि निर्दिशन्नाह—एवमित्यादि। दोषत इति दोषव्याधिप्रत्यनीकभावेन। दोषग्रहणेन व्याधिः परिगृह्यते, कार्ये कारणोपचारात् ॥ ६४ ॥

**व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ॥**
**इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम् ॥ ६५ ॥**
**हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च ॥**
**अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः ॥ ६६॥**
**शोधनीये विशेषेण भवन्त्येवं न संशयः ॥**

इदानीं योगादिलक्षणमुद्दिशन्नाह—व्याधेरित्यादि । अत्र स्थानत्वेन शोधनीयमेव प्रधानं, तेन व्याधेरपचय इत्यादिकं शुद्धिलक्षणं विशेषेण शोधनीयस्य, सामान्येन पुनः स्नैहिकादीनामपि; मुखपाकादि तु शोधनीयस्यैव, शेषाणां तु द्रव्यगुणादूह्यम् ॥ ६५ ॥ ६६ ॥—

**तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ॥ ६७॥**
**सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः ॥**
**कवलस्य विधिर्ह्येष समासेन प्रकीर्तितः ॥ ६८ ॥**

आगन्तुकस्य क्षारादिदाहस्य कवलमुद्दिशन्नाह—तिला नीलोत्पलमित्यादि । एतैः व्यस्तैः समस्तैश्च क्षारादिदाहे केवलः । कवलस्येत्यादि ॥ ६७ ॥ ६८ ॥

**विभज्य भेषजं बुद्ध्या कुर्वीत प्रतिसारणम् ॥**
**कल्को रसक्रिया क्षौद्रं चूर्णं चेति चतुर्विधम्॥६९॥**
**अङ्गुल्यग्रप्रणीतं तु यथास्वं मुखरोगिणाम् ॥**

त्रुव्यादिग्रहणगृहीतस्य प्रतिसारणस्य समासेन विधानमुद्दिशन्नाह—विभज्येत्यादि । रसक्रिया फाणिताकृतिः । भेषजं रसवीर्यगुणविपाकैः वातादिदोषान् तदारब्धरोगांश्च प्रविभज्य कल्कादिभेदेन चतुर्विधं प्रतिसारणम् । अङ्गुल्यग्रप्रणीतत्वेन कोलास्थिमात्रत्वं प्रतिसारणस्य सूचयति । "कोलास्थिमात्रेण पिण्डेन यथादोषं यथाव्याधि पञ्च सप्त वा वारान् हीनमध्यमोत्तमेषु व्याधिषु च प्रतिसारणं कुर्वीत । न चैनमतिघर्षयेत् । अतिघर्षणादोषचोषदाहक्लेदश्वयथुतृष्णाभक्तच्छन्दवाक्सङ्गा भवन्ति, असम्यक्प्रतिसारणात्पैच्छिल्यगुरुत्वानन्नाभिलाषप्रमोहविकारानुपशयाः, सम्यक्प्रतिसारणाद्वैशद्यं लाघवं क्षवथुरप्रसेकोऽन्नाभिलाषश्च"—इति ॥ ६९ ॥—

**तस्मिन् योगमयोगं च कवलोक्तं विभावयेत् ॥७०॥**
**तानेव शमयेद् व्याधीन् कवलो यानपोहति ॥**
**दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम् ॥ ७१ ॥**

इति भगवता श्रीधन्वन्तरिणोपदिष्टायां तच्छिष्येण महर्षिणा सुश्रुतेन विरचितायां सुश्रुतसंहितायां चिकित्सितस्थानं समाप्तम् ।

तस्मिन् योगमित्यादि । योगादन्योऽयोगो हीनयोगोऽतियोगश्च । अयोगं चेति चकारेण योगायोगातियोगचिकित्सितं समुच्चीयते। दोषघ्नमिति दोषेण येन वातादिना मुखरोगारम्भः। अत्र च कृष्णात्रेयः,—"सप्तवर्षमुपादाय नस्यकर्म चतुर्विधम् । प्रतिमर्शोऽथ वमनं जन्मप्रभृति शस्यते । धूमो द्वादशवर्षस्य कवलः पञ्चमे ततः । दोषव्याधिवलावस्थां वीक्ष्य चैतान् प्रयोजयेत्"— इति ॥ ७० ॥ ७१ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां समस्तनिबन्धार्थज्ञापिकायां सुश्रुतटीकायां चत्वारिंशोऽध्यायः ॥ ४० ॥

समाप्तं चेदं चिकित्सितस्थानम् ।

निबन्धसंग्रहाख्यव्याख्यासमुल्लसिता

# सुश्रुतसंहिता ।



## अथ कल्पस्थानम् ।

### प्रथमोऽध्यायः ।

**अथातोऽन्नपानरक्षाकल्पं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**

अथात इत्यादि ॥ १ ॥ २ ॥

**धन्वन्तरिः काशिपतिस्तपोधर्मभृतां वरः ॥**
**सुश्रुतप्रभृतीन् शिष्यान् शशासाहतशासनः ॥ ३ ॥**
**रिपवो विक्रमाक्रान्ता ये च स्वे कृत्यतां गताः ॥**
**सिसृक्षवः क्रोधविषं विवरं प्राप्य तादृशम् ॥ ४ ॥**
**विषैर्निहन्युर्निपुणं नृपतिं दुष्टचेतसः ॥**
**स्त्रियो वा विविधान् योगान् कदाचित्सुभगेच्छया ५**
**विषकन्योपयोगाद्वा क्षणाज्जह्यादसून्नरः ॥**
**तस्माद्वैद्येन सततं विषाद्रक्ष्यो नराधिपः ॥ ६ ॥**

सिसृक्षवः स्रष्टुमिच्छवः । क्रोधेन विषं क्रोधविषम् । न केवलं रिपवः स्वे चात्मीया भृत्याः कृत्यतां गताः विद्वेषं गताः । तथा च कृत्यशब्दार्थोऽमरकोषे,—"कृत्यं क्रियादेवतयोस्त्रिषु विद्विष्टकार्ययोः"—इति । विवरं छिद्रं प्राप्य तादृशं नृपतिं वधक्षमं स्त्रियो दुष्टचित्ता विविधान् योगान् संयोगविषाणि प्राप्य कदाचिदज्ञानात् सुभगेच्छया वा विविधान् योगान् सिसृक्षवो दातुमिच्छन्त्यो राजानं निहन्युः । विषकन्योपयोगाद्वा क्षणाज्जह्यादसून्नरः । उक्तं च—"हन्ति स्पृशन्ती स्वेदेन गम्यमाना च मैथुने । पक्वं वृन्तादिव फलं प्रशातयति मेहनम्"—इति । कृत्यतां गता इत्यत्र 'विकृतिं गताः' इत्यन्ये पठन्ति ॥ ३–६ ॥

**यस्माच्च चेतोऽनित्यत्वमश्ववत्प्रथितं नृणाम् ॥**
**न विश्वस्यात्ततो राजा कदाचिदपि कस्यचित् ॥७॥**

न परं पूर्वोक्तेभ्यो रिपुप्रभृतिभ्यो राजा रक्षणीयोऽपि तु राज्ञा कस्यापि विश्वासो न विधेयः, कुत इत्याह—यस्माच्चेत्यादि । अश्ववदिति आशुतमगत्या अश्वा उच्यन्ते, एतेन शीघ्रसंचारित्वोपलक्षणार्थं चेतोऽनित्यत्वमुक्तं, यस्मादश्वस्येव शीघ्रसंचारित्वं नानाभावेन चेतसः तस्मात् कदाचिदपि कस्यापि विश्वासं न विदध्यान्महीपतिः । वैद्यविषये च विश्वासहेतुः सूत्रस्थाने 'विसृजत्यात्मनात्मानम्'—इत्यादिश्लोकेनाभिहितः ॥ ७ ॥

**कुलीनं धार्मिकं स्निग्धं सुभृतं सततोत्थितम् ॥**
**अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम् ॥ ८ ॥**
**क्रोधपारुष्यमात्सर्यमायालस्यविवर्जितम् ॥**
**जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम् ॥ ९ ॥**
**मेधाविनमसंश्रान्तमनुरक्तं हितैषिणम् ॥**
**पटुं प्रगल्भं निपुणं दक्षमालस्यवर्जितम् ॥ १० ॥**
**पूर्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहितागदम् ॥**
**महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम् ॥ ११ ॥**

स च वैद्यो गुणवानेव विश्वासभाजनमिति वैद्यस्य गुणान् निर्दिशन्नाह—कुलीनमित्यादि । कुलीनो हि अदुष्टबीजक्षेत्रतया नाकार्येषु प्रवर्तते, कुलमत्रायुर्वेदाध्यायि कुलं द्विजातिक्षत्रियवैश्यभेदेन त्रिविधं, कुलगुणसम्पन्नशूद्रेण सह चतुर्विधमित्यन्ये । स्निग्धः स्नेहेन मित्रभावेन राज्ञा सह व्यवस्थितः, एतेन मित्रमिव सर्वथा रक्षति । सुभृतं सम्यग्भृतं यथाच शरीरयात्रा भवति । तथाचोक्तं,—"सूपौदनं घृतव्यञ्जनं दृढममलिनं च वास"—इति । सततोत्थितः अहोरात्रमध्ययनाध्यापनतदर्थचिन्तानृपशरीरस्वास्थ्यापादानेषु तत्परो नित्याभियुक्त इति । परगुणविध्वंसो मात्सर्यम् । माया परवञ्चनबुद्धिः । अनुरक्तं सदातुरलग्नं रागयुक्तं, पटुं वक्तारं, प्रगल्भं धृष्टं, दक्षं चतुरं, आलस्यवर्जितं द्विरुक्तमत्यन्तनिषेधार्थं, पूर्वोक्तैर्गुणैः 'तत्वाधिगतशास्त्रार्थः' इत्यादिकैः । महानसे रसवत्याम् । तद्विद्यपूजितमिति तद्विद्यैः पाकनिष्ठिततत्त्वज्ञानैः भिषग्भिः पूजितम् । गयी तु अलुब्धमशठं भक्तमित्यादिकं नित्यं सन्निहितागदमित्यन्तं न पठति, पुनरुक्तदोषत्वात् ॥ ८–११ ॥

**प्रशस्तदिग्देशकृतं शुचिभाण्डं महच्छुचि ॥**
**सजालकं गवाक्षाढ्यमात्मवर्गनिषेवितम् ॥ १२ ॥**
**विकक्षसृष्टसंसृष्टं सवितानं कृतार्चनम् ॥**
**परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम् ॥ १३ ॥**
**तत्राध्यक्षं नियुञ्जीत प्रायो वैद्यगुणान्वितम् ॥**

तदेव महानसं कीदृशं कार्यमित्याह—प्रशस्तेत्यादि । प्रशस्ता दिगत्राग्नेयी, देशस्तु प्रशस्तः गुणसंपदा शस्तः, महत्

१ 'आप्तवर्गनिषेवितम्' इति पाठान्तरम् ।

विस्तीर्णं, शुचि अनुपहतं, सजालकं जालकसहितं, गवाक्षाढ्यं वातायनसमृद्धं, विकक्षसृष्टसंसृष्टं विगततृणस्थानसंपर्कं, एतेन रसवतीसमीपे तृणसंचयो न करणीय इत्युक्तं भवति, सवितानं वितानकसहितं, कृतार्चनं कृताग्निपूजनम् । महानसव्यापारिणमाह—तत्राध्यक्षमित्यादि । अध्यक्षं अधिपतिम् । वैद्यगुणान्वितं वैद्यगुणैः कुलीनधार्मिकत्वादिभिर्युक्तमित्यर्थः ॥ १२ ॥ १३ ॥—

**शुचयो दक्षिणा दक्षा विनीताः प्रियदर्शनाः ॥ १४ ॥**
**संविभक्ताः सुमनसो नीचकेशनखाः स्थिराः ॥**
**स्नाता दृढं संयमिनः कृतोष्णीषाः सुसंयताः ॥ १५ ॥**
**तस्य चाज्ञाविधेयाः स्युर्विविधाः परिकर्मिणः ॥**

शुचय इत्यादि । दक्षिणाः अभिजाताः कुलीना इति यावत् । दक्षाश्चतुराः । विनीताः विनययुक्ताः शक्तिमन्त इत्यर्थः । संविभक्ताः विभज्य कर्मणि नियोजिताः । स्थिरा अचपलाः । दृढं संयमिनः सोपशमा इत्यर्थः । सुसंयताः सुष्ठु लौल्यादिदोषरहिताः, आयत्तपरिधानादिका वा इत्यर्थः । आज्ञाविधेया आदेशकारिणः। परिकर्मिणः सूपकारादयः॥१४॥१५॥—

**आहारस्थितयश्चापि भवन्ति प्राणिनो यतः ॥ १६ ॥**
**तस्मान्महानसे वैद्यः प्रमादरहितो भवेत् ॥**

महानसे वैद्यस्य सावधानत्वं सहेतुकमाह—आहारस्थितय इत्यादि ॥ १६ ॥—

**माहानसिकवोढारः सौपौदनिकपौपिकाः ॥ १७ ॥**
**भवेयुर्वैद्यवशगा ये चाप्यन्येऽत्र केचन ॥**

तेषां परिकर्मिणां वैद्याधीनत्वमाह—माहानसिकवोढार इत्यादि । महानसे नियुक्ता माहानसिका रसवतीपतय इत्यर्थः; वोढारो वोढ्रादयो कर्मकराः काहारादयो वा । सौपा उपकरणभूतद्रव्यस्य साधका सूपव्यञ्जनादिकारकाः, औदनिकाः उपकार्यभूतभक्तस्य साधकाः, पौपिकाः पूपादिभक्ष्याणां साधकाः इत्यर्थः । अन्येऽत्र केचनेति वेसवारकारकादयः ॥ १७ ॥—

**इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः ॥ १८ ॥**
**विद्याद्विषस्य दातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥**
**न ददात्युत्तरं पृष्टो विवक्षन् मोहमेति च ॥ १९ ॥**
**अपार्थं बहु सङ्कीर्णं भाषते चापि मूढवत् ॥**
**स्फोटयत्यङ्गुलीर्भूमिमकस्माद्विलिखेद्धसेत् ॥ २० ॥**
**वेपथुर्जायते तस्य त्रस्तश्चान्योऽन्यमीक्षते ॥**
**क्षामो विवर्णवक्त्रश्च नखैः किञ्चिच्छिनत्त्यपि ॥ २१ ॥**
**आलभेतासकृद्दीनः करेण च शिरोरुहान् ॥**
**निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः ॥ २२ ॥**
**वर्तते विपरीतं तु विषदाता विचेतनः ॥**

तदधिकृतस्यैव विषदातृज्ञानमुद्दिशन्नाह—इङ्गितज्ञ इत्यादि । इङ्गितज्ञो वैद्यः । एभिर्लिङ्गैर्वक्ष्यमाणैः । विवक्षन् वक्तुमिच्छन् । अपार्थं निरर्थकम् । त्रस्तश्चान्योन्यमीक्षत इति स्वपापकर्मोपलम्भभयेन अन्यमन्यमीक्षते इति । क्षामः क्षीणः । विवर्णः मलिनवर्णः । हस्तेन केशान् आलभेत स्पृशेत् । असकृत् अनेकवारम् । दीनः विलक्षः । निर्यियासुर्निर्यातुमिच्छुः । अपद्वारैः रसन्मार्गैः ॥ १८—२२ ॥—

**केचिद्भयात् पार्थिवस्य त्वरिता वा तदाज्ञया ॥ २३ ॥**
**असतामपि सन्तोऽपि चेष्टां कुर्वन्ति मानवाः ॥**
**तस्मात् परीक्षणं कार्यं भृत्यानामादृतैर्नृपैः ॥ २४ ॥**

विषदपरीक्षणे च राज्ञा आदरपरेण भवितव्यमितीममर्थं सहेतुकं प्रतिपादयन्नाह—केचिदित्यादि । असतामपि असाधूनामपि । आदृतैः उत्सुकैरित्यर्थः ॥ २३ ॥ २४ ॥

**अन्ने पाने दन्तकाष्ठे तथाभ्यङ्गेऽवलेखने ॥**
**उत्सादने कषाये च परिषेकेऽनुलेपने ॥ २५ ॥**
**स्रक्षु वस्त्रेषु शय्यासु कवचाभरणेषु च ॥**
**पादुकापादपीठेषु पृष्ठेषु गजवाजिनाम् ॥ २६ ॥**
**विषजुष्टेषु चान्येषु नस्यधूमाञ्जनादिषु ॥**
**लक्षणानि प्रवक्ष्यामि चिकित्सामप्यनन्तरम् ॥ २७ ॥**

येष्वधिष्ठानेषु विषं प्रयच्छन्ति तान्यदूषितानि रक्षितुं, दूषितेषु चिकित्सार्थं च लक्षणानि निर्देष्टुकामः प्राह—अन्न इत्यादि । दन्तकाष्ठसहचरितं जिह्वानिर्लेखनं मुखशोधनकषायश्च दन्तकाष्ठग्रहणेन गृह्यते । अवलेखने कङ्कतिकादौ केशप्रसाधने । उत्सादने उद्वर्तने । परिषेके स्नाने । कषायोऽत्र रोध्रादिकस्तैलापनयनाय । स्रक्षु पुष्पमालासु । कवचं सन्नाहम् । पादपीठेषु पादाधारेषु । विषजुष्टेषु चान्येषु इत्यनेन शिरोऽभ्यङ्गशिरस्त्राणादयो गृह्यन्ते ॥ २५–२७ ॥

**नृपभक्ताद्बलिं न्यस्तं सविषं भक्षयन्ति ये ॥**
**तत्रैव ते विनश्यन्ति मक्षिकावायसादयः ॥ २८ ॥**
**हुतभुक् तेन चान्नेन भृशं चटचटायते ॥**
**मयूरकण्ठप्रतिमो जायते चापि दुःसहः ॥ २९ ॥**
**भिन्नार्चिस्तीक्ष्णधूमश्च नचिराच्चोपशाम्यति ॥**
**चकोरस्याक्षिवैराग्यं जायते क्षिप्रमेव तु ॥ ३० ॥**
**दृष्ट्वान्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः ॥**
**कोकिलः स्वरवैकृत्यं क्रौञ्चस्तु मदमृच्छति ॥ ३१ ॥**
**हृष्येन्मयूर उद्विग्नः क्रोशतः शुकसारिके ॥**
**हंसः क्ष्वेडति चात्यर्थं भृङ्गराजस्तु कूजति ॥ ३२ ॥**
**पृषतो विसृजत्यश्रुं विष्ठां मुञ्चति मर्कटः ॥**
**सन्निकृष्टांस्ततः कुर्याद्राजस्तान् मृगपक्षिणः ॥ ३३ ॥**
**वेश्मनोऽथ विभूषार्थं रक्षार्थं चात्मनः सदा ॥**

न्यस्तविषलिङ्गमुद्दिशन्नाह[१]—नृपभक्तादित्यादि । नृपभक्तात् राजभोजनात् । हुतभुगित्यादि । हुतभुक् वह्निः, तेन सविषेणान्नेन चटचटायत इति शब्देन विषज्ञानं, मयूरकण्ठप्रतिम इति रूपेण विषज्ञानं; तीक्ष्णधूमश्चेति गन्धेन विषज्ञानं; रसेन

१ 'रसरूपादिभिस्तल्लिङ्गमुद्दिशन्नाह' इति पाठान्तरम् ।

## सप्तविंशतितमोऽध्यायः ।

**अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

शालाक्यतन्त्रानन्तरं कौमारतन्त्रं प्रारभ्यते—अथात इत्यादि । नवग्रहाणामिति बालशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः । तत्र ग्रहा बालानां नव, अष्टौ पुनरबालानां भूतविद्यायां निर्देष्टव्याः । आकृतिराकारः । लिङ्गं कार्यभूतं, नतु स्वभावाख्यम् ॥ १ ॥ २ ॥

**बालग्रहाणां विज्ञानं साधनं चाप्यनन्तरम् ॥**
**उत्पत्तिं कारणं चैव सुश्रुतैकमनाः शृणु ॥ ३ ॥**

तत्र प्रथमं कुमारतन्त्रस्यार्थपिण्डमुद्दिशन्नाह—बालग्रहाणामित्यादि । विज्ञानं विशिष्टज्ञानं, साधनं चिकित्सितं, उत्पत्तिः प्रभवः, कारणं हेतुः ॥ ३ ॥

**स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च ॥**
**शकुनी रेवती चैव पूतना चान्धपूतना ॥ ४ ॥**
**पूतना शीतनामा च तथैव मुखमण्डिका ।**
**नवमो नैगमेषश्च यः पितृग्रहसंज्ञितः ॥ ५ ॥**

इदानीं तेषां नवग्रहाणां नामान्याह—स्कन्दग्रह इत्यादि । प्रथमः प्रधानं आदिर्वा, नवमो नैगमेष इति संख्यानिर्देशादेव संख्यायां लब्धायां भूयो नवम इति संख्याकरणं काश्यपादितन्त्रान्तरोक्ताधिकसंख्यानिराकरणार्थं, पितृग्रहसंज्ञित इति बालस्यान्यग्रहेभ्यो रक्षकत्वात्पितेति ग्रहस्यैव संज्ञा संजाता यस्य स तथा, नतु भूतविद्यावत् पितृलोकाभिहितग्रह इति ॥ ४ ॥ ५ ॥

**धात्रीमात्रोः प्राक्प्रदिष्टापचारात्**
**शौचभ्रष्टान्मङ्गलाचारहीनान् ॥**
**त्रस्तान् हृष्टांस्तर्जितान् क्रन्दितान् वा**
**पूजाहेतोर्हिंस्युरेते कुमारान् ॥ ६ ॥**

कस्माद्ग्रहा बालान् विशन्तीत्याह—धात्रीत्यादि । धात्री स्तनपायिनी, माता प्रसवित्री । प्राक् प्रदिष्टापचारादिति प्राक् शारीरस्थाने प्रदिष्टोऽपचारो क्रियाविधिः, मांससुरादीनां उन्मार्गादाचरणं वा । शौचं मूत्रपुरीषादिप्रक्षालनं, मङ्गलं स्वस्तिकस्रग्दामदूर्वासर्षपादिस्पर्शनं, आचारः पापविरोधी, त्रस्तान् उद्विग्नान्, तर्जितान् केनचिद्विभीषितान् । कथं पूजा जायते ? कुसुमादिना भोजनादिना वा । अतो हेतोः, धात्रीमात्रोरपचारात् । पूजा चात्रोपलक्षणं; तेन बलिहेतोरपि हिंस्यति । ननु, धात्रीमात्रोरपचाराद्बालानामनपराधित्वात् कथं ग्रहहिंसनं ? अत्रोच्यते—धात्रीमातरौ बालानां प्राक्तनकर्मयोगादनाचारं कुरुतः । कुमारानित्युपलक्षणं; तेन कुमारिका अपि हिंस्युः । एते ग्रहा इत्यर्थः ॥ ६ ॥

**ऐश्वर्यस्थास्ते न शक्या विशन्तो**
**देहं द्रष्टुं मानुषैर्विश्वरूपाः ॥**
**आप्तं वाक्यं तत्समीक्ष्याभिधास्ये**
**लिङ्गान्येषां यानि देहे भवन्ति ॥ ७ ॥**

कस्मात्ते ग्रहा देहं विशन्तो नोपलभ्यन्ते इत्याह—ऐश्वर्येत्यादि । एषां ग्रहाणां यानि लिङ्गानि भवन्ति तानि आप्तं वाक्यं समीक्ष्याभिधास्ये कथयिष्ये इति पिण्डार्थः । आप्तं वाक्यमाप्तैरुक्तं वाक्यम् । आप्ताश्च यथार्थवादिनः ॥ ७ ॥

**शूनाक्षः क्षतजसगन्धिकः स्तनद्विट्**
**वक्रास्यो हतचलितैकपक्ष्मनेत्रः ॥**
**उद्विग्नः सुललितचक्षुरल्परोदी**
**स्कन्दार्तो भवति च गाढमुष्टिवर्चाः ॥ ८ ॥**

स्कन्दग्रहार्तलक्षणमाह—शूनाक्ष इत्यादि । क्षतजसगन्धिकः रुधिरसमानगन्धिकः, विस्रगन्ध इत्यर्थः; अन्ये तु क्षतजं रक्तं तेन सगन्धिकः ईषद्रुधिरगन्धिक इत्यर्थः । स्तनद्विट् स्तनद्वेषी, वक्रास्यः वक्रमुखः, हतचलितैकपक्ष्मनेत्र इति हतं च चलितं चैकपक्ष्म नेत्रे यस्य स तथा । उद्विग्नः उद्विग्नचित्तः, सुललितचक्षुः किंचिन्मिलितलोचनः । स्कन्दार्त इति स्कन्दविनोदनार्थं रुद्रेण सृष्टो ग्रहस्तेनार्तः, स्कन्दोऽत्र न पुनर्भगवान् कार्तिकेयः । गाढे मुष्टिवर्चसी यस्य स तथा । गयदासस्तु 'स्तब्धाङ्गः क्षतजसगन्धिकः स्तनद्विट् वक्रास्यो हतचलितैकपक्ष्मनेत्रः' इति पठित्वा स्तब्धमङ्गं यस्य स तथा, हतानि चलितानि च एकपक्ष्मनेत्राणि यस्य स तथा इति व्याख्यानयति ॥ ८ ॥

**निःसंज्ञो भवति पुनर्भवेत्ससंज्ञः**
**संरब्धः करचरणैश्च नृत्यतीव ॥**
**विण्मूत्रे सृजति विनद्य जृम्भमाणः**
**फेनं प्रसृजति तत्सखाभिपन्नः ॥ ९ ॥**

स्कन्दापस्मारार्तलक्षणमाह—निःसंज्ञ इत्यादि । संरब्धः सम्यक् कम्पितः, करचरणाभ्यां हस्तपादाभ्यां, नृत्यतीव नर्तनमिव करोति, विनद्य शब्दं कृत्वा; क्वचित् 'विनम्य' इति पाठः, तत्र गात्रविनमनं कृत्वा विण्मूत्रे मुञ्चतीति व्याख्यानम् । तत्सखाभिपन्नः तच्छब्देन स्कन्दः कथ्यते, तस्य सखा स्कन्दापस्मारः, तेन आक्रान्तः ॥ ९ ॥

**स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः**
**संस्राविव्रणपरिपीडितः समन्तात् ॥**
**स्फोटैश्च प्रतततनुः सदाहपाकै-**
**र्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥ १० ॥**

शकुनिग्रहार्तलक्षणमाह—स्रस्ताङ्ग इत्यादि । स्रस्ताङ्गः शिथिलाङ्गः, भयचकितः भीतः, विहङ्गा अत्र मांसादजलचराः । संस्राविव्रणपरिपीडितः पूयास्रावीव्रणपरिपीडितः । समन्तात् सर्वतः । अत्रोक्तव्रणस्फोटयोर्विदीर्णत्वेन क्षताभिभूतः ॥ १० ॥

**रक्तास्यो हरितमलोऽतिपाण्डुदेहः**
**श्यावो वा ज्वरमुखपाकवेदनार्तः ॥**
**रेवत्या व्यथिततनुश्च कर्णनासं**
**मृद्नाति ध्रुवमभिपीडितः कुमारः ॥ ११ ॥**

रेवतीग्रहार्तस्य लक्षणमाह—रूक्षास्य इत्यादि । हरितमलोऽत्र विष्ठा मूत्रं च, व्यथिततनुरिति सरुजशरीरः, अभिपीडितो रेवत्या इति संबन्धः ॥ ११ ॥

**स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ**
**विड् भिन्नं सृजति च काकतुल्यगन्धिः ॥**
**छर्द्यार्तो हृषिततनूरुहः कुमार-**
**स्तृष्णालुर्भवति च पूतनागृहीतः ॥ १२ ॥**

पूतनाग्रहार्तलक्षणमाह—स्रस्ताङ्ग इत्यादि । न दिवा सुखं स्वपिति न च रात्रौ सुखं स्वपिति, सृजति मुञ्चति, 'स्रस्ताङ्ग' इत्यत्र केचित् 'सुस्थो न' इति पठन्ति, स्रस्ताङ्ग इति स्रस्ताङ्गोऽपि न दिवा न रात्रौ स्वपितीति व्याख्यानयन्ति ॥ १२ ॥

**यो द्वेष्टि स्तनमतिसारकासहिक्का-**
**च्छर्दीभिर्ज्वरसहिताभिरर्द्यमानः ॥**
**दुर्वर्णः सततमधःशयोऽम्लगन्धि-**
**स्तं ब्रूयुर्भिषजोऽन्धपूतनार्तम् ॥ १३ ॥**

अन्धपूतनार्तलक्षणमाह—य इत्यादि । अधःशयोऽधोमुखशायी, अम्लगन्धिः काञ्जिकाद्यम्लद्रव्यगन्धिः ॥ १३ ॥

**उद्विग्नो भृशमतिवेपते प्ररुद्यात्**
**संलीनः स्वपिति च यस्य चान्त्रकूजः ॥**
**विस्राङ्गो भृशमतिसार्यते च यस्तं**
**जानीयाद्भिषगिह शीतपूतनार्तम् ॥ १४ ॥**

शीतपूतनार्तलक्षणमाह—उद्विग्न इत्यादि । संलीनः सम्यग्लीनः, विस्राङ्गो विस्रगन्धाङ्गः, 'भृशमतिसार्यते' इत्यत्र केचित् 'ह्याक्रन्दत्यतिचकितः' इति पठन्ति ॥ १४ ॥

**म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो**
**बह्वाशी कलुषसिरावृतोदरो यः ॥**
**सोद्वेगो भवति च मूत्रतुल्यगन्धिः**
**स ज्ञेयः शिशुरथ वक्त्रमण्डिकार्तः ॥ १५ ॥**

मुखमण्डिकाग्रहार्तलक्षणमाह म्लानाङ्ग—इत्यादि । म्लानाङ्गो दुर्बलमध्यशरीरः । सुरुचिरपाणिपादवक्त्रः सुष्ठु रुचिरं शोभनं हस्तपादवक्त्रं यस्य सः ॥ १५ ॥

**यः फेनं वमति विनम्यते च मध्ये**
**सोद्वेगं विलपति चोर्ध्वमीक्षमाणः ॥**
**जीर्येत प्रततमथो वसास्रगन्धि-**
**र्निःसंज्ञो भवति हि नैगमेषजुष्टः ॥ १६ ॥**

नैगमेषग्रहार्तलक्षणमाह—य इत्यादि । मध्ये मध्यभागे, सोद्वेगं सत्रासं, विलपति अतिशयेन शब्दं करोति, ऊर्ध्वमीक्षमाणः ऊर्ध्वं पश्यन् । 'विलपति' इत्यत्र केचित् 'विहसति'ति पठन्ति । प्रततं सततम् । वसास्रगन्धिः वसातुल्यगन्धिः । निःसंज्ञः निर्गतसम्यग्ज्ञानः ॥ १६ ॥

**प्रस्तब्धो यः स्तनद्वेषी मुह्यते चाविशन्मुहुः ॥**
**तं बालं न चिराद्धन्ति ग्रहः संपूर्णलक्षणः ॥ १७ ॥**

सांप्रतमसाध्यग्रहार्तलक्षणमाह—प्रस्तब्ध इत्यादि । प्रस्तब्धोऽत्यर्थं स्तब्धाङ्गः, मुह्यते मोहं याति, आविशन् आवेशं कुर्वन्, मुहुर्वारंवारम् ॥ १७ ॥

**विपरीतमतः साध्यं चिकित्सेदचिरार्दितम् ।**

साध्यग्रहार्तलक्षणमाह—विपरीतमिति । विपरीतं स्रस्ताङ्गस्तनद्वेषादिलक्षणैरनुपद्रुतं, अचिरार्दितं अल्पकालपीडितम् ।—

**गृहे पुराणहविषाऽभ्यज्य बालं शुचौ शुचिः ॥ १८ ॥**
**सर्षपान् प्रकिरेत्तेषां तैलैर्दीपं च कारयेत् ॥**
**सदा सन्निहितं चापि जुहुयाद्धव्यवाहनम् ॥ १९ ॥**
**सर्वगन्धौषधीबीजैर्गन्धमाल्यैरलङ्कृतम् ॥**
**अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति संस्मरन् ॥ २० ॥**

साध्यस्य चिकित्सामाह—गृहे इत्यादि । पुराणहविषा जीर्णघृतेन, अभ्यज्य बालमिति शेषः । शुचौ पवित्रदेशे, शुचिर्भिषगिति शेषः, तेषां तैलैः सर्षपाणां तैलैः, दीपं कारयेत् दीपं प्रज्वालयेदित्यर्थः । सदेत्यादि जुहुयात् होमं कुर्यादित्यर्थः, हव्यवाहनमग्निं, कैर्जुहुयात्? सर्वगन्धौषधीबीजैरिति सर्वगन्धा एलादिपरिपठिताः, ओषधीबीजानि यवधान्यतिलादीनि, तैर्जुहुयात् । गन्धमाल्यैरलङ्कृतमग्निं बालं वा, सततं वारंवारं न सकृत् । अयं विधिः सर्वग्रहाणां सामान्यः । अग्नय इत्यादि । अग्निं हुत्वा मध्याह्ने बलिं दद्यात् ॥ १८—२० ॥

**नमः स्कन्दाय देवाय ग्रहाधिपतये नमः ॥**
**शिरसा त्वाऽभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम् ॥ २१ ॥**
**नीरुजो निर्विकारश्च शिशुर्मे जायतां ध्रुवम् ॥ २२ ॥**

तत्र यन्मन्त्रमुच्चरेत्तमाह—नमः स्कन्दाय देवाय ग्रहाधिपतये नम इत्यादि ॥ २१—२२ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे नवग्रहाकृतिविज्ञानीयः सप्तविंशतितमोऽध्यायः समाप्तः ।

## अष्टाविंशतितमोऽध्यायः ।

**अथातः स्कन्दग्रहप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

नवग्रहाकृतिविज्ञानीयानन्तरं विज्ञातनवग्रहाकृतेश्चिकित्सितमुचितं; तत्रापि स्कन्दग्रहस्य प्रथमत्वात् तत्प्रतिषेधाध्याय आरभ्यते—अथात इत्यादि ॥ १ ॥ २ ॥

**स्कन्दग्रहोपसृष्टानां कुमाराणां च शस्यते ॥**
**वातघ्नद्रुमपत्राणां निष्क्वाथः परिषेचने ॥ ३ ॥**

स्कन्देत्यादि । उपसृष्टानां गृहीतानाम् । द्रुमग्रहणं विटपनिषेधार्थम् । स्कन्दग्रहप्रभावेण तेनाविष्टे वायुः कुप्यतीति

वातहरैः सेकादयः कार्याः । अत्र वातघ्नद्रुमा स्वभावेन ग्रहावेशमपि निवर्तयन्ति, अचिन्त्यशक्तित्वात् ॥ ३ ॥

**तेषां मूलेषु सिद्धं च तैलमभ्यञ्जने हितम् ॥**
**सर्वगन्धसुरामण्डकैटर्यावापमिष्यते ॥ ४ ॥**

तेषामित्यादि । तेषां वातघ्नद्रुमाणां बिल्वादीनाम् । सर्वगन्धा एलादिपठिताः, सुरामण्डः सुराया उपर्यच्छो भागः, कैडर्यो महानिम्बः । एतेन बिल्वादिमूलक्काथेन एलादीनां कल्केन सिद्धं तैलमभ्यञ्जने हितमिष्यत इति सिद्धम् ॥ ४ ॥

**देवदारुणि रास्नायां मधुरेषु द्रुमेषु च ॥**
**सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रयोजयेत् ॥ ५ ॥**
**सर्षपाः सर्पनिर्मोको वचा काकादनी घृतम् ॥**
**उष्ट्राजाविगवां चैव रोमाण्युद्धूपनं शिशोः ॥ ६ ॥**

देवदार्वित्यादि । मधुरद्रुमा मधुरवृक्षाः, मधुकराजादनादयः । पानमन्नादस्य बालस्य ॥ ५ ॥ ६ ॥

**सोमवल्लीमिन्द्रवल्लीं शमीं बिल्वस्य कण्टकान् ॥**
**मृगादन्याश्च मूलानि ग्रथितान्येव धारयेत् ॥ ७ ॥**

सोमवल्लीत्यादि । सोमवल्ली गुडूची, इन्द्रवल्ली मत्स्याक्षकः गण्डदूर्मेति लोके, मृगादनी इन्द्रवारुणी ॥ ७ ॥

**रक्तानि माल्यानि तथा पाताका**
**रक्ताश्च गन्धा विविधाश्च भक्ष्याः ॥**
**घण्टा च देवाय बलिर्निवेद्यः**
**सकुक्कुटः स्कन्दग्रहे हिताय ॥ ८ ॥**

बलिं निर्दिशन्नाह—रक्तानीत्यादि । तथा पताका रक्ता इत्यर्थः, रक्ताश्च गन्धाः कुङ्कुमादिकाः, भक्ष्याः स्वस्तिकमोदकादयः, देवाय स्कन्दनाम्ने, स्कन्दग्रहे वक्ष्यमाणे चत्वराख्ये । हिताय हितार्थं बालकस्य । बलिश्च शुचिना वैद्येन कृतस्नानेन शस्त्रहस्तेन रात्रौ दातव्यः ॥ ८ ॥

**स्नानं त्रिरात्रं निशि चत्वरेषु**
**कुर्यात् पुनः शालियवैर्नवैस्तु ॥**
**अद्भिश्च गायत्र्यभिमन्त्रिताभिः**
**प्रज्वालनं चाहुतिभिश्च वह्नेः ॥ ९ ॥**

स्नानमित्यादि । चत्वरेषु चतुष्पथेषु, अद्भिश्च गायत्र्यभिमन्त्रिताभिः स्नानमिति संबन्धनीयम् । आहुतिभिस्त्रिस्त्रभिः सप्तभिर्दशभिर्वा स्वाहान्ताभिः । स्कन्दगृहे चत्वराख्ये शालियवैर्विरचितमण्डलाभ्यन्तरस्थले । त्रिरात्रं रात्रौ बलिस्नानहोमाः कार्याः ॥ ९ ॥

**रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम् ॥**
**अहन्यहनि कर्तव्या या भिषग्भिरतन्द्रितैः ॥ १० ॥**
**तपसां तेजसां चैव यशसां वपुषां तथा ॥**
**निधनं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥ ११ ॥**
**ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः ॥**
**देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥ १२ ॥**
**देवदेवस्य महतः पावकस्य च यः सुतः ॥**
**गङ्गोमाकृत्तिकानां च स ते शर्म प्रयच्छतु ॥ १३ ॥**
**रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः ॥**
**रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः ॥ १४ ॥**

रक्षामित्यादि । रक्षा स्वस्त्ययनम् । मन्त्राणामचिन्त्यशक्तित्वात् मन्त्रमयी रक्षा पापनाशिनी । तपसामित्यादि । निधनं स्थानमित्यनेन कालरूपत्वमुक्तम्[1] । अव्ययो नित्यः, ग्रहाः स्कन्दग्रहादिकाः तेषां सेना तस्याः पतिः, देवसेनापतिः । देवदेवस्य रुद्रस्य, उमा पार्वती, कृत्तिकाः षट्संख्योपेता सप्तर्षिभार्याः, शर्म सुखं, क्रौञ्चनामा पर्वतः तमपि सूदयति निहन्तीति क्रौञ्चसूदनः ॥ १०—१४ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे स्कन्दग्रहप्रतिषेधाध्यायोऽष्टाविंशतितमः समाप्तः ।

---

## एकोनत्रिंशत्तमोऽध्यायः ।

**अथातः स्कन्दापस्मारप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**
**बिल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः ॥**
**परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ॥ ३ ॥**

स्कन्दप्रतिषेधानन्तरं प्रत्यासत्त्या स्कन्दापस्मारप्रतिषेधारम्भो युज्यत इत्याह—बिल्व इत्यादि । गोलोमी दूर्वा ॥ १–३ ॥

**सर्वगन्धविपक्वं तु तैलमभ्यञ्जने हितम् ॥**
**क्षीरवृक्षकषाये च काकोल्यादौ गणे तथा ॥ ४ ॥**
**विपक्तव्यं घृतं वापि पानीयं पयसान्वितम् ॥**
**उत्सादनं वचाहिङ्गुयुक्तं स्कन्दग्रहे हितम् ॥ ५ ॥**
**गृध्रोलूकपुरीषाणि केशा हस्तिनखा घृतम् ॥**
**वृषभस्य च रोमाणि योज्यान्युद्धूपनेऽपि च ॥ ६ ॥**

सर्वेत्यादि । सर्वगन्धा एलादिकाः, यथालाभमेलादिकल्केन बिल्वशिरीषादीनां क्वाथेन तैलं पक्तव्यम् । अन्ये तु गन्धमूत्रविपक्वमिति पठन्ति, गन्धाः सर्वगन्धाः पूर्वोक्ताः, मूत्रं गोमूत्रम् । क्षीरेत्यादि । क्षीरवृक्षकषाये इति क्षीरवृक्षकषायचतुर्गुणे, पयसा दुग्धेन चतुर्गुणेन, काकोल्यादौ गणे कल्कीकृते स्नेहचतुर्थांशे घृतं विपक्तव्यम् । तद्धृतं किं कार्यमित्याह,—पानीयं पातव्यं, अन्नादेनेति शेषः । अन्ये तु पानीयं चतुर्गुणं दत्त्वा घृतं पक्तव्यमिति मन्यन्ते, शेषं पूर्ववत् । उत्सादनमित्यादि । उत्सादनमुद्वर्तनम् । स्कन्दग्रहे इत्यत्र चकारो लुप्तो द्रष्टव्यस्तेन स्कन्दग्रहे स्कन्दापस्मारे च । एतदु-

[1] 'कामरूपित्वमुक्तं' इति पाठान्तरम् ।

रेवतीग्रहार्तस्य लक्षणमाह—रक्तास्य इत्यादि । हरितमलोऽत्र विष्ठा मूत्रं च, व्यथिततनुरिति सरुजशरीरः, अभिपीडितो रेवत्या इति संबन्धः ॥ ११ ॥

**स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ**
**विड् भिन्नं सृजति च काकतुल्यगन्धिः ॥**
**छर्द्यार्तो हृषिततनूरुहः कुमार-**
**स्तृष्णालुर्भवति च पूतनागृहीतः ॥ १२ ॥**

पूतनाग्रहार्तलक्षणमाह—स्रस्ताङ्ग इत्यादि । न दिवा सुखं स्वपिति न च रात्रौ सुखं स्वपिति, सृजति मुञ्चति, 'स्रस्ताङ्ग' इत्यत्र केचित् 'सुस्थो न' इति पठन्ति, स्रस्ताङ्ग इति स्रस्ताङ्गोऽपि न दिवा न रात्रौ स्वपितीति व्याख्यानयन्ति ॥ १२ ॥

**यो द्वेष्टि स्तनमतिसारकासहिक्का-**
**च्छर्दीभिर्ज्वरसहिताभिरर्घमानः ॥**
**दुर्वर्णः सततमधःशयोऽम्लगन्धि-**
**स्तं ब्रूयुर्भिषजोऽन्धपूतनार्तम् ॥ १३ ॥**

अन्धपूतनार्तलक्षणमाह—य इत्यादि । अधःशयोऽधोमुखशायी, अम्लगन्धिः काञ्जिकाद्यम्लद्रव्यगन्धिः ॥ १३ ॥

**उद्विग्नो भृशमतिवेपते प्ररुद्यात्**
**संलीनः स्वपिति च यस्य चान्त्रकूजः ॥**
**विस्राङ्गो भृशमतिसार्यते च यस्तं**
**जानीयाद्भिषगिह शीतपूतनार्तम् ॥ १४ ॥**

शीतपूतनार्तलक्षणमाह—उद्विग्न इत्यादि । संलीनः सम्यग्लीनः, विस्राङ्गो विस्रगन्धाङ्गः, 'भृशमतिसार्यते' इत्यत्र केचित् 'ह्याक्रन्दत्यतिचकितः' इति पठन्ति ॥ १४ ॥

**म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो**
**बह्वाशी कलुषसिरावृतोदरो यः ॥**
**सोद्वेगो भवति च मूत्रतुल्यगन्धिः**
**स ज्ञेयः शिशुरथ वक्त्रमण्डिकार्तः ॥ १५ ॥**

मुखमण्डिकाग्रहार्तलक्षणमाह म्लानाङ्ग—इत्यादि । म्लानाङ्गो दुर्बलमध्यशरीरः । सुरुचिरपाणिपादवक्त्रः सुष्ठु रुचिरं शोभनं हस्तपादवक्त्रं यस्य सः ॥ १५ ॥

**यः फेनं वमति विनम्यते च मध्ये**
**सोद्वेगं विलपति चोर्ध्वमीक्षमाणः ॥**
**जीर्येत प्रततमथो वसास्रगन्धि-**
**र्निःसंज्ञो भवति हि नैगमेषजुष्टः ॥ १६ ॥**

नैगमेषग्रहार्तलक्षणमाह—य इत्यादि । मध्ये मध्यभागे, सोद्वेगं सत्रासं, विलपति अतिशयेन शब्दं करोति, ऊर्ध्वमीक्षमाणः ऊर्ध्वं पश्यन् । 'विलपति'इत्यत्र केचित्'विहसति'ति पठन्ति । प्रततं सततम् । वसास्रगन्धिः वसातुल्यगन्धिः । निःसंज्ञः निर्गतसम्यग्ज्ञानः ॥ १६ ॥

**प्रस्तब्धो यः स्तनद्वेषी मुह्यते चाविशन्मुहुः ॥**
**तं बालं न चिराद्धन्ति ग्रहः संपूर्णलक्षणः ॥ १७ ॥**

सांप्रतमसाध्यग्रहार्तलक्षणमाह—प्रस्तब्ध इत्यादि । प्रस्तब्धोऽत्यर्थं स्तब्धाङ्गः, मुह्यते मोहं याति, आविशन् आवेशं कुर्वन्, मुहुर्वारंवारम् ॥ १७ ॥

**विपरीतमतः साध्यं चिकित्सेदचिरार्दितम् ।**

साध्यग्रहार्तलक्षणमाह—विपरीतमिति । विपरीतं स्रस्ताङ्गस्तनद्वेषादिलक्षणैरनुपद्रुतं, अचिरार्दितं अल्पकालपीडितम् ।—

**गृहे पुराणहविषाऽभ्यज्य बालं शुचौ शुचिः ॥ १८ ॥**
**सर्षपान् प्रकिरेत्तेषां तैलैर्दीपं च कारयेत् ॥**
**सदा सन्निहितं चापि जुहुयाद्धव्यवाहनम् ॥ १९ ॥**
**सर्वगन्धौषधीबीजैर्गन्धमाल्यैरलङ्कृतम् ॥**
**अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति संस्मरन् ॥ २० ॥**

साध्यस्य चिकित्सामाह—गृहे इत्यादि । पुराणहविषा जीर्णघृतेन, अभ्यज्य बालमिति शेषः । शुचौ पवित्रदेशे, शुचिर्भिषगिति शेषः, तेषां तैलैः सर्षपाणां तैलैः, दीपं कारयेत् दीपं प्रज्वालयेदित्यर्थः । सदेत्यादि जुहुयात् होमं कुर्यादित्यर्थः, हव्यवाहनमग्निं, कैर्जुहुयात्? सर्वगन्धौषधीबीजैरिति सर्वगन्धा एलादिपरिपठिताः, ओषधीबीजानि यवधान्यतिलादीनि, तैर्जुहुयात् । गन्धमाल्यैरलङ्कृतमग्निं बालं वा, सततं वारंवारं न सकृत् । अयं विधिः सर्वग्रहाणां सामान्यः । अग्नय इत्यादि । अग्निं हुत्वा मध्याह्ने बलिं दद्यात् ॥ १८—२० ॥

**नमः स्कन्दाय देवाय ग्रहाधिपतये नमः ॥**
**शिरसा त्वाऽभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम् ॥ २१ ॥**
**नीरुजो निर्विकारश्च शिशुर्मे जायतां ध्रुवम् ॥ २२ ॥**

तत्र यन्मन्त्रमुच्चरेत्तमाह—नमः स्कन्दाय देवाय ग्रहाधिपतये नम इत्यादि ॥ २१—२२ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे नवग्रहाकृतिविज्ञानीयः सप्तविंशतितमोऽध्यायः समाप्तः ।

## अष्टाविंशतितमोऽध्यायः ।

**अथातः स्कन्दग्रहप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

नवग्रहाकृतिविज्ञानीयानन्तरं विज्ञातनवग्रहाकृतेश्चिकित्सितमुचितं; तत्रापि स्कन्दग्रहस्य प्रथमत्वात् तत्प्रतिषेधाध्याय आरभ्यते— अथात इत्यादि ॥ १ ॥ २ ॥

**स्कन्दग्रहोपसृष्टानां कुमाराणां च शस्यते ॥**
**वातघ्नद्रुमपत्राणां निष्क्वाथः परिषेचने ॥ ३ ॥**

स्कन्देत्यादि । उपसृष्टानां गृहीतानाम् । द्रुमग्रहणं विटपनिषेधार्थम् । स्कन्दग्रहप्रभावेण तेनाविष्टे वायुः कुप्यतीति

वातहरैः सेकादयः कार्याः। अत्र वातघ्नद्रुमा स्वभावेन ग्रहावेशमपि निवर्तयन्ति, अचिन्त्यशक्तित्वात् ॥ ३ ॥

**तेषां मूलेषु सिद्धं च तैलमभ्यञ्जने हितम् ॥**
**सर्वगन्धसुरामण्डकैटर्यावापमिष्यते ॥ ४ ॥**

तेषामित्यादि। तेषां वातघ्नद्रुमाणां बिल्वादीनाम्। सर्वगन्धा एलादिपठिताः, सुरामण्डः सुराया उपर्यच्छो भागः, कैडर्यो महानिम्बः। एतेन बिल्वादिमूलक्काथेन एलादीनां कल्केन सिद्धं तैलमभ्यञ्जने हितमिष्यत इति सिद्धम् ॥ ४ ॥

**देवदारुणि रास्नायां मधुरेषु द्रुमेषु च ॥**
**सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रयोजयेत् ॥ ५ ॥**
**सर्षपाः सर्पनिर्मोको वचा काकादनी घृतम् ॥**
**उष्ट्राजाविगवां चैव रोमाण्युद्धूपनं शिशोः ॥ ६ ॥**

देवदार्वित्यादि। मधुरद्रुमा मधुरवृक्षाः, मधुकराजादनादयः। पानमन्नादस्य बालस्य ॥ ५ ॥ ६ ॥

**सोमवल्लीमिन्द्रवल्लीं शमीं बिल्वस्य कण्टकान् ॥**
**मृगादन्याश्च मूलानि ग्रथितान्येव धारयेत् ॥ ७ ॥**

सोमवल्लीत्यादि। सोमवल्ली गुडूची, इन्द्रवल्ली मत्स्याक्षकः गण्डद्रुमेति लोके, मृगादनी इन्द्रवारुणी ॥ ७ ॥

**रक्तानि माल्यानि तथा पाताका**
**रक्ताश्च गन्धा विविधाश्च भक्ष्याः ॥**
**घण्टा च देवाय बलिर्निवेद्यः**
**सकुक्कुटः स्कन्दग्रहे हिताय ॥ ८ ॥**

बलिं निर्दिशन्नाह—रक्तानीत्यादि[1]। तथा पताका रक्ता इत्यर्थः, रक्ताश्च गन्धाः कुङ्कुमादिकाः, भक्ष्याः स्वस्तिकमोदकादयः, देवाय स्कन्दनाम्ने, स्कन्दगृहे वक्ष्यमाणे चत्वराख्ये। हिताय हितार्थं बालकस्य। बलिश्च शुचिना वैद्येन कृतस्नानेन शस्त्रहस्तेन रात्रौ दातव्यः ॥ ८ ॥

**स्नानं त्रिरात्रं निशि चत्वरेषु**
**कुर्यात् पुनः शालियवैर्नवैस्तु ॥**
**अद्भिश्च गायत्र्यभिमन्त्रिताभिः**
**प्रज्वालनं चाहुतिभिश्च वह्नेः ॥ ९ ॥**

स्नानमित्यादि। चत्वरेषु चतुष्पथेषु, अद्भिश्च गायत्र्यभिमन्त्रिताभिः स्नानमिति संबन्धनीयम्। आहुतिभिस्तिसृभिः सप्तभिर्दशभिर्वा स्वाहान्ताभिः। स्कन्दगृहे चत्वराख्ये शालियवैर्विरचितमण्डलाभ्यन्तरस्थले। त्रिरात्रं रात्रौ बलिस्नानहोमाः कार्याः ॥ ९ ॥

**रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम् ॥**
**अहन्यहनि कर्तव्या या भिषग्भिरतन्द्रितैः ॥ १० ॥**
**तपसां तेजसां चैव यशसां वपुषां तथा ॥**
**निधनं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥ ११ ॥**
**ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः ॥**
**देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥ १२ ॥**
**देवदेवस्य महतः पावकस्य च यः सुतः ॥**
**गङ्गोमाकृत्तिकानां च स ते शर्म प्रयच्छतु ॥ १३ ॥**
**रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः ॥**
**रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः ॥ १४ ॥**

रक्षामित्यादि। रक्षा स्वस्त्ययनम्। मन्त्राणामचिन्त्यशक्तित्वात् मन्त्रमयी रक्षा पापनाशिनी। तपसामित्यादि। निधनं स्थानमित्यनेन कालरूपत्वमुक्तम्। अव्ययो नित्यः, ग्रहाः स्कन्दग्रहादिकाः तेषां सेना तस्याः पतिः, देवसेनापतिः। देवदेवस्य रुद्रस्य, उमा पार्वती, कृत्तिकाः षट्संख्योपेता सप्तर्षिभार्याः, शर्म सुखं, क्रौञ्चनामा पर्वतः तमपि सूदयति निहन्तीति क्रौञ्चसूदनः ॥ १०—१४ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे स्कन्दग्रहप्रतिषेधाध्यायोऽष्टाविंशतितमः समाप्तः।

## एकोनत्रिंशत्तमोऽध्यायः।

**अथातः स्कन्दापस्मारप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**
**बिल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः ॥**
**परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ॥ ३ ॥**

स्कन्दप्रतिषेधानन्तरं प्रत्यासत्त्या स्कन्दापस्मारप्रतिषेधारम्भो युज्यत इत्याह—बिल्व इत्यादि। गोलोमी दूर्वा ॥ १–३ ॥

**सर्वगन्धविपक्वं तु तैलमभ्यञ्जने हितम् ॥**
**क्षीरवृक्षकषाये च काकोल्यादौ गणे तथा ॥ ४ ॥**
**विपक्तव्यं घृतं वापि पानीयं पयसान्वितम् ॥**
**उत्सादनं वचाहिङ्गुयुक्तं स्कन्दग्रहे हितम् ॥ ५ ॥**
**गृध्रोलूकपुरीषाणि केशा हस्तिनखा घृतम् ॥**
**वृषभस्य च रोमाणि योज्यान्युद्धूपनेऽपि च ॥ ६ ॥**

सर्वेत्यादि। सर्वगन्धा एलादिकाः, यथालाभमेलादिकल्केन बिल्वशिरीषादीनां क्वाथेन तैलं पक्तव्यम्। अन्ये तु गन्धमूत्रविपक्वमिति पठन्ति, गन्धाः सर्वगन्धाः पूर्वोक्ताः, मूत्रं गोमूत्रम्। क्षीरेत्यादि। क्षीरवृक्षकषाये इति क्षीरवृक्षकषायचतुर्गुणे, पयसा दुग्धेन चतुर्गुणेन, काकोल्यादौ गणे कल्कीकृते स्नेहचतुर्थांशे घृतं विपक्तव्यम्। तद्घृतं किं कार्यमित्याह,—पानीयं पातव्यं, अन्नादेनेति शेषः। अन्ये तु पानीयं चतुर्गुणं दत्त्वा घृतं पक्तव्यमिति मन्यन्ते, शेषं पूर्ववत्। उत्सादनमित्यादि। उत्सादनमुद्वर्तनम्। स्कन्दग्रहे इत्यत्र चकारो लुप्तो द्रष्टव्यस्तेन स्कन्दग्रहे स्कन्दापस्मारे च। एतदु-

[1] 'कामरूपित्वमुक्तं' इति पाठान्तरम्।

द्रुतेन हितमित्यत्रान्ये ईरितमिति पठन्ति, तन्न, उत्सादनस्यानुक्तत्वात् ॥ ४—६ ॥

**अनन्तां कुक्कुटीं बिम्बीं मर्कटीं चापि धारयेत् ॥**
**पक्वापक्वानि मांसानि प्रसन्नं रुधिरं पयः ॥ ७ ॥**
**भूतोदनो निवेद्यश्च स्कन्दापस्मारिणोऽवटे ॥**
**चतुष्पथे च कर्तव्यं स्नानमस्य यतात्मना ॥ ८ ॥**

अनन्तेत्यादि। अनन्ता उत्पलसारिवा, कुक्कुटीः कुक्कुटीशरीरवत् कुसुमचित्रा वल्लीः स्फटिकरचितकुक्कुटाण्डतुल्यकन्दा, मर्कटी कपिकच्छुः। धारयेत् शरीरे इति बोद्धव्यम्। पक्वेत्यादि। प्रसन्ना सुरा, रुधिरं छागलस्य, पयो दुग्धं, भूतौदनः सोपहारो बलिः, उत्स्विन्ना माषविकृतिर्वलिरित्यन्ये। अवटे गर्ते। चतुष्पथे इत्यादि। अस्य बालकस्य यतात्मना उपवासादियुतेन, यतात्मनेत्यत्र केचिद्यथाविधीति पठन्ति; स्कन्दप्रतिषेधोक्तस्नानविधानेनेति च व्याख्यानयन्ति ॥ ७ ॥ ८ ॥

**स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा ॥**
**विशाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः ॥९॥**

रक्षामन्त्रमाह—स्कन्देत्यादि। स्कन्दस्य कार्तिकेयस्य, दयितः अभीष्टः, सखा मित्रं, विशाखसंज्ञ इति स्कन्दापस्मारस्य द्वितीयं नाम। शिशोर्बालकस्य, शिवोऽस्तु कल्याणकृद्भवतु, विकृताननो विकृतमुखः, विशाखसंज्ञस्येति केचित् पठन्ति, तत्र स्कन्दस्य विशेषणम् ॥ ९ ॥

इति श्रीडल्हणविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे स्कन्दापस्मारप्रतिषेधाध्याय एकोनत्रिंशत्तमः समाप्तः।

## त्रिंशत्तमोऽध्यायः।

**अथातः शकुनीप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥२॥**
**शकुन्यभिपरीतस्य कार्यो वैद्येन जानता ॥**
**वेतसाम्रकपित्थानां निष्काथः परिषेचने ॥ ३ ॥**

शकुनीत्यादि। अभिपरीतस्य बालस्येति शेषः, जानता बुद्धिमता, निष्काथः परिषेचने कार्य इति संबन्धः ॥ १—३॥

**कषायमधुरैस्तैलं कार्यमभ्यञ्जने शिशोः ॥**
**मधुकोशीरह्रीबेरसारिवोत्पलपद्मकैः ॥ ४ ॥**
**रोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम् ॥**
**व्रणेषूक्तानि चूर्णानि पथ्यानि विविधानि च ॥ ५॥**
**स्कन्दग्रहे धूपनानि तानीहापि प्रयोजयेत् ॥**

कषायेत्यादि। कषाया वटादयः, मधुराणि काकोल्यादीनि; तत्र वटादीनां कषायः, काकोल्यादीनां च कल्कः, ताभ्यां तैलं साध्यं; प्रत्येकं वटादीनां काकोल्यादीनां च कल्ककषायौ कल्पनीयावित्यन्ये। मधुकेत्यादि। उत्पलं नीलोत्पलं, प्रदिहेत् लिम्पेत्। व्रणेष्वित्यादि। उक्तानि चूर्णानि द्विव्रणीयाध्याये कीर्तितानि मिश्रकोक्तानि च शोधनरोपणानि, पथ्यानि व्रणितोपासनीयोक्तानि शालिमुद्गदाडिमसैन्धवयवपटोलादीनि अन्ये तु पथ्यानीति चूर्णानीत्यस्य विशेषणं कुर्वन्ति, तत्र शकुनीजुष्टबालकव्रणानां सदाहपाकस्रावहराणि रक्तस्रावहराणि च चूर्णानि प्रयोक्तव्यानीति संबन्धनीयम्। स्कन्देत्यादि। धूपनानि सर्षपा इत्यादीनि स्कन्दग्रहोक्तानि, तानीहापि शकुन्यामपि प्रयोजयेत् ॥ ४ ॥ ५ ॥—

**शतावरीमृगैर्वारुनागदन्तीनिदिग्धिकाः ॥ ६ ॥**
**लक्ष्मणां सहदेवां च बृहतीं चापि धारयेत् ॥**

शतावरीत्यादि। मृगैर्वारुरिन्द्रवारुणी, नागदन्ती दन्तिनी, सहदेवा पीतपुष्पा बला, बृहती स्थूलफला ॥ ६ ॥—

**तिलतण्डुलकं माल्यं हरितालं मनःशिला ॥ ७ ॥**
**बलिरेष करञ्जेषु निवेद्यो नियतात्मना ॥**

तिलेत्यादि। एष तिलतण्डुलमित्यादिको बलिः, करञ्जेषु नक्तमालेषु, नियतात्मना संयतेन्द्रियेण, करञ्जेष्वित्यत्रान्ये निकुञ्जेष्विति पठन्ति; निकुञ्जेषु वनेषु ॥ ७ ॥—

**निकुञ्जे च प्रयोक्तव्यं स्नानमस्य यथाविधि ॥ ८ ॥**

निकुञ्ज इत्यादि। निकुञ्जे गृहोपवने, अन्ये निकुञ्जं वनमाहुः। यथाविधीति स्कन्दग्रहोक्तविधिः; तेन शालियवरचितमण्डले गायत्र्यभिमन्त्रितेन जलेन स्नानमिति लभ्यते ॥८॥

**स्कन्दग्रहोपशमनं घृतं तच्चेह पूजितम् ॥**

स्कन्देत्यादि। घृतं तत् देवदारुणि रास्नायामित्यादिकं, चकारोऽत्र सोमवल्ल्यादीनामपि धारणं समुच्चिनेति

**कुर्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः ॥९॥**
**अन्तरीक्षचरा देवी सर्वालङ्कारभूषिता ॥**
**अधोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु ॥ १० ॥**
**दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा ॥**
**लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु ॥ ११ ॥**

कुर्यादित्यादि। कुसुमैः शुभैरिति जातीपुष्पनीलोत्पलादिभिः ॥ ९—११ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे शकुनीप्रतिषेधाध्यायस्त्रिंशत्तमः समाप्तः ॥

## एकत्रिंशत्तमोऽध्यायः।

**अथातो रेवतीप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**
**अश्वगन्धा च शृङ्गी च सारिवा सपुनर्नवा ॥**
**सहे विदारी च तथा कषायाः सेचने हिताः ॥ ३ ॥**

अश्वगन्धेत्यादि । अजशृङ्गी कर्कटशृङ्गी, उत्तमारणीत्यन्ये । सहे मुद्गमाषपर्ण्यौ, सेचने हिताः प्रत्येकं समुदिताश्च ॥ १-३॥

**तैलमभ्यञ्जने कार्यं कुष्ठे सर्जरसेऽपि वा ॥**
**पलङ्कषायां नलदे तथा गिरिकदम्बके ॥ ४ ॥**

तैलमित्यादि । सर्जरसः सालनिर्यासः, सर्जरसो राला, नलदं जटामांसी, गिरिकदम्बः स्वनामख्यातः, एतैः कल्कीकृतैः तैलं कार्यम् ॥ ४ ॥

**धवाश्वकर्णककुभधातकीतिन्दुकीषु च ॥**
**काकोल्यादिगणे चैव पानीयं सर्पिरिष्यते ॥ ५ ॥**

धवेत्यादि । अश्वकर्णो गर्दभाण्डः, ककुभोऽर्जुनः, तत्र धवाश्वादिकषाये काकोल्यादिकल्के च सर्पिः पक्तव्यं; पानीयं पातव्यं घृतमिष्यते । अन्ये तु काकोल्यादिगणेनैव पानीयं घृतमिच्छन्ति, धवाश्वकर्णादीनि संक्षुद्य तैले संयच्छन्ति ॥ ५ ॥

**कुलत्थाः शङ्खचूर्णं च प्रदेहाः सार्वगन्धिकाः ॥**
**गृध्रोलूकपुरीषाणि तथा यवफलो घृतम् ॥ ६ ॥**
**सन्ध्ययोरुभयोः कार्यमेतदुद्धूपनं शिशोः ॥**
**वरुणारिष्टकमयं रुचकं सैन्द्रकं तथा ॥ ७ ॥**
**सततं धारयेच्चापि कृतं वा पौत्रजीविकम् ॥**
**शुक्लाः सुमनसो लाजाः पयः शाल्योदनं तथा ॥८॥**
**बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना ॥**

कुलत्था इत्यादि । शङ्खचूर्णं सुदग्धशङ्खचूर्णम् । सर्वगन्धा एलादिकाः, तैः कृतो लेपः सार्वगन्धिकः । गृध्रेत्यादि । यवाः प्रसिद्धाः, यवफलो वंशः, अन्ये यवफला दुग्धिकेत्याहुः । वरुणारिष्टकमयं वरुणनिम्बकाष्ठघटितं, रुचकं ग्रीवाभरणं मणिकसंज्ञं धारयेत्, वा सैन्द्रकस्येदं सैन्द्रकं तथेति रुचकमित्यर्थः, ब्रह्मदेवस्त्वरिष्टं फेनिलमाह । सैन्द्रकमित्यत्र सैन्दुकमिति वा पाठः, सिन्दुकस्येदं सैन्दुकं, सिन्दुको निर्गुण्डी, तत्पुष्पमुकूलात्कृतं सैन्दुकं पुत्रजीवो मध्यवर्तुलतीक्ष्णाग्रफलो जम्बीरपत्रो वृक्षस्तत्काष्ठकृतं रुचकं, तत्फलकृतमित्यन्ये, केचिदत्रारग्वधं पठन्ति । शुक्लेत्यादि शुक्लाः सुमनसः श्वेतकुसुमानि, निवेद्यो दातव्यः, गोतीर्थे सलिलगोमये, प्रयतात्मना उपवासादिपवित्रेण ॥ ६—८ ॥—

**सङ्गमे च भिषक् स्नानं कुर्याद्धात्रीकुमारयोः ॥ ९ ॥**
**नानावस्त्रधरा देवी चित्रमाल्यानुलेपना ॥**
**चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥ १० ॥**
**उपासते यां सततं देव्यो विविधभूषणाः ॥**
**लम्बा कराला विनता तथैव बहुपुत्रिका ॥**
**रेवती शुष्कनामा या सा ते देवी प्रसीदतु ॥ ११ ॥**

संगम इत्यादि । संगमो नदीद्वयमेलकः । रक्षामंत्रमाह—नानेत्यादि । अपरा देव्यो विविधभूषणा यां उपासते सा देवी ते लोके प्रसादकरा भवतु । शुष्का शुष्करेवतीत्यर्थः ॥ ९—११ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे रेवतीप्रतिषेधोऽध्याय एकत्रिंशत्तमः समाप्तः ।

## द्वात्रिंशत्तमोऽध्यायः ।

**अथातः पूतनाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**
**कपोतवङ्काऽरलुको वरुणः पारिभद्रकः ॥**
**आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ॥३॥**
**वचा वयःस्था गोलोमी हरितालं मनःशिला ॥**
**कुष्ठं सर्जरसश्चैव तैलार्थे वर्ग इष्यते ॥ ४ ॥**

कपोतवङ्केत्यादि । कपोतवङ्का कवडबन्धेति लोके प्रसिद्धा, आस्फोता सारिवा, वयस्था ब्राह्मी, अन्ये गुडूचीमाहुः । गोलोमी दूर्वा । वर्ग इष्यते इति वर्गग्रहणं यथालाभं प्रक्षेपार्थं, वचादीनां कल्ककषायाभ्यां तैलं साध्यम् ॥ १—४ ॥

**हितं घृतं तुगाक्षीर्या सिद्धं मधुरकेषु च ॥**
**कुष्ठतालीशखदिरं चन्दनस्यन्दने तथा ॥ ५ ॥**
**देवदारुवचाहिङ्गुकुष्ठं गिरिकदम्बकः ॥**
**एला हरेणवश्चापि योज्या उद्धूपने सदा ॥ ६ ॥**
**गन्धनाकुलिकुम्भीकामज्जानो बदरस्य च ॥**
**कर्कटास्थि घृतं चैव धूपनं सर्षपैः सह ॥ ७ ॥**

हितमित्यादि । तुगाक्षीरी वंशलोचना, मधुरकेषु काकोल्यादिद्रव्येषु, अत्र काकोल्यादियोगतस्तुगाक्षीरी प्राप्ता पृथक्त्वं भागद्वयार्थम् । कुष्ठतालीशादीनां कल्ककषायाभ्यां सिद्धं घृतं हितमिति संवन्धः । गन्धनाकुली सुगन्धा रास्ना । कुम्भिका वारिपर्णी ॥ ५—७ ॥

**काकादनीं चित्रफलां बिम्बीं गुञ्जां च धारयेत् ॥**
**मत्स्यौदनं च कुर्वीत कृशरां पललं तथा ॥**
**शरावसंपुटे कृत्वा बलिं शून्यगृहे हरेत् ॥ ८ ॥**

काकादनीत्यादि । काकादनी काकतिन्दुकः, 'काला' इत्यन्ये; चित्रफला इन्द्रवारुणी, चित्राण्डिकेत्यन्ये । मत्स्यौदनं मत्स्यभक्तं; पललं तिलपिष्टम् ॥ ८ ॥

**उच्छिष्टेनाभिषेकेण शिरसि स्नानमिष्यते ॥**
**पूज्या च पूतना देवी बलिभिः सोपहारकैः ॥ ९ ॥**
**मलिनाम्बरसंवीता मलिना रूक्षमूर्धजा ॥**
**शून्यागाराश्रिता देवी दारकं पातु पूतना ॥ १० ॥**
**दुर्दर्शना सुदुर्गन्धा कराला मेघकालिका ॥**
**भिन्नागाराश्रया देवी दारकं पातु पूतना ॥ ११ ॥**

शून्यगृहे इत्यत्र शुभगृहे इत्यन्ये । केचिदत्रेदृशं पठन्ति-

हरेद्बलिं चोरुकुटे इत्यादि । तत्रोरुकुटः शून्यागारः, शून्यारामं इत्यन्ये । उच्छिष्टेनेत्यादि । उच्छिष्टेनाभिषेकेण आचमनोदकेनेत्यर्थः । पूर्वकल्पेन स्नानम् । रक्षामन्त्रः मलिनेत्यादि ॥ ९—११ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे पूतनाप्रतिषेधाध्यायो द्वात्रिंशत्तमः समाप्तः ।

## त्रयस्त्रिंशत्तमोऽध्यायः ।

**अथातोऽन्धपूतनाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**
**तिक्तकद्रुमपत्राणां कार्यः क्वाथोऽवसेचने ॥**
**सुरा सौवीरकं कुष्ठं हरितालं मनःशिला ॥ ३ ॥**
**तथा सर्जरसश्चैव तैलार्थमुपदिश्यते ॥**
**पिप्पल्यः पिप्पलीमूलं वर्गो मधुरको मधु ॥ ४ ॥**
**शालपर्णी बृहत्यौ च घृतार्थमुपदिश्यते ॥**
**सर्वगन्धैः प्रदेहश्च गात्रेष्वक्ष्णोश्च शीतलैः ॥ ५ ॥**

तिक्तेत्यादि । तिक्तकद्रुमा निम्बादयस्तत्क्वाथेन परिषेकः कार्यः । सुरेत्यादि । सौवीरकं विरेचनाध्यायोपदिष्टकाञ्जिकप्रकारः, अत्र तैले सुरासौवीरके तैलात् प्रत्येकं चतुर्गुणे । कुष्ठादीनि कल्कद्रव्याणि चतुर्थांशानि । पिप्पल्य इत्यादि । वर्गो मधुरकः काकोल्यादिः, वर्गग्रहणं यथालाभनिषेधार्थं, पिप्पल्यादीनां कल्कक्वाथाभ्यां घृतं विपाच्य शीतीभूते घृते मधु क्षिपेत् । इदं घृतं पानाय । सर्वेत्यादि । शीतलैरन्यैरपि द्रव्यैः ॥ १—५ ॥

**पुरीषं कौक्कुटं केशांश्चर्म सर्पत्वचं तथा ॥**
**जीर्णां च भिक्षुसंघाटीं धूपनायोपकल्पयेत् ॥ ६ ॥**

पुरीषमिति कुक्कुटपुरीषं, केशांश्चर्म च कुक्कुटस्य, केशाश्चर्म च मानुषस्येके, केचित् चर्मेति सर्पस्य वदन्ति, तेन चर्मशब्दं सर्पे संबध्नन्ति चर्म कञ्चुलिका सर्पस्य । जीर्णां च भिक्षुसङ्घाटीमिति भिक्षुरत्र शाक्यभिक्षुः बौद्धाख्यः परिव्राजकश्च, तयोर्जीर्णसङ्घाटी जीर्णवस्त्रं तदेकदेशो गृह्यते, एकदेशेऽपि समुदायप्रवृत्तेः ॥ ६ ॥

**कुक्कुटीं मर्कटीं शिम्बीमनन्तां चापि धारयेत् ॥**
**मांसमामं तथा पक्वं शोणितं च चतुष्पथे ॥ ७ ॥**
**निवेद्यमन्तश्च गृहे शिशो रक्षानिमित्ततः ॥**
**शिशोश्च स्नपनं कुर्यात् सर्वगन्धादिकैः शुभैः ॥ ८ ॥**
**करला पिङ्गला मुण्डा कषायाम्बरवासिनी ॥**
**देवी बालमिमं प्रीता संरक्षत्वन्धपूतना ॥ ९ ॥**

कुक्कुटीमित्यादि । कुक्कुटी स्फटिकरचितकुक्कुटाण्डसदृशकन्दा, कुक्कुटीशरीरवत् कुसुमचित्रा वल्ली । मर्कटी कपिकच्छुः, मर्कटमूलीत्यन्ये, शुकशिम्बीत्यपरे; अनन्ता सारिवा । शिशोश्चेति चकारात् धात्र्याश्च स्नपनम् । सर्वगन्धा एलादिकाः ॥ ७—९ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रेऽन्धपूतनाप्रतिषेधाध्यायस्त्रयस्त्रिंशत्तमः समाप्तः ।

## चतुस्त्रिंशत्तमोऽध्यायः ।

**अथातः शीतपूतनाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ( सुश्रुताय ) ॥ २ ॥**
**कपित्थं सुवहां बिम्बीं तथा बिल्वं प्रचीबलम् ॥**
**नन्दीं भल्लातकीं चापि परिषेके प्रयोजयेत् ॥ ३ ॥**
**बस्तमूत्रं गवां मूत्रं मुस्तं च सुरदारु च ॥**
**कुष्ठं च सर्वगन्धां च तैलार्थमवचारयेत् ॥ ४ ॥**
**रोहिणीसर्जखदिरपलाशककुभत्वचः ॥**
**निष्क्वाथ्य तस्मिन्निष्क्वाथे सक्षीरं विपचेद्घृतम् ॥ ५ ॥**
**गृध्रोलूकपुरीषाणि बस्तगन्धामहेस्त्वचः ॥**
**निम्बपत्राणि मधुकं धूपनार्थे प्रयोजयेत् ॥ ६ ॥**
**धारयेदपि लम्बां च गुञ्जां काकादनीं तथा ॥**

कपित्थमित्यादि । सुवहा रास्ना, सर्वगन्धा एलादिकाः, अत्र तैले कुष्ठद्वयस्य पाठो भागद्वयार्थः रोहिण्यादिक्वाथे त्रिगुणे क्षीरैकभागं घृतं पचेत्, अहेस्त्वचः सर्पस्य कञ्चुकाः । लम्बा तिक्तालाबूः, काकादनी काकतिन्दुका ॥ १—६ ॥—

**नद्यां मुद्गकृतैश्चान्नैस्तर्पयेच्छीतपूतनाम् ॥ ७ ॥**
**देव्यै देयश्चोपहारो वारुणी रुधिरं तथा ॥**
**जलाशयान्ते बालस्य स्नपनं चोपदिश्यते ॥ ८ ॥**
**मुद्गौदनाशना देवी सुराशोणितपायिनी ॥**
**जलाशयालया देवी पातु त्वां शीतपूतना ॥ ९ ॥**

नद्यामित्यादि । मुद्गकृतैरन्नैः मुद्गकृतैर्भक्ष्यैः, मुद्गौदनेन इति गयी ॥ ७—९ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे शीतपूतनाप्रतिषेधाध्यायश्चतुस्त्रिंशत्तमः समाप्तः ।

## पञ्चत्रिंशत्तमोऽध्यायः ।

**अथातो मुखमण्डिकाप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**
**कपित्थबिल्वतर्कारीवांशीगन्धर्वहस्तकाः ॥**
**कुबेराक्षी च योज्याः स्युर्बालानां परिषेचने ॥ ३ ॥**

कपित्थेत्यादि । तर्कारी अरणिका, वांशी वंशलोचना, कुबेराक्षी काष्ठपाटला ॥ १—३ ॥

**स्वरसैर्भृङ्गवृक्षाणां तथाजहरिगन्धयोः ।**
**तैलं वसां च संयोज्य पचेदभ्यञ्जने शिशोः ॥ ४ ॥**

भृङ्गवृक्षाणामिति वातहरबिल्वादिकानां भृङ्गा पल्लवाः, तदुपयोगिका वृक्षाः । अजहरिगन्धयोरिति बस्तगन्धाश्वगन्धयोः, अजाश्वगन्धाचतुर्गुणरसेन तैलं वसां च यमकं पचेदिति मन्यन्ते ॥ ४ ॥

**मधूरिकायां पयसि तुगाक्षीर्यां गणे तथा ॥**
**मधुरे पञ्चमूले च कनीयसि घृतं पचेत् ॥ ५ ॥**

मधूरिकायामित्यादि । मधूरिका मूर्वा, मधूलिका मर्कटहस्ततृणमित्यपरे; पयसि गोक्षीरे । अत्र गयी पयःस्विनीति पठति, तत्र क्षीरविदारीगणे; तथा मधुरे काकोल्यादिके, पञ्चमूले कनीयसि शालिपर्ण्यादिके, मधूलिकादिकल्कक्काथाभ्यां घृतं पचेत् ॥ ५ ॥

**वचा सर्जरसः कुष्ठं सर्पिश्चोद्धूपने हितम् ॥**
**धारयेदपि जिह्वाश्च चाषचीरल्लिसर्पजाः ॥ ६ ॥**
**वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा ॥**
**मनःशिलां चोपहरेद्गोष्ठमध्ये बलिं तथा ॥ ७ ॥**
**पायसं सपुरोडाशं बल्यर्थमुपहारयेत् ॥**
**मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥ ८ ॥**

वचेत्यादि । चाषः कर्णरसः, चीरल्लिः चिल्ल इति लोके, चाषादिजिह्वां धारयेत् । वर्णको रोचनिका कम्पिल्लक इत्यर्थः । माल्यं पुष्पम् । अञ्जनं रसाञ्जनं, सौवीराञ्जनमित्यन्ये । पारदं शम्भुरेतः । पूर्वकल्पेन शाल्यादिकृतमण्डले गोष्ठमध्ये वर्णकादिबलिमुपहरेत्, अन्ये तु वर्णकादिद्रव्याणि मण्डलार्थं मन्यते । पायसं क्षीरसंसिद्धास्तण्डुलाः, पुरोडाशः कपालाकारः पिष्टमयः कपालोपरिपक्कः । मन्त्रेत्यादि मन्त्रपूताभिः गायत्र्या अभिमन्त्रिताभिः ॥ ६—८ ॥

**अलङ्कृता रूपवती सुभगा कामरूपिणी ॥**
**गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका ॥ ९ ॥**

रक्षामाह—अलङ्कृतेत्यादि ॥ ९ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे मुखमण्डिकाप्रतिषेधाध्यायः पञ्चत्रिंशत्तमः समाप्तः ।

---

## षट्त्रिंशत्तमोऽध्यायः ।

**अथातो नैगमेषप्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

मुखमण्डिकाप्रतिषेधानन्तरं परिशिष्टत्वान्नैगमेषप्रतिषेधारम्भो युक्त इत्याह—अथातो नैगमेषप्रतिषेधमित्यादि ॥१॥२॥

**बिल्वाग्निमन्थपूतीकाः कार्याः स्युः परिषेचने ॥**
**सुरासौवीरधान्याम्लैः परिषेकश्च शस्यते ॥ ३ ॥**
**प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः ॥**
**पचेत्तैलं सगोमूत्रैर्दधिमस्त्वम्लकाञ्जिकैः ॥ ४ ॥**

बिल्वाग्निमन्थेत्यादि । पूतीकः चिरबिल्वः । 'सुरासौवीरधान्याम्लैः' इत्यत्रान्ये 'सुरासबीजधान्याम्लैः' इति पठन्ति; तथा पाठे सबीजं धान्याम्लं बीजेन सह काञ्जिकमिति व्याख्या । प्रियङ्गुसरलेत्यादि । सरला शुक्ला त्रिवृत्, अनन्ता उत्पलशारिवा, कुटन्नटं तगरं; तत्र प्रियङ्ग्वादिकल्कं चतुर्थांशं, दध्यादिद्रव्यैश्चतुर्भिः प्रत्येकं समं तैलं पचेदिति क्रमः ॥ ३ ॥ ४ ॥

**पञ्चमूलद्वयक्काथे क्षीरे मधुरकेषु च ॥**
**पचेद्घृतं च मेधावी खर्जूरीमज्जकेऽपि च ॥ ५ ॥**

पञ्चमूलद्वयक्काथे इति ।—पञ्चमूलद्वयक्काथे दशमूलक्काथे त्रिगुणे, क्षीरघृते समे, काकोल्यादिकल्कचतुर्थांशं, खर्जूरीमज्जचतुर्थांशं वा घृतं पानार्थं पचेदित्यर्थः ॥ ५ ॥

**वचां वयःस्थां गोलोमीं जटिलां वापि धारयेत् ॥**
**उत्सादनं हितं चात्र स्कन्दापस्मारनाशनम् ॥ ६ ॥**

वचामित्यादि । वयस्था गुडूची, ब्राह्मीत्यन्ये, गोलोमी दूर्वा, जटिला मांसी । उत्सादनमुद्वर्तनम् ॥ ६ ॥

**सिद्धार्थकवचाहिङ्गुकुष्ठं चैवाक्षतैः सह ॥**
**भल्लातकाजमोदाश्च हितमुद्धूपनं शिशोः ॥ ७ ॥**

सिद्धार्थकेत्यादि । अक्षता यवाः ॥ ७ ॥

**मर्कटोलूकगृध्राणां पुरीषाणि नवग्रहे ॥**
**धूपः सुप्ते जने कार्यो बालस्य हितमिच्छता ॥ ८ ॥**

मर्कटेत्यादि । मर्कटादिपुरीषेण रात्रौ सुप्ते लोके बालस्य धूपनम् ॥ ८ ॥

**तिलतण्डुलकं माल्यं भक्ष्यांश्च विविधानपि ॥**
**कुमारपितृमेषाय वृक्षमूले निवेदयेत् ॥ ९ ॥**

तिलेत्यादि । विविधान् स्वस्तिकमोदकादीन् । कुमारपितृमेषायेति कुमाराणां पिता रक्षणात्मकत्वात्, मेषो नैगमेषः, तस्मै नैगमेषाय । वृक्षमूले क्षीरवृक्षमूले । निवेदयेत्तिलादिकं बलिम् ॥ ९ ॥

**अधस्ताद्वटवृक्षस्य स्नपनं चोपदिश्यते ॥**
**बलिं न्यग्रोधवृक्षेषु तिथौ षष्ठ्यां निवेदयेत् ॥ १० ॥**
**अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः ॥**
**बालं पालयिता देवो नैगमेषोऽभिरक्षतु ॥ ११ ॥**

अधस्तादिति । स्नपनं गायत्र्यभिमन्त्रिताभिरद्भिः । बलिमपि तिलतण्डुलमित्यादिकं वटमूले षष्ठ्यां निवेदयेत् ॥ १० ॥ ११ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे नैगमेषप्रतिषेधाध्यायः षट्त्रिंशत्तमः समाप्तः ।

---

## सप्तत्रिंशत्तमोऽध्यायः ।

**अथातो ग्रहोत्पत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

नवग्रहाकृतिविज्ञानं चिकित्सितं चाभिधाय बालग्रहाणामुत्पत्तिं कारणं चाभिधातुं ग्रहोत्पत्त्यध्यायारम्भो युज्यत इत्याह—अथात इत्यादि । ग्रहाणां स्कन्दादीनां, उत्पत्तिरागतिः प्राप्तिः, एतेन क्रीडनार्थं नियोजनमत्रोत्पत्तिः, नाभूतप्रादुर्भावः; कुतः? तेषां नित्यत्वात् ॥ १ ॥ २ ॥

**नव स्कन्दादयः प्रोक्ता बालानां य इमे ग्रहाः ॥**
**श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहाः ॥ ३ ॥**

नवेत्यादि । विग्रहः शरीरं, तत्र च स्कन्दादिषु स्कन्दापस्मारनैगमेषाः पुरुषशरीराः, शेषाः स्त्रीशरीराः ॥ ३ ॥

**एते गुहस्य रक्षार्थं कृत्तिकोमाग्निशूलिभिः ॥**
**सृष्टाः शरवणस्थस्य रक्षितस्यात्मतेजसा ॥ ४ ॥**

एते इत्यादि । शरवणस्थस्य आत्मतेजसा रक्षितस्यापि रक्षार्थं कृत्तिकादिभिरेते स्कन्दादयो ग्रहाः सृष्टा नियोजिता इत्यर्थः, गुहस्य कार्तिकेयस्य, आत्मतेजसा स्वशक्त्या । ननु स्वभावरक्षितस्य गुहस्य रक्षकैः किं? उच्यते—यथा स्वशक्त्या अनभिभवनीयस्यापि इन्द्रस्य अन्ये देवा रक्षकाः, प्रभुधर्मत्वात्; तथा गुहस्य अन्ये ग्रहा रक्षकाः, प्रभुधर्मत्वात् ॥ ४ ॥

**स्त्रीविग्रहा ग्रहा ये तु नानारूपा मयेरिताः ॥**
**गङ्गोमाकृत्तिकानां ते भागा राजसतामसाः ॥ ५ ॥**

स्त्रीत्यादि । स्त्रीविग्रहा नारीशरीराः, नानारूपा मेषादिमुखाः, मया धन्वन्तरिणा, ईरिताः कथिताः । ते स्त्रीशरीरा भागा अंशाः, राजसतामसा मता रजस्तमोमयाः स्मृताः । यद्यपि सर्वग्रहाणां रजस्तमोमयत्वं, तथापि स्त्रीविग्रहाणामेवात्यर्थं रजस्तमोगुणभूयिष्ठत्वम् ॥ ५ ॥

**नैगमेषस्तु पार्वत्या सृष्टो मेषाननो ग्रहः ॥**
**कुमारधारी देवस्य गुहस्यात्मसमः सखा ॥ ६ ॥**

नैगमेष इत्यादि । नैषमेषः पुंग्रहः, मेषाननो एडकमुखः, बालकौतुकाय सृष्टः । कुमारधारी कुमारपालयिता; 'कुमारहारी' इत्यन्ये पठन्ति, कुमारान् हरतीत्यर्थः । आत्मसम आत्मतुल्यः, सखा मित्रम् । 'आत्मसम' इत्यत्रान्ये 'आत्मोद्भव' इति पठन्ति, तत्रात्मोद्भवः पुत्रः स्कन्दापस्मारसंज्ञ इत्युत्तरेणान्वयः ॥ ६ ॥

**स्कन्दापस्मारसंज्ञो यः सोऽग्निनाऽग्निसमद्युतिः ॥**
**स च स्कन्दसखा नाम विशाख इति चोच्यते ॥ ७ ॥**

स्कन्देत्यादि । अपस्मारविकारलिङ्गकारित्वात्स्कन्दापस्मार इत्युच्यते । सोऽपि अग्निना सृष्ट इति संबध्यते, विशाख इति स्कन्दापस्मारस्यापरं नाम ॥ ७ ॥

**स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा ॥**
**बिभर्ति चापरां संज्ञां कुमार इति स ग्रहः ॥ ८ ॥**

स्कन्द इत्यादि । त्रिपुरारिणा रुद्रेण सृष्टः ॥ ८ ॥

**बाललीलाधरो योऽयं देवो रुद्राग्निसंभवः ॥**
**मिथ्याचारेषु भगवान् स्वयं नैष प्रवर्तते ॥ ९ ॥**

गुहस्य स्कन्दादिभ्यो भेदमाह—बाललीलाधर इत्यादि । लीला चेष्टा, रुद्राग्निसंभव इति रुद्रसंभवोऽग्निसंभवश्च, मिथ्याचारेषु बालेष्वित्यर्थः । स्वयं न प्रवर्तते तदनुचरास्तु प्रवर्तन्ते, कुतः? यतोऽस्य देवत्वात् पूजादिभिरेव तृप्तिः, 'बाललीलाधर' इत्यत्र 'बाललीलाटन' इत्यन्ये पठन्ति ॥ ९ ॥

**कुमारः स्कन्दसामान्यादत्र केचिदपण्डिताः ॥**
**गृह्णातीत्यल्पविज्ञाना ब्रुवते देहचिन्तकाः ॥ १० ॥**

कुमार इत्यादि । कुमारः कार्तिकेयः, स्कन्दसामान्यात् स्कन्दग्रहनामतुल्यत्वाद्बालं गृह्णातीति ये केचिदपण्डिताः देहचिन्तका वैद्याः ब्रुवते ते अल्पविज्ञानादपण्डिताः ॥ १० ॥

**ततो भगवति स्कन्दे सुरसेनापतौ कृते ॥**
**उपतस्थुर्ग्रहाः सर्वे दीप्तशक्तिधरं गुहम् ॥ ११ ॥**
**ऊचुः प्राञ्जलयश्चैनं वृत्तिं नः संविधत्स्व वै ॥**
**तेषामर्थे ततः स्कन्दः शिवं देवमचोदयत् ॥ १२ ॥**
**ततो ग्रहांस्तानुवाच भगवान् भगनेत्रहृत् ॥**
**तिर्यग्योनिं मानुषं च दैवं च त्रितयं जगत् ॥ १३ ॥**
**परस्परोपकारेण वर्तते धार्यतेऽपि च ॥**
**देवा मनुष्यान् प्रीणन्ति तैर्यग्योनींस्तथैव च ॥ १४ ॥**
**वर्तमानैर्यथाकालं शीतवर्षोष्णमारुतैः ।**
**इज्याञ्जलिनमस्कारजपहोमव्रतादिभिः ॥ १५ ॥**
**नराः सम्यक् प्रयुक्तैश्च प्रीणन्ति त्रिदिवेश्वरान् ।**
**भागधेयं विभक्तं च शेषं किञ्चिन्न विद्यते ॥ १६ ॥**
**तद्युष्माकं शुभा वृत्तिर्बालेष्वेव भविष्यति ॥**
**कुलेषु येषु नेज्यन्ते देवाः पितर एव च ॥ १७ ॥**
**ब्राह्मणाः साधवश्चैव गुरवोऽतिथयस्तथा ॥**
**निवृत्ताचारशौचेषु परपाकोपभोजिषु ॥ १८ ॥**
**उच्छन्नबलिभिक्षेषु भिन्नकांस्योपभोजिषु ॥**
**गृहेषु तेषु ये बालास्तान् गृह्णीध्वमशङ्किताः ॥ १९ ॥**
**तत्र वो विपुला वृत्तिः पूजा चैव भविष्यति ॥**
**एवं ग्रहाः समुत्पन्ना बालान् गृह्णन्ति चाप्यतः ॥ २० ॥**
**ग्रहोपसृष्टा बालास्तु दुश्चिकित्स्यतमा मताः ॥**

के तर्हि बालान् गृह्णन्तीति पृष्ट आह—तत इत्यादि । ततो गुहरक्षार्थं नवग्रहेषु सृष्टेषु सत्सु, अनन्तरं सुरा देवास्तेषां सेना तस्याः पतौ स्वामिनि गुहे कृते सति, उपतस्थुः आगताः । शक्तिरायुधविशेषः । ऊचुः उक्तवन्तः । प्राञ्जलयः संयोजितहस्ताः । एनं गुहं प्रति; एनमित्यत्र अन्ये देवेति

गुहसंबोधनं पठन्ति । किमूचुः? वृत्तिर्जीवनं, नोऽस्माकं, संविधत्स कुरु, वै स्फुटम् । आत्मवृत्त्यर्थमुपस्थितानां ग्रहाणां कार्तिकेयेन किं कृतमित्याह—तेषामित्यादि । ततः स्कन्दः शिवं देवं अचोदयत् तेषां ग्रहाणामर्थे, तेन ग्रहवृत्तिप्रार्थनानन्तरं स्कन्दः कार्तिकेयः अचोदयत् प्रार्थितवान् । एवं ग्रहार्थं प्रार्थितः शङ्करः किं कृतवानित्याह—तत इत्यादि । ततः प्रार्थनानन्तरं तान् प्रति भगनेत्रहृत् भगलोचनहारी रुद्र उक्तवान् । किमुक्तवानित्याह—तिर्यगित्यादि । तिर्यग्योनिमानुषदेवानां त्रितयं जगच्छब्दवाच्यं, एतत्त्रितयं परस्परमन्योन्यमुपकारेण वर्तते, धार्यतेऽपि चेति चकारात् । तिर्यग्योनयो गवादयः, ते मनुष्यानुपकुर्वन्ति वहनादिना; मानुषाश्च माषादिदानेन तिर्यग्योनीनुपकुर्वन्ति । देवमानुषाणां परस्परोपकारमाह—देवा इत्यादि । यथाकालं शीतोष्णवर्षादीन् कृत्वा मानुषान् तिर्यग्योनींश्च प्रीणन्तीति संबन्धः । देवेषु मानुषोपकारमाह—इज्येति । इज्या यागः, अञ्जलिः करद्वययोजनपूर्वकः, नमस्कारः प्रणामः, जप ओङ्कारपूर्वकं गायत्र्याद्यावर्तनं, होमो लक्षादिसंख्याहुतिभिर्वह्नौहवनं, व्रतं प्रसिद्धं, सम्यक्प्रयुक्तैर्वेदोक्तविधानेन प्रयुक्तैः, इज्याञ्जलिप्रभृतिभिः सम्यक् प्रयुक्तैर्नरास्त्रिदिवेश्वरान् देवान् प्रीणयन्तीति संबन्धः । भागधेयमित्यादि । भागधेयं अंशसमूहः, विभक्तं देवादित्रितयेन सर्वमेव विभज्य गृहीतं, शेषमवशिष्टं, किञ्चिन्नास्ति यतः ततस्माद्बालगुहरक्षार्थं सृष्टत्वाद्युष्माकं वृत्तिरपि भो ग्रहाः बालेष्वेव भविष्यतीति । अनपराधेषु बालेषु वृत्तिं कल्पयन् शम्भुरपि दोषभाक् स्यादतः सापराधेषु वृत्तिमाह—कुलेष्वित्यादि । नेज्यन्ते न पूज्यन्ते, उत्सन्नबलिभिक्षेषु नष्टपूजाभिक्षेषु पुरुषेषु वृत्तिरिति, अत्र हिंसनमेव वृत्तिः, पूजा चैवेति पुष्पादिना भोजनादिना चेत्यर्थः ॥ ११—२० ॥—

**वैकल्यं मरणं चाशु ध्रुवं स्कन्दग्रहे मतम् ॥ २१ ॥**
**स्कन्दग्रहोऽत्युग्रतमः सर्वेष्वेव यतः स्मृतः ॥**
**अन्यो वा सर्वरूपस्तु न साध्यो ग्रह उच्यते ॥२२॥**

एवमित्यादि । वैकल्यं विकलाङ्गता, ध्रुवं निश्चितम् । स्कन्द इत्यादि । सर्वेष्वेव ग्रहेषु मध्ये स्कन्दग्रहो यतोऽत्युग्रतमः अत एव तद्गृहीतस्य ध्रुवं मरणं, अथ कथंचिज्जीवति तदा वैकल्यमिति । अन्य इत्यादि । अन्यो वा स्कन्दापस्मारादिकः ॥ २१ ॥ २२ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रान्तर्गते कौमारभृत्यतन्त्रे ग्रहोत्पत्त्यध्यायः सप्तत्रिंशत्तमः समाप्तः ॥

---

## अष्टत्रिंशत्तमोऽध्यायः ।

**अथातो योनिव्यापत्प्रतिषेधं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

ग्रहोत्पत्त्यध्यायानन्तरं तिर्यग्योनिं मानुषं चेति वचनेन योनेर्नामसंकीर्तनात् कुमारजन्मविकारकारणत्वाच्च योनेर्व्यापच्चिकित्सितार्थं योनिव्यापत्प्रतिषेधाध्यायारम्भो युज्यत इत्याह—अथात इत्यादि । योनिव्यापदो योनिरोगाः, तेषां प्रतिषेधश्चिकित्सितमिति ॥ १ ॥ २ ॥

**प्रवृद्धलिङ्गं पुरुषं यात्यर्थमुपसेवते ॥**
**रूक्षदुर्बलबालायास्तस्या वायुः प्रकुप्यति ॥ ३ ॥**
**स दुष्टो योनिमासाद्य योनिरोगाय कल्पते ॥**

प्रवृद्धेत्यादि । प्रवृद्धलिङ्गमतिप्रवृद्धलिङ्गं प्रलम्बमेहनं पुरुषम् । तस्या बालाया वायुः प्रकोपमापद्यते, स वायुः प्रकुपितः सन् सञ्चितपित्तश्लेष्माणौ कोपयति, अथवा वातः पित्तश्लेष्माणौ स्वहेतुभिः कुपितौ गृहीत्वा योनिरोगाय कल्पते समर्थो भवति ॥ ३ ॥

**त्रयाणामपि दोषाणां यथास्वं लक्षणेन तु ॥ ४ ॥**
**विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे ।**
**मिथ्याचारेण याः स्त्रीणां प्रदुष्टेनार्तवेन च ॥ ५ ॥**
**जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ।**

तेषां योनिरोगाणां सामान्यज्ञानोपायमाह—त्रयाणामित्यादि । यथास्वं लक्षणेन योनिरोगं जानीयादित्यर्थः ॥ ४ ॥ ५ ॥—

**उदावर्ता तथा वन्ध्या विप्लुता च परिप्लुता ॥ ६ ॥**
**वातला चेति वातोत्थाः, पित्तोत्था रुधिरक्षरा ।**
**वामिनी स्रंसिनी चापि पुत्रघ्नी पित्तला च या ॥७॥**
**अत्यानन्दा च या योनिः कर्णिनी चरणाद्वयम् ।**
**श्लैष्मिका सकफा ज्ञेयाः,षण्डी च फलिनी तथा॥८॥**
**महती सूचिवक्त्रा च सर्वजेति त्रिदोषजा ।**

वातादिजाः पञ्च योनिव्यापद आह—उदावर्तेत्यादि । उदावर्ता, वन्ध्या, विप्लुता, परिप्लुता, वातला, इति पञ्च वातोत्थाः । रुधिरक्षरा, वामिनी, स्रंसिनी, पुत्रघ्नी, पित्तला, इति पञ्च पित्तोत्थाः; अत्यानन्दा, कर्णिनी, चरणाद्वयं, श्लेष्मला, इति पञ्च कफोत्थाः; षण्डी, फलिनी, महती, सूचिवक्त्रा, सर्वजा, इति पञ्च सन्निपातजाः ॥ ६—८ ॥—

**सफेनिलमुदावर्ता रजः कृच्छ्रेण मुञ्चति ॥ ९ ॥**
**वन्ध्यां नष्टार्तवां विद्याद्विप्लुतां नित्यवेदनाम् ।**
**परिप्लुतायां भवति ग्राम्यधर्मे रुजा भृशम् ॥ १० ॥**
**वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ।**
**चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥ ११ ॥**

या उदावर्ता योनिः सा फेनिलं फेनसहितं रज आर्तवं कृच्छ्रेण दुःखेन मुञ्चति । विप्लुता नित्यं रुजावती, परिप्लुता पुनर्व्यवाय एव पीडावतीत्यनयोर्भेदः । वातलेत्यादि शूलं वातशूलं, निस्तोदः सूचीभिरिव व्यधनं किं वातलायामेवानिलवेदना भवन्ति उतान्यास्वपीत्याह—चतसृष्वित्यादि । आद्यासु उदावर्तादिष्वपीत्यर्थः ॥ ९—११ ॥

**सदाहं प्रकिरत्यस्रं यस्याः सा लोहितक्षरा ।**
**सवातमुद्गिरेद्बीजं वामिनी रजसायुतम् ॥ १२ ॥**
**प्रस्रंसिनी स्यन्दते तु क्षोभिता दुःप्रसूश्च या ।**
**स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसंस्रवात् ॥ १३ ॥**
**अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता ।**
**चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥ १४ ॥**

सदाहमिति । अस्रमार्तवं, 'सदाहं क्षीयते रक्तं यस्यां सा लोहितक्षया'इति केचित् पठन्ति, सवातमिति बीजं शुक्रम् । उद्गिरेत् वमेत् । रजसा शुक्रमार्तवमिश्रम् । प्रसंसिनीति । स्यन्दते स्रवति, क्षोभिता संचालिता, दुःप्रसूः दुःखेन प्रसूयते, या एवंविधा योनिः सा प्रस्रंसिनीति संबन्धः, दुःप्रसूश्चेत्यन्ये 'दुःप्रजायना'इति पठन्ति । दुष्टीभूतापत्यमार्गेति व्याख्यानयन्ति । स्थितमित्यादि । स्थितं स्थितं गर्भं हन्ति नोत्पन्नमात्रम् । चतसृषु आद्यासु लोहिताक्षरादिषु, पित्तलिङ्गोच्छ्रायः चोषदाहादिका वेदनाः ॥ १२—१४ ॥

**अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति ।**
**कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते १५**
**मैथुनेऽचरणा पूर्वं पुरुषादतिरिच्यते ।**
**बहुशश्चातिचरणादन्या बीजं न विन्दति ॥ १६ ॥**
**श्लेष्मला पिच्छिला योनिः कण्डूयुक्ताऽतिशीतला ।**
**चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रितिर्भवेत् ॥ १७ ॥**

अत्यानन्देत्यादि । ग्राम्यधर्मेण मैथुनेन । कर्णिका मांसकन्दी । मैथुनेत्यादि । अन्ये 'मैथुनाचरणात् पूर्वं' इति पठन्ति । शेषं समम् । पूर्वं पुरुषात् पूर्वमतिरिच्यते, अत्यर्थं कण्डूयत इत्यर्थः । बहुशो अतिचरणात् मैथुनात्, अन्या अतिचरणा, बीजं गर्भं, न विन्दति न प्राप्नोति, 'बहुशश्चातिचरणा तयोर्बीजं न तिष्ठति' इति केचित् पठन्ति, अतिचरणा बहुशो मैथुनं व्रजति, तयोश्चरणातिचरणयोर्बीजं न तिष्ठति स्थितिं न करोतीत्यर्थः । श्लेष्मलेत्यादि । आद्यासु अत्यानन्दादिषु श्लेष्मलिङ्गोच्छ्रितिः पैच्छिल्यादिका ॥ १५—१७ ॥

**अनार्तवस्तना षण्ढी खरस्पर्शा च मैथुने ।**
**अतिकायगृहीतायास्तरुण्याः फलिनी भवेत् ॥ १८ ॥**
**विवृताऽतिमहायोनिः सूचीवक्त्राऽतिसंवृता ।**
**सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥ १९ ॥**
**चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रितिर्भवेत् ।**
**पञ्चासाध्या भवन्तीमा योनयः सर्वदोषजाः ॥ २० ॥**

वन्ध्याषण्ढ्योः सस्तननिस्तनत्वे विशेषः । खरस्पर्शा चेति चकारान्मैथुनद्वेषनिषेधः । अतिकायो बृहत्साधनो नरस्तेन गृहीताया फलिनीति संज्ञा, अफलिनीत्यन्ये पठन्ति, तत्र अतिकायगृहीता या तरुणी सा अफलिनी अप्रजा इति व्याख्या । सूचीवक्त्रातिसंवृता अत्यर्थसङ्कुचितमुखी, सङ्कुचितमुखेत्युच्यते । सर्वलिङ्गा सर्वचिह्ना, सर्वसमुत्थाना सर्वकारणा या सा सर्वजा कथ्यते । चतसृष्वित्यादि । चतसृष्वपि चाद्यासु षण्डीप्रभृतिषु, सर्वलिङ्गोच्छ्रितिरिति रौक्ष्यतोदादिका वातलिङ्गोच्छ्रितयः, चोषादिकाः पित्तलिङ्गोच्छ्रितयः, स्नेहकण्ड्वादिकाः श्लेष्मलिङ्गोच्छ्रितयश्च ॥ १८—२० ॥

**प्रतिदोषं तु साध्यासु स्नेहादिक्रम इष्यते ।**
**दद्यादुत्तरबस्तींश्च विशेषेण यथोदितान् ॥ २१ ॥**

प्रतीत्यादि । साध्यासु योनिव्यापत्सु प्रतिदोषं यः स्नेहादिक्रमः स इष्यत इत्यर्थः । एतेन यस्य दोषस्य यः प्रत्यनीकः स्नेहस्तेन स्नेहेन संलिह्य संस्वेद्य ततो वमनादीन् साध्यास्ववचारयेदित्यर्थः, दद्यादुत्तरबस्तींश्च विशेषेण यथोदितानिति वातादिभेदेनेत्यर्थः ॥ २१ ॥

**कर्कशां शीतलां स्तब्धामल्पस्पर्शां च मैथुने ।**
**कुम्भीस्वेदैरुपचरेत् सानूपौदकसंयुतैः ॥ २२ ॥**
**मधुरौषधसंयुक्तान् वेशवारांश्च योनिषु ।**
**निक्षिपेद्धारयेच्चापि पिचुतैलमतन्द्रितः ॥ २३ ॥**
**धावनानि च पथ्यानि कुर्वीतापूरणानि च ।**

कर्कशामित्यादि । अल्पस्पर्शामिति अतिव्यवायकुद्दलादनिलसुप्तिमत्वात् । 'शीतलां' इत्यत्र अन्ये तु सशूलामिति पठन्ति, शूलतोदवेदनासङ्कुलामिति व्याख्या । कुम्भीस्वेदः आनूपौदकमांसवातघ्नद्रव्यक्वाथपूर्णां कुम्भीं कृत्वा भूमौ निखन्य तदुपरि शय्यां संस्थाप्याग्निसन्तप्तलौहपाषाणगुडकान् क्वाथे निक्षिप्य तत्स्थितैर्बाष्पस्वेदैर्योनिप्रदेशमात्रगामिभिरुपचरेत् । अन्ये तु कुम्भीं वातहर[illegible]तजलां कृत्वोष्माणं गृह्णीयादिति व्याख्यानयन्ति । अथ उपनाहविशेषमाह—मधुरेत्यादि । मधुराणि काकोल्यादीनि कल्कीकृतानि, तैर्युक्तान् वेशवारान् कृतान्नवर्गोक्तान् योनिषु निक्षिपेत्, पिचुतैलं पिचुना लक्तकेन तैलं वातघ्नद्रव्यक्वाथसिद्धं योनिषु धारयेत् । अतन्द्रितो निरन्तरकारीत्यर्थः । पिचुतैलं बलाशृतमित्यन्ये । धावनानि प्रक्षालनानि । पथ्यानि वातहरौषधसिद्धानीत्यर्थः ॥ २२ ॥ ॥ २३ ॥—

**ओषचोषान्वितासूक्तं कुर्याच्छीतं विधिं भिषक् २४**

शीतं विधिं रक्तपित्तहरम् ॥ २४ ॥

**दुर्गन्धां पिच्छिलां चापि चूर्णैः पञ्चकषायजैः ।**
**पूरयेद्राजवृक्षादिकषायैश्चापि धावनम् ॥ २५ ॥**

दुर्गन्धां पित्तेन, पिच्छिलां कफेन । प[illegible] ॥ [illegible]धोदुम्बरप्लक्षाश्वत्थगर्दभाण्डाः । तच्चूर्णेन योनिं पूरयेत् । राजवृक्षादिरारग्वधादिः ॥ २५ ॥

**योन्यां तु पूयस्राविण्यां शोधनद्रव्यसंभृतैः ।**
**सगोमूत्रैः सलवणैः पिण्डैरापूरणं हितम् ॥ २६ ॥**

शोधनद्रव्याणि मिश्रकोक्तानि ॥ २६ ॥

**बृहतीफलकल्कस्य द्विहरिद्रायुतस्य च ।**
**कण्डूमतीमपस्पर्शां पूरयेद्धूपयेत्तथा ॥ २७ ॥**

यदा पुनः सप्ताहादर्वागपि पित्तज्वरोऽल्पदोषश्च शीघ्रं पाकं यायात्तदा औषधं देयमित्याह—पैत्तिके इत्यादि । अल्पकालसमुच्छ्रितेऽपि पैत्तिके ज्वरे यदौषधं देयं दातव्यं भवेत् तदा देयमिति पिण्डार्थः । वाशब्दात् वातश्लेष्मादिज्वरे दोषपाके सति औषधं देयम् ॥ १२० ॥—

**भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ।**
**शोधनं शमनीयं तु करोति विषमज्वरम् ॥ १२१ ॥**

कस्माद्दोषाणां पाके एव सत्यौषधं देयमित्याह—भेषजमित्यादि । शोधनमौषधं आमदोषस्य पुरुषस्य ज्वरं ज्वलयति दीपयतीत्यर्थः । शमनीयं तु पुनरौषधं दत्तं विषमज्वरं करोति । केचित् ज्वलयतीत्यत्र वर्धयतीति पठन्ति ॥ १२१ ॥

**च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ।**
**अतिप्रवर्तमानं च साधयेदतिसारवत् ॥ १२२ ॥**

इदानीं ज्वरिणामावस्थिकं कर्तव्यमाह—च्यवमानमित्यादि । उत्क्लिष्टमिति यतो ज्वरेण आमाशयात् चालितं अत एव च्यवमानं, मलं वातादिकं, सदाऽऽमावस्थायां पक्वावस्थायां च । अतिसारवदित्यनेन पाचयन् संग्रहं नयेदित्यर्थः सूच्यते । मलोऽत्र न पुरीषमेव, अनिर्गमने वमनादिभिर्निर्हरणोपदेशात् ॥ १२२ ॥

**यदा कोष्ठानुगाः पक्वा विबद्धाः स्रोतसां मलाः ।**
**अचिरज्वरितस्यापि तदा दद्याद्विरेचनम् ॥ १२३ ॥**

तर्हि कदा शोधनं प्रयोज्यमित्याह—यदा कोष्ठानुगा इत्यादि । विरेचनमत्र शोधनं, न तु अधोरेचनमेव । केचित् पूर्वत्र अस्मिंश्च वाक्ये मलं पुरीषं कथयन्ति ॥ १२३ ॥

**पक्वो ह्यनिर्हृतो दोषो देहे तिष्ठन् महात्ययम् ।**
**विषमं वा ज्वरं कुर्याद्बलव्यापदमेव च ॥ १२४ ॥**
**तस्मान्निर्हरणं कार्यं दोषाणां वमनादिभिः ।**

पक्वदोषोपेक्षणे दूषणमाह—पक्व इत्यादि । अनिर्हृतो वमनादिना, महात्ययं गम्भीरं, बलव्यापदं बलापचयं कुर्यात् । तस्मादित्यादि । निर्हरणं ईषद्धरणम् ॥ १२४॥

**प्राक्कर्म वमनं चास्य कार्यमास्थापनं तथा ।**
**विरेचनं तथा कुर्याच्छिरसश्च विरेचनम् ॥१२५॥**

इदानीं वमनादिपरिपाटीमाह—प्रागित्यादि । यद्यपि प्रथमं लङ्घनस्योपदेशस्तथाऽप्यवस्थाप्राप्तत्वाद्वमनस्यापि प्राक्कर्मत्वम् । क्रमश इति क्रमेण, न युगपत् । अथवा लङ्घनपाचनानन्तरं स्नेहादिना कोष्ठप्राप्तेषु दोषेषु मध्यमावस्थायां ज्वरस्य देयम् । प्राक्कर्म वमनं चास्येत्र चकारादग्रेऽनुवासनमित्यपि ॥ १२५ ॥

**क्रमेण बलिने देयं वमनं श्लैष्मिके ज्वरे ।**
**पित्तप्राये विरेकस्तु कार्यः प्रशिथिलाशये ॥ १२६ ॥**
**सरुजेऽनिलजे कार्यं सोदावर्ते निरूहणम् ।**
**कटीपृष्ठग्रहार्तस्य दीप्ताग्नेरनुवासनम् ॥ १२७ ॥**
**शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम् ।**
**कफाभिपन्ने शिरसि कार्यं मूर्धविरेचनम् ॥ १२८॥**

यादृशस्य पुंसो यदात्मके ज्वरे वमनादिकं प्रयुज्यते तदाह—क्रमेणेत्यादि । बलिने पुरुषाय श्लैष्मिके ज्वरे वमनं देयं, परन्त्वामाशयस्थे दोषे तु सोत्क्लेश इत्यादिना या पूर्वं वमनावस्था कथिता तस्यां जातायामित्यर्थः । पित्तप्राये पित्तबाहुल्ये, प्रशिथिलाशये अस्तब्धपक्वाशये । तुशब्दाद्वमनमपि पित्ते देयम् । तथाच,—"उपस्थिते श्लेष्मपित्ते व्याधावामाशयाश्रये । वमनार्थं प्रयुञ्जीत भिषग्देहमदूषयन्"—इति । सरुजे कोष्ठे रुग्युक्ते । सोदावर्ते सविबन्धे । शिरोगौरवशूलघ्नमित्यादिकं मूर्धविरेचनमिति । जीर्णज्वरे मूर्धविरेचनं न तु तरुणज्वरे परं सान्निपातिकं विहाय, सान्निपातिके पुनः संज्ञाप्रबोधनाय तरुणेऽपि प्रयुज्यते । पञ्चिकाकारस्तु 'क्रमेण बलिने देयं वमनं श्लैष्मिके ज्वरे' इत्यत्र 'आमाशयस्थे दोषे तु सोत्क्लेशे वमनं परम्' इत्यादि पूर्वोक्तमेव पाठं पठति ॥ १२६—१२८ ॥

**दुर्बलस्य समाध्मातमुदरं सरुजं दिहेत् ।**
**दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ १२९ ॥**
**अम्लपिष्टैः सुखोष्णैश्च**

अतः परं दुर्बलस्योदरलेपमाह—दुर्बलस्येत्यादि । दारुः देवदारु, हैमवती वचा, अम्लं काञ्जिकम् ॥ १२९ ॥—

**पवने तूर्ध्वमागते ।**
**रुद्धमूत्रपुरीषाय गुदे वर्तिं निधापयेत् ॥ १३० ॥**

वर्तिविषयमाह—पवने इत्यादि । वर्तिरत्र दारुहैमवत्यादिभिः कृता, अन्ये तु मदनफलसैन्धवपिप्पल्यादिभिर्यौगिकैर्द्रव्यैः कृता इति व्याख्यानयन्ति ॥ १३० ॥

**पिप्पलीपिप्पलीमूलयवानीचव्यसाधिताम् ।**
**पाययेत यवागूं वा मारुताद्यनुलोमनीम् ॥ १३१ ॥**

ऊर्ध्वगतपवने रुद्धमूत्रपुरीषस्य पुरुषस्यान्यत् किं कुर्यादित्याह—पिप्पलीत्यादि ॥ १३१ ॥

**शुद्धस्योभयतो यस्य ज्वरः शान्तिं न गच्छति ।**
**सशेषदोषरूक्षस्य तस्य तं सर्पिषा जयेत् ॥ १३२ ॥**

सशेषदोषत्वात् रूक्षत्वाच्च ज्वरेऽप्रशाम्यति सति रूक्षस्य प्रतीकारमाह—शुद्धस्येत्यादि ॥ १३२ ॥

**कृशं चैवाल्पदोषं च शमनीयैरुपाचरेत् ।**
**उपवासैर्बलस्थं तु ज्वरे सन्तर्पणोत्थिते ॥ १३३ ॥**

शोधनविधिमभिधाय संशमनविधिमाह—कृशमित्यादि । उपवासैरिति भोजनपरित्यागैः । जेज्जटाचार्यस्तु—उपवासस्यापि संशमनीयत्वाद्विशिष्टविषये तन्नियोगमाह—उपवासैरित्यादि । उपवासैरिति बहुवचनात् दशविधमपि लङ्घनं यथावस्थं योज्यम् । तथा च,—"चतुःप्रकारा संशुद्धिः

पिपासामारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम्"—इति । ईदृशे च व्याख्याने संशमनप्रस्तावेऽपि पुनः शोधनमभिहितं भवति ॥ १३३ ॥

**क्लिन्नां यवागूं मन्दाग्निं तृषार्तं पाययेन्नरम् ।**

संशमनेष्वाहारस्य वरत्वात् तदभिधानमाह—क्लिन्नामित्यादि । क्लिन्नां अल्पसिक्थत्वेन, 'क्लिन्नां'इत्यत्र 'तन्वीं' इति केचित् पठन्ति, तत्रापि स एवार्थः ॥—

**तृट्छर्दिदाहघर्मार्तं मद्यपं लाजतर्पणम् ॥ १३४ ॥**
**सक्षौद्रमम्भसा पश्चाज्जीर्णे यूषरसौदनम् ।**
**उपवासश्रमकृते क्षीणं वाताधिके ज्वरे ॥ १३५ ॥**
**दीप्ताग्निं भोजयेत् प्राज्ञो नरं मांसरसौदनम् ।**
**मुद्गयूषौदनश्चापि हितः कफसमुत्थिते ।**
**स एव सितया युक्तः शीतः पित्तज्वरे हितः॥१३६॥**

यवाग्वनर्हस्य तर्पणमाह—तृडित्यादि । हित इति 'अन्नकाले' इति शेषः । स इत्यादि । स एव मुद्गयूष एव ॥ १३४—१३६ ॥—

**दाड़िमामलमुद्गानां यूषश्चानिलपैत्तिके ।**
**ह्रस्वमूलकयूषेण भोजयेत्कफवातिके ॥ १३७ ॥**
**पटोलनिम्बयूषस्तु पथ्यः पित्तकफात्मके ।**
**दाहच्छर्दियुतं क्षामं निरन्नं तृष्णयाऽर्दितम्॥१३८॥**
**सिताक्षौद्रयुतं लाजतर्पणं पाययेत च ।**

द्वन्द्वज्वराणां पथ्यमाह—दाड़िमेत्यादि । ह्रस्वमूलको लघुमूलकः । लाजतर्पणं पाययेत चेत्यत्र द्रवानुक्तेः शीतोदकेन लाजतर्पणपानं; केचिच्छृतशीतेन पानमिच्छन्ति । अन्ये तु ज्वरापहैः फलरसैः पानं लाजतर्पणस्य पथ्यमाहुः ॥ १३७ ॥ १३८ ॥—

**कफपित्तपरीतस्य ग्रीष्मेऽसृक्पित्तिनस्तथा ॥१३९॥**
**मद्यनित्यस्य न हिता यवागूस्तमुपाचरेत् ।**
**यूषैरम्लैरनम्लैर्वा जाङ्गलैर्वा रसैर्हितैः ॥ १४० ॥**

इदानीं प्रशस्ताया यवाग्वा विशिष्टविषयेऽहितत्वं दर्शयन्नाह—कफपित्तपरीतस्येत्यादि। कफपित्तपरीतस्य कफपित्ताभ्यां मिलिताभ्यां व्याप्तस्य । यद्यपि रक्तपित्तप्रतिषेधे घृतमिश्राया यवाग्वा हितत्वमभिधास्यति, तथाऽप्यत्र ज्वरे सति रक्तपित्ते यवागूरहिता । तस्य पथ्यमाह—तमुपाचरेत्यादि । यूषैरम्लैरनम्लैर्वेति विकल्पः सात्म्यापेक्षया अग्न्यपेक्षया वा । यूषजाङ्गलरसोपदेशोऽपि सात्म्यापेक्षया अवस्थापेक्षया वा । यूषो मुद्गादियूषः । कफपित्तपरीतादीनां दाहाद्यभिभूतानां यूषरसोपदेशस्तत्राकालिको मन्तव्यः ॥ १३९ ॥ १४० ॥

**मद्यं पुराणं मन्दाग्नेर्यवान्नोपहितं हितम् ।**

इदानीं शमनत्वात् मद्यतकेऽवस्थावशेन द्रव्यान्तरोपहिते हिततया दर्शयन्नाह—मद्यमित्यादि । मद्यं पुराणं सम्यक् पक्वं, दीपनीयत्वात् कफघ्नत्वाच्च ॥—

**सव्योषं वितरेत्तक्रं कफारोचकपीड़िते ॥ १४१ ॥**

तक्रप्रयोगमाह—सव्योषमित्यादि । सव्योषं त्रिकटुकसंस्कृतं, वितरेत् दद्यात् ॥ १४१ ॥

**कृशोऽल्पदोषो दीनश्च नरो जीर्णज्वरार्दितः ।**
**विबद्धसृष्टदोषश्च रूक्षः पित्तानिलज्वरी ॥ १४२ ॥**
**पिपासार्तः सदाहो वा पयसा स सुखी भवेत् ।**

क्षीरावस्थामाह—कृश इत्यादि । दीनः क्लिष्टचित्तः, विबद्धदोषोऽप्रवृत्तदोषः, सृष्टदोषश्च्युतदोषः । ननु, यदि विबद्धदोषे क्षीरं प्रयुज्यते तत्कथं प्रच्युतेऽपि प्रयुज्यते ? सत्यं, उभयशक्तिकत्वात् प्रच्युतेऽपि प्रयुज्यते; अथवा प्रच्युतो दोषः स्तोकस्तोकेन यस्य प्रवर्तते अत्र सोऽभिप्रेतः । ततः सम्यक् दोषप्रवर्तनार्थं भेदनं क्षीरं च्युतदोषेऽपि प्रयुज्यते । एष योगो निबन्धकारैः कियन्मात्रः पठितः कियन्मात्रश्च परित्यक्तः, अस्माभिर्वृद्धपठितत्वात् सर्वोऽपि पठितः ॥ १४२ ॥—

**तदेव तु पयः पीतं तरुणे हन्ति मानवम् ॥ १४३ ॥**

तरुणज्वरे पयः पीतं सत् किं कुर्यादित्याह—तदेवेत्यादि । तदेवेति पयः । तरुणे तरुणज्वरे ॥ १४३ ॥

**सर्वज्वरेषु सुलघु मात्रावद्भोजनं हितम् ।**
**वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्धनम् ॥१४४॥**

इदानीं सर्वज्वरोचितस्याहारस्य यथाकालमुपयोगमाह—सर्वज्वरेष्वित्यादि । सुलघु पुराणरक्तशाल्यादि, मात्रावदल्पं, वेगापाये ज्वरवेगहानौ, अन्यथा उक्तप्रकारवैपरीत्येन, तत् भोजनं, हि यस्मादर्थे, केचित् 'वेगापाये' इत्यत्र 'दिनापाये' इति पठन्ति, दिनान्ते इति च व्याख्यानयन्ति । 'सर्वज्वरेषु सप्ताहं मात्रावल्लघु भोजयेत्' इतीदृशं पूर्वार्धं केचित् पठन्ति, स च निबन्धेषु न दृश्यते ॥ १४४ ॥

**ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत् ।**
**अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा ॥ १४५ ॥**
**स क्षीणः कृच्छ्रतां याति यात्यसाध्यत्वमेव च ।**
**तस्माद्रक्षेद्बलं पुंसां बले सति हि जीवितम् ॥१४६॥**
**गुर्वभिष्यन्द्यकाले च ज्वरी नाद्यात्कथञ्चन ।**
**न तु तस्याहितं भुक्तमायुषे वा सुखाय वा ॥१४७॥**

इदानीं जीर्णज्वरितस्यारुचावपि हितभोजनोपदेशमाह—ज्वरित इत्यादि । जीर्णज्वरिणो यदि हितभोजने कथञ्चिदरुचिस्तदा हितमेवानेकप्रकाराभिः कल्पनाभिर्मुखप्रियं कृत्वाऽरुचिनिवृत्त्यर्थं ज्वरितोऽश्नीयात् । तथाच तन्त्रान्तरं,—"सात्म्यात् स्वादुभावाच्च पथ्यं द्वेष्यत्वमागतम् । कल्पनाविविधैस्तैस्तैः प्रियत्वं गमयेत् पुनः"—इति । कस्मादेवंविधमपि कृत्वा ज्वरितोऽश्नीयादित्याह—अन्नकाले ह्यभुञ्जान इत्यादि ।

१ 'ह्रस्वमूलकयूषस्तु वाते श्लेष्माधिके हितः' इति पाठान्तरम् ।
२ 'यूषरसोपदेशस्तात्कालिको' इति पाठान्तरम् ।

अन्ये तु यद्यस्य जीर्णज्वरिणोऽरुचिः स्यात्तदा अहितमप्यश्नीयादिति व्याख्यानयन्ति । ननु, यद्यरुचौ सात्म्यमहितभोजनं क्रियते तदा गुर्वभिष्यन्धकाले चेत्याद्युत्तरोक्तश्लोकेन सह कथं न विरोधः? सत्यं, अहितस्य सातत्यसेवननिराकरणार्थं गुर्वभिष्यन्धकाले चेत्यादिश्लोकः । गुर्वित्यादि । अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजननम् । कथञ्चन सकृदपि । तुशब्दो यस्मादर्थे, तेन यस्मादहितं भुक्तं भोजनं तत्तु तस्याहितं ज्वरितस्य न आयुषोऽर्थे सुखार्थे वा भवति तस्माद्गुर्वादि न भक्षयेत् । यद्यपि केश्चिन्निबन्धकारैरेष पाठो न पठितस्तथापि सर्वनिबन्धोपजीविना मया पञ्जिकाकारपठितत्वात् पठितः ॥ १४५—१४७ ॥

**संततं विषमं वापि क्षीणस्य सुचिरोत्थितम् ।**
**ज्वरं सम्भोजनैः पथ्यैर्लघुभिः समुपाचरेत् ॥१४८॥**

इदानीं दुर्बलस्य चिरोत्थिते ज्वरे पथ्यसंभोजनैर्बृंहणं विधिमाह—संततमित्यादि। संततं नित्यलग्नं, विषमं सतताऽन्येद्युष्कादिकं, संभोजनैर्यथेष्टभोजनैः ॥ १४८ ॥

**मुद्गान्मसूरांश्चणकान् कुलत्थान् समकुष्ठकान् ।**
**आहारकाले यूषार्थं ज्वरिताय प्रदापयेत् ॥ १४९ ॥**

मुद्गान् मसूरांश्चणकानित्यादि । पूर्वं दोषप्रत्यनीकत्वदर्शनार्थं मुद्गादियूषाणामुपादानं, अत्र तु विकारप्रत्यनी[illegible] दर्शनार्थं, अतो न पुनरुक्तिः ॥ १४९ ॥

**पटोलपत्रं वार्ताकं कठिल्लं पापचेलिकम् ।**
**कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम् ॥ १५०॥**
**पत्रं गुडूच्याः शाकार्थे ज्वरितानां प्रदापयेत् ।**

पटोलपत्रमित्यादि । कठिल्लं पुनर्नवाशाकं, पापचेलि पाठाशाकं, गोजिह्वां गोजीशाकम् ॥ १५० ॥—

**लावान् कपिञ्जलानेणान् पृषतान् शरभान् शशान् ॥**
**कालपुच्छान् कुरङ्गांश्च तथैव मृगमातृकान् ।**
**मांसार्थे मांससात्म्यानां ज्वरितानां प्रदापयेत् १५२**

लावानित्यादि । कपिञ्जलो गौरतित्तिरिः, एणः कृष्णमृगः, पृषतश्चित्रमृगः 'चीतल' इति लोके, शरभोऽष्टपादुष्ट्रप्रमाणो महाशृङ्गः, कालपुच्छः स च प्रसिद्धः, कुरङ्गश्चतुःशृङ्गः 'भेदुली' इति लोके । मांसार्थे मांसप्रयोगे, केचिन्मांसार्थे बृंहणार्थे इति व्याख्यानयन्ति, 'मांसं मांसेन वर्धते' इत्युक्तत्वात् ॥ १५१ ॥ १५२ ॥

**सारसक्रौञ्चशिखिनः कुक्कुटांस्तित्तिरींस्तथा ॥**
**गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः १५३**

अतः परं सारसादीनामप्रशस्तत्वं परमतेन दर्शयन्नाह—सारसक्रौञ्चशिखिन इत्यादि । सारसो रक्तचञ्चुकः पक्षिविशेषः, क्रौञ्चः क्रौंचिरिति प्रसिद्धः, शिखी मयूरः, तित्तिरिः कृष्णतित्तिरिः, तित्तिरिशब्द इकारान्तोऽप्यस्ति । यद्यपि मांसवर्गे कुक्कुटतित्तिरी परमुष्णौ दर्शितौ न सारसादयस्तथाप्यत एव विधानात् सारसादयोऽप्युष्णा ज्ञेयाः ॥ १५३ ॥

**ज्वरितानां प्रकोपं तु यदा याति समीरणः ।**
**तदैतेऽपि हि शस्यन्ते मात्राकालोपपादिताः ॥१५४॥**

निषिद्धानामपि सारसादीनामवस्थायां ज्वरे प्रयोगमाह—ज्वरितानामित्यादि ॥ १५४ ॥

**परिषेकावगाहांश्च स्नेहान् संशोधनानि च ।**
**स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषितः ॥ १५५ ॥**
**कषायगुरुरूक्षाणि क्रोधादीनि तथैव च ।**
**सारवन्ति च भोज्यानि वर्जयेत्तरुणज्वरी ॥ १५६ ॥**
**तथैव नवधान्यादिं वर्जयेच्च समासतः ।**

इदानीं नवज्वरे यानि वर्जनीयानि तान्याह—परिषेकेत्यादि । परिषेको धाराप्रसेकः, अवगाहः जलपूर्णकटाहादौ निमज्जनं, स्नेहान् स्नेहपानं, संशोधनानि वमनादीनि, कषायः कषायद्रव्यकृतः क्वाथः, क्रोधादीनीत्यत्र आदिशब्दात् शोकादीनि । सारवन्ति स्निग्धान्यभिष्यन्दीनि च, नवधान्यादिवर्गस्तत्कान्तो वर्णितोपासनीयोक्तः । समासतः संक्षेपतः । यद्यपि परिषेकादिवर्जनमामज्वरलक्षणानन्तरं पठितुमुचितं स्यात्तथापि नवज्वरे भेषजस्यात्यन्तनिषेधज्ञापनार्थं तत्र नोक्तम् । केचिदमुमेव पाठमीदृशं अतः [illegible] षेकान् प्रदेहांश्च साभ्यङ्गान् शोधनानि च । देवदारु, हैमवती वचा [illegible] नि वर्जयेत्तरुणज्वरी ॥ तथैव नव- [illegible] वर्जयेत्' इति । व्याख्यानयन्ति रुद्धमूत्रपुरीषाय गुदे व[illegible] धो बोद्धव्यः । अभ्यङ्गनिषेधश्च वर्तिविषयमाह—[illegible]दीनि चेत्यत्र चकारात् कषायो गृहीतव्यः॥ [illegible] ॥ १५६ ॥

**अनवस्थितदोषाग्नेरेभिः सन्धुक्षितो ज्वरः ॥ १५७ ॥**
**गम्भीरतीक्ष्णवेगत्वं यात्यसाध्यत्वमेव च ॥**

इदानीं नवज्वरे परिषेकादिसेवनात्किं स्यादित्याह—अनवस्थितेत्यादि । अनवस्थितदोषाग्नेः नवज्वरिणः, एभिः परिषेकादिभिः सन्धुक्षितो वृद्धो ज्वरो गम्भीरादिवेगित्वं यातीति पिण्डार्थः । अनवस्थितदोषा विमार्गगाः, वह्निरनवस्थितो वहिर्गमनात् ॥ १५७ ॥—

**शीततोयदिवास्वप्नक्रोधव्यायामयोषितः ॥ १५८ ॥**
**न भजेत ज्वरोत्सृष्टो यावन्नो बलवान् भवेत् ।**
**त्यक्तस्यापि ज्वरेणाशु दुर्बलस्याहितैर्ज्वरः ॥ १५९॥**
**प्रत्यापन्नो दहेद्देहं शुष्कं वृक्षमिवानलः ।**
**तस्मात्कार्यः परीहारो ज्वरमुक्तैर्विरिक्तवत् ॥१६०॥**
**यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ।**

इदानीं ज्वरमुक्तस्य शीततोयादिसेवनात्किं स्यादित्याह—शीतेत्यादि । ज्वरोत्सृष्टो ज्वरविमुक्तः । अहितैः शीततोयादिभिः । प्रत्यापन्नः पुनरागतः । दहेत् विनाशयेत् । यस्मा-

दहितसेवनात्पुनरागतो ज्वरो देहं दहेत्तस्मादहितानां परिहारो ज्वरमुक्तेन पुरुषेण कार्य इति पिण्डार्थः। प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथेति दोषाणामविकृतकार्यकारित्वेन दोषतः प्रकृतिस्थत्वं ज्ञेयं, व्यायामादिसेवनेन च प्राणतः प्रकृतिस्थत्वं ज्ञेयम् ॥ १५८—१६० ॥

**ज्वरे प्रमोहो भवति स्वल्पैरप्यवचेष्टितैः ।**
**निषण्णं भोजयेत्तस्मान्मूत्रोच्चारौ च कारयेत्॥१६१॥**

ज्वरे आयासनिषेधार्थमाह–ज्वरे इत्यादि। ज्वरे ज्वरकर्षिते पुरुषे । प्रमोहो मूर्च्छा । अवचेष्टितैरुत्थानचङ्क्रमणादिभिः॥ १६१ ॥—

**अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु ॥ १६२ ॥**
**शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नरः ।**

गात्रसादोऽङ्गग्लानिः । शान्त इव शान्तो लीनज्वर इत्यर्थः, न तु सर्वथा शान्तज्वरः, यस्मादुपशान्तज्वरे अरोचकादीनामभाव एव । शोध्यः शोधनीयः । अनुबन्धभयात् पुनरुद्भवशङ्कया ॥ १६२ ॥—

**न जातु स्नापयेत् प्राज्ञः सहसा ज्वरकर्शितम् ।**
**तेन सन्दूषितो ह्यस्य पुनरेव भवेज्ज्वरः ॥ १६३ ॥**

अतः परं ज्वरकर्षितस्य स्नाननिषेधमाह—न जातु स्नापयेदित्यादि। जातु कथञ्चन। प्राज्ञो वैद्यः। सहसा शीघ्रं, यावद्बलं न प्राप्नोतीत्यर्थः। तेन स्नानेन ॥ १६३ ॥

**चिकित्सेच्च ज्वरान् सर्वान्निमित्तानां विपर्ययैः ।**
**श्रमक्षयाभिघातोत्थे मूलव्याधिमुपाचरेत् ॥१६४॥**
**स्त्रीणामपप्रजातानां स्तन्यावतरणे च यः ।**
**तत्र संशमनं कुर्याद्यथादोषं विधानवित् ॥ १६५ ॥**

इदानीं संक्षेपतः सर्वज्वरचिकित्सामाह—चिकित्सेदित्यादि । निमित्तानां कारणानां, विपर्ययैः विपरीतैः; यथा—संतर्पणजेऽपतर्पणं, अपतर्पणजे संतर्पणमिति । श्रमक्षयाभिघातोत्थे इत्यादि । मूलव्याधिमित्यत्र व्याधिशब्दो दोषे वर्तते, कारणे कार्योपचारात्; तेन मूलदोषं वायुं, श्रमादिभिर्वातकोपादित्यर्थः । स्त्रीणामित्यादि । अपप्रजाताः पतितगर्भाः स्त्रियः, तासां यो ज्वरः, तथा स्तन्यावतरणे च स्त्रीणां यो ज्वरः, तत्र संशमनं कुर्यादिति पिण्डार्थः। यथादोषमिति यस्य दोषस्य तत्र प्रकोपो भवेत्तस्य प्रत्यनीकं संशमनं कुर्यादिति पिण्डार्थः । संशमनशब्देन पाचनमपि गृहीतम् । केचिदमुं पाठं न पठन्ति; श्रीजेज्जटाचार्यपठितत्वादस्माभिः पठितः ॥ १६४ ॥ १६५ ॥

**अतः संशमनीयानि कषायाणि निबोध मे ।**
**सर्वज्वरेषु देयानि यानि वैद्येन जानता ॥ १६६ ॥**

एवं संक्षेपेण चिकित्सामुपदिश्य अधुना संशमनकषायान् विवक्षुराह—अत इत्यादि । निबोध जानीहि। मे मत्सकाशात् ॥ १६६ ॥—

**पिप्पलीसारिवाद्राक्षाशतपुष्पाहरेणुभिः ।**
**कृतः कषायः सगुडो हन्याच्छ्वसनजं ज्वरम् १६७**

इदानीं प्रथमं वातज्वरे संशमनमाह—पिप्पलीत्यादि। सारिवा उत्पलसारिवा, हरेणुः रेणुका, श्वसनजं वातजं, पिप्पल्यादिद्रव्यपलमुदकस्य षोड़शभिः पलैर्निःक्वाथ्य, चतुर्भागावशिष्टं पलचतुष्टयं गृहीत्वा, गुड़कर्षसंयुक्तं पाययेत्। तथा चोक्तम्,—"भेषजात् षोड़शगुणं जलं, क्वाथ्यं पलं मतम् । चतुर्भागावशेषं तु पेयमेवं सुखार्थिना"—इति । क्वाथ्यद्रव्यस्य यत् पलं प्रमाणं तदुत्तमानां; तथा चोक्तम्,—"उत्तमस्य पलं मानं त्रिभिः कर्षैश्च मध्यमे । जघन्यस्य पलार्धं च स्नेहक्वाथौषधेषु च"—इति । वृद्धवैद्याश्च मध्यमप्रमाणेन अष्टौ शरावानुदकं प्रक्षिप्याष्टभागावशेषितं शरावमेकं गृह्णन्ति, शेषं सममेव व्याख्यानयन्ति; गुडावापमपि वृद्धवैद्या न मन्यन्ते ॥ १६७ ॥

**शृतं शीतकषायं वा गुडूच्याः पेयमेव तु ।**

शृतमित्यादि । शृतमनन्तरोक्तकल्पनया क्वाथीकृतम् । उष्णोदकपाचिताद्द्रव्याद्रात्रिपर्युषिताद्यो रसोऽभिनिर्याति स शीतकषायशब्दवाच्यः । तथाचोक्तं—"द्रव्यादापोत्थितात्तोये प्रतप्ते संस्थितान्निशि । कषायो योऽभिनिर्याति स शीतः समुदाहृतः–"इति । शृतकषायपानं कफानुबन्धवातज्वरे, पित्तानुबन्धे तु शीतकषायपानमिति ॥—

**बलादर्भश्वदंष्ट्राणां कषायं पादशेषितम् ॥ १६८ ॥**
**शर्कराघृतसंयुक्तं पिबेद्वातज्वरापहम् ।**

बलादर्भश्वदंष्ट्राणामित्यादि। श्वदंष्ट्रा गोक्षुरकः,कषायः पूर्वोक्तकल्पनया क्वथितः। शर्कराघृतयोः प्रमाणं कर्षम्॥१६८॥—

**शतपुष्पावचाकुष्ठदेवदारुहरेणुकाः ॥ १६९ ॥**
**कुस्तुम्बुरूणि नलदं मुस्तं चैवाप्सु साधयेत् ।**
**क्षौद्रेण सितया चापि युक्तः क्वाथोऽनिलात्मके१७०**

शतपुष्पेत्यादि । हरेणुका रेणुका, कुस्तुम्बुरु धान्याकं, नलदं उशीरम्[1]। शर्कराक्षौद्रप्रमाणं पूर्ववत् । शतपुष्पादिहरेणुकान्तैरेको योगः परं शर्कराहीनः; कुस्तुम्बुरुप्रभृतिभिश्च द्वितीयः ॥ १६९ ॥ १७० ॥

**द्राक्षागुडूचीकाश्मर्यत्रायमाणाः ससारिवाः ।**
**निःक्वाथ्य सगुडं क्वाथं पिबेद्वातकृते ज्वरे ॥ १७१ ॥**
**गुडूच्याः स्वरसो ग्राह्यः शतावर्याश्च तत्समः ।**
**निहन्यात्सगुडः पीतः सद्योऽनिलकृतं ज्वरम्॥१७२**

द्राक्षागुडूचीत्यादि। काश्मर्यं गम्भारीफलम्। सगुडमिति क्वाथोपरि कर्षप्रमाणस्य गुडस्य पश्चान्निक्षेपः ॥१७१—१७२॥

**घृताभ्यङ्गस्वेदलेपानवस्रासु च योजयेत् ।**

घृतेत्यादि। ननु, यथाप्रतिज्ञं कषायेषु वाच्येषु स्नेहना-

[1] 'मांसी' इति पाठान्तरम् ।

द्युपदेशः कुतोऽभिधीयते? उच्यते, वातज्वरप्रतीकारप्रस्तावात्। अवस्थासु शीतोद्गमादिषु। तत्र जीर्णज्वरे लगते घृताभ्यङ्गः, शीतोद्गमे च स्वेदलेपाविति॥

**श्रीपर्णीचन्दनोशीरपरूषकमधूकजः॥ १७३॥**
**शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरम्।**

पैत्तिकज्वरसंशमनमाह—श्रीपर्णीत्यादि। श्रीपर्णीशब्देन गम्भारीफलं, चन्दनं रक्तचन्दनं, परूषकं स्वनामप्रसिद्धं, मधूको गुडपुष्पस्तस्यापि फलं ग्राह्यम्। यावत्प्रमाणया शर्करया मधुरः क्काथो भवति तावत्येव शर्करा प्रक्षेप्तव्या॥ १७३॥—

**पीतं पित्तज्वरं हन्यात्सारिवाद्यं सशर्करम्॥१७४॥**

पीतं पित्तज्वरमित्यादि। सारिवाद्यं सारिवादिद्रव्यगणजातं कषायकल्पनया निःक्काथ्य कर्षप्रमाणशर्करायुतं पीतं सत् पित्तज्वरं हन्यादिति संबन्धः॥ १७४॥

**सयष्टीमधुकं हन्यात्तथैवोत्पलपूर्वकम्।**

सयष्टीमधुकमित्यादि। उत्पलादिगणोक्तं द्रव्यजातं सयष्टीमधुकं निःक्काथ्य पीतं सत् पित्तज्वरं हन्यादिति संबन्धः। यद्यपि उत्पलादिगणेनैव यष्टीमधुकं प्राप्तं, तथापि पुनः सयष्टीमधुकमिति यदुक्तं तद्यष्टीमधुकस्य भागद्वयप्रतिपादनार्थम्॥—

**शृतं शीतकषायं वा सोत्पलं शर्करायुतम्॥१७५॥**

शृतमित्यादि। शृतं शीतकषायं वेति विकल्पो दाहादितारतम्याद्यपेक्षया। सोत्पलमित्यत्र आदिशब्दो लुप्तो द्रष्टव्यः, तेन उत्पलादिगणसहितं, उत्पलादिगणकृतमित्यर्थः॥ १७५॥

**गुडूचीपद्मरोध्राणां सारिवोत्पलयोस्तथा।**
**शर्करामधुरः क्काथः शीतः पित्तज्वरापहः॥१७६॥**

गुडूचीत्यादि। पद्मं कमलं, उत्पलं ईषन्नीलम्। एतेन सर्व एवानन्तरोक्ता पाक्यकषायाः शीतकषाया वा दोषादिबलं दृष्ट्वा वैद्येन योज्याः॥ १७६॥

**द्राक्षारग्वधयोश्चापि काश्मर्यस्याथवा पुनः।**

इदानीं पित्तज्वरे आवस्थिकं क्रममाह—द्राक्षारग्वधयोरित्यादि। द्राक्षारग्वधयोश्चापीत्येको योगः, काश्मर्यस्याथवेति द्वितीयः, स्वादुतिक्ताकषायाणामिति तृतीयः। आरग्वधः कृतमालफलं, काश्मर्यं गम्भारीफलम्॥—

**स्वादुतिक्तकषायाणां कषायैः शर्करायुतैः॥ १७७॥**
**सुशीतैः शमयेत्तृष्णां प्रवृद्धां दाहमेव च।**

स्वादुतिक्तकषायाणामिति स्वादूनि द्राक्षामधुकसारिवादीनि, तिक्तानि दुरालभापर्पटककिराततिक्तकप्रभृतीनि, कषायाणि पद्मोत्पलप्रभृतीनि, तेषां कषायैः। सुशीतैरिति शीतकषायैरेवेति कार्तिककुण्डाचार्यः, जेज्जटाचार्यस्तु पूर्वं क्कथितैः पश्चाच्छीतीकृतैरिति मन्यते॥ १७७॥—

१ 'यष्टिमधुः' इति पाठान्तरम्।

**शीतं मधुयुतं तोयमाकण्ठाद्वा पिपासितम्॥१७८॥**
**वामयेत्पाययित्वा तु तेन तृष्णा प्रशाम्यति।**

पित्तज्वरेऽपरमथावस्थिकं कार्यमाह—शीतं मधुयुतमित्यादि। यद्यपि संशमनप्रस्तावे वमनं नोपयुक्तं, तथाऽपि प्रवृद्धायां तृष्णायां वमनस्यापि संशमनकार्यकरत्वादुपदेशः॥ १७८॥—

**क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनायुतैः॥ १७९॥**
**क्षौद्रेण युक्तं पिबतो ज्वरदाहौ प्रशाम्यतः।**

क्षीरैरित्यादि। क्षीरिकषायैर्वटादिक्काथैः, विधातव्यं पानलेपनपरिषेकावगाहादिकम्। कार्तिककुण्डस्तु बहिःपरिमार्जनमेवेच्छति। अन्यैश्च शीतलैः काकोल्यादिभिः शीतवीर्यैः, तथा शीतस्पर्शैरपीत्यर्थः॥ १७९॥—

**पद्मकं मधुकं द्राक्षां पुण्डरीकमथोत्पलम्॥ १८०॥**
**यवान् भृङ्गानुशीराणि समङ्गां काश्मरीफलम्।**
**निदध्यादप्सु चालोड्य निशापर्युषितं ततः॥१८१॥**
**क्षौद्रेण युक्तं पिबतो ज्वरदाहौ प्रशाम्यतः॥**

पित्तज्वरावस्थायां शीतकषायमाह—पद्मकं मधुकमित्यादि। समङ्गा अञ्जलिकारिका, वराहक्रान्तामपरे। यद्यपि काश्मरीफलमित्युक्तं तथापि काश्मरीफलमज्जा गृह्यते, अत्यन्तपित्तहरत्वात्। निदध्यात् धारयेत्। अप्स्वालोड्येति अर्धक्कथितेऽम्बुनि प्रतप्ते आलोड्येत्यर्थः; अथवा अनुष्णमपि वार्यौपधान्वितं पर्युषितं शीतकषायं, अविशेषात्। ज्वरदाहौ प्रशाम्यत इति ज्वरश्च दाहश्च, तौ प्रशाम्यतः; एतेन ज्वरसंयुक्तो दाहः शाम्यति, तथा ज्वरं विनाऽपि यो दाहः सोऽपि शाम्यतीत्यर्थः। अन्ये तु 'ज्वरो दाहश्च शाम्यति' इति पठन्ति। तादृशपाठे ज्वरोऽपि शाम्यतीति लभ्यते। अनेन शीतकषायविधानेन अन्यान्यपि शीतकषायाणि कार्याणि। केचित् 'पद्मकं मधुकं द्राक्षां पुण्डरीकमथोत्पलं' इति पाठं न पठन्ति॥ १८०॥ १८१॥—

**जिह्वातालुगलक्लोमशोषे मूर्ध्नि च दापयेत्॥ १८२॥**

पित्तज्वरावस्थायां मूर्धप्रलेपमाह—जिह्वातालुगलक्लोमेत्यादि। क्लोम तिलकं, मूर्ध्नि मस्तके। दापयेत् पद्मकादिशीतकषायस्य जिह्वादिशोषे मस्तकरुजासु चाभ्यन्तरमुपयोगः स्पर्शे चेति व्याख्यानयन्ति। ननु, कषायाधिकारे कथं मूर्ध्नि लेपो गण्डूषश्च निर्दिश्यते? उच्यते—कषायाणीति बाहुल्येन निर्देशात्; यथा छत्रिणः, तेनादोष इति॥ १८२॥

**केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम्।**
**शर्करादाडिमाभ्यां वा द्राक्षाखर्जूरयोस्तथा॥१८३॥**
**वैरस्ये धारयेत्कल्कं गण्डूषं च तथा हितम्॥**

पित्तज्वरे आवस्थिकं क्रममाह—केशरमित्यादि। केशरादिमधुसैन्धवसंयुतमित्यन्त एको योगः; शर्करादिखर्जूरयोस्तथेत्यन्तो द्वितीयः। वैरस्ये मुखवैरस्ये। धारयेत् 'मुखे'

इति शेषः । कल्को दृषदि पेषितः सद्रवः । यथाहितमिति विशिष्टदोषारब्धज्वरप्रत्यनीकमित्यर्थः । केचिज्जिह्वाताल्वादिशोषे मातुलुङ्गकेशरस्यैव मधुसैन्धवयुक्तस्य मूर्ध्नि धारणमिच्छन्ति, तथा द्राक्षाखर्जूरकल्कस्य शर्करादाडिमयुतस्य वैरस्ये आस्ये धारणमिच्छन्ति । यद्यपि मुखवैरस्यं वातलिङ्गं, तथाऽपि पित्तादपि वैरस्यं ज्ञेयं, तन्त्रान्तरोक्तत्वात् । केचित् 'पद्मकं मधुकं द्राक्षां' इत्यादिकं 'गण्डूषं च तथा हितं' इति पर्यन्तं न पठन्ति । स च पठनीयः, सर्वनिबन्धकारैः पठितत्वात् ॥ १८३ ॥—

**सप्तच्छदं गुडूचीं च निम्बं स्फूर्जकमेव च ॥१८४॥**
**क्वाथयित्वा पिबेत् क्वाथं सक्षौद्रं कफजे ज्वरे ।**

कफज्वरसंशमनान्याह—सप्तच्छदमित्यादि । सप्तच्छदः सप्तपर्णः, स्फूर्जको वनकुरण्टकाकारः फणिज्जकापरपर्यायः । क्वाथमित्यत्र कल्कमित्यन्ये । पिबेत्परं शीतं कृतं, मधुन उष्णेन सह निषिद्धत्वात्; मधु चात्र क्वाथ्यद्रव्यचतुर्थांशम् ॥१८४॥—

**कटुत्रिकं नागपुष्पं हरिद्रा कटुरोहिणी ॥ १८५ ॥**
**कौटजं च फलं हन्यात्सेव्यमानं कफज्वरम् ।**

कटुत्रिकमित्यादि । नागपुष्पं नागकेशरम् । सेव्यमानं असकृदुपयोगात् ॥ १८५ ॥

**हरिद्रां चित्रकं निम्बमुशीरातिविषे वचाम् ॥१८६॥**
**कुष्ठमिन्द्रियवान् मूर्वां पटोलं चापि साधितम् ।**
**पिबेन्मरिचसंयुक्तं सक्षौद्रं कफजे ज्वरे ॥ १८७ ॥**

हरिद्रामित्यादि । मूर्वा चोरस्नायुः, सक्षौद्रमित्यत्र सगुडमित्यन्ये पठन्ति ॥ १८६ ॥ १८७ ॥

**सारिवातिविषाकुष्ठपुराख्यैः सदुरालभैः ।**
**मुस्तेन च कृतः क्वाथः पीतो हन्यात् कफज्वरम् ॥**

सारिवातिविषाकुष्ठेत्यादि । पुरो गुग्गुलुः ॥ १८८ ॥

**मुस्तं वृक्षकबीजानि त्रिफला कटुरोहिणी ।**
**परूषकाणि च क्वाथः कफज्वरविनाशनः ॥ १८९ ॥**

मुस्तमित्यादि । वृक्षकबीजानि इन्द्रयवाः ॥ १८९ ॥

**राजवृक्षादिवर्गस्य कषायं मधुसंयुतम् ।**
**कफवातज्वरं हन्याच्छीघ्रं कालेऽवचारितम् ॥१९०॥**

इदानीं यद्यप्युद्देशशास्त्रसामर्थ्यात् कफज्वरचिकित्सानन्तरं सन्निपातज्वरचिकित्सितं पठितुमुचितं, तथापि सन्निपाते द्वन्द्वजचिकित्सा[1] कर्तव्येति दर्शनार्थं पूर्वं द्वन्द्वजचिकित्सितमाह—राजवृक्षादिवर्गस्येत्यादि । राजवृक्षादिः आरग्वधादिः, कालेऽवचारितमौषधकाले दत्तम् । पूर्वोक्तं वातपित्तद्वन्द्वजक्रमं विहाय वातश्लेष्मद्वन्द्वजचिकित्सितं प्रथमं यदत्र कृतं तत् केवलकफज्वरेऽपि वातश्लेष्मद्वन्द्वजचिकित्सितं विधेयमिति दर्शनार्थम् ॥ १९० ॥

१ 'द्वन्द्वेन' इति पाठान्तरम् ।

**नागरं धान्यकं भार्गीमभयां सुरदारु च ।**
**वचां पर्पटकं मुस्तं भूतीकमथ कट्फलम् ॥ १९१ ॥**
**निःक्वाथ्य कफवातोत्थे क्षौद्रहिङ्गुसमन्वितम् ।**
**पातव्यं श्वासकासघ्नं श्लेष्मोत्सेके गलग्रहे ॥१९२॥**
**हिक्कासु कण्ठश्वयथौ शूले हृदयपार्श्वजे ।**

नागरं धान्यकमित्यादि । भूतीकं सुगन्धितृणं, 'रोहिषं' इति प्रसिद्धम् । निःक्वाथ्य पूर्वोक्तया कषायकल्पनया । मधु कर्षप्रमाणम् । हिङ्गु माषकप्रमाणं, "माषिके हिङ्गुसिन्धूत्थे" इति वचनात् । श्लेष्मोत्सेके श्लेष्मवृद्धौ । हृदयपार्श्वजे इत्यत्रापि 'शूले' इति संबध्यते । एष योगः श्वघ्नीसहितः कट्फलादिः । केचिदमुं पाठं देवदार्वभयेत्यादिना पठन्ति ॥ १९१ ॥ १९२ ॥

**बलापटोलत्रिफलायष्ट्याह्वानां वृषस्य च ॥ १९३ ॥**
**क्वाथो मधुयुतः पीतो हन्ति पित्तकफज्वरम् ।**
**कटुकाविजयाद्राक्षामुस्तपर्पटकैः कृतः ॥ १९४ ॥**
**कषायो नाशयेत्पीतः श्लेष्मपित्तभवं ज्वरम् ।**
**भार्गीवचापर्पटकधान्यहिङ्ग्वभयाघनैः ॥ १९५ ॥**
**काश्मर्यनागरैः क्वाथः सक्षौद्रः श्लेष्मपित्तजे ।**
**सशर्करामक्षमात्रां कटुकामुष्णवारिणा ॥ १९६ ॥**
**पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ।**

बलापटोलत्रिफलेत्यादि । विजया हरीतकी । भार्गी वचेत्यादि । अक्षमात्रां कर्षप्रमाणाम् ॥ १९३—१९६ ॥

**किराततिक्तममृतं द्राक्षामामलकं शठीम् ॥ १९७ ॥**
**निःक्वाथ्य वातपित्तोत्थे तं क्वाथं सगुडं पिबेत् ।**
**रास्ना वृषोऽथ त्रिफला राजवृक्षफलैः सह ॥१९८॥**
**कषायः साधितः पीतो वातपित्तज्वरं जयेत् ।**

किराततिक्तमित्यादि । जेज्जटाचार्यस्तु सन्निपातज्वरचिकित्सां पठित्वा द्वन्द्वजचिकित्सां पठति, दोषैः पृथक् समस्तैश्च द्वन्द्वैरागन्तुभिस्तथेत्युक्तत्वात् ॥ १९७ ॥ १९८ ॥—

**सर्वदोषसमुत्थे तु संसृष्टानवचारयेत् ॥ १९९ ॥**

इदानीं समसन्निपातज्वरचिकित्सामाह—सर्वदोषेत्यादि । सर्वदोषसमुत्थे समसन्निपाते । संसृष्टानवचारयेदिति वातादिविहितान् कषायानेकीकृत्य प्रयुञ्जीतेत्यर्थः । अस्याग्रे केचित् 'वर्धनैर्वापि हीनैश्च' इत्यादिकं पाठं पठन्ति, स च वर्तमानेषु पुस्तकेषु न दृश्यते अतो न लिखितः ॥ १९९ ॥

**यथादोषोच्छ्रयं चापि ज्वरान् सर्वानुपाचरेत् ।**

विषमसन्निपातचिकित्सामाह—यथादोषोच्छ्रयमित्यादि । यथादोषोच्छ्रयमिति यस्य दोषस्य उच्छ्रयो भवति तद्दोषप्रतीकारेणेत्यर्थः । सर्वान् विषमसन्निपातज्वरान्, तथा सामान्येन सर्वेषामेव ज्वराणां चिकित्सितं, आगन्तूनामपि चिकित्सितम् ॥—

**वृश्चीकबिल्ववर्षाभ्वः पयश्चोदकमेव च ॥ २०० ॥**
**पचेत् क्षीरावशिष्टं तु तद्धि सर्वज्वरापहम् ।**

सामान्यसन्निपातचिकित्सां च निर्दिदिक्षुरादौ क्षीरस्य जीवनतया क्षीरप्रयोगमाह—वृश्चीकेत्यादि । वृश्चीकः श्वेतपुनर्नवा, वर्षाभूः रक्तपुनर्नवा । पचेदिति "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषं कर्तव्यं क्षीरपाके त्वयं विधिः"—इति परिभाषया । केचिदितरश्लोकोक्तमेवोदकप्रमाणमिच्छन्ति । अन्ये एनं योगद्वयं मन्यन्ते, तन्त्रान्तरोक्तत्वात् । वृश्चीकबिल्वमिलितो योगः, वर्षाभ्वादिर्द्वितीयः ॥ २०० ॥—

**उदकांशास्त्रयः क्षीरं शिंशपासारसंयुतम् ॥ २०१ ॥**
**तत् क्षीरशेषं क्वथितं पेयं सर्वज्वरापहम् ।**

सन्निपातेऽपरमपि क्षीरयोगमाह—उदकांशास्त्रय इत्यादि । उदकांशास्त्रयः क्षीरांशापेक्षया, क्षीरस्याष्टौ पलानि, शिंशपासारः पलप्रमितः ॥ २०१ ॥—

**नलवेतसयोर्मूले मूर्वायां देवदारुणि ॥ २०२ ॥**
**कषायं विधिवत् कृत्वा पेयमेतज्ज्वरापहम् ।**
**त्रैफलो वा ससर्पिष्कः क्वाथः पेयस्त्रिदोषजे॥२०३॥**

नलवेतसयोरित्यादि । कषायं विधिवत् कृत्वेति पूर्वोक्तकषायकल्पनया । क्षीरसाध्यायामवस्थायामयमपि योगो देयः । केचिन्नलवेतसादियोगं न पठन्ति, स च पठनीयः, सर्वनिबन्धकारैः पठितत्वात् ॥ 'हरिद्रा भद्रमुस्तं च त्रिफला कटुरोहिणी । पिचुमन्दः पटोली च देवदारु निदिग्धिका ॥ एषां कषायः पीतस्तु सन्निपातज्वरं जयेत् । अविपक्तिं प्रसेकं च शोफं कासमरोचकम् ॥'—इति क्वचिदधिकः पाठः ॥ २०२ ॥ २०३ ॥

**अनन्तां बालकं मुस्तां नागरं कटुरोहिणीम् ।**
**सुखाम्बुना प्रागुदयात्पाययेताक्षसम्मितम् ॥२०४॥**
**एष सर्वज्वरान् हन्ति दीपयत्याशु चानलम् ।**

अनन्तामित्यादि । अनन्ता दुरालभा । सुखाम्बुना अत्रोष्णोदकेन[1] पलप्रमितेन । प्रागुदयादिति अत्र उदयः सूर्यस्य बोद्धव्यः, न तु ज्वरस्य; तेन सूर्योदयात् पूर्वं देयं, एतेन प्रातरेव । अक्षसंमितं कर्षसमम् । 'सुखाम्बुना प्रागुदयात्' इत्यत्र 'पिष्ट्वा सुखाम्बुना कल्कं' इति केचित् पठन्ति ॥२०४॥

**द्रव्याणि दीपनीयानि तथा वैरेचनानि च ॥२०५॥**
**एकशो वा द्विशो वापि ज्वरघ्नानि प्रयोजयेत् ।**

इदानीमुक्तानुक्तसंग्रहार्थमाह—द्रव्याणि दीपनीयानीत्यादि । दीपनीयानि पिप्पल्यादीनि, वैरेचनानि त्रिवृदभयादीनि, ज्वरघ्नानि जीर्णज्वरघ्नानि[2], प्रयोजयेत् दोषबलमपेक्ष्य सन्निपातजीर्णज्वरावस्थायामेकशो द्विशो वा दापयेत् । ये त्वेवं वदन्ति—पिप्पल्यादीनि प्रायशः कटुकानि, तानि च ज्वरे न प्रायोगिकाणि, उष्णवीर्यत्वात्; विरेचनान्यपि गुरुत्वादयौगिकानि; तेषां सम्यक् शास्त्रावबोधो नास्ति, पिप्पल्यादीनां ज्वरे पठितत्वात् ॥ २०५ ॥

**सर्पिर्मध्वभयातैललेहोऽयं सर्वजं ज्वरम् ॥ २०६ ॥**
**शान्तिं नयेत्त्रिवृच्चापि सक्षौद्रा प्रबलं ज्वरम् ।**

सर्पिरित्यादि । प्रबलं दाहादिसमन्वितम् । लेहावस्था च तन्त्रान्तरात् ज्ञेया । तथाच तन्त्रान्तरं—"पथ्यातैलघृतक्षौद्रैर्लेहो दाहश्रमज्वरान् । कासासृक्पित्तवीसर्पश्वासान् हन्ति वमीरपि"—इति । 'सक्षौद्रा विषमज्वरे' इति केचित् पठन्ति । तन्न, विषमज्वरस्य परतोऽभिधास्यमानत्वात् ॥ २०६ ॥—

**विषमज्वरेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम्॥२०७॥**

इदानीं विषमज्वरचिकित्सामाह—विषमेत्यादि । ऊर्ध्वशोधनं वमनं, तच्च कफाधिके विषमज्वरे । अधःशोधनं विरेचनं, तच्च पित्ताधिके । एतेन सर्वेष्वेव[1] विषमज्वरेषु कफपित्ताधिकतया वमनविरेचने प्रयोक्तव्ये इत्युक्तम् । अन्ये तु विषमज्वरेष्वित्यत्र यद्यपि विषमज्वरशब्देन संततं विहायान्ये विषमज्वराः प्रोक्ताः, तथाप्यत्र तृतीयचतुर्थकौ ग्राह्यौ, यतस्तयोरेव साधारणं वातादिहरमास्थापनविरेचनवमनादिकं युक्तमिति व्याचक्षते ॥ २०७ ॥

**घृतं प्लीहोदरोक्तं वा निहन्याद्विषमज्वरम् ॥**

घृतमित्यादि । प्लीहोदरोक्तं घृतं षट्पलं, तच्च कफोत्तरे विषमज्वरे देयं, तीक्ष्णत्वात् ॥—

**गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्दितः ॥ २०८ ॥**

गुडप्रगाढामित्यादि । गुडप्रगाढां किंचिदधिककर्षप्रतिवापगुडयुतां त्रिफलां पिबेत्, 'क्वथितां' इति शेषः । विषमार्दितः विषमज्वरपीडितः ॥ २०८ ॥

**गुडूचीनिम्बधात्रीणां कषायं वा समाक्षिकम् ।**

गुडूचीनिम्बधात्रीणामित्यादि । धात्री आमलकी । एष योगश्चतुर्थज्वरघ्नः, समानतन्त्रोक्तत्वात् ॥

**प्रातः प्रातः ससर्पिष्कं रसोनमुपयोजयेत् ॥२०९॥**

प्रातः प्रातः ससर्पिष्कमित्यादि ॥ २०९ ॥

**त्रिचतुर्भिः पिबेत् क्वाथं पञ्चभिर्वा समन्वितैः ।**
**मधुकस्य पटोलस्य रोहिण्या मुस्तकस्य च ॥२१०॥**
**हरीतक्याश्च सर्वोऽयं त्रिविधो योग इष्यते ।**

मधुकादीनां हरीतक्यन्तानां द्रव्याणां त्रिभिः, चतुर्भिः, पञ्चभिर्वा द्रव्यैः समन्वितैः कृतं क्वाथं पिबेदिति संबन्धः । मधुकं यष्टीमधु, रोहिणी कटुका, मुस्तं प्रसिद्धम् । सर्वोऽयं त्रिविधो योग इष्यते अयं मधुकादियोगस्त्रिप्रकारो वक्ष्यते । कथं? मधुकपटोलरोहिणीभिस्त्रिभिरेको योगो, मधुकपटोलरोहिणीमुस्तकैश्चतुर्भिः द्वितीयः, मधुकपटोलरोहिणीमुस्तकहरीतकीभिः

१ 'प्रागुक्तोष्णोदकेन' इति पाठान्तरम् ।
२ 'दीर्घज्वरघ्नानि' इति पाठान्तरम् ।

१ 'सर्वेष्वेव' इति पाठान्तरम् ।

पञ्चभिस्तृतीयः, एवं त्रयो योगाः। केचिन्मुस्तकस्थाने 'वत्सकं' पठित्वा अन्यथा व्याख्यानयन्ति। तद्यथा,-मधुकादिहरीतकीपर्यन्तानां द्रव्याणां रसभेदवत् त्रियोगचतुष्कसंयोगपञ्चसंयोगसंस्कृतं क्वाथं पिबेत् । तद्यथा,-मधुकपटोलरोहिणीभिः, मधुकपटोलवत्सकैः, मधुकपटोलहरीतकीभिः, मधुकरोहिणीवत्सकैः, मधुकरोहिणीहरीतकीभिः, मधुकवत्सकहरीतकीभिः, पटोलरोहिणीवत्सकैः, पटोलवत्सकहरीतकीभिः, पटोलरोहिणीहरीतकीभिः, रोहिणीवत्सकहरीतकीभिः, एवं त्रिभिर्द्रव्यैर्दश विकल्पा भवन्ति; मधुकपटोलरोहिणीवत्सकैः, मधुकपटोलरोहिणीहरीतकीभिः, मधुकरोहिणीवत्सकहरीतकीभिः, मधुकपटोलवत्सकहरीतकीभिः, पटोलरोहिणीवत्सकहरीतकीभिः, एवं चतुर्भिः पञ्च विकल्पाः; मधुकरोहिणीवत्सकपटोलकहरीतकीभिः पञ्चभिरेकः; इत्थं त्रिप्रकारस्यापि योगस्य षोड़श विकल्पा भवन्ति । ते च सूक्ष्ममतिना वैद्येन दोषापेक्षया प्रयोक्तव्याः ॥ २१० ॥—

**सर्पिःक्षीरसिताक्षौद्रमागधीर्वा यथाबलम् ॥२११॥**
**दशमूलीकषायेण मागधीर्वा प्रयोजयेत् ।**

सर्पिःक्षीरसिताक्षौद्रेत्यादि । सर्पिःप्रभृतीनां समुदितानामयं प्रयोगो विषमज्वरे देयः। दशमूलीकषायेण पातव्यकषायकल्पनया क्वथितेन, कर्षप्रमाणां पिप्पलीं पिबेत्, यस्मादयं पिप्पलीवर्धमानो न भवति ॥ २११ ॥—

**पिप्पलीवर्धमानं वा पिबेत् क्षीररसाशनः ॥ २१२ ॥**

वर्धमानपिप्पलीप्रयोगमाह—पिप्पलीवर्धमानमित्यादि । वर्धमानपिप्पलीप्रयोगो वातव्याधिचिकित्सितमवलोक्य कर्तव्यः ॥ २१२ ॥

**ताम्रचूडस्य मांसेन पिबेद्वा मद्यमुत्तमम् ।**

ताम्रचूडस्येत्यादि । ताम्रचूडः कुक्कुटः । मद्यमुत्तमं मार्द्वीकं सस्यकं च । जेज्जटार्यस्तु मार्द्वीकस्थाने माध्वीकमाह । कुक्कुटमांसेन सह उत्तममद्यपानं वातप्रधानस्य मन्दाग्नेश्च । एतानि वक्ष्यमाणानि पूर्वोक्तानि च यद्यपि विषमज्वरे पठितानि, तथापि जीर्णज्वरेऽपि देयानि ॥—

**कोलाग्निमन्थत्रिफलाक्वाथे दध्ना घृतं पचेत्॥२१३॥**
**तिल्वकावापमेतद्धि विषमज्वरनाशनम् ।**

कोलाग्निमन्थत्रिफलेत्यादि । कोलं पञ्चकोलं, तिल्वकः पट्टिकारोध्रः । कल्पनामाह—पञ्चकोलादिद्रव्याणां पलशतं, पानीयपलानि द्वादशाधिकानि पञ्चशतानि, एकीकृत्य विपचेत्। यावच्चतुर्थांशमष्टाविंशत्यधिकशतं निष्पद्यते, तेन क्वाथेन चतुर्गुणेन तथा चतुर्गुणेन च दध्ना द्वात्रिंशत्पलप्रमितं घृतं अष्टपलप्रमाणं तिल्वकावापं दत्त्वा पचेत् । अनेन विधिनाऽनुक्तप्रमाणानि तैलघृतानि पाचनीयानि । ब्रह्मदेवाचार्यस्तु पञ्चकोलादीनां कषायत्रयेण पृथक् स्नेहचतुर्गुणेन तथा चतुर्थेन दध्ना स्नेहचतुर्गुणेन च घृतं तिल्वकावापं साधयति; तच्च प्रमादव्याख्यानं, पञ्चकोलादिकषायत्रयस्य जेज्जटादिष्वनुक्तत्वात् ॥ २१३ ॥—

**पिप्पल्यतिविषाद्राक्षासारिवाबिल्वचन्दनैः ॥२१४॥**
**कटुकेन्द्रयवोशीरसिंहीतामलकीघनैः ।**
**त्रायमाणास्थिराधात्रीविश्वभेषजचित्रकैः ॥२१५॥**
**पक्वमेतैर्घृतं पीतं विजित्य विषमाग्निताम् ।**
**जीर्णज्वरशिरःशूलगुल्मोदरहलीमकान् ॥ २१६ ॥**
**क्षयकासं ससंतापं पार्श्वशूलानपास्यति ।**

पिप्पल्यतिविषेत्यादि । सारिवा उत्पलसारिवा सुगन्धमूला, सिंही वृहत्कण्टकारिका, तामलकी दरफलिका भूम्यामलकीति लोके, स्थिरा शालपर्णी, तेषां कल्ककषायाभ्यां घृतं साधयेत् ॥ २१४—२१६ ॥—

**गुडूचीत्रिफलावासात्रायमाणायवासकैः ॥ २१७ ॥**
**कथितैर्विधिवत्पक्वमेतैः कल्कीकृतैः समैः ।**
**द्राक्षामागधिकाम्भोदनागरोत्पलचन्दनैः ॥ २१८ ॥**
**पीतं सर्पिः क्षयश्वासकासाजीर्णज्वरान् जयेत् ।**

गुडूचीत्रिफलेत्यादि । एभिः द्राक्षादिभिः, कलशीत्यादि ॥ २१७ ॥ २१८ ॥—

**कलशीबृहतीद्राक्षात्रायन्तीनिम्बगोक्षुरैः ॥ २१९ ॥**
**बलापर्पटकाम्भोदशालपर्णीयवासकैः ।**
**पक्वमुत्क्वथितैः सर्पिः कल्कैरेभिः समन्वितम्॥२२०॥**
**शठीतामलकीभार्गीमेदामलकपौष्करैः ।**
**क्षीरद्विगुणसंयुक्तं जीर्णज्वरमपोहति ॥ २२१ ॥**
**शिरःपार्श्वरुजाकासक्षयप्रशमनं परम् ।**

कलशी पृश्निपर्णी, त्रायन्ती, त्रायमाणा अम्भोदो मुस्ता । एभिः शठ्यादिभिः । अनुक्तमपि चतुर्गुणं जलं देयं, तद्विना पाको न स्यादिति वृद्धभिषजः ॥ २१९—२२१ ॥—

**पटोलीपर्पटारिष्टगुडूचीत्रिफलावृषैः ॥ २२२ ॥**
**कटुकाम्बुदभूनिम्बयासयष्ट्याह्वचन्दनैः ।**
**दार्वीशक्रयवोशीरत्रायमाणाकणोत्पलैः ॥ २२३ ॥**
**धात्रीभृङ्गरजोभीरुकाकमाचीरसैर्घृतम् ।**
**सिद्धमाश्वपचीकुष्ठज्वरशुक्रार्जुनव्रणान् ॥ २२४ ॥**
**हन्यान्नयनवदनकर्णजान् घ्राणजान् गदान् ।**

पटोलीपर्पटारिष्टेत्यादि । पटोल्यादीनामुत्पलान्तानां कल्कैः, धात्र्यादीनां स्वरसैश्च घृतं पचनीयम् । अरिष्टो निम्बः, वृषो वासकः, अम्बुदो मुस्तं, भूनिम्बं किराततिक्तकः, यासो दुरालभा, शक्रयवः इन्द्रयवः, उत्पलं नीलोत्पलम् ॥ २२२—२२४ ॥—

**विडङ्गत्रिफलामुस्तमञ्जिष्ठादाडिमोत्पलैः ॥ २२५ ॥**
**प्रियङ्ग्वेलैलवालूकचन्दनामरदारुभिः ।**
**बर्हिष्ठकुष्ठरजनीपर्णिनीसारिवाद्वयैः ॥ २२६ ॥**
**हरेणुकात्रिवृद्दन्तीवचातालीशकेसरैः ।**
**द्विक्षीरं विपचेत्सर्पिर्मालतीकुसुमैः सह ॥२२७॥**

**जीर्णज्वरश्वासकासगुल्मोन्मादगरापहम्।**
**एतत्कल्याणकं नाम सर्पिर्माङ्गल्यमुत्तमम्॥ २२८॥**
**अलक्ष्मीग्रहरक्षोऽग्निमान्द्यापस्मारपापनुत्।**
**शस्यते नष्टशुक्राणां वन्ध्यानां गर्भदं परम् ॥२२९॥**
**मेध्यं चक्षुष्यमायुष्यं रेतोमार्गरुजापहम्।**

विड़ङ्गत्रिफलामुस्तमञ्जिष्ठेत्यादि। उत्पलं नीलोत्पलं, एला सूक्ष्मैला, एलवालुकं कुष्ठगन्धिकं, चन्दनं रक्तचन्दनं, अमरदारुः देवदारुः, बर्हिष्ठं वालुकं, रजनीद्वयं पिण्डहरिद्रा दारुहरिद्रा च, पर्णिनीद्वयं शालिपर्णी पृश्निपर्णी च, सारिवाद्वयं सारिवा उत्पलसारिवा च। विड़ङ्गादिद्रव्यकल्कमष्टपलप्रमाणं गव्यघृतप्रस्थं चोदकस्य चतुर्भिः प्रस्थैः साधयेत्। कार्तिककुण्डस्तु इदं घृतमन्यथा पठति स चादर्शनान्न लिखितः ॥ २२५—२२९ ॥—

**एतैरेव यथाद्रव्यैः सर्वगन्धैश्च साधितम्॥ २३०॥**
**कपिलाया घृतप्रस्थं सुवर्णमणिसंयुतम्।**
**तत्क्षीरेण सहैकध्यं प्रसाध्य कुसुमैरिमैः ॥२३१॥**
**सुमनश्चम्पकाशोकशिरीषकुसुमैर्वृतम्।**
**तथा नलदपद्मानां केशरैर्दाडिमस्य च॥ २३२॥**
**तिथौ प्रशस्ते नक्षत्रे साधकस्यातुरस्य च।**
**कृतं मनुष्यदेवाय ब्राह्मणैरभिमन्त्रितम्॥ २३३॥**
**दत्तं सर्वज्वरान् हन्ति महाकल्याणकं घृतम्॥२३४॥**
**दर्शनस्पर्शनाभ्यां तु सर्वरोगहरं शिवम्।**
**अधृष्यः सर्वभूतानां वलीपलितवर्जितः ॥२३५॥**
**अस्याभ्यासाद्घृतस्येह जीवेद्वर्षशतत्रयम्।**

महाकल्याणकमाह—एतैरेव यथा द्रव्यैरित्यादि। एतैर्द्रव्यैस्तथा सर्वगन्धैश्च कपिलाघृतप्रस्थं सुवर्णादियुक्तं तत्साधितं सर्पिरेतैः सुमनादिजैः कुसुमैः कपिलाक्षीरेण सहैकध्यं कृतं पुनः प्रसाध्य ब्राह्मणैरभिमन्त्रितं वैद्यातुरयोः प्रशस्ततिथ्यादौ मनुष्यदेवाय राज्ञे दत्तं इदं कल्याणकं घृतं सर्वज्वरान् हन्तीति पिण्डार्थः। एतैः कल्याणकोक्तैः विड़ङ्गादिभिः, सर्वगन्धैः एलादिपठितैः, मणिभिः स्फटिकादिभिः। तत्क्षीरेण कपिलाक्षीरेण। सुमना जाती, वृतं युक्तं, नलदं मांसी, पद्मं लोहितपद्मं, साधकस्य वैद्यस्य, मनुष्यदेवाय नृपतये, अधृष्योऽजेयः। एतद्घृतं पाकद्वयसाधितं बोद्धव्यम्॥ २३०—२३५ ॥—

**गव्यं दधि च मूत्रं च क्षीरं सर्पिः शकृद्रसः॥२३६॥**
**समभागानि पाच्यानि कल्कांश्चैतान् समावपेत्।**
**त्रिफलां चित्रकं मुस्तं हरिद्रे द्वे विषां वचाम् ॥२३७॥**
**विडङ्गं त्र्यूषणं चव्यं सुरदारु तथैव च।**
**पञ्चगव्यमिदं पानाद्विषमज्वरनाशनम्॥ २३८॥**

गव्यमित्यादि। शकृद्रसो गोपुरीषोत्थरसः। पाच्यानि पचनीयानि। कल्कप्रमाणमत्र स्नेहचतुर्थांशम्॥ २३६—२३८॥

**पञ्चगव्यमृते गर्भात्पाच्यमन्यत् वृषेण च।**

अगर्भपञ्चगव्यमाह—पञ्चगव्यमृतेगर्भादित्यादि। ऋते गर्भादिति द्वितीयं पञ्चगव्यं कल्कं विना पचनीयं, एतेनैतदुक्तं भवति—पूर्वं पञ्चगव्यं स कल्कं, एतच्च द्वितीयमकल्कं; फलं च तुल्यम्॥—

**बलयाऽथ परं पाच्यं गुडूच्या तद्वदेव तु ॥२३९॥**
**जीर्णज्वरे च शोफे च पाण्डुरोगे च पूजितम्।**

इदानीं पञ्चगव्योक्तत्रिफलादिकल्केन वृषादिपृथक्स्वरसत्रयेण घृतत्रयस्य साधनं निर्दिशन्नाह—वृषेण चेत्यादि। तद्वदिति पूर्वोक्तकल्पनयेत्यर्थः। तद्वच्छब्दो घृतत्रयेऽपि सम्बध्यते॥ २३९॥—

**एतेनैव तु कल्पेन घृतं पञ्चाविकं पचेत्।**
**पञ्चाजं पञ्चमहिषं चतुरुष्ट्रमथापि वा॥ २४०॥**

इदानीं पञ्चगव्योक्तविधिना पञ्चाविकादीनि घृतानि पचनीयानीति दर्शयन्नाह—एतेनैव तु कल्पेनेत्यादि। अनेनैव कल्पेन पूर्वोक्तपञ्चगव्यविधिना, चतुरुष्ट्रं शकृद्रसवर्जनेन॥ २४०॥

**त्रिफलोशीरसम्पाककटुकातिविषान्वितैः।**
**शतावरीसप्तपर्णगुडूचीरजनीद्वयैः॥ २४१॥**
**चित्रकत्रिवृतामूर्वापटोलारिष्टवालकैः।**
**किराततिक्तकवचाविशालापद्मकोत्पलैः॥ २४२॥**
**सारिवाद्वययष्ट्याह्वविकारक्तचन्दनैः।**
**दुरालभापर्पटकत्रायमाणाटरूषकैः॥ २४३॥**
**रास्नाकुङ्कुममञ्जिष्ठामागधीनागरैस्तथा।**
**धात्रीफलरसैः सम्यग्द्विगुणैः साधितं हविः॥२४४॥**
**परिसर्पज्वरश्वासगुल्मकुष्ठनिवारणम्।**
**पाण्डुप्लीहाग्निमान्द्येभ्य एतदेव परं हितम्॥ २४५॥**
**पटोलकटुकादार्वीनिम्बवासाफलत्रिकम्।**
**दुरालभापर्पटकत्रायमाणाः पलोन्मिताः॥ २४६॥**
**प्रस्थमामलकानां च क्वाथयेत्सलिलार्मणे।**
**तेन पादावशेषेण घृतप्रस्थं विपाचयेत्॥ २४७॥**
**रक्तपित्तकफस्वेदक्लेदपूयाङ्गशोषणम्।**
**कामलाज्वरवीसर्पगण्डमालाहरं परम्॥ २४८॥**

त्रिफलेत्यादि॥ २४१—२४८॥

**शृतं पयः शर्करा च पिप्पल्यो मधुसर्पिषी।**
**पञ्चसारमिदं पेयं मथितं विषमज्वरे॥ २४९॥**
**क्षतक्षीणे क्षये श्वासे हृद्रोगे चैतदिष्यते॥ २५०॥**

पञ्चसारमाह—शृतं पय इत्यादि। शृतं पयः क्वथितं दुग्धं, मथितं 'हस्तेन' इति शेषः॥ २४९॥ २५०॥

**लाक्षाविश्वनिशामूर्वामञ्जिष्ठास्वर्जिकामयैः।**
**षड्गुणेन च तक्रेण सिद्धं तैलं ज्वरान्तकृत्॥२५१॥**

इदानीमन्तःपरिमार्जनमभिधाय बहिःपरिमार्जनार्थं तैलमाह—लाक्षेत्यादि। विश्वं शुण्ठी, निशा हरिद्रा, मूर्वा चोर-

स्नायुः, आमयं कुष्ठम् । लाक्षादिकल्कस्याष्टौ पलानि, तैलस्य द्वात्रिंशत्पलानि, तैलात् षड्गुणेन तक्रेण तैलं साधनीयम् । ज्वरान्तकृत् शीतपूर्वज्वरविनाशकारीत्यर्थः[1] ॥ २५१ ॥

**क्षीरिवृक्षासनारिष्टजम्बूसप्तच्छदार्जुनैः ।**
**शिरीषखदिरास्फोटामृतवल्ल्यब्दरूषकैः ॥ २५२ ॥**
**कटुकापर्पटोशीरवचातेजोवतीघनैः ।**
**साधितं तैलमभ्यङ्गादाशु जीर्णज्वरापहम् ॥ २५३ ॥**

क्षीरिवृक्षेत्यादि । क्षीरिवृक्षा न्यग्रोधादयः, असनो बीजकः, अरिष्टो निम्बः, सप्तच्छदः सप्तपर्णः, अर्जुनः ककुभः, आस्फोता सारिवा अर्को वा, तेजोवती काकमर्दनिका । क्षीरिवृक्षादिकल्केनाष्टपलमितेन तैलप्रस्थं चतुर्गुणजलेन साधयेत् ॥ २५२—२५३ ॥

**निर्विषैर्भुजगैर्नागैर्विनीतैः कृततस्करैः ।**
**त्रासयेदागमे चैनं तदहर्भोजयेन्न च ॥ २५४ ॥**
**अत्यभिष्यन्दिगुरुभिर्वामयेद्वा पुनः पुनः ।**
**मद्यं तीक्ष्णं पाययेत घृतं वा ज्वरनाशनम् ॥ २५५ ॥**
**पुराणं वा घृतं काममुदारं वा विरेचनम् ।**
**निरूहयेद्वा मतिमान् सुस्विन्नं तदहर्नरम् ॥ २५६ ॥**

इदानीं विषमज्वराणां विशिष्टावस्थायां भूताभिषङ्गजादीनां वा विषमज्वराणां चिकित्सामाह—निर्विषैरित्यादि । निर्विषैर्भुजगैः डुण्डुभाहिपताकाप्रभृतिभिः, नागैः हस्तिभिः, विनीतैः हस्तिशिक्षाविद्भिर्विनम्रीकृतैः, कृततस्करैः मिथ्याध्यारोपितचौरैः । आगमे ज्वरागमकाले, यस्मात् ज्वरारम्भोन्मुखस्य दोषस्य निर्विषभुजगादिभयात् क्षुभितेन वायुना विक्षेपणं क्रियते तस्मात् ज्वरानुत्पादो ज्वरकालविस्मारकत्वात् । तदहरिति ज्वरागमनदिने, न भोजयेन्नत्वग्रेऽश्नीयात्, शेषदोषक्षपणार्थम् । अत्यभिष्यन्दिगुरुभिरित्यादि । अत्यभिष्यन्दिगुरुभिः क्षीरदधियवागूभिः मदनफलसंस्कृताभिर्वामयेत्, तदहरिति शेषः । अत्यभिष्यन्द्यादिभिर्यद्वमनं तद्बलरक्षणार्थम् । मद्यं तीक्ष्णमित्यादि । घृतं वा ज्वरनाशनं षट्पलं; यद्येवं 'घृतं प्लीहोदरोक्तं यत्' इत्यनेन तस्योक्तेः कुतः पुनरभिधानं? उच्यते, कामं तत्पानस्य तदहः प्रतिपादनार्थम् । पुराणं घृतं औषधार्थे संस्कृतं पाययेत्, कामं स्वेच्छया, उदारं विरेचनं अपीडाकरं, नत्वप्रशिथिलाशयस्य विरेचनार्हस्य विधेयम् । तं विरेचनार्थं पुनर्निरूहयेत् । तदहरिति सर्वत्र संबन्धनीयम् ॥ २५४—२५६ ॥

**अजाव्योश्चर्मरोमाणि वचा कुष्ठं पलङ्कषा ।**
**निम्बपत्रं मधुयुतं धूपनं तस्य दापयेत् ॥ २५७ ॥**

विषमज्वरे धूपनमाह—अजेत्यादि । अजा छागी, अविर्मेषी, पलङ्कषा गुग्गुलुः । विषमज्वरोक्तोऽप्ययं योगो जीर्णज्वरे भूतविषमज्वरे च प्रयोक्तव्यः, समानतन्त्रोक्तत्वात् ॥ २५७ ॥

**वैडालं वा शकृद्योज्यं वेपमानस्य धूपनम् ।**

अवस्थाविशेषेण धूपनमाह—वैडालमित्यादि । वैडालं शकृत् बिडालविष्ठा ।

**पिप्पली सैन्धवं तैलं नेपाली चेक्षणाञ्जनम् ॥ २५८ ॥**

विषमज्वरेऽञ्जनमाह—पिप्पलीत्यादि । यद्यपि अञ्जनमित्युक्तेऽपि नेत्राञ्जनं प्राप्तं, तथाप्यत्रेक्षणाञ्जनमिति यदुक्तं तदभ्यङ्गवाचिनोऽञ्जनशब्दस्य निषेधार्थम् ॥ २५८ ॥

**उदरोक्तानि सर्पींषि यान्युक्तानि पुरा मया ।**
**कल्पोक्तं चाजितं सर्पिः सेव्यमानं ज्वरं जयेत् २५९**

इदानीं विषमज्वरेऽतिदेशेन चिकित्सितमाह—उदरोक्तानि सर्पींषीत्यादि । कल्पोक्तं कल्पस्थानोक्तम् । अजितं अजेयाख्यम् । तत्र व्याख्यातम् । केचित् 'यान्युक्तानि पुरा मया' इत्यत्र 'कुर्यात्सर्वगणेषु च' इति पठन्ति, सर्वज्वरसमूहेष्विति च व्याख्यानयन्ति । अपरे तु 'सर्वगदेषु च' इति पठन्ति ॥ २५९ ॥

**भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः ।**
**जयेद्भूताभिषङ्गोत्थं विज्ञानाद्यैश्च मानसम् ॥ २६० ॥**

भूतज्वरे चिकित्सितमतिदेशेनाह—भूतविद्यासमुद्दिष्टैरित्यादि । बन्धः समन्ततो रज्ज्वादिभिः । आवेशनं समन्त्रसर्षपादिताडनं, पूजनं बल्युपहारस्तुत्यादिभिः । यद्यपि निदानप्रस्तावे पूर्वं विषमादिज्वरस्योपदेशः पश्चाद्भूताभिषङ्गजस्य, तथाप्यत्र पूर्वं यद्भूताभिषङ्गज्वरचिकित्सितमुक्तं तद्भूतविद्यासमुद्दिष्टस्य विधेर्विषमज्वरेऽपि हितत्वं बोधयति । विज्ञानाद्यैरिति मानसं ज्वरं विज्ञानाद्यैर्जयेदिति संबन्धः । आदिशब्दाद्धैर्यस्मृतिज्ञानसमाधयो गृह्यन्ते । मानसं कामशोकक्रोधभयजम् । विज्ञानाद्यैरित्यत्र 'शान्त्वनैः' इति केचित् पठन्ति, मनःप्रसादनैरिति च व्याख्यानयन्ति ॥ २६० ॥

**श्रमक्षये च भुञ्जीत घृताभ्यक्तो रसौदनम् ।**

श्रमक्षये च भुञ्जीतेत्यादि । यद्यपि रसौदनभोजनं पूर्वमेवोक्तं, तथापि घृताभ्यङ्गस्याधिकस्य दर्शनार्थमत्रोक्तम् ॥—

**अभिशापाभिचारोत्थौ ज्वरौ होमादिना जयेत् २६१**

अभिशापाभिचारोत्थौ ज्वरावित्यादि । अभिशापः सिद्धादीनामाक्रोशः, अभिचारो तन्त्रमन्त्रादिभिरवपीडनं, आदिशब्दात् शान्तिप्रायश्चित्तमङ्गलजपादयः ॥ २६१ ॥

**दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडजौ ।**

दानस्वस्त्ययनातिथ्यैरित्यादि । स्वस्त्ययनं आशीर्वादः, आतिथ्यं अतिथिपूजनम् । उत्पातोऽनिष्टसूचकं निर्घातादि, ग्रहा आदित्यादयः ॥—

[1] 'शीतपूर्वदाहपूर्वयोर्विनाशकारीत्यर्थः' इति पाठान्तरम् ।

**अभिघातज्वरे कुर्यात् क्रियामुष्णविवर्जिताम् २६२**
**कषायमधुरां स्निग्धां यथादोषमथापि वा।**

अभिघातज्वरे कुर्यादित्यादि। यस्माद्वातपित्तरक्तबहुलोऽभिघातज्वरस्तस्मादेवंभूतास्तत्र क्रियाः कार्याः॥ २६२॥—

**ओषधीगन्धविषजौ विषपित्तप्रसाधनैः॥ २६३॥**

ओषधीगन्धविषजावित्यादि। विषपित्तचिकित्सितैरित्यर्थः। अन्ये 'विषपीतप्रसाधनैः' इति पठन्ति, व्याख्यानयन्ति च—विषपीतस्य प्रसाधनानि चिकित्सितानि तैरित्यर्थः॥ २६३॥

**जयेत् कषायं च हितं सर्वगन्धकृतं तथा।**
**निम्बदारुकषायं वा हितं सौमनसं यथा॥ २६४॥**

ओषधीगन्धविषजज्वरयोरपरमपि योगमाह—जयेदित्यादि। सर्वगन्धकृतं एलादिकृतं, सौमनसं जातीकृतम्। भूताभिषङ्गादिजानां ज्वराणां विषमज्वरमध्ये व्यतिक्रमेण यदुपादानं तद्भूताभिषङ्गादिजा अपि ज्वरा प्रायेण वैषम्येण भवन्तीति बोधयति॥ २६४॥

**यवान्नविकृतिः सर्पिर्मद्यं च विषमे हितम्।**

यवान्नविकृतिरित्यादि। यवान्नविकृतिर्यवविकारः। सर्पिर्मद्ययोर्विषमज्वरेऽत्यन्तहितत्वोपादानार्थं पुनरभिधानम्। अन्ये 'यावान्नविकृतिः' इति पठन्ति; यावान्नो यवौदनः, विकृतिर्यवविकारः; यद्यपि यवविकृतिशब्देनैव यवौदनो लब्धस्तथापि यवौदनस्यात्यन्तहितत्वोपादानार्थं यावान्नग्रहणमिति च व्याख्यानयन्ति॥—

**संपूजयेद्द्विजान् गाश्च देवमीशानमम्बिकाम्॥२६५॥**

विषमज्वरे युक्तिव्यपाश्रयं चिकित्सितमभिधायेदानीं दैवव्यपाश्रयमाह—संपूजयेदित्यादि। ईशानो महेश्वरः, अम्बिका चण्डी, द्विजादिपूजनाद्दुरितोपशान्तिर्धर्मोत्पत्तिश्च॥ २६५॥

**कफवातोत्थयोश्चापि ज्वरयोः शीतपीडितम्।**
**दिह्यादुष्णेन वर्गेण परश्चोष्णो विधिर्हितः॥२६६॥**
**सिञ्चेत् कोष्णैरारनालशुक्तगोमूत्रमस्तुभिः।**
**दिह्यात् पलाशैरथवा सुरसार्जकशिग्रुजैः॥ २६७॥**
**क्षारतैलेन चाभ्यङ्गः सशुक्तेन विधीयते।**
**पानमारग्वधादेश्च क्वथितस्य विशेषतः॥ २६८॥**
**अवगाहः सुखोष्णश्च वातघ्नक्काथसंयुतः।**
**जित्वा शीतं क्रमैरेभिः सुखोष्णजलसेचितम् २६९**
**प्रवेश्योर्णिककार्पासकौशेयाम्बरसंवृतम्।**
**शाययेद् ग्लानदेहं च कालागुरुविभूषितम्॥२७०॥**
**स्तनाढ्या रूपसंपन्नाः कुशला नवयौवनाः।**
**भजेयुः प्रमदा गात्रैः शीतदैन्यापहारिभिः॥२७१॥**
**शरच्छशाङ्कवदना नीलोत्पलदलेक्षणाः।**
**स्फुरितभ्रूलताभङ्गललाटतटकम्पनाः॥ २७२॥**
**प्रलम्बिविलसत्काञ्च्यो बिम्बीफलनिभाधराः।**
**कृशोदर्योऽतिविस्तीर्णजघनोद्वहनालसाः॥ २७३॥**
**कुङ्कुमागुरुदिग्धाङ्ग्यो घनतुङ्गपयोधराः।**
**सुगन्धिधूपितश्लक्ष्णस्रस्तांशुकविभूषणाः॥ २७४॥**
**गाढमालिङ्गयेयुस्तं नरं वनलता इव।**
**प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत् पुनः॥२७५॥**
**तासामङ्गवरश्लेषनिवारितहिमज्वरम्।**
**भोजयेद्धितमन्नं च तथा सुखमवाप्नुयात्॥ २७६॥**

इदानीं जीर्णज्वराणां द्वन्द्वजानां बहिःपरिमार्जनप्रलेपाभिषेकाभ्यङ्गशयनानुलेपनस्त्रीसंवाहनालिङ्गनादिकमाह—कफवातोत्थयोश्चापि ज्वरयोरित्यादि। दिह्यात् लिम्पेत्। उष्णेन वर्गेण भद्रदार्वादिना सुरसादिना एलादिना वा। परश्चोष्णो विधिरिति पर उत्कृष्टः, उष्णो विधिः स्वेदः, आरनालं काञ्जिकं, शुक्तं चुक्रं तण्डुलाम्बुसौवीरादिभिः कृतसन्धानं, तच्च तन्त्रान्तरे पठ्यते—"धान्याम्बु प्रस्थमेकं तु त्रयं सौवीरकस्य च। अर्धप्रस्थं तु दध्नश्च भिषगम्लं प्रदापयेत्॥ पलषोडशकं चैव शोधितस्यार्द्रकस्य च। सैन्धवं पिप्पलीं चैव चूर्णीकृत्य विनिक्षिपेत्॥ स्थापयेत् सुदृढे भाण्डे सर्पिषा परिभाविते। हेमन्ते वासराण्यष्टौ वसन्ते षट् दिनानि च॥ प्रावृट्काले चतुरहं वर्षास्वपि च वासयेत्। अत ऊर्ध्वं क्षिपेच्चूर्णं चातुर्जातात्पलद्वयम्"—इत्यादि। अस्य शुक्तस्य गुणवर्णनं बहुत्वान्न लिखितम्। पलाशैः पत्रैः, अर्जकः कुठेरकः, अन्ये सितपर्णासमाहुः। शिग्रुः शोभाञ्जनो विटपः। अपरे क्षारेण तैलेन च सिद्धं तैलं क्षारतैलमाहुः। अपरे तन्त्रान्तरोक्तं 'शुष्कमूलकशुण्ठानां क्षार' इत्यादिकं क्षारतैलमिच्छन्ति। तन्न, तस्य सशुक्तस्य सशुक्तेनेति विशेषणस्य वैयर्थ्यात्। अवगाहो द्रवपूर्णभाजने निमज्जनं, सुखोष्ण ईषदुष्णः। क्रमैरेभिः उष्णवर्गप्रलेपादिभिः। प्रवेश्य 'निवातागारे' इति शेषः। ऊर्णिका नानाप्रकारा कम्बलाः, कार्पासाः कार्पासतन्तुरचिताः, कौशेयाः कोशाकारक्रिमिलालतन्तुरचिताः 'तसर' इति लोके। ग्लानदेहमित्यादि। एवंभूताः स्त्रियो ग्लानदेहं कृष्णागुरुविभूषितं पुरुषं मृदुमर्दनार्थं शीतलैर्गात्रैः कृत्वा भजेयुरिति संबन्धः। कुशलाः कामशास्त्रज्ञाः, दैन्यं क्लिष्टचेतनात्वम्। शरच्छशाङ्कवदना इत्यादि। एवंविधाश्च ललनास्तं पुरुषं गाढमालिङ्गयेयुरिति संबन्धः। प्रह्लादमित्यादि। अस्य पुरुषस्य प्रह्लादं हर्षं ज्ञात्वा ताः पूर्वोक्तवनिता अपनयेत्, अन्यथा तत्संसर्गात् महाननर्थ इति। हितमन्नं वातश्लेष्महरमाहारम्। 'अवगाहः सुखोष्णश्च वातघ्नः क्वाथभोजने' इति केचित् पठन्ति, व्याख्यानयन्ति च—वातघ्नो अवगाहः कार्यः, सुखोष्णं च क्वाथभोजने कार्यं। अत्र द्वितीयश्चकारो लुप्तो ज्ञेयः, तेन क्वाथभोजनेऽपि वातघ्ने बोद्धव्ये। प्रवेश्योर्णिकेत्यत्र 'प्रवेण्योर्णिके' इति केचित् पठन्ति, व्याख्यानयन्ति च—प्रवेणी सूचीबाणाख्यो वस्त्रविशेषः। 'काला-

गुरुविभूषितं' इत्यत्र 'कृष्णागुरुविभावितं' इति केचित् पठन्ति, कृष्णागुरुलिप्तमिति च व्याख्यानयन्ति ॥ २६६—२७६ ॥

**दाहाभिभूते तु विधिं कुर्याद्दाहविनाशनम् ।**
**मधुफाणितयुक्तेन निम्बपत्राम्भसापि वा ॥ २७७ ॥**
**दाहज्वरार्तं मतिमान् वामयेत् क्षिप्रमेव च ।**
**शतधौतघृताभ्यक्तं दिह्याद्वा यवशक्तुभिः ॥ २७८ ॥**
**कोलामलकसंयुक्तैः शूकधान्याम्लसंयुतैः ।**
**अम्लपिष्टैः सुशीतैश्च फेनिलापल्लवैस्तथा ॥ २७९ ॥**
**अम्लपिष्टैस्तु शीतैर्वा पलाशतरुजैर्दिहेत् ।**
**बदरीपल्लवोत्थेन फेनेनारिष्टकस्य च ।**
**लिप्तेऽङ्गे दाहतृण्मूर्च्छाः प्रशाम्यन्ति च सर्वशः २८०**

दाहाभिभूते तु विधिमित्यादि । दाहविनाशनविधिर्वक्ष्यमाणः। ननु, यथा शीतप्रतीकारे पूर्वं 'कफवातोत्थयोश्चापि ज्वरयोः शीतपीडितं' इत्युक्तं तथाऽत्रापि पित्तज्वराभिभूत इति कथं नोक्तं ? सत्यं, ज्वररहितदाहे असौ विधिः कार्य इति दर्शनार्थम् । मधुफाणितयुक्तेनेत्यादि । 'मधुफाणितमिश्रेण' इति केचित् पठन्ति । ते चापि वेति शब्दं पादपूरणार्थं वर्णयित्वा निम्बपत्राम्भसेत्यस्य विशेषणमाचक्षते। यद्यपि कफे वमनं प्रयुज्यते न पित्ते, तथापि प्रवृद्धं पित्तं किञ्चिद्वमनेनापि निर्ह्रियते । तथाच तन्त्रान्तरं,—"स्वस्थानगतमुत्क्लिष्टमग्निनिर्वापकं भिषक् । पित्तं ज्ञात्वा विरेकेण वमनेनाथवा हरेत्"—इति । अपरे तु 'मधुफाणितमिश्रेण निम्बपत्राम्भसा पिबेत्' इति पठन्ति । शतधौतघृताभ्यक्तमित्यादि । शतवारान् शीतजलेन धौतं फेनिलं घृतं शतधौतघृतं, दिह्यात् लिम्पेत्, शुक्तं चुक्रं, धान्याम्लं काञ्जिकं, 'शुक्तधान्याम्लसंयुतैः' इत्यत्रापरे तु 'धान्याम्लैरपि बुद्धिमान्' इति पठन्ति। तत्र धान्याम्लयुक्तैर्यवशक्तुभिरिति ज्ञेयम् । अम्लपिष्टैरित्यादि । अम्लं काञ्जिकं, फेनिला उपोदिका । तथाशब्दात् कोलामलकशुक्तसंयुक्तैः फेनिलापल्लवैर्लिम्पेदिति ज्ञेयम् ॥ अम्लपिष्टैस्तु शीतैरित्यादि । पलाशतरुजैः पलाशपल्लवैः। अरिष्टो निम्बः, फेनिलावृक्षो वा । फेनकल्पनामाह—बदरीपल्लवान् काञ्जिकपिष्टान् काञ्जिकपूर्णभाजने निक्षिप्य करेण विलोडयेत्, ततो यः फेन उत्तिष्ठेत् तेन लिम्पेत् ॥ २७७—२८० ॥

**यवार्धकुडवं पिष्ट्वा मञ्जिष्ठार्धपलं तथा ।**
**अम्लप्रस्थशतोन्मिश्रं तैलप्रस्थं विपाचयेत् ॥ २८१ ॥**
**एतत् प्रह्लादनं तैलं ज्वरदाहविनाशनम् ।**

प्रह्लादनतैलमाह—यवार्धकुडवमित्यादि । अम्लप्रस्थशतोन्मिश्रं काञ्जिकप्रस्थशतयुक्तम् ॥ २८१ ॥—

**न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यो गणः ॥**
**उत्पलादिर्गणो यस्तु पिष्टैर्वा तैः प्रलेपयेत् ।**
**तत्कषायाम्लसंसिद्धाः स्नेहाश्चाभ्यञ्जने हिताः२८३**
**तेषां शीतकषाये वा दाहार्तमवगाहयेत् ।**
**दाहवेगे त्वतिक्रान्ते तस्मादुद्धृत्य मानवम् ॥२८४॥**
**परिषिच्याम्बुभिः शीतैः प्रलिम्पेच्चन्दनादिभिः।**
**सानन्दा दीनमनसमाश्लिषेयुर्वराङ्गनाः ॥ २८५ ॥**
**पेलवक्षौमसंवीताश्चन्दनार्द्रपयोधराः ।**
**बिभ्रत्योऽब्जस्रजश्चित्रा मणिहारविभूषिताः २८६**
**भजेयुस्ताः स्तनैः शीतैः स्पृशन्त्योऽम्बुरुहैः सुखैः।**
**प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत् पुनः॥२८७॥**
**हितं च भोजयेदन्नं तथाऽऽप्नोति सुखं महत् ।**

तत्कषायाम्लसंसिद्धा इति न्यग्रोधादिकाकोल्याद्युत्पलादिक्वाथकाञ्जिकविपक्का इत्यर्थः । तेषामित्यादि । तेषां न्यग्रोधादीनाम् । दाहवेगे त्वतिक्रान्ते इत्यादि । तस्मान्न्यग्रोधादिप्रभृतिशीतकषायावगाहनात् । चन्दनादिना चन्दनादिगणेन; अपरे तु चन्दनं श्रीचन्दनं, आदिशब्दादुशीरलामज्जकादय इति व्याख्यानयन्ति । ग्लानं वा दीनमनसमित्यादि । दीनमनसं क्लिष्टचित्तं, आश्लिषेयुः आलिङ्गेयुः, पेलवं सुकुमारं, क्षौमं दुकूलं पट्टवस्त्रमित्यर्थः । संवीताः सम्यगाच्छादिताः, बिभ्रत्यो धारयन्त्यः, अब्जस्रज उत्पलादिमालाः, चित्रा नानावर्णाः । भजेयुरित्यादि । ताः स्त्रिय अम्बुरुहैः सुखैरुत्पलादिविकचैः कृत्वा तथा स्पृशन्त्यः स्तनैः कृत्वा भजेयुरिति पिण्डार्थः । हितमन्नं पित्तहरम् ॥ २८२—२८७ ॥—

**पित्तज्वरोक्तं शमनं विरेकोऽन्यद्धितं च यत् २८८**

ज्वरदाहेऽतिदेशेनापरमपि चिकित्सितमाह—पित्तज्वरोक्तमित्यादि । अन्यदपि यद्धितं भवेत्तत्कर्तव्यमित्यर्थः ॥२८८॥

**निर्हरेत्पित्तमेवादौ ज्वरेषु समवायिषु ।**
**दुर्निवारतरं तद्धि ज्वरार्तेषु विशेषतः ॥ २८९ ॥**

इदानीं दाहप्रतीकारप्रस्तावे संसर्गज्वरे तावत् प्रकृतिकालाक्षेपया क्वचित् सन्निपातेऽपि पित्तस्यादौ प्रतीकारार्थमाह—निर्हरेदित्यादि । समवायिषु संसर्गिषु, नतु सन्निपातेषु; तत्प्रतीकारस्यादावुक्तत्वात् । पित्तान्वितसंसर्गस्य द्वित्वात् समवायिष्वित्यत्र बहुवचनं न सम्भवति, तथापि कालप्रकृत्यपेक्षया सन्निपातेऽपि कफवाताविरोधेनादौ कदाचित् पित्तस्य प्रतिक्रिया कार्येति दर्शनार्थं बहुवचनम् । अन्ये तु 'शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु' इति पठन्ति, व्याख्यानयन्ति च—समवायिषु ज्वरेषु सन्निपातज्वरेष्वादौ पित्तं शमयेत् लङ्घनयवाग्वादिभिः प्रकृतिस्थं कुर्यात्, यस्मादग्निमुपहत्य ज्वरो भवति, अग्निश्च पित्तान्तर्गतः, तस्मात् पित्तसंशमने आदौ यत्नः कार्यः । तथा चोक्तं,—"समवाये तु दोषाणां पूर्वं पित्तमुपाचरेत् । ज्वरे चैवातीसारे च सर्वत्रान्यत्र मारुतम्"—इति ॥ ननु, सन्निपातज्वरेष्वन्यत्रादावामश्लेष्मणो निर्हरणं कथितं, तथा च—"सन्निपातज्वरे पूर्वं कुर्यादामविशोधनम् । पश्चात् च्छेष्मणि संक्षीणे शमयेत्

## त्रिषष्टितमोऽध्यायः ।

**अथातो रसभेदविकल्पमध्यायं व्याख्यास्यामः॥१॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

अथ भूतविद्यां परिसमाप्य तन्त्रभूषणानां मध्ये रसभेदविकल्पाध्यायमाह—अथात इत्यादि। अथात इत्यादि पूर्ववद्याख्येयम्। रसभेदविकल्पमिति रसा मधुरादयः पूर्वं व्याख्याताः, रसानां भेदेन द्वित्रिकादिभेदेन विकल्पो विभजनं यस्मिन् स तथा। अथवा रसभेदानां विकल्पो दोषभेदवशादवचारणा यस्मिन् स तथा ॥ १ ॥ २ ॥

**दोषाणां पञ्चदशधा प्रसरोऽभिहितस्तु यः ॥**
**त्रिषष्ट्या रसभेदानां तत्प्रयोजनमुच्यते ॥ ३ ॥**

रसभेदकथने प्रयोजनमाह—दोषाणामित्यादि। यः पञ्चदशप्रकारो व्रणप्रश्नाध्याये दोषाणां प्रसर उक्तः, तस्य रसभेदानां त्रिषष्ट्या प्रयोजनमिति संबन्धः। अत्र पञ्चदशधेत्युपलक्षणं, तेन दोषभेदानां त्रिषष्टिरपि गृह्यते। अयमभिप्रायः—त्रिषष्टिप्रकाराणामपि दोषभेदानामुपयोगार्थं रसभेदा उक्ताः ॥ ३ ॥

**अविदग्धा विदग्धाश्च भिद्यन्ते ते त्रिषष्टिधा ।**
**(रसभेदत्रिषष्टिं तु वीक्ष्य वीक्ष्यावचारयेत्॥४॥)**

कीदृशा रसास्त्रिषष्टिभेदान् यान्तीत्याह—अविदग्धा इत्यादि। अविदग्धा असंयुक्ता एकाकिन इत्यर्थः। विदग्धाः संयोगतः समवायतश्च संयुक्ताः, धातूनामनेकार्थत्वात्। भिद्यन्ते एकैकेनानुगमनाद्भेदं यान्तीत्यर्थः। ते रसाः संयोगतः समवायतश्च भिद्यन्ते। संयुक्ता यथा—वदरकपित्थफलादिकं मधुराम्लं (१), उष्ट्रीक्षीरोरभ्रमत्स्यमांसादिकं मधुरलवणं (२), कुक्कुरशृगालमांसादिकं मधुरकटुकं (३), श्रीवाससर्जरसादिकं मधुरतिक्तं (४), तैलादिकं मधुरकषायं (५); उषकादिकमम्ललवणं (६), चुक्रादिकमम्लकटुकं (७), सुरादिकमम्लतिक्तं (८), हस्तिनीदधिशुकमांसादिकमम्लकषायं (९); त्रपुसीसादिकं लवणतिक्तकं (१०), गोमूत्रस्वर्जिकादिकं लवणकटुकं (११), समुद्रफेनादिकं लवणकषायं (१२); कर्पूरजातीफलादिकं तिक्तकटुकं (१३), लवलीफलहस्तिनीमूत्रादिकं तिक्तकषायं (१४); भल्लातकमज्जाहरितालादिकं कटुकषायम् (१५); एवं द्विरसभेदाः पञ्चदशधा दर्शिताः। अतः परं रसत्रितयभेदा वक्ष्यन्ते—हस्तिमांसादिकं मधुराम्ललवणं (१), शल्यकमांसादिकं मधुराम्लकटुकं (२), गोधूमोत्थसुरादिकं मधुराम्लतिक्तकं (३), मस्तुतक्रादिकं मधुराम्लकषायं (४); काणकपोतमांसादिकं मधुरलवणकटुकं (५), शम्बूकादिमांसं मधुरलवणतिक्तं (६), पद्मकन्दादिकं मधुरलवणकषायं (७); तृणशून्याफलादिकं मधुरकटुतिक्तकं (८), गोधामांसैरण्डतैलादिकं मधुरकटुकषायं (९); गुडूचीशाखामृगामिषरक्तवक्षकतैलादिकं मधुरतिक्तकषायं (१०); रौप्यशिलाजत्वादि अम्ललवणकटुकं (११),हस्तिमूत्रादिकमम्ललवणतिक्तं (१२), रोमकहस्तिनीदध्यादि अम्ललवणकषायं(१३); मरिचसंस्कृतसुरादिकमम्लकटुतिक्तकं (१४); अम्लवेतसादिकमम्लकटुकषायं (१५), कीरमांसयुतसुरादिकमम्लतिक्तकषायं (१६); अविमूत्रादिकं लवणकटुतिक्तं (१७), अरुष्करासवरोमकं लवणकटुकषायं (१८); समुद्रफेनादिकं लवणतिक्तकषायं (१९), आर्ध्यादिकं कटुतिक्तकषायं (२०); एवं त्रिकभेदा विंशतिर्दर्शिताः। अतः परं चतुःसंयोगाः पञ्चदशप्रकारा वक्ष्यन्ते—गोमूत्रान्वितं शिलाजतुप्रभृतिकं मधुराम्ललवणकटुकं (१), एकशफक्षीरादिकं मधुराम्ललवणतिक्तकं (२), सैन्धवान्वितं तक्रादिकं मधुराम्ललवणकषायं (३), लशुनान्वितं सुरादिकं मधुराम्लकटुतिक्तं (४), काञ्जिकान्वितैरण्डतैलादि खादिरान्वितशिलाह्वादिकं च मधुराम्लकटुकषायं (५),उदुम्बरान्वितं यवादिकं मधुराम्लतिक्तकषायं (६), वार्ताकफलादिकं मधुरलवणतिक्तकटुकं (७), गोमूत्रान्विततैलादिकं मधुरलवणकटुकषायं (८), तिलगुग्गुल्वादिकं मधुरकटुतिक्तकषायं (९), समुद्रफेनशर्कराचित्रकान्वितबदरादि मधुरलवणतिक्तकषायं (१०), सैन्धवसुवर्चलान्वितहस्तिनीदध्यादिकृतसुरादिकं अम्ललवणकटुतिक्तं (११), सौवर्चलान्वितं हस्तिनीदध्यादिकमम्ललवणकटुकषायं (१२), औद्भिदलवणान्वितं शुकमांसादिकमम्ललवणतिक्तकषायं (१३),बालमूलकहस्तिनीदध्यादिकमम्लकटुतिक्तकषायं (१४), लवणकटुतिक्तकषायं (१५), एवं चतुष्करससंयोगाः पञ्चदश कथिताः। अतःपरं पञ्चरससंयोगाः षड् वक्ष्यन्ते—आमकरमर्दान्वितं भृष्टवार्ताकफलादिकं मधुराम्ललवणकटुतिक्तं (१), कटुत्रयान्विततक्रादिकं मधुराम्ललवणकटुकषायं (२), औद्भिदान्विततक्रादिकं मधुराम्ललवणतिक्तकषायं (३), हरीतक्यादिकं मधुराम्लकटुतिक्तकषायं (४), रसोनादिकं मधुरलवणकटुतिक्तकषायं (५), भल्लातकरौप्यशिलाजतुमिश्रितगोदुग्धादिकं अम्ललवणकटुतिक्तकषायं (६); एवं पञ्चरससंयोगाः षड् दर्शिताः। अतः परं षड्रसं वक्ष्यन्ते—एणमांसादिकं मधुराम्ललवणकटुतिक्तकषायम्। अतःपरमेकैकरसानाह—सन्तानिकागोदुग्धादिकं मधुरं, (१) आम्रकरमर्दादिकमम्लं (२), रोमकादिकं लवणं (३), चव्यादिकं कटुकं (४), निम्बपर्पटादिकं तिक्तं (५), न्यग्रोधाद्यङ्कुरादिकं कषायं (६); एवं षट् कथिताः। अनेन

१ 'द्विरसयोनयः' इति पाठान्तरम्। २ 'रसत्रिकसंयोगो वक्ष्यते' इति पाठान्तरम्। ३ 'सिध्मितिकाफलादिकं' इति पाठान्तरम्।

१ 'शिलाजतुप्रभृतिकं' इति पाठान्तरम्। २ 'यवासशर्करादिकं' इति पाठान्तरम्।

प्रकारेण त्रिषष्टिः कथिताः । कार्तिककुण्डस्त्वमुं पाठमन्यथा आपातनिकां कृत्वा व्याख्यानयति; तद्यथा—पञ्चदशधा प्रसरस्य बहुभिस्त्रिषष्टिरसभेदैः सह प्रयोगो दुर्घटः, अतो दोषभेदानामपि बहुत्वमाह—अविदग्धा इत्यादि । अविदग्धा अप्रकुपिताः । विदग्धाः कुपिताः । ते दोषाः । यथाक्रमं दोषाणां त्रिषष्टिभेदा उक्ताः, तर्हि पूर्वं दोषाणां पञ्चदशधा प्रसरः किमित्युक्तः ? सत्यं, कुपितदोषस्यात्यन्तचिकित्सनीयत्वापादनार्थम् । अन्यद्ग्रन्थगौरवभयात् परित्यक्तम् ॥ ४ ॥

**एकैकेनानुगमनं भागशो यदुदीरितम् ।**
**दोषाणां, तत्र मतिमान् त्रिषष्टिं तां प्रयोजयेत् ॥५**

पूर्वं अविदग्धा विदग्धाश्च रसा एकैकेनानुगमनाद्भिद्यन्त इत्युक्तं तदेव स्मारयति—एकैकेनानुगमनमित्यादि । भागशः अंशांशितया । रसानामेकैकेनानुगमनं प्रवर्तनं, उदीरितमस्मिन्नध्याये भणितं, तद्वशात्ते रसास्त्रिषष्टिधा भिद्यन्त इति पूर्ववाक्येन संबन्धः । तां च रसभेदत्रिषष्टिं मतिमान् ऊहापोहविद्वैद्यः तत्र दोषभेदेषु प्रयोजयेत् । मतिमानिति पदाद्यादृशा एव दोषाणां हीनाधिकभावेन भेदा योज्यन्ते, तादृशा एव रसभेदा योज्या इति सूचयति । अन्ये तु 'एवमेवानुगमनं' इति पठित्वा दोषाणामेकं भागशोंऽशांशबलविकल्पेनैकं प्रत्येकस्यानुगमनं दोषभेदीये यदुदीरितं तत्र रसभेदत्रिषष्टिं योजयेदिति । यद्यपि दोषभेदीये यद्वक्ष्यते इति सुन्दरं ननु यदुदीरितमिति, तथापि भाविनि भूतवदुपचारात् दोषभेदीये यदुदीरितमिति सुन्दरम् । अपरे अत्रामुं पाठमन्यथा पठित्वा बहु जल्पन्ति । तच्च ग्रन्थगौरवभयात् शिष्यबुद्धिव्याकुलत्वहेतुत्वाच्च परित्यक्तम् ॥ ५ ॥

**यथाक्रमं प्रवृत्तानां द्विकेषु मधुरो रसः ।**
**पञ्चानुक्रमते योगानम्लश्चतुर एव च ॥ ६ ॥**
**त्रींश्चानुगच्छति रसो लवणः कटुको द्वयम् ।**
**तिक्तः कषायमन्वेति ते द्विका दश पञ्च च ॥७॥**

**तद्यथा—मधुराम्लः, मधुरलवणः, मधुरतिक्तः, मधुरकटुकः, मधुरकषायः, एते पञ्चानुक्रान्ता मधुरेण; अम्ललवणः,अम्लकटुकः, अम्लतिक्तः,अम्लकषायः, एते चत्वारोऽनुक्रान्ता अम्लेन; लवणकटुकः,लवणतिक्तः,लवणकषायः,एते त्रयोऽनुक्रान्ता लवणेन; कटुतिक्तः, कटुकषायः, द्वावेतावनुक्रान्तौ कटुकेन; तिक्तकषाय एक एवानुक्रान्तस्तिक्तेन, एवं पञ्चदश द्विकसंयोगा व्याख्याताः ॥ ८ ॥**

इदानीं रसभेदत्रिषष्टिं ग्रन्थेनैव विवृण्वन्नाह—यथाक्रममित्यादि । यथाक्रमप्रवृत्तानामिति मधुरादिक्रमप्रवृत्तानां रसानामित्यर्थः । द्विकेषु द्विकसंयोगेषु । अनुक्रमते अनुगच्छति अनुगतो भवतीत्यर्थः । दश पञ्चेति पञ्चदशेत्यर्थः । यद्यपि सूत्रस्थाने रसविशेषविज्ञानीयाध्याये पञ्चदश द्विका इत्यादिना द्विकसंयोगादीनां संख्या उक्ताः, तथापि पुनरत्र संख्याकरणं नियमार्थम् । तेन इयन्त एव रसभेदा गणनीया न तन्त्रान्तरोक्तास्तरतमयोगादिजा इत्यर्थः । तेषामेव द्विकानां पञ्चदशसंख्यानामुदाहरणान्याह—तद्यथेत्यादि । मधुराम्लौ विद्यते यत्र संयोगे स मधुराम्लः । एवं शेषेष्वपि ज्ञेयम् ॥ ६–८ ॥

**त्रिकान् वक्ष्यामः—**

**आदौ प्रयुज्यमानस्तु मधुरो दश गच्छति ।**
**षडम्लो लवणस्तस्मादर्धं त्वेकं तथा कटुः ॥ ९॥**

**तद्यथा–मधुराम्ललवणः,मधुराम्लकटुकः, मधुराम्लतिक्तः मधुराम्लकषायः, मधुरलवणकटुकः, मधुरलवणतिक्तः, मधुरलवणकषायः, मधुरकटुकतिक्तः, मधुरकटुकषायः, मधुरतिक्तकषायः, एवमेषां त्रिकसंयोगानां दशानामादौ मधुरः प्रयुज्यते; अम्ललवणकटुकः, अम्ललवणतिक्तः, अम्ललवणकषायः, अम्लकटुकषायः, अम्लकटुतिक्तः, अम्लतिक्तकषायः, एवमेषां षण्णामादावम्लः प्रयुज्यते; लवणकटुतिक्तः, लवणकटुकषायः, लवणतिक्तकषायः, एवमेषां त्रयाणामादौ लवणः प्रयुज्यतेः; कटुतिक्तकषायः, एवमेकस्यादौ कटुकः प्रयुज्यते; एवमेते त्रिकसंयोगा विंशतिर्व्याख्याताः ॥ १० ॥**

आदावित्यादि । दशेति दशयोगानित्यर्थः । तस्मादर्धमिति त्रीणि । विंशतिसंख्याकानामुदाहरणान्याह—मधुराम्लेत्यादि । मधुराम्ललवणा विद्यन्ते यत्र स मधुराम्ललवणः । एवं शेषेष्वपि विज्ञेयम् ॥ ९—१० ॥

**चतुष्कान् वक्ष्यामः ।—**

**चतुष्करससंयोगान्मधुरो दश गच्छति ।**
**चतुरोऽम्लोऽनुगच्छेच्च लवणस्त्वेकमेव तु ॥ ११ ॥**

**मधुराम्ललवणकटुकः, मधुराम्ललवणतिक्तः, मधुराम्ललवणकषायः, मधुराम्लकटुकतिक्तः, मधुराम्लकटुकषायः, मधुराम्लतिक्तकषायः, मधुरलवणतिक्तकटुकः, मधुरलवणकषायतिक्तः, मधुरलवणकटुकषायः, मधुरलवणतिक्तकषायः, एवमेषां दशानामादौ मधुरः प्रयुज्यते; अम्ललवणकटुकतिक्तः, अम्ललवणकटुकषायः, अम्ललवणतिक्तकषायः, अम्लकटुतिक्तकषायः, एवमेषां चतुर्णामादावम्लः; लवणकटुतिक्तकषायः, एवमेकस्यादौ लवणः; एवमेते चतुष्करससंयोगाः पञ्चदश कीर्तिताः ॥ १२ ॥**

चतुष्कानित्यादि । दशेति 'योगान्' इति शेषः । चतुष्काणामुदाहरणान्याह—मधुराम्लेत्यादि ॥ ११ ॥ १२ ॥

१ 'रसानां इति पाठान्तरम् ।

पञ्चकान् वक्ष्यामः ।

**पञ्चकान् पञ्च मधुर एकमम्लस्तु गच्छति॥ १३ ॥ मधुराम्ललवणकटुतिक्तः, मधुराम्ललवणकटुकषायः, मधुराम्ललवणतिक्तकषायः, मधुराम्लकटुतिक्तकषायः, मधुरलवणकटुतिक्तकषायः, एवमेषां पञ्चानां पञ्चकरससंयोगानामादौ मधुरः प्रयुज्यते; अम्ललवणकटुतिक्तकषायः; एवमेकस्यादावम्लः प्रयुज्यते; एवमेते षट् पञ्चकसंयोगा व्याख्याताः ॥ १४ ॥**

मधुराम्ललवणकटुका विद्यन्ते यत्र योगे स मधुराम्ललवणकटुकः । पञ्चकानित्यादि । पञ्चकानिति पञ्चरससमूहान् । पञ्चेति 'योगान्' इति शेषः । तेषामेव पञ्चानामुदाहरणान्याह—मधुराम्लेत्यादि ॥ १३ ॥ १४ ॥

**षट्कमेकं वक्ष्यामः; एकस्तु षट्कसंयोगः—मधुराम्ललवणकटुकतिक्तकषायः । एवमयमेकः षट्संयोगः ॥ १५ ॥**

तस्य षट्कस्योदाहरणमाह—मधुराम्लेत्यादि ॥ १५ ॥

**एकैकश्च षड्रसा भवन्ति—मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति ॥ १६ ॥**

एषामुदाहरणान्याह । मधुर इत्यादि ॥ १६ ॥

भवति चात्र ।

**एषा त्रिषष्टिर्व्याख्याता रसानां रसचिन्तकैः ।
दोषभेदत्रिषष्ट्यां तु प्रयोक्तव्या विचक्षणैः ॥ १७ ॥**

उपसंहारमाह—भवति चात्रेत्यादि । अनुरसो हीनरसः । दोषभेदत्रिषष्टिः दोषभेदीयाध्याये वक्ष्यमाणा । यद्यपि परस्परं भिन्नाः सन्तो रसा बहवो भवन्ति, तथाऽपि षट्त्वं नातिवर्तन्ते; यथा वातादिदोषा बहुधा भिन्ना अपि त्रित्वं न त्यजन्ति तथा रसा अपि षट्त्वं नातिवर्तन्ते ॥ १७ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

## चतुःषष्टितमोऽध्यायः ।

**अथातः स्वस्थवृत्तमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

रसभेदविकल्पानन्तरं पूर्वोक्तक्रमेणैव स्वस्थवृत्तारम्भः—अथात इत्यादि । वृत्तमाचारः । केचित् स्वस्थरक्षणीयमिति पठित्वा स्वस्थस्य रक्षणं यस्मिन्नध्याये स तथा तं व्याख्यास्याम इति व्याख्यानयन्ति ॥ १ ॥ २ ॥

**सूत्रस्थाने समुद्दिष्टः स्वस्थो भवति यादृशः ।**

इदानीमतिदेशेन स्वस्थलक्षणं चिकित्साप्रयोजनं चाह—सूत्रेत्यादि । समुद्दिष्टः 'समदोषः समाग्निश्च' इत्यादिना दोषधातुमलक्षयवृद्धिविज्ञानीयाध्याये । तादृशस्वस्थस्य रक्षणं भाविव्याधिनिवारणत्वेन पालनम् । हि स्फुटार्थः । ये तु सूत्रस्थान इत्यादि श्लोकार्धं न पठन्ति ते समदोष इत्यादिकं सूत्रस्थानोक्तं स्वस्थलक्षणमत्रापि पठन्ति ॥—

**तस्यादितो रक्षणं हि चिकित्सायां मयोदितम् ॥३॥
तस्मिन्नर्थाः समासोक्ता विस्तरेणेह वक्ष्यते ।**

ननु, चानागतबाधे एव स्वस्थवृत्तस्य दर्शितत्वात् कस्मात् पुनरत्र तदभिधानमित्याशङ्क्याह—तस्येत्यादि । तस्य स्वस्थस्य । आदितः अनागतबाधे । तस्मिन् अनागतबाधोक्तस्वस्थवृत्ते समासोक्ताः संक्षेपेणवोक्ताः । इह अस्मिन्नध्याये, वक्ष्यते 'स्वस्थवृत्तं, इति शेषः । केचित् 'विस्तरस्तस्य वक्ष्यते' इति पठन्ति । तस्येति स्वस्थवृत्तस्य । अपरे 'विस्तरश्चात्र वक्ष्यते' इति पठित्वा तेषामर्थानां विस्तरोऽत्र वक्ष्यते इति व्याख्यानयन्ति ॥ ३ ॥—

**यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम् ४
तेषु तेषु प्रदातव्याः रसास्ते ते विजानता ।**

अथर्त्वाश्रयं स्वस्थवृत्तं संक्षेपेणाह—यस्मिन्नित्यादि । देहिनामित्यत्र देहिशब्देनाभेदोपचाराच्छरीरमुच्यते; न आत्मा, तस्य निर्विकारत्वात् । तेषु तेष्विति धातुषु । ते ते रसाः तद्दोषप्रत्यनीका रसाः । अत्र रसशब्देन रसवन्ति द्रव्याणि भण्यन्ते, केवलरसस्य उपयोगासंभवात् । विजानता वैद्येन ॥ ४ ॥—

**प्रक्लिन्नत्वाच्छरीराणां वर्षासु खलु देहिनाम् ॥ ५ ॥
मन्देऽग्नौ कोपमायान्ति सर्वेषां मारुतादयः ।
तस्मात् क्लेदविशुद्ध्यर्थं दोषसंहरणाय च ॥ ६ ॥
कषायतिक्तकटुकै रसैर्युक्तमथो द्रवम् ।
नातिस्निग्धं नातिरूक्षमुष्णं दीपनपाचनम् ॥ ७ ॥
देयमन्नं नृपतये यज्जलं चोक्तमादितः ।
तप्तावरतमम्भो वा पिबेन्मधुसमायुतम् ॥ ८ ॥
अह्नि मेघानिलाविष्टेऽत्यर्थशीताम्बुसङ्कुले ।
तरुणत्वाद्विदाहं च गच्छन्त्योषधयस्तदा ॥ ९ ॥
मतिमांस्तन्निमित्तं च नातिव्यायाममाचरेत् ।
अत्यम्बुपानावश्यायग्राम्यधर्मातपांस्त्यजेत् ॥ १०॥
भूबाष्पपरिहारार्थं शयीत च विहायसि ।
शीते साग्नौ निवाते च गुरुप्रावरणे गृहे ॥ ११ ॥
यायात्सङ्गं वधूभिश्च प्रशस्तागुरुभूषितः ।
दिवास्वप्नमजीर्णं च वर्जयेत्तत्र यत्नतः ॥ १२ ॥**

आर्तवविधिं संक्षेपेणाभिधायेदानीं विस्तरेणाह—प्रक्लिन्नत्वादित्यादि । प्रक्लिन्नत्वात् अत्यन्तार्द्रत्वात् । भिषजेति पदं देयमन्नमित्यत्र योज्यम् । प्रक्लिन्नत्वादिति अग्निमान्द्यहेतुः, यतो-

ऽम्बुगुणबाहुल्येनाग्निमान्द्यं भवति । ननु, वर्षासु सञ्चयरूपतया पित्तमेवाल्पमस्ति नेतरौ, तत् कथं कुप्यन्ति मारुतादय इत्युक्तं ? सत्यं, प्रावृट्प्रकुपितो वायुरुपशमहेत्वभावाद्वर्षास्वपि कुपित एवानुवर्तते, कफश्च मेघनिःस्यन्दादिहेतुभिरसञ्चितोऽपि कुप्यति मनाक्, अतो युक्त एव दोषत्रयप्रकोपः । अथवा अग्निमान्द्याद्दोषत्रयप्रकोपः । तथा चोक्तं,—'शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ' इति।तस्मादिति यतो वर्षासु शरीरे अग्निमान्द्यं दोषप्रकोपश्च भवति तस्मादित्यर्थः । दोषसंरक्षणं च निवारणेन ज्ञेयम् । रसैर्युक्तमित्यन्नमित्येतस्य विशेषणम् । अद्रवं अपगतद्रवं द्रवहीनमित्यर्थः । अन्ये 'अथाद्रवं' इति पठन्ति, ईषद्द्रवमिति च व्याख्यानयन्ति । नातिस्निग्धं नातिरूक्षं साधारणमित्यर्थः । नृपतिग्रहणमीश्वरोपलक्षणार्थम् । यज्जलं चोक्तमादित इत्यादि । 'वर्षास्वन्तरिक्षं' इत्यादिना पानीयवर्गे कथितम् । तप्तावरतं शृतशीतं, तत् संचितपित्तोपशमनार्थम् । मधुसमायुतं समधु । एतच्चानुबलस्य कफस्योपशमनार्थम् । ननु, 'वर्षासु न पिबेत्तोयं' इत्यनेन सह कथमेतन्न विरुध्यते ? उच्यते,—न पिबेदित्यस्य अल्पपाने व्यवस्थितिः । तरुणत्वात् अभिनवत्वात् । विदाहमम्लपाकम् । तदा वर्षाकाले, तन्निमित्तं विदाहकारणात् । नातिव्यायाममाचरेदित्यनेन मृदुव्यायाममाचरेदित्युक्तं; स च शरीरक्लेदोपशमार्थं वह्निसन्धुक्षणार्थं च । अवश्यायो विना मेघं सूक्ष्मजलकणानिपातः । ग्राम्यधर्मो मैथुनम् । आतपो घर्मः । तथेति नत्वाचरेदित्यर्थः । विहायःशब्देनात्र धवलगृहोपरिभूरभिप्रेता, अन्ये मञ्चादिकं मन्यन्ते । शीते साग्नौ निवातगृहे शयनं, वातकोपोपशमनाय । गुरुप्रावरणो गुरुवस्त्रावृताङ्गः । गृहे इत्यत्रापि शयीत इति योज्यम् । यायाद् गच्छेत् । नागवधूभिः हस्तिनीभिः; हस्तिनीगमनं कर्दमाम्बुनोः परिहारार्थम् । प्रशस्तागुरुभूषित इति अगुरुणः शैत्यनिवारकत्वात् । अजीर्णे चेति चकारात् पूर्वानिलमुदमन्थं च वर्जयेत् । सरिज्जलं अहितत्वेनैव वर्ज्यम् । तत्रेति वर्षासु । अतिव्यायामादेर्निषिद्धत्वेऽपि दिवास्वप्नाजीर्णयोः पृथगुपादानमत्यन्तनिषेधार्थम् ॥ ५—१२ ॥

**सेव्याः शरदि यत्नेन कषायस्वादुतिक्तकाः ।**
**क्षीरेक्षुविकृतिक्षौद्रशालिमुद्गादिजाङ्गलाः ॥ १३ ॥**
**सलिलं च प्रसन्नत्वात् सर्वमेव तदा हितम् ।**
**सरःस्वाप्लवनं चैव कमलोत्पलशालिषु ॥ १४ ॥**
**प्रदोषे शशिनः पादाश्चन्दनं चानुलेपनम् ।**

वार्षिकं विधिमभिधाय शारदमाह—सेव्या इत्यादि । क्षीरेक्षुविकृतीत्यत्र विकृतिशब्दः क्षीरेक्षुभ्यां संबध्यते । क्षौद्रं मधु । शालयो विविधाः । मुद्गादीनामित्यादिशब्दात्तु जीर्णा यवगोधूमादयो गृह्यन्ते । जाङ्गला इति एणाद्या लावाद्याश्च । श्वेतस्रजः शुक्लपुष्पमालाः । चन्द्रपादाः चन्द्ररश्मयः । प्रदोषः रात्रिप्रथमप्रहरार्धम् । लघु चाम्बरं सूक्ष्मवस्त्रम् । सलिलं च प्रसन्नत्वादिति यद्यपि 'शरदि सर्वं प्रसन्नत्वात्' इत्यनेनैव सर्वं जलं प्राप्तं, तथापि प्रकरणत्वात्तदुपादानम् । सरःसु दिव्यखातेषु । आप्लवनं प्रतरणम् । कमलोत्पलशालिषु कमलोत्पलभ्राजिषु, शालिष्वित्यत्र शोभिष्विति केचित् पठन्ति । कमलादियुक्ताया विशेषेण पित्तहरत्वम् । प्रदोषे शशिनः पादा इति पुनरभिधानं प्रदोषे एवावश्यं चन्द्रपादसेवा कार्या नतु सर्वरात्रिषु, अनु कफस्याभिस्यन्दभयात् ॥ १३ ॥ १४ ॥—

**तिक्तस्य सर्पिषः पानैरसृक्स्रावैश्च युक्तितः ॥ १५॥**
**वर्षासूपचितं पित्तं हरेच्चापि विरेचनैः ।**

पित्तसंशमनमभिधायेदानीं संशोधनमाह—तिक्तस्येत्यादि । तिक्तघृतपानं कफरक्तप्रत्यनीकत्वात् । असृङ्मोक्षणं च रक्तस्य प्रदुष्टत्वात् । युक्तित इति योगतः, आतुरबलादिकं वीक्ष्येत्यर्थः ॥ १५ ॥—

**नोपेयात्तीक्ष्णमम्लोष्णं क्षारं स्वप्नं दिवातपम् ॥१६॥**
**रात्रौ जागरणं चैव मैथुनं चापि वर्जयेत् ।**
**(स्वादुशीतजलं मद्यं शुचिस्फटिकनिर्मलम् ॥ १७॥**
**शरच्चन्द्रांशुनिर्धौतमगस्त्योदयनिर्विषम् ।**
**प्रसन्नत्वाच्च सलिलं सर्वमेव तदा हितम् ॥ १८ ॥**
**सचन्दनं सकर्पूरं वासश्चामलिनं लघु ।**
**भजेच्च शारदं माल्यं सीधोः पानं च युक्तितः॥१९॥**
**पित्तप्रशमनं यच्च तच्च सर्वं समाचरेत् ।**

सेव्यमभिधाय वर्ज्यमाह—नोपेयादित्यादि । नोपेयात् न सेवेत । स्वप्नं दिवेति दिवास्वापम् । मैथुनं चापीत्यत्रापिशब्दादवश्यायपूर्ववातादिकमपि समानतन्त्रोक्तं वर्जयेत् ॥१६—१९—

**हेमन्तः शीतलो रूक्षो मन्दसूर्योऽनिलाकुलः ॥२०॥**
**ततस्तु शीतमासाद्य वायुस्तत्र प्रकुप्यति ।**
**कोष्ठस्थः शीतसंस्पर्शादन्तःपिण्डीकृतोऽनलः २१**
**रसमुच्छोषयत्याशु तस्मात् स्निग्धं तदा हितम् । )**
**हेमन्ते लवणक्षारतिक्ताम्लकटुकोत्कटम् ॥ २२ ॥**
**ससर्पिस्तैलमहिममशनं हितमुच्यते ।**
**तीक्ष्णान्यपि च पानानि पिबेदगुरुभूषितः ॥ २३ ॥**
**तैलाभ्यक्तः सुखोष्णे च वारिकोष्ठेऽवगाहयेत् ।**
**साङ्गारयाने महति कौशेयास्तरणास्तृते ॥ २४ ॥**
**शयीत शयने तैस्तैर्वृतो गर्भगृहोदरे ।**
**स्त्रीः श्लिष्टाऽगुरुधूपाढ्याः पीनोरुजघनस्तनीः॥२५॥**
**(प्रकामं च निषेवेत मैथुनं तर्पितो नृपः ।**
**मधुरं तिक्तकटुकमम्लं लवणमेव च ॥ २६ ॥**
**अन्नपानं तिलान् माषान् शाकानि च दधीनि च ॥**
**तथेक्षुविकृतीः शालीन् सुगन्धांश्च नवानपि ॥२७॥**
**प्रसहानूपमांसानि क्रव्यादबिलशायिनाम् ।**
**औदकानां प्लवानां च पादिनां चोपसेवयेत् ॥२८॥**

**मद्यानि च प्रसन्नानि यच्च किञ्चित् बलप्रदम् ।**
**कामतस्तन्निषेवेत पुष्टिमिच्छन् हिमागमे ॥ २९ ॥)**
**एष एव विधिः कार्यः शिशिरे समुदाहृतः ।**
**(हेमन्ते निचितः श्लेष्मा शैत्याच्छीतशरीरिणाम्॥)**

इदानीं हैमन्तिकं विधिमाह—हेमन्त इत्यादि । अहिममुष्णम् । अशनं भोजनं, पानानि मद्यादीनि । अगुरुभूषितः अगुरुचूर्णावलिप्तः । वारिकोष्ठे पाषाणादिविरचिते कुशूलाकारे जलपात्रे । साङ्गारयाने अङ्गारपूर्णशकटिकासहिते, एतद्गर्भगृहोदरे इत्येतस्य विशेषणम् । महति विस्तीर्णे । कौशेयास्तरणास्तृते पट्टवस्त्रीयाच्छादनाच्छादिते । कौशेयमित्युपलक्षणं, तेन प्रावाराजिनादीनि तन्त्रान्तरोक्तानि गृह्यन्ते । तैस्तैरिति शीतापहैस्तन्त्रान्तरोक्तैर्वस्त्रविशेषैः, वृत इति आच्छादिताङ्गः पुरुषः । गर्भगृहोदरे इति बृहद्गृहमध्ये अपरं यत् क्षुद्रगृहं तस्याभ्यन्तरे । गर्भगृहमित्युपलक्षणं, तेन भूगृहमपि गृह्यते । श्लिष्ट्वा आलिङ्ग्य । पीनं मांसलं, ऊरुजानुवङ्क्षणयोर्मध्यं, जघनं कट्या अग्रिमभागः । ननु, 'गोरसानिक्षुविकृतीः' इत्यादिना यादृश आहारो हेमन्ते दर्शितस्तादृशः किमिति न निर्दिष्टः? सत्यं, हेमन्ते संचीयमानस्य कफस्य शैत्यात् प्रकुपितस्य वातस्योपशमनार्थं साधारण एव विधिर्यस्मायुक्तः, अतः साधारणविधिरत्र निर्दिष्टो न तादृश आहारः । यद्येवं तर्हि तन्त्रान्तरे तादृश एवाहारः कुतो निर्दिष्ट इति चेत्? उच्यते—हेमन्ते शीतानिलस्पर्शजन्यो बली वह्निर्यदि तादृशमाहारं न लभते तदा धातुक्षयमावहति, धातुक्षयाच्च तीव्रवातकोपः स्यादिति भयात्तन्त्रान्तरे तादृश आहारो दर्शितः । कार्तिककुण्डोऽमुं पाठमन्यथा पठति, स चाभावान्न लिखितः । हेमन्तशिशिरयोस्तुल्यत्वाद्धैमन्तिक एव विधिः शिशिरेऽपि सेव्यः; अतः शिशिरविधानं पृथङ्नोक्तम् । यत्केचिदत्र '·········प्राग्वातं रूक्षभोजनम् । वातलानि च द्रव्याणि शीतस्नानं च वर्जयेत्' इति पठन्ति । स त्वनार्षः पाठः, परंपराविच्छेदास्मरणात् समानतन्त्रानभिधानाच्च ॥ २०—३० ॥

**औष्ण्याद्वसन्ते कुपितः कुरुते च गदान् बहून् ।**
**ततोऽम्लमधुरस्निग्धलवणानि गुरूणि च ॥ ३१ ॥**
**वर्जयेद्वमनादीनि कर्माण्यपि च कारयेत् ।**
**षष्टिकान्नं यवान् शीतान् मुद्गान् नीवारकोद्रवान्॥**
**लावादिविष्किररसैर्दयायूषैश्च युक्तितः ।**
**पटोलनिम्बवार्ताकतिक्तकैश्च हिमात्यये ॥ ३३ ॥**
**सेवेन्मध्वासवारिष्टान् सीधुमाध्वीकमाधवान् ।**
**व्यायाममञ्जनं धूमं तीक्ष्णं च कवलग्रहम् ॥ ३४ ॥**
**सुखाम्बुना च सर्वार्थान् सेवेत कुसुमागमे ।**
**तीक्ष्णरूक्षकटुक्षारकषायं कोष्णमद्रवम् ॥ ३५ ॥**
**यवमुद्गमधुप्रायं वसन्ते भोजनं हितम् ।**
**व्यायामोऽत्र नियुद्धाध्वशिलानिर्वातजो हितः ३६**
**उत्सादनं तथा स्नानं वनिताः काननानि च ।**
**सेवेत**

वसन्तविधिमाह—औष्ण्यादित्यादि । कोष्णमीषदुष्णम् । अद्रवं द्रवरहितम् । यवमुद्गमधुप्रायं यवादिबहुलम् । व्यायामः शरीरायासजनकं कर्म । अत्र वसन्ते । नियुद्धादिकं व्यायाम इत्येतस्य विवरणम् । नियुद्धं बाहुयुद्धम् । अध्वा मार्गगमनम् । शिलानिर्घातः पाषाणास्फालनम् । उत्सादनमुद्वर्तनम् । वनिताः स्त्रियः ॥ ३१—३६ ॥—

**निर्हरेच्चापि हेमन्तोपचितं कफम् ॥ ३७ ॥**
**शिरोविरेकवमननिरूहकवलादिभिः ।**
**वर्जयेन्मधुरस्निग्धदिवास्वप्नगुरुद्रवान् ॥ ३८ ॥**

संशमनमभिधाय संशोधनमाह—निर्हरेच्चापीत्यादि । शिरोविरेकः नस्यम् । यद्यपि बाहुल्येन वाते निरूहोऽभिहितः, तथाऽपि सर्वदोषहरत्वात् कफेऽपि योज्यः । तथा च,—"बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते"—इत्यादि । कवलो गण्डूषः । वर्ज्यमाह—वर्जयेदित्यादि । मधुरादिवर्जनमुत्क्लेशपरिहारार्थम् । केचिदत्र 'हेमन्तनिचितः श्लेष्मा' इत्यादिकं पाठं पठन्ति, स च ग्रन्थगौरवभयात् परित्यक्तः ॥ ३७ ॥ ३८ ॥

**व्यायाममुष्णमायासं मैथुनं परिशोषि च ।**
**रसांश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्जयेत् ॥३९॥**

यस्माद्ग्रीष्मे व्यायामादिसेवनात्तीव्रतरा रोगा भवन्त्यतो व्यायामादिसेवां त्यजेदिति प्रतिपादनार्थं ग्रैष्मं विधिं विवक्षुरादौ वर्जनीयानाह—व्यायाममित्यादि । तत्रायासस्याल्पक्लेशतया व्यायामतो भेदः । यद्यपि पूर्वमनागतबाधे ग्रीष्मकाले पक्षान्मैथुनमुक्तं तथाऽप्यत्र यत्तस्य सर्वशो निषेधाभिधानं तद्ग्रीष्मस्यातिरूक्षताप्रतिपादनार्थम् । परिशोषि शोषणात्मकम् । अग्निगुणोद्रिक्ता रसाः कट्वम्ललवणाः ॥ ३९ ॥

**सरांसि सरितो वापीर्वनानि रुचिराणि च ।**
**चन्दनानि परार्ध्यानि स्रजः सकमलोत्पलाः ॥४०॥**
**तालवृन्तानिलाहारांस्तथा शीतगृहाणि च ।**
**घर्मकाले निषेवेत वासांसि सुलघूनि च ॥ ४१ ॥**
**शर्कराखण्डदिग्धानि सुगन्धीनि हिमानि च ।**
**पानकानि च सेवेत मन्थांश्चापि सशर्करान् ॥४२॥**
**भोजनं च हितं शीतं सघृतं मधुरद्रवम् ।**
**शृतेन पयसा रात्रौ शर्करामधुरेण च ॥ ४३ ॥**
**प्रत्यग्रकुसुमाकीर्णशयने हर्म्यसंस्थिते ।**
**शयीत चन्दनार्द्राङ्गः स्पृश्यमानोऽनिलैः सुखैः ४४**

अतः परं सेवनीयानाह—सरांसीत्यादि । सरांसि अमनुष्यखातानि, सरित् नदी, वापी पाषाणादिबद्धा ससो-

पाना, वनानि रुचिराणीति सदा यानि मनोहराणि काननानि । परार्ध्यानि उत्कृष्टानि । तालवृन्तानिलान् तालपत्रविरचितव्यजनपवनान् । दिग्धानि युक्तानि । सुगन्धीनि कर्पूरादिवासितानि । हिमानि शीतलानि । पानकानि चेति चकारान्मद्योचितस्य बहूदकं मद्यं केचिदिच्छन्ति । मधुरद्रवो रसालपनसादिजो यत्र भोजने तन्मधुरद्रवम् । मन्थान् जलघृताक्तसक्तून् । शृतेन पयसा क्वथितेन दुग्धेन । भोजनं रात्रौ हितमित्युक्ते दिवा मन्थादिपानमेवेति गम्यते । तथा च तन्त्रान्तरे—"दिवा पानानि शीतानि हितं रात्रौ च भोजनम् । ससर्पिःशर्करं शीतं शृतेन पयसा युतम्—" इति । प्रत्यग्रकुसुमाकीर्णे तत्कालोचितपुष्पयुक्ते । हर्म्यसंश्रिते धवलगृहोपरिस्थिते । शयीतेत्यत्रापि रात्राविति संबध्यते; तेन रात्रौ हर्म्यपृष्ठे शयीत, दिवा तु शीतगृहे । तथा च तन्त्रान्तरम्,—"दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले । भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्यमस्तके" —इति । सुखैः सुखोत्पादकैः । अत्र केचिद्बहूनि पाठान्तराणि मन्यन्ते । तानि तु विस्तरभयान्न लिखितानि । ॥ ४०—४४ ॥

**तापात्यये हिता नित्यं रसा ये गुरवस्त्रयः ।**
**पयो मांसरसा कोष्णास्तैलानि च घृतानि च ॥४५॥**
**बृंहणं चापि यत्किञ्चिदभिष्यन्दि तथैव च ।**
**निदाघोपचितं चैव प्रकुप्यन्तं समीरणम् ॥ ४६ ॥**
**निहन्यादनिलघ्नेन विधिना विधिकोविदः ।**
**(नदीजलं रूक्षमुष्णमुदमन्थं तथाऽऽतपम् ॥ ४७ ॥**
**व्यायामं च दिवास्वप्नं व्यवायं चात्र वर्जयेत् ।**
**यवषष्टिकगोधूमान् शालींश्चाप्यनवांस्तथा ॥ ४८ ॥**
**हर्म्यमध्ये निवाते च भजेच्छय्यां मृदूत्तराम् ।**
**सविषप्राणिविण्मूत्रलालादिष्ठीवनादिभिः ॥ ४९ ॥**
**समाप्लुतं तदा तोयमान्तरीक्षं विषोपमम् ।**
**वायुना विषदुष्टेन प्रावृष्येण च दूषितम् ॥ ५० ॥**
**तद्धि सर्वोपयोगेषु तस्मिन् काले विवर्जयेत् ।**
**निरूहैर्बस्तिभिश्चान्यैस्तथाऽन्यैर्मारुतापहैः ॥ ५१ ॥**
**कुपितं शमयेद्वायुं वार्षिकं चाचरेद्विधिम् ।)**

एवं नैदाघं विधिमुपदिश्याधुना प्रावृष्ेण्यं ब्रवीति—तापात्यय इत्यादि । गुरवस्त्रयो रसा मधुराम्ललवणाः । यद्यपि मधुरत्वेनैव पयःप्रभृतिकं प्राप्तं तथापि तेषामुपादानमत्यन्तहितत्वापादनार्थम् । बृंहणं चात्यर्थकर्शितस्योपचयार्थम् । यत् किंचिदिति तृप्तिजनकम् । निदाघोपचितं ग्रीष्मकालसंचितं, प्रकुप्यन्तं प्रकोपं गच्छन्तं, समीरणं वातम् । अनिलघ्नेन विधिना स्नेहस्वेदादिना । विधिकोविदो विधानपण्डितः । अत्रापि केचित्पाठान्तरं पठन्ति, तदपि ग्रन्थगौरवभयात्त्यक्तम् । ननु, वर्षाहेमन्तग्रीष्मेषु दोषसंचय एव वमनादिना संशोधनं निषेवतः शरद्वसन्तप्रावृट्सु दोषप्रकोप एव नास्ति, कुतस्तत्रोक्तो विधिः सार्थकः, तथा चान्यत्राप्युक्तं,—'संचयेऽपहृता दोषा लभन्ते नोत्तरा गतीः'—इति । नैवं, हेत्वन्तरवशायत्र संचयपूर्वकः प्रकोपस्तत्र प्रतिदोषप्रकोपं संचय एव विधिः संशोधनाख्य उक्तः, यस्तु संचयो यथर्तुविधिसेविनः, तत्र स्वस्थवृत्तविधिना संशमनं कार्यम् ॥ ४५—५१ ॥—

**ऋतावृतौ य एतेन विधिना वर्तते नरः ।**
**घोरानृतुकृतान् रोगान्नाप्नोति स कदाचन ॥ ५२ ॥**

एवमार्तवविधिमभिधायेदानीं तमनुसरतो मानवस्य स्वास्थ्यलाभमाह—ऋतावृतावित्यादि । एतेन अनन्तरोक्तेन । ऋतुकृतानिति ऋतुकृतशीतोष्णादिभिः कृतान् । रोगान्, ज्वरादिकान् । कार्तिकस्तु 'दोषान्' इति पठित्वा दोषान् वातादिविकारानिति व्याख्यानयति । अन्ये तु व्याख्यानयन्ति–ऋतुकृतानिति कृतशब्दस्यादौ विशब्दो लुप्तो द्रष्टव्यः, तेन ऋतुविकृतिकृतान् वातादिदोषान्नाप्नुयादित्यर्थः ॥ ५२ ॥

**अत ऊर्ध्वं द्वादशाशनप्रविचारान् वक्ष्यामः । तत्र शीतोष्णस्निग्धरूक्षद्रवशुष्कैककालिकद्विकालिकौषधयुक्तमात्राहीनदोषप्रशमनवृत्त्यर्थाः ॥५३॥**

अतः परमशनप्रविचारान् विवक्षुराह—अत ऊर्ध्वमित्यादि । अशनं भोजनं, विचारोऽत्र पृथग्भावः । ननु, द्वादशाशनप्रविचारस्य रोगविषयत्वात् स्वस्थवृत्तेऽशनप्रविभागविधानमयुक्तं? सत्यं, स्वस्थेऽपि वयःप्रकृतिभेदेन सात्म्यासात्म्यतया च आहारप्रविभागस्यौचित्यात्[1] । तानेव द्वादशाशनप्रविभागानाह–तत्रेत्यादि । तत्र तेषु द्वादशाशनप्रविभागेषु, शीतादयो द्वादशविधा अप्याहारा वृत्त्यर्थाः ॥ ५३ ॥

**तृष्णोष्णमददाहार्तान् रक्तपित्तविषातुरान् ।**
**मूर्च्छार्तान् स्त्रीषु च क्षीणान् शीतैरन्नैरुपाचरेत् ॥**

शीताहारविषयमाह—तृष्णेत्यादि । शीतैरिति तृष्णादिक्षीणान्तैः प्रत्येकं संबध्यते; तृष्णादिपीडितान् नरान् शीतस्पर्शैः शीतवीर्यैश्चान्नपानैरुपाचरेदित्यर्थः । मदो मद्यजनितो विकारः । अन्नैरिति बहुवचनेन पानस्यापि स्वीकारः ॥ ५४ ॥

**कफवातामयाविष्टान् विरिक्तान् स्नेहपायिनः ।**
**प्रक्लिन्नदेहांश्च नरानुष्णैरन्नैरुपाचरेत् ॥ ५५ ॥**

उष्णाहारविषयमाह—कफेत्यादि । कफवातामयानिति कफवातरोगाक्रान्तान् । प्रक्लिन्नकायानिति क्लेदादिसहितशरीरान्[2] ॥ ५५ ॥

**वातिकान् रूक्षदेहांश्च व्यायामोपहतांस्तथा ।**
**व्यायामिनश्चापि नरान् स्निग्धैरन्नैरुपाचरेत् ॥५६॥**

---

१ 'वयसि अशनप्रविचारस्योचितत्वात्' इति पाठान्तरम् ।
२ 'कारणान्तरेणार्द्रतामापन्नान्' इति पाठान्तरम् ।

स्निग्धाहारविषयमाह—वातिकानित्यादि । वातिकानिति वातकृतान्, वातिकानामेव रूक्षदेहत्वात् । वातिकानित्येतावतैव रूक्षदेहानिति सिद्धं, विशेषणाभिधानमवातिकानामपि निमित्ततो रूक्षदेहतापन्नानां स्निग्धान्नेनोपचरणार्थम् ॥ ५६ ॥

**मेदसाऽभिपरीतांस्तु स्निग्धान्मेहातुरानपि ।**
**कफाभिपन्नदेहांश्च रूक्षैरन्नैरुपाचरेत् ॥ ५७ ॥**

रूक्षभोजनविषयमाह—मेदसाऽभिपरीतानित्यादि । मेदसा अभिपरीतानिति मेदोव्याप्तशरीरानित्यर्थः । कफाभिपन्नदेहान् कफव्याप्तशरीरान् । स्निग्धानिति स्निग्धशरीरान् । कार्त्तिकस्तु स्निग्धानित्यत्र स्थूलानिति पठित्वा व्याख्यानयति । मेदसाऽभिपरीतानित्युक्ते स्थूलानिति लब्धे तदभिधानं मेदोदुष्टिभ्यो विशेषेण स्थौल्ये रूक्षभोजनप्रतिपादनार्थम् ॥ ५७ ॥

**शुष्कदेहान् पिपासार्त्तान् दुर्बलानपि च द्रवैः ।**

द्रवभोजनविषयमाह—शुष्कदेहानित्यादि । शुष्कदेहादिकान् द्रवबहुलैरन्नैरुपाचरेत् ॥—

**प्रक्लिन्नकायान् व्रणिनः शुष्कैर्मेहिनमेव च ॥ ५८ ॥**

शुष्काहारविषयमाह—प्रक्लिन्नेत्यादि । प्रक्लिन्नकायानिति कुष्ठिप्रभृतीन् कुत्सितशरीरान् । व्रणिन इति क्लिन्नव्रणयुक्तान् । व्रणितोपासनीये व्रणिनो द्रवोत्तरमशनमुक्तं, तदक्लिन्नशुद्धव्रणविषयम् । यदा प्रक्लिन्नकायानिति व्रणिन इत्यस्य विशेषणं तदा अव्रणानां क्लिन्नकायानां शुष्कान्नैरुपचरणं न स्यात्, न च तथेष्यते, तस्मान्नैवं विशेषणम् । अत्र तु संक्लेदत्वात् शुष्कं व्यवस्थितमिति ॥ ५८ ॥

**एककालं भवेद्देयो दुर्बलाग्निविवृद्धये ।**

एककालमित्यादि । एककालमपि हीनमात्र एव आहारो दातव्यः, वक्ष्यमाणवाक्यात् । 'दुर्बलाग्निविवृद्धये' इत्यत्र 'दुर्बलायाग्निवृद्धये' इति केचित् पठन्ति । तत्र दुर्बलशब्देनैव देहदौर्बल्यादग्निदौर्बल्यमिच्छन्ति ॥—

**समाग्नये तथाऽऽहारो देयः कालमथोभयम् ॥ ५९ ॥**

समाग्नय इत्यादि । समाग्नये तथेति समाग्नेः समत्वरक्षणः ॥ ५९ ॥

**औषधद्वेषिणे देयस्तथौषधसमायुतः ।**

औषधद्वेषिण इत्यादि । औषधसमायुतः 'आहार' इति शेषः ॥—

**मन्दाग्नये रोगिणे च मात्राहीनः प्रशस्यते ॥ ६० ॥**

हीनमात्रस्य भोजनस्य विषयमाह—मन्दाग्नये इत्यादि । मन्दानलाय रोगयुक्ताय च मात्राहीन आहारो देयः; परमेककालमेव, पूर्ववाक्यात् ॥ ६० ॥

**यथर्तुदत्तश्चाहारो दोषप्रशमनः स्मृतः ॥ ६१ ॥**

१ 'धातुवृद्ध्या आर्द्रीभूतशरीरान्' इति पाठान्तरम् ।

यथार्त्वित्यादि । यथेति शास्त्रानुसारेण विहित आहारो दोषप्रशमनः कथित इत्यर्थः ॥ ६१ ॥

**अतः परं तु स्वस्थानां वृत्त्यर्थं सर्वमेव च ।**
**प्रविचारानिमानेवं द्वादशात्र प्रयोजयेत् ॥ ६२ ॥**

अत इत्यादि । अतः परमिति अनन्तरोक्ताद्दोषप्रशमनाहारात् परमूर्द्ध्वम् । वृत्त्यर्थमिति शरीरधारणार्थम् । स्वस्थानामिति समधातूनां समदोषप्रकृतीनां च । सर्वं एवेति समसर्वरस आहारः स्मृत इत्यर्थः ॥ ६२ ॥

**अत ऊर्ध्वं दशौषधकालान् वक्ष्यामः । तत्राभक्तं प्राग्भक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्तरं चेति दशौषधकालाः ॥ ६३ ॥**

अतो दशौषधकालान्निर्दिशन्नाह—अत ऊर्ध्वमित्यादि । औषधकालान् प्रत्येकं निर्दिशन्नाह—तत्रेत्यादि । अभक्तमित्यस्यस्थाने निर्भक्तमित्यन्ये पठन्ति ॥ ६३ ॥

**तत्राभक्तं तु यत् केवलमेवौषधमुपयुज्यते ॥६४॥**

अभक्तमित्यादेरौषधकालस्य गुणं विषयं चाह—तत्र निर्भक्तमित्यादि । तत्र एतेषु निर्भक्तादिषु मध्ये यत् केवलमन्नरहितमौषधमुपयुज्यते तन्निर्भक्तम् ॥ ६४ ॥

**वीर्याधिकं भवति भेषजमन्नहीनं**
**हन्यात्तथाऽऽमयमसंशयमाशु चैव ।**
**तद्बालवृद्धयुवतीमृदवोऽथ पीत्वा**
**ग्लानिं परां समुपयान्ति बलक्षयं च ॥ ६५ ॥**

निर्भक्तस्य स्वरूपमभिधाय गुणं विषयं च प्रतिपादयन्नाह—वीर्याधिकमित्यादि । वनिता स्त्री, मृदवः सुकुमाराः । बालादीनां निर्भक्तौषधस्य दूषणमभिदधद्बालादिभ्य इतरेषां निर्भक्तविषयं बोधयति । तत्राभक्तं त्वित्यादिकं भाष्यं,वीर्याधिकमित्यादिका गुणाः, बालवृद्धवनितामृदुविपर्ययो विषयः । कार्त्तिकस्तु सर्वेषां निर्भक्तादीनां प्रागेव स्वरूपमभिधाय पश्चात् सर्वेषां गुणान् विषयांश्च प्रतिपादयति ॥ ६५ ॥

**प्राग्भक्तं नाम-यत् प्राग्भक्तस्योपयुज्यते ६६**

प्राग्भक्तस्येति भक्तस्यादावित्यर्थः ॥ ६६ ॥

**शीघ्रं विपाकमुपयाति बलं न हिंस्या-**
**दन्नावृतं न च मुहुर्वदनान्निरेति ।**
**प्राग्भक्तसेवितमथौषधमेतदेव**
**दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥६७॥**

प्राग्भक्तस्य गुणं विषयं चाह—शीघ्रमित्यादि । आहारावृतत्वान्मुहुर्मुहुर्वारंवारं वक्त्रात् बहिर्न निरेति । विपाकं सुखपरिणामम् । न चेति निरेतीत्यत्र संबध्यते । वदनान्मुखकुहरात् । निरेति निर्गच्छति । औषधमेतदेवेति प्राग्भक्ताख्यमौषधम् ॥ ६७ ॥

**अधोभक्तं नाम-यद्भुक्त्वा पीयते ॥ ६८ ॥**

अधोभक्तस्य स्वरूपमाह—अधोभक्तमित्यादि ॥ ६८ ॥

**मध्येभक्तं नाम-यन्मध्ये भक्तस्य पीयते ॥ ६९ ॥**

**पीतं यदन्नमुपयुज्य तदूर्ध्वकाये**
**हन्याद्गदान् वहुविधांश्च बलं दधाति ।**
**मध्ये तु पीतमुपहन्त्यविसारिभावा-**
**द्ये मध्यदेहमभिभूय भवन्ति रोगाः ॥ ७० ॥**

मध्येभक्तमाह—मध्येभक्तमित्यादि । मध्ये पीतं 'भक्तस्य' इति शेषः । अधोभक्तमध्येभक्तयोर्गुणमाह—पीतमित्यादि । बलं ददातीति ऊर्ध्वकाय एव । अविसारिभावात् अधःप्रसरणस्वभावात् । मध्यदेशं कोष्ठं, अभिभूय व्याप्य ॥ ६९ ॥७०॥

**अन्तराभक्तं नाम-यदन्तरा पीयते पूर्वापरयोर्भक्तयोः ॥ ७१ ॥**

**हृद्यं मनोबलकरं त्वतिदीपनीयं**
**पथ्यं सदा भवति चान्तरभक्तमेतत् ॥ ७२ ॥**

अन्तराभक्तमाह—अन्तराभक्तमित्यादि । अन्तराभक्तं यत् पूर्वापरयोर्भक्तयोरन्तरा मध्ये पीयते, पूर्वापरयोरिति प्रातःसायन्तनयोर्भोजनयोरित्यर्थः ॥ ७१ ॥ ७२ ॥

**सभक्तं नाम-औषधेषु यत्साध्यते भक्तम् ॥ ७३**

**पथ्यं सभक्तमबलाबलयोर्हितं हि**
**तद्द्वेपिणामपि तथा शिशुवृद्धयोश्च ॥ ७४ ॥**

सभक्तमाह—सभक्तमित्यादि । सभक्तं भक्तेन सह साधितं, भक्तयुक्तं वा । अन्तराभक्तसभक्तयोर्गुणविषयावाह—हृद्यमित्यादि । हृद्यं हृदयाय हितम् । मनोबलकरमिति मनोबलं मनःसामर्थ्यं, तत्करोतीत्यर्थः । अवलावलयोरिति स्त्रीदुर्बलयोरित्यर्थः । तद्द्वेपिणामिति भेषजद्वेषिणामित्यर्थः ॥ ७३ ॥ ७६ ॥

**सामुद्गं नाम-यद्भक्तस्यादावन्ते च पीयते ॥ ७५॥**

**दोपे द्विधा प्रविसृते तु समुद्गसंज्ञ-**
**माद्यन्तयोर्यदशनस्य निषेव्यते तु ॥ ७६ ॥**

सामुद्गमाह—सामुद्गमित्यादि । द्विधा प्रविसृते ऊर्ध्वाधःप्रसारिते । ननु, सामुद्गविवरणे भक्तस्यादावन्ते चेत्युपादानात् 'आद्यन्तयोर्यदशनस्य' इति गतार्थे? उच्यते—चूर्णकल्कादीनामपि समुद्गसंज्ञार्थं पुनरुक्तिः, अन्यथाऽनन्तरोक्तस्य 'पीतं' इत्यस्यानुवर्तनात् पानस्यैव समुद्गसंज्ञा स्यात् ॥७५॥७६॥

**मुहुर्मुहुर्नाम—सभक्तमभक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते ॥ ७७ ॥**

**श्वासे मुहुर्मुहुरतिप्रसृते च कासे**
**हिक्कावमीषु स वदन्त्युपयोज्यमेतत् ॥ ७८ ॥**

मुहुरौषधमाह—मुहुर्मुहुरित्यादि । मुहुर्मुहुः सभक्तमभक्तं वा यदौषधं प्रयुज्यते तन्मुहुर्मुहुरित्यर्थः । मुहुर्मुहुरित्येतच्छ्वासकासादिषूपयोज्यम् ॥ ७७ ॥ ७८ ॥

**ग्रासान्तरं नाम-यत्पिण्डव्यामिश्रम् ॥ ७९ ॥**

**ग्रासान्तरेषु वितरेद्वमनीयधूमान्**
**श्वासादिषु प्रथितदृष्टगुणांश्च लेहान् ॥ ८० ॥**

ग्रासान्तरमाह—पिण्डव्यामिश्रमिति कवलव्यामिश्रमित्यर्थः। तन्त्रान्तरदर्शनात् ग्रासं ग्रासमिति बोद्धव्यम् । ग्रासान्तरेषु कवलान्तरेष्वित्यर्थः । वमनीयधूमानिति स्नायुचर्मखुरप्रभृतिभिः कृतान् ॥ ७९ ॥ ८० ॥

**एवमेते दशौषधकालाः ॥ ८१ ॥**

सांप्रतं संग्रहमाह—एवमित्यादि ॥ ८१ ॥

**विसृष्टे विण्मूत्रे विशदकरणे देहे च सुलघौ**
**विशुद्धे चोद्गारे हृदि सुविमले वाते च सरति ।**
**तथाऽन्नश्रद्धायां क्लमपरिशमे कुक्षौ च शिथिले**
**प्रदेयस्त्वाहारो भवति भिषजां कालः स तु मतः ८२**

प्रतिऋतुविहिताहारो हि कालोपयुक्तः सुखत्वाय संपद्यते, अतस्तत्कालं नियमयन्नाह—विसृष्टे इत्यादि । विसृष्टे विण्मूत्रे इति कृतविण्मूत्रे । विशदकरणे इति विशदानि करणानि यस्मिन् देहे स विशदकरणः तस्मिन् विशदेन्द्रिये इत्यर्थः । देहे सुलघाविति शरीरे गुरुत्वरहिते इत्यर्थः । विशुद्धे चोद्गारे इति मधुराम्लधूमगन्धिवियुक्ते इत्यर्थः । हृदि सुविमले इति निराकुले हृदये इत्यर्थः । सरतीति अधः प्रवहति वाते इत्यर्थः । अन्नश्रद्धायां भक्ताकाङ्क्षायामित्यर्थः । क्लमपरिशमे इति आयासश्रमरहिते इत्यर्थः । कुक्षौ च शिथिले इति बुभुक्षोदयात् स्रस्ते कुक्षौ उच्चताररहिते इत्यर्थः । आहारः दातव्यो भवति । भिषजा वैद्येन । कालः स तु मतः स एव मत इत्यर्थः । तुशब्दोऽत्र अवधारणार्थः । भिषग्ग्रहणं वैद्याप्रत्यवेक्षितस्य आहारस्य अभोज्यत्वप्रतिपादनार्थम् ॥ ८२ ॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे चतुःषष्टितमोऽध्यायः ॥ ५९ ॥

---

## पञ्चषष्टितमोऽध्यायः ।

**अथातस्तन्त्रयुक्तिमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय) ॥ २ ॥**

अथात इत्यादि । अथात इति पूर्ववत् व्याख्येयम् । त्रायते शरीरमनेनेति तन्त्रं शास्त्रं चिकित्सितं, तस्य युक्तयो योजनाः तन्त्रयुक्तयः, ता अधिकृत्य कृतोऽध्यायः, तम् । वेदोत्पत्तिवदत्र तद्धितलोपः । ताश्च तन्त्रयोजना द्विविधाः—वाक्ययो

जना अर्थयोजनाश्च; तत्र वाक्ययोजना योगोद्देशनिर्देशाद्याः, अर्थयोजना अधिकरणपदार्थादयः ॥ १ ॥ २ ॥

**द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति शास्त्रे। तद्यथा— अधिकरणं योगः पदार्थो हेत्वर्थ उद्देशो निर्देश उपदेशोऽपदेशः प्रदेशोऽतिदेशोऽपवर्जो वाक्यशेषोऽर्थापत्तिर्विपर्ययः प्रसङ्ग एकान्तोऽनेकान्तः पूर्वपक्षो निर्णयोऽनुमतं विधानमनागतावेक्षणमतिक्रान्तावेक्षणं संशयो व्याख्यानं स्वसंज्ञा निर्वचनं निदर्शनं नियोगो विकल्पः समुच्चय ऊह्यमिति ॥ ३ ॥**

संख्याभेदेन तन्त्रयुक्तीर्निर्दिशन्नाह—द्वात्रिंशदित्यादि । शास्त्रे सौश्रुते । अधिकरणमित्यादिसंख्येयनिर्देशादेव द्वात्रिंशत् संख्या लब्धा, अतस्तत्करणमन्यतन्त्रोक्ता षट्त्रिंशत् चत्वारिंशद्वा तन्त्रयुक्तय इति संख्यानिषेधार्थम् । शास्त्रे इत्यत्रान्ये समासेनेति पठित्वा व्याख्यानयन्ति—अन्यत्र विस्तरेण षट्त्रिंशच्चत्वारिंशत्तन्त्रयुक्तयः, अत्र द्वात्रिंशदिति समासेनोक्तम् । कतमास्तास्तन्त्रयुक्तय इत्याह—तद्यथेत्यादि । तद्यथेति निदर्शनम् । अधिकरणादीनि सूत्रकार एव व्याख्यास्यति ॥ ३ ॥

**अत्रासां तन्त्रयुक्तीनां किं प्रयोजनमित्युच्यते— वाक्ययोजनमर्थयोजनं च ॥ ४ ॥**

तन्त्रयुक्तीनां प्रयोजनमाह—अत्रासामित्यादि । अत्र चिकित्साशास्त्रे । वाक्ययोजनमर्थयोजनं चेति वाक्यस्य असंबद्धस्य योजनं संबधनं वाक्ययोजनं, लीनस्य असङ्गतस्य च अर्थस्य योजनं सङ्गतीकरणं च अर्थयोजनम् । तत्र कासाञ्चित्तन्त्रयुक्तीनां योगोद्देशनिर्देशादीनां वाक्ययोजनं, कासाञ्चिदधिकरणहेत्वर्थादीनामर्थयोजनं प्रयोजनम् ॥ ४ ॥

**भवन्ति चात्र श्लोकाः ।**

**असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम् ।**
**स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तितः ॥ ५ ॥**
**व्यक्ता नोक्ताश्च ये ह्यर्था लीना ये चाप्यनिर्मलाः ।**
**लेशोक्ता ये क्वचित्तन्त्रे तेषां चापि प्रसाधनम् ॥६॥**

अत्रैव पूर्वाचार्यपठितौ श्लोकावधिकार्थख्यापनायाह— असद्वादिप्रयुक्तानामित्यादि । असद्वादिनो हि प्रतिपक्षवादिनः एकाश्रयवादिनो वेत्यादयः । प्रतिषेधनं अपदेशादिभिः तन्त्रयुक्तिभिः परपक्षदूषणम् । स्ववाक्यसिद्धिः स्ववाक्यस्थापनं निर्णयाख्यया तन्त्रयुक्त्या । यथा—प्रतिरसं पाक इत्यसद्वादिदर्शनमपदेशाख्यया तन्त्रयुक्त्या निराकृत्य द्विविधः पाक इत्यादिस्वमतसाधनं निर्णयाख्यया तन्त्रयुक्त्या कृतम् । व्यक्ता नोक्ता स्पष्टतया नोक्ताः । लीना असम्यग्दर्शिताः । अनिर्मला लेशेनोक्ताः । तेषां प्रसाधनं योगप्रभृतिभिः क्रियते ॥ ५ ॥ ६ ॥

**यथाऽम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ।**
**प्रबोध्यस्य प्रकाशार्थास्तथा तन्त्रस्य युक्तयः ॥ ७ ॥**

केचिदत्र तन्त्रयुक्तीनां स्तुत्यर्थं श्लोकं पठन्ति—यथाम्बुजवनस्यार्क इत्यादि । एष च श्लोकः टीकासु मूलत्वेन वर्णितः ॥ ७ ॥

**तत्र यमर्थमधिकृत्योच्यते तदधिकरणं; यथा— रसं दोषं वा ॥ ८ ॥**

अतः परमुद्दिष्टानां तन्त्रयुक्तीनां विवरणमाह—तत्रेत्यादि । तत्र तासु तन्त्रयुक्तिषु मध्ये; यमर्थमधिकृत्य अपरे अर्था अभिधीयन्ते तदधिकरणसंज्ञं भवति । उदाहरणमाह—रसं दोषं वेति । एतेनैतदुक्तं भवति—रसं दोषं वा अधिकृत्योच्यते, उल्लेखाभावेऽपि यदर्थजातमभिहितं तत् सर्वं तदधिकारे प्रतीयते इत्यर्थः ॥ ८ ॥

**येन वाक्यं युज्यते स योगः । यथा—**

**तैलं पिबेच्चामृतवल्लिनिम्ब-**
**हिंस्राभयावृक्षकपिप्पलीभिः ।**
**सिद्धं बलाभ्यां च सदेवदारु**
**हिताय नित्यं गलगण्डरोगे ॥ ९ ॥**

**सिद्धं पिबेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धं प्रयुक्तं, एवं दूरस्थानामपि पदानामेकीकरणं योगः ॥ १० ॥**

योगाख्यां तन्त्रयुक्तिमाह—येनेत्यादि । तत्र व्यत्यासोक्तानां योगः क्रियाकारकयोजना । यथेति निदर्शने । सन्निकृष्टविप्रकृष्टानां पदानामेकीकरणं योग इत्यर्थः । व्यत्यासेनोक्तं पदयोगं दर्शयन्नाह—तैलमित्यादि । विपर्ययेणोक्तस्य पदस्यैकीकरणं योग इत्यर्थः ॥ ९ ॥ १० ॥

**योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः, अपरिमिताश्च पदार्थाः । यथा—स्नेहस्वेदाञ्जनेषु**

---

१. 'असद्वादिप्रयुक्तानां वचनानां प्रतिषेधनं परमतं निराकृत्य स्वमतयोजना, असद्वादिवाक्यप्रतिषेधयुक्तयो द्रव्यादिविज्ञाने दर्शिताः । स्ववाक्यं मधुरकटुकादित्यादिकं स्वमतस्थापनं, इदमपि तत्रैव दर्शितम् । व्यत्यासोक्ता विपर्ययेणोक्ताः, ते विपर्ययाख्यतन्त्रयुक्त्या व्याख्यायन्ते; लीना असम्यग्दर्शिताः विशेषा द्वित्र्यादिवाचकाः, ते प्रकरणादिभिः स्पष्टीक्रियन्ते । 'अमर्मोपहते देशे सिरासन्ध्यस्थिवर्जिते' इत्यादिका ह्यर्था अनिर्मलाः, ते व्याख्यानादिभिरूहादिभिर्व्यज्यन्ते । तेषां चापि प्रसाधनं तन्त्रयुक्तिभिः क्रियते' इति पाठान्तरम् ।

१. 'अस्यायमर्थः—यमर्थमधिकृत्य येऽर्था अभिधीयन्ते तदधिकरणसंज्ञं सर्वस्याभिधेयस्येति । तमेवार्थमाह—यथा—रसं दोषं चेति, रसविज्ञाने रसमधिकृत्य दोषविज्ञाने दोषमधिकृत्य चोच्यत इति' इति पाठान्तरम् । २. अस्याग्रे क्वचित् 'पदस्य, पदयोः, पदानां वा' इत्यधिकं दृश्यते ।

**निर्दिष्टेषु द्वयोस्त्रयाणामर्थानामुपपत्तिर्दृश्यते, तत्र योऽर्थः पूर्वापरयोगसिद्धो भवति स ग्रहीतव्यः; यथा—वेदोत्पत्तिं व्याख्यास्याम इत्युक्ते सन्दिह्यते बुद्धिः—कतमस्य वेदस्यायमुत्पत्तिं वक्ष्यतीति, ऋग्वेदादयस्तु वेदाः; तत्र पूर्वापरयोगमुपलभ्य ( विद विद्ऌ इत्येतयोश्च धात्वोरनेकार्थयोः प्रयोगः ) पश्चात् प्रतिपत्तिर्भवति-आयुर्वेदोत्पत्तिमयं विवक्षुरित्येवं पदार्थः ॥ ११ ॥**

पदार्थाभिधां तन्त्रयुक्तिमाह—योऽर्थोऽभिहित इत्यादि । पद्यते निगद्यते येनार्थ इति, सूत्रस्यापि पदत्वात्; सूत्रे योऽर्थः प्रतिपादितः स पदार्थः । पदार्थाख्यतन्त्रयुक्तिं प्रतिपादयति—अपरिमिता इत्यादि । तत्र स्नेहशब्दे निर्दिष्टे हि गुणप्रेमसर्पिषां त्रयाणामर्थानामुपपत्तिर्दृश्यते, स्वेदशब्देनापि साग्निनिरग्निक्रियोरूष्मणोः प्राप्तिः, तेषु पदार्थेषु यादृशः पदार्थो गृह्यते तादृशमाह—तत्र योऽर्थ इत्यादि । पूर्वोक्तपरोक्तवाक्यसंबन्धेनोपपन्नो योऽर्थो भवति स ग्रहीतव्य इत्यर्थः । उदाहरणमाह—यथा वेदोत्पत्तिमित्यादि । सन्दिह्यते सन्देहं गच्छतीत्यर्थः । कथं सन्दिह्यत इत्याह—कतमस्येत्यादि । ततः कतमस्य वेदस्योत्पत्तिं वक्ष्यतीति सन्दिह्यते, तस्मिन् सन्देहे यथा प्रत्ययार्थः स्वीकर्तव्यस्तमाह—तत्रेत्यादि । एतेन आयुर्वेदं वक्ष्याम इत्यत्र वेद आयुर्वेद इत्यभिप्रायः ॥ ११ ॥

**यदन्यदुक्तमन्यार्थसाधकं भवति स हेत्वर्थः । यथा—मृत्पिण्डोऽद्भिः प्रक्लिद्यते तथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति ॥ १२ ॥**

हेत्वर्थतन्त्रयुक्तेर्लक्षणमाह—यदन्यदित्यादि । उदाहरणमाह—यथा मृदित्यादि । अत्र बाह्येन मृत्पिण्डदृष्टान्तेन आभ्यन्तरो व्रणप्रक्लेदः साध्यते ॥ १२ ॥

**समासकथनमुद्देशः । यथा—शल्यमिति ॥ १३ ॥**

उद्देशलक्षणमाह—समासेत्यादि । संक्षेपेण भणनमुद्देश इत्यर्थः । उदाहरणमाह—यथा शल्यमिति । सर्वमेवाबाधजननं सङ्क्षेपेण शल्यमुच्यते, नतु शारीरागन्तुभेदेन प्रपञ्चनम् ॥ १३ ॥

**विस्तरवचनं निर्देशः । यथा—शारीरमागन्तु चेति ॥ १४ ॥**

निर्देशलक्षणमाह—विस्तरेत्यादि । विस्तरेण भाषणं निर्देश इत्यर्थः । उदाहरणमाह—यथा शारीरमागन्तुकं चेति । शारीरशल्यमागन्तुकं चेति शल्यं द्विविधमुच्यते ॥ १४ ॥

**एवमित्युपदेशः । यथा—'तथा न जागृयाद्रात्रौ दिवास्वप्नं च वर्जयेत्' इति ॥ १५ ॥**

उपदेशलक्षणमाह—एवमित्यादि । किं कुर्यादित्युपदेश इत्यर्थः । उदाहरणमाह—यथेत्यादि । ननूपदेशनियोगयोः को भेदः ? उच्यते, प्रायिक उपदेशः, यथा—रात्रौ न जागृयादिति प्रायिकत्वेनोपन्यस्तं, कफाद्यभिभूते तु तत्र रात्रिजागरणस्यापि शस्तत्वात्; दिवा न स्वापं कुर्यादित्यपि प्रायिकं, ग्रीष्मे तृष्णाद्यन्वये च दिवास्वापस्योचितत्वात् । नियोगश्चाप्रायिकः, यथा—पथ्यमेव भोक्तव्यमिति; यद्यपि 'ज्वरितोऽहितमश्नीयाद्यदि चास्यारुचिर्भवेत्' इत्यादिना अपथ्यभोजनस्यावकाशः, तथापि तदानीमपथ्यस्यैव पथ्यत्वमिति नियोगस्य व्यभिचारो नास्ति ॥ १५ ॥

**अनेन कारणेनेत्यपदेशः, यथोपदिश्यते—मधुरेण श्लेष्माऽभिवर्धत इति ॥ १६ ॥**

अपदेशलक्षणमाह—अनेनेत्यादि । अनेन कारणेन कार्यं प्रति हेतुकथनमपदेश इत्यर्थः । उदाहरणमाह—यथोपदिश्यत इत्यादि । यथोपदिश्यते इति उदाहरणोपक्रमे । द्रव्यविशेषो मधुरः कुतः श्लेष्माणं वर्धयति ? अर्थान्निजभावेन मधुरत्वेनेत्यर्थः ॥ १६ ॥

**प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः । यथा—देवदत्तस्यानेन शल्यमुद्धृतं तस्माद्यज्ञदत्तस्याप्ययमेवोद्धरिष्यतीति ॥ १७ ॥**

प्रदेशमाह—प्रकृतस्येत्यादि । उदाहरणमाह—यथा देवदत्तस्येत्यादि । अत्र यज्ञदत्तस्य शल्योद्धरणं प्रस्तुतं, तद्देवदत्तस्य शल्योद्धरणेनातिक्रान्तेन साध्यते ॥ १७ ॥

**प्रकृतस्यानागतस्य साधनमतिदेशः । यथा—अनेनास्य वायुरूर्ध्वमुत्तिष्ठते तेनोदावर्तः स्यादिति १८**

अतिदेशमाह—प्रकृतस्येत्यादि । अनागतस्य भविष्यतः । उदाहरणमाह—यथाऽनेनेत्यादि । अत्र वायोरूर्ध्वमुत्थानं प्रकृतम् । तेन प्रस्तुतेन अनागतं उदावर्तित्वं साध्यते । उदावर्तः स्यात् उदावर्तः संभवेत् ॥ १८ ॥

**अभिव्याप्यापकर्षणमपवर्जः । यथा—अस्वेद्या विषोपसृष्टा अन्यत्र कीटविषादिति ॥ १९ ॥**

१. 'पद्यते गम्यतेऽनेनार्थोऽस्मिन्निति व्युत्पत्त्या सूत्रस्यापि पदत्वं, अतः सूत्रोक्तार्थस्यापि पदार्थता । अन्ये तु सूत्रपदे इति पठित्वा व्याख्यानयन्ति—सूत्रस्य पदं सूत्रपदं तस्मिन् योऽर्थः स पदार्थः । पदे इत्येकत्वनिर्देशादेकस्यैव पदस्य योऽर्थः स एव परं पदार्थः स्यादित्यत आह—पादस्येत्याहि । अनेकार्थं पदं दर्शयन्नाह—तत्र स्नेहेत्यादि । स्नेहशब्दो मैत्र्यां रसधातौ सर्पिरादौ च वर्तते; स्वेदशब्दोऽग्निस्वेदोष्मस्वेदादिपूक्तः; अञ्जनशब्दो नेत्राञ्जनाभ्यङ्गयोः । पूर्वापरयोगसिद्ध इति पूर्वापरसंबन्धी यो योगः प्रकृतिप्रत्ययसंबन्धेन तेन सिद्धः, वृद्धव्यवहाराद्वः सिद्ध इत्यन्ये । तमेव संशयमाह—कतमस्येत्यादि ।' इति पाठान्तरम् । २ 'यदुक्तमुभयार्थसाधकं' इति पाठान्तरम् ।

१ 'यदस्य' इति पाठान्तरम् ।

अपवर्जमाह—अभिव्याप्येत्यादि । गुणक्रियादिभिः सर्वतो वा अभिव्याप्य कस्यचित् पदार्थस्य तेभ्यो गुणक्रियादिभ्यः पृथक्करणमपवर्जः । उदाहरणमाह—यथा अखेद्या इत्यादि । उत्सर्गरूपतया विषोपसृष्टान् अखेद्यान् प्रतिपाद्य अपवादमाह—अन्यत्रेत्यादि ॥ १९ ॥

**येन पदेनानुक्तेन वाक्यं समाप्येत स वाक्यशेषः । यथा—शिरःपाणिपादपार्श्वपृष्ठोदरोरसामित्युक्ते पुरुषग्रहणं विनाऽपि गम्यते पुरुष एवोक्त इति ॥ २० ॥**

वाक्यशेषमाह—येनेत्यादि । उदाहरणमाह—यथा शिर इत्यादि । गम्यते ज्ञायते इत्यर्थः ॥ २० ॥

**यदकीर्तितमर्थादापद्यते साऽर्थापत्तिः । यथौदनं भोक्ष्ये इत्युक्तेऽर्थापन्नं भवति नायं पिपासुर्यवागूमिति ॥ २१ ॥**

अर्थापत्तिमाह—यदकीर्तितमित्यादि । अकीर्तितं अप्रतिपादितम् । तदुदाहरणमाह—यथौदनमित्यादि । नायं पातुमिच्छुर्यवागूमित्यर्थः ॥ २१ ॥

**यद्यत्राभिहितं[१] तस्य प्रातिलोम्यं विपर्ययः । यथा—कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्या इति ॥२२॥**

विपर्ययमाह—यदत्राभिहितमित्यादि । प्रातिलोम्यं विपरीतम् । उदाहरणमाह—यथा कृशाल्पेत्यादि । विपर्ययेण विपरीतमेव गम्यते, अर्थापत्त्या अविपरीत एवार्थः प्रतीयत इत्यनयोर्भेदः ॥ २२ ॥

**प्रकरणान्तरेण समापनं[२] प्रसङ्गः । यथा—प्रकरणान्तरितो योऽर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः । यथा—महाभूतशरीरिसमवायः पुरुषस्तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय, भूतचिन्तायां पुनरुक्तं-यतोऽभिहितं पञ्चमहाभूतशरीरिसमवायः पुरुष इति स खल्वेष कर्मपुरुषश्चिकित्सायामधिकृत इति ॥ २३ ॥**

प्रसङ्गमाह—प्रकरणान्तरेणेत्यादि । प्रकरणान्तरेण प्रकरणान्तरोक्तेनेत्यर्थः । समानं तुल्यम् । उदाहरणमाह—यथेत्यादि । असकृदुक्तः पुनःपुनरुक्तः । समाप्यते समाप्तिं नीयते । तदेव कथ्यते—यथेत्यादि । अपरे तु 'अधिकरणान्तरितो योऽर्थोऽसकृदुक्त' इति पठित्वा व्याख्यानयन्ति—स्नेहविरेकाधिकारयोर्नवज्वरी निषिद्धः, पुनर्ज्वराधिकारे तरुणज्वरिणः स्नेहशोधने निषिद्धे इति अधिकरणेऽन्तरितस्य असकृदुक्तिः ॥ २३ ॥

**यदवधारणेनोच्यते स एकान्तः । यथा—त्रिवृद्विरेचयति, मदनफलं वामयतीति ॥ २४ ॥**

एकान्तलक्षणमाह—सर्वत्रेत्यादि । अवधारणेन अविकल्पेन । उदाहरणमाह—यथा त्रिवृद्विरेचयतीति ॥ २४ ॥

**क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकार्थः । यथा—केचिदाचार्या ब्रुवते द्रव्यं प्रधानं, केचिद्रसं, केचिद्वीर्यं, केचिद्विपाकमिति ॥ २५ ॥**

अनेकार्थमाह—क्वचित्तथेत्यादि । उदाहरणमाह—यथा केचिदाचार्या ब्रुवते द्रव्यं प्रधानमित्यादि । स्पष्टार्थः ॥ २५ ॥

**आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः । यथा—कथं वातनिमित्ताश्चत्वारः प्रमेहा असाध्या भवन्तीति ॥ २६ ॥**

पूर्वपक्षमाह—आक्षेपेत्यादि । उदाहरणमाह—यथेत्यादि । ॥ २६ ॥

**तस्योत्तरं निर्णयः । यथा—शरीरं प्रपीड्य पश्चादधो गत्वा वसामेदोमज्जानुविद्धं मूत्रं विसृजति वात एवमसाध्या वातजा इति ॥ २७ ॥**

यथाचोक्तम्—

**कृत्स्नं शरीरं निष्पीड्य मेदोमज्जावसायुतः ।**
**अधः प्रकुप्यते वायुस्तेनासाध्यास्तु वातजाः२८**

निर्णयमाह—तस्योत्तरमित्यादि । तस्य पूर्वपक्षस्य यदुत्तरं स निर्णय इत्यर्थः । उदाहरणमाह—यथा शरीरमित्यादि । यतः शरीरपीडादिकं कृत्वा वसाद्यन्वितं मूत्रं वातो विसृजति, अतो मज्जाक्षये पूर्वपूर्वधातुक्षयादसाध्यत्वम् ॥ २७ ॥ २८ ॥

**परमतमप्रतिषिद्धमनुमतम् । यथा—कश्चित् ब्रूयात्सप्त रसा इति, तच्चाप्रतिषेधादनुमन्यते कथंचिदिति ॥ २९ ॥**

अनुमतमाह—परमतमित्यादि । अप्रतिषिद्धमधिगतमित्यर्थः । उदाहरणमाह—यथेत्यादि । कथंचिदिति केनापि प्रकारेणेत्यर्थः ॥ २९ ॥

**प्रकरणानुपूर्व्याभिहितं विधानम् । यथा—सक्थिमर्माण्येकादश प्रकरणानुपूर्व्याभिहितानि ॥३०॥**

विधानमाह—प्रकरणेत्यादि । प्रकरणानुपूर्व्याऽभिहितमिति यथाक्रममुक्तम् । उदाहरणमाह—यथा सक्थीत्यादि ॥३०॥

**एवं वक्ष्यतीत्यनागतावेक्षणम् । यथा—श्लोकस्थाने ब्रूयात्-चिकित्सितेषु वक्ष्यामीति ॥ ३१ ॥**

अनागतावेक्षणमाह—एवमित्यादि । अनागतस्य भविष्यतः अवलोकनं कार्यार्थमवेक्षणमित्यर्थः । उदाहरणमाह—यथा श्लोकेत्यादि ॥ ३१ ॥

**यदुक्तमित्यतिक्रान्तावेक्षणम् । यथा—चिकित्सितेषु ब्रूयात्—श्लोकस्थाने यदीरितमिति ॥३२॥**

१ 'यद्विहितं' इति पाठान्तरम् । २ 'समानं' इति पाठान्तरम् ।

अतिक्रान्तावेक्षणमाह—यदित्यादि । अतिक्रान्तस्य अतीतस्यावेक्षणम् । उदाहरणमाह—यथा चिकित्सितेष्वित्यादि ॥ ३२ ॥

**उभयहेतुदर्शनं संशयः । यथा—तलहृदयाभिघातः प्राणहरः, पाणिपादच्छेदनमप्राणहरमिति ॥ ३३ ॥**

संशयमाह—उभयेत्यादि । उभयोर्विसदृशयोरर्थयोर्हेतुः तस्य दर्शनम् । उदाहरणमाह—यथा तलेत्यादि । ननु, एतत्संशयज्ञानार्थमुदाहृतं, संशयोऽस्ति कुतः? तलहृदयादिघातस्य तथा पाण्यादिच्छेदस्य प्राणहरत्वाप्राणहरत्वाभ्यां पृथग्दर्शितत्वात् । सत्यं, परं यत्र घातच्छेदयोर्द्वयोः सद्भावस्तत्र किं तलहृदयाभिघातान्मरणमुत पाणिपादच्छेदाज्जीवनमित्येवं संशयः ॥ ३३ ॥

**तन्त्रेऽतिशयोपवर्णनं व्याख्यानम् । यथेह पञ्चविंशतिकः पुरुषो व्याख्यायते, अन्येष्वायुर्वेदतन्त्रेषु भूतादिप्रकृत्यारब्धचिन्ता[1] ॥ ३४ ॥**

व्याख्यानमाह—तन्त्रे इत्यादि । तन्त्रे शास्त्रे । अतिशयस्य अतिरिक्तस्य उपवर्णनं ख्यापनं व्याख्यानम् । तत्रातिशय इति पाठे तन्त्रेति निर्धारणे । उदाहरणमाह—यथेहेत्यादि । पञ्चविंशतिकः पञ्चविंशतितम इत्यर्थः, अव्यक्तादीनामष्टानां चतुर्विंशतिर्वात् विकारैः षोडशभिः सह । पुरुष इति क्षेत्रज्ञः । स्वमतमभिधाय परमतमाह—अन्यायुर्वेदतन्त्रेष्वित्यादि । भूतादिस्तामसोऽहङ्कारः; एतेन भूतादिमहङ्कारमारभ्यान्यायुर्वेदतन्त्रेषु चिन्ता नत्वव्यक्तमारभ्येति ॥ ३४ ॥

**अन्यशास्त्रासामान्या स्वसंज्ञा । यथा—मिथुनमिति मधुसर्पिषोर्ग्रहणं; वा लोके प्रथितमुदाहरणम् ॥ ३५ ॥**

स्वसंज्ञामाह—अन्यशास्त्रासामान्या स्वसंज्ञेत्यादि । अन्यानि शास्त्राणि आयुर्वेदादपराणि व्याकरणादीनि तेषु, असामान्या असाधारणा, तत्र अननुगता स्वशास्त्रेष्वेव प्रयोजनवतीत्यर्थः । उदाहरणमाह—यथा मिथुनमित्यादि । ननु, स्वसंज्ञाप्रणयनं व्यवहारार्थं क्रियते, न चात्र मिथुनसंज्ञया यन्मधुसर्पिषोर्ग्रहणं तद्द्वारेण व्यवहारो दृश्यते? उच्यते—उदाहरणमात्रमेतद्यथाकथंचिदिति । अत एव पक्षान्तरमाह—लोके प्रसिद्धमुदाहरणं वा । स्वसंज्ञया ग्राह्यमित्यर्थः । यथा चतुर्विधस्नेहेषु महास्नेहसंज्ञा । तत्रोदाहरणमपि केचित् तन्त्रयुक्तिष्विच्छन्ति । तन्न युक्तं, उद्देशसूत्रे उदाहरणाख्यतन्त्रयुक्तेरनुक्तेः, संख्याधिक्यप्रसक्तेश्च । तस्माद्यथोष्णेत्यादिकोऽपपाठ एवेति ॥ ३५ ॥

**निश्चितं वचनं निर्वचनम् । यथा—आयुर्विद्यतेऽस्मिन्ननेन वा आयुर्विन्दतीत्यायुर्वेदः ॥ ३६ ॥**

निर्वचनमाह—निश्चितमित्यादि । उदाहरणमाह—यथायुरस्मिन् विद्यत इत्यादि ॥ ३६ ॥

**दृष्टान्तव्यक्तिर्निदर्शनम्[1] । यथा—अग्निर्वायुना सहितः कक्षे वृद्धिं गच्छति तथा वातपित्तकफदुष्टो व्रण इति ॥ ३७ ॥**

निदर्शनमाह—दृष्टान्तव्यक्तिरित्यादि । दृष्टान्तेन व्यक्तिर्यस्मिन् वाक्ये तत्तथा । एतेनैतदुक्तं भवति—दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनमिति । अत एव च निदर्शनात् हेत्वर्थो भिद्यते । हेत्वर्थस्य अन्यार्थसाधकमात्रत्वात् । उदाहरणमाह—यथाग्निरित्यादि । तथेति अभिवृद्धिं गच्छतीत्यर्थः ॥ ३७ ॥

**इदमेव कर्तव्यमिति नियोगः । यथा—पथ्यमेव भोक्तव्यमिति ॥ ३८ ॥**

नियोगमाह—इदमित्यादि । उदाहरणमाह—यथा पथ्यमित्यादि । क्वचिन्नियोगो व्यभिचरति, यथा—ज्वरितस्यारुचौ सत्यामपथ्यमपि दीयते । तदुक्तं—'ज्वरितोऽहितमश्नीयाद्यद्यस्य ह्यरुचिर्भवेत् । अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा' इति । तन्त्रान्तरेऽप्युक्तं—"उत्पद्यते हि साऽवस्था देशकालबलं प्रति । यस्यां कार्यमकार्यं स्याद्वर्जितं कार्यमेव च'—इति ॥ ३८ ॥

**इदं चेदं चेति समुच्चयः । यथा—मांसवर्गे एणहरिणलावतित्तिरिशारङ्गाः प्रधानमिति ॥ ३९ ॥**

समुच्चयमाह—इदमित्यादि । उदाहरणमाह—यथा मांसेत्यादि । एणादयः प्रधानानि लावादयश्च प्रधानानीति च ॥ ३९ ॥

**इदं वेति विकल्पः । यथा—रसौदनः सघृता यवागूर्वा ॥ ४० ॥**

विकल्पमाह—इदं वेत्यादि । प्रत्येकं वाशब्दोपादानमत्रोदाहरणे यत्र कृतं तदेकेनापि वाशब्देन बहुषु विकल्पतादर्शनार्थं; क्वचिद्वाशब्दं विनाऽपि विकल्पो भवति, यथैकं रोगं प्रति बहुषु योगेषु वाशब्दं विनाऽप्यन्यतमो योगो योज्य इति विकल्पः । उदाहरणमाह—यथा रसौदन इत्यादि ॥ ४० ॥

**यदनिर्दिष्टं बुद्ध्याऽवगम्यते तदूह्यम् । यथा—अभिहितमन्नपानविधौ, चतुर्विधमन्नमुपदिश्यते—भक्ष्यं भोज्यं लेह्यं पेयमिति, एवं चतुर्विधे वक्तव्ये द्विविधमभिहितं तत्रोह्यमिति । अन्नपानेऽविशिष्टे द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवतीति, चतुर्विधश्चाहारः प्रायेण द्विविधः प्रसिद्ध**

१. 'भूतादिमारभ्य चिन्तेति' इति पाठान्तरम् ।

१. 'दृष्टान्तेन दर्शनं निदर्शनम्' इति पाठान्तरम् ।

**इति। किञ्चान्यत्—अन्नेन भक्ष्यमवरुद्धं, अन्नसाधर्म्यात्; पेयेन लेह्यं, द्रवसाधर्म्यात्॥ ४१॥**

सांप्रतमूह्याख्यां तन्त्रयुक्तिमाह—यदित्यादि। अनिर्दिष्टमिति साक्षादित्यर्थः। उदाहरणमाह—यथाभिहितमित्यादि। यथाऽत्रोह्यं भवतीति कथनायाह—भक्ष्यं भोज्यं लेह्यं पेयमिति चतुर्धा वक्तव्ये द्विविधमत्रोक्तं चातुर्विध्यमत्रोह्यं भवतीत्यर्थः। बुद्धिगम्यमूह्यं प्राक् प्रतिपादितं तत् कीदृशं बुद्ध्या गम्यते इत्याह—अन्नपाने इत्यादि। अविशिष्टे सामान्ये। प्रकारान्तरेणापि चतुर्विधत्वमाह—किञ्चान्यदित्यादि॥ ४१॥

भवन्ति चात्र—

**सामान्यलक्षणेनैता व्यासतः संप्रदर्शिताः।**
**विशेषस्तु यथायोगमुपधार्यो विपश्चिता॥ ४२॥**
**द्वात्रिंशद्युक्तयो ह्येतास्तन्त्रसारगवेषणे।**
**मया सम्यग्विनिहिताः शब्दन्यायार्थसंयुताः॥४३**
**यो ह्येता विधिवद्वेत्ति दीपभूतास्तु बुद्धिमान्।**
**स पूजार्हो भिषक्श्रेष्ठ इति धन्वन्तरेर्मतम्॥ ४४॥**

एवं तन्त्रयुक्तीरभिधाय उपसंहरन् प्रतिपादिततन्त्रयुक्तिविशेषप्रतिपत्तये श्लोकमाह—भवति चात्रेत्यादि। केचिद्द्वात्रिंशद्युक्तय इत्यादिकं श्लोकद्वयं पठन्ति॥ ४२—४४॥

इति श्रीडल्हणाचार्यविरचितायां निबन्धसंग्रहाख्यायां सुश्रुतव्याख्यायामुत्तरतन्त्रे पञ्चषष्टितमोऽध्यायः।

## षट्षष्टितमोऽध्यायः।

**अथातो दोषभेदविकल्पमध्यायं व्याख्यास्यामः॥१॥**
**यथोवाच भगवान् धन्वन्तरिः (सुश्रुताय)॥ २॥**

तन्त्रयुक्त्यनन्तरं परिशिष्टत्वाद्दोषभेदाध्यायारम्भः—अथात इत्यादि। अथेत्यादिकं पूर्ववद्व्याख्येयम्। धातून् दूषयन्तीति दोषा वातादयः, तेषां भेदः पृथक्संसर्गसन्निपातभेदेन, तस्य विकल्पनं एकैकाद्यनुगमनेन प्रपञ्चनं दोषभेदविकल्पः, तमधिकृत्य कृतः तम्॥ १॥ २॥

**अष्टाङ्गवेदविद्वांसं दिवोदासं महौजसम्।**
**छिन्नशाखार्थसंदेहं सूक्ष्मागाधागमोदधिम्॥ ३॥**
**विश्वामित्रसुतः श्रीमान् सुश्रुतः परिपृच्छति।**

अष्टाङ्गेत्यादि। अष्टाङ्गानि शल्यादीनि वाजीकरणान्तानि, तान्येव वेद आयुर्वेदः, तेन तत्र वा विद्वान् यः तम्। महौजसं महाप्रभावम्। सूक्ष्मा लीनार्थाः, अगाधा दुःखबोधा ये आगमास्तेषां उदधिस्तम्। श्रीमानिति राजश्रिया ब्राह्म्या च युक्तः। ननु विश्वामित्रो गाधिराजः, तत्सुतत्वेन राजश्रिया योगो युक्तः, कथं ब्राह्म्या श्रियेति? सत्यं, विश्वामित्रस्य ब्राह्मण्यं तपसा, ततो ब्राह्म्या श्रिया योगो युक्त एव। अन्ये तु क्षत्रियाणां ब्रह्मर्षिजातत्वेनोभययोग इति मन्यन्ते। अपरे तु विद्यासमाप्त्या ब्राह्म्या श्रिया योग इति मन्यन्ते। तथाचोक्तम्—"विद्यासमाप्तौ ब्राह्मं वा सत्त्वमार्षमथापि वा। ध्रुवमाविशति ज्ञानात्तस्माद्वैद्यस्त्रिजः स्मृतः"—इति॥ ३॥—

**द्विषष्टिर्दोषभेदा ये पुरस्तात्परिकीर्तिताः॥ ४॥**
**कति तत्रैकशो ज्ञेया द्विशो वाऽप्यथवा त्रिशः।**

द्विषष्टिरित्यादि। पुरस्तात्परिकीर्तिता इति रसभेदविकल्पे॥ ४॥—

**तस्य तद्वचनं श्रुत्वा संशयच्छिन्महातपाः॥ ५॥**
**प्रीतात्मा नृपशार्दूलः सुश्रुतायाह तत्त्वतः।**

शिष्यप्रश्नमाकर्ण्य गुरुराह—तस्येत्यादि। तस्येति सुश्रुतस्य। तदिति पूर्वोक्तम्। संशयच्छिदिति संदेहच्छेत्ता। प्रीतात्मा तृप्तान्तःकरणः। नृपशार्दूलो राजसत्तमः। तत्त्वत इति यथार्थभावेन॥ ५॥—

**त्रयो दोषा धातवश्च पुरीषं मूत्रमेव च॥ ६॥**
**देहं सन्धारयन्त्येते ह्यव्यापन्ना रसैर्हितैः।**

किमाह भगवानित्याह—त्रय इत्यादि। त्रयो दोषा वातादयः, धातवः सप्त रसादयः। अव्यापन्ना अविकृतिं गताः। रसैर्हितैरिति मधुरादिरसैः पथ्यैरित्यर्थः। ननु यथाप्रश्नं प्रत्युत्तरे वाच्ये किमर्थं कति तत्रैकश इत्यादिप्रश्नस्योत्तरार्थं त्रयो दोषा इत्याद्यभिधानं? उच्यते—धातूनां मलानां च दोषसंसर्गे दोष इत्यादिप्रतिपादनार्थं; अत एवासृजा सह पुरा पञ्चदश प्रसरा अभिहिताः। यद्येवं तर्हि मांसादिभिः सह प्रसरः कुतो न कीर्तितः? उच्यते—असंख्येयत्वात्। अथ कथं तदधिगन्तव्यमिति चेत्, दोषलिङ्गैरेव। तथा चात्र वक्ष्यति—तस्मात्प्रसंगं संयम्येत्यादि। ननु दोषधातुमलमूलं हि शरीरमित्यनेनैव दोषादिकार्यत्वमभिहितं; न च शरीराद्देहो भिन्नार्थः, तयोः पर्यायशब्दत्वात्; तत्कथं पुनरुच्यते एते देहं धारयन्तीति? उच्यते—देहशब्देनात्र कर्मपुरुषस्य चिकित्साधिकृतस्य विवक्षितत्वात्॥६॥—

**पुरुषः षोडशकलः प्राणाश्चैकादशैव ये॥ ७॥**
**रोगाणां तु सहस्रं यच्छतं विंशतिरेव च।**
**(शतं च पञ्च द्रव्याणां त्रिसप्तत्यधिकोत्तरम्)॥८॥**
**व्यासतः कीर्तितं तद्धि**

कीदृशः पुनरयं देहशब्दाभिधेयः कर्मपुरुष इति पूर्वप्रतिपादितस्यैव कर्मपुरुषस्य स्वरूपं वाच्यं, तत्प्रसंगेनापरमपि प्राणादिकं यत्तत्प्रतिपादयितुं सुखस्मरणार्थं प्रतिपादयति—पुरुष इत्यादि। अत्रैके कलाशब्देन पञ्चभूतानि एकादशेन्द्रियाणीति षोडशविकारा इति व्याचक्षते। अन्ये तु कलाशब्दमङ्गप्रत्यङ्गे आमनन्ति। यथा—शिरो ग्रीवा स्कन्धौ बाहू कटी पृष्ठं सक्थिनी गुद उदरं लिङ्गं पादौ चेति। स्वतन्त्रपरतन्त्राभिप्रायात् केचित्तु कलाशब्देन गुणमाहुः।

ते च सर्वभूतचिन्ताशारीरोक्तसुखदुःखेच्छोद्वेगप्रयत्नादीन् षोडशगुणानाचक्षते । चतुष्पादं षोडशकलं भेषजं चरकाचार्येणोक्तं; तत्र षोडशकलं षोडशगुणमिति व्याख्यानयन्ति । प्राणाश्चैकादशेति अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः । रोगाणां तु सहस्रं यच्छतं विंशतिरेव चेति विंशत्यधिकैकादशशतानि रोगाणाम् । अत्र सौश्रुते तन्त्रे षट्स्थानेषु प्रोक्ता रोगाः श्लोकैरभिधीयन्ते ।—

"हीनातिदग्धः क्षारेण, त्रयः दुष्टादयोऽग्निना ।
चतुर्थो धूमविहितः पञ्च शोणितदुष्टयः ॥ १ ॥
दोषधातुमलादीनां द्वात्रिंशत् क्षयवृद्धितः ।
द्वे स्थौल्यकार्श्ये त्रिविधो विस्रंसाद्यो बलक्षयः ॥ २ ॥
षट्शोफास्त्रिगुणो वह्निर्विषमादिकभेदतः ।
आमं विदग्धं विष्टब्धमजीर्णं च तथा त्रिधा ॥ ३ ॥
इति षष्ट्यात्मका रोगाः सूत्रस्थाने निदर्शिताः ।
आमपक्वाशये श्रोत्रे तथेन्द्रियचतुष्टये ॥ ४ ॥
त्वगामिषसिरास्नायुसन्ध्यस्थिमज्जसंभवाः ।
शुक्रे चैकाङ्गसर्वाङ्गगता सप्ताधिका दश ॥ ५ ॥
त्रयोदशावृतैरन्यैर्दोषैः स्युर्मारुतैः खलु ।
चतुर्विधं वातरक्तमाक्षेपश्चापतानकः ।
पक्षाघातोऽपतन्त्रश्च मन्यास्तम्भोऽर्दितस्तथा ॥ ६ ॥
गृध्रसी सह विश्वाच्या शिरः क्रोष्टुकपूर्वकः ।
खञ्जः पङ्गुः कलायाख्यः कण्टकः पाददाहकृत् ॥ ७ ॥
पादहर्षोऽवबाहुश्च मूकमिन्मिनगद्गदाः ।
तून्याध्मानद्वयेऽष्ठीलाद्वयमर्शांसि षट् तथा ॥ ८ ॥
चर्मकीलश्चतस्रश्चाश्मर्यः पञ्च भगन्दराः ।
तथाऽष्टादश कुष्ठानि किलासानि पुनस्त्रिधा ॥ ९ ॥
प्रमेहा विंशतिः प्रोक्ताः पिडिका नव तत्कृताः ।
उदराणि तथाऽष्टौ च मूढगर्भस्तथाऽष्टधा ॥ १० ॥
बाह्या विद्रधयः षट् स्युस्तथाऽन्तःस्थाश्च तादृशाः ।
विसर्पनाडीस्तनजास्तथैव पञ्च पञ्च च ॥ ११ ॥
ग्रन्थयः पञ्च चैका स्यादपची सप्तधाऽर्बुदम् ।
गलगण्डस्त्रिधा सप्त वृद्धयः परिकीर्तिताः ॥ १२ ॥
उपदंशास्तथा पञ्च श्लीपदं च तथा त्रिधा ।
चत्वारिंशच्च चत्वारः क्षुद्ररोगाः प्रकीर्तिताः ॥ १३ ॥
दशाष्टौ शूकदोषाश्च भग्नं चापि तथा स्मृतम् ।
अष्टावोष्ठभवा दन्तमूलेषु दश पञ्च च ॥ १४ ॥
अष्टौ दन्तेषु जिह्वायां पञ्च तालुगता नव ।
कण्ठे सप्तदश ज्ञेयास्त्रयश्च स्वरजा गदाः ॥ १५ ॥
एवं मुखे पञ्चषष्टिरिति स्थाने द्वितीयके ।
षट्चत्वारिंशदधिका त्रिशती परिकीर्तिता ॥ १६ ॥
अष्टौ शुक्रगता रोगा अष्टावार्तवदुष्टयः ।
चत्वारोऽसृग्दराः प्रोक्ताः क्लीबाः पञ्चविधास्तथाः ॥१७
मक्कलकाख्यशूलं च नैगमेशाहृतस्तथा ।
नागोदर इति प्रोक्ता शारीरे ह्यष्टविंशतिः ॥ १८ ॥
आढ्यवातः सर्वभवाः शोफाः पञ्च प्रकीर्तिताः ।
कर्णपाल्यामयाः पञ्च क्लैब्यमुक्तं चतुर्विधम् ॥ १९ ॥
वान्तरेचितयोः प्रोक्ता व्यापदो दश पञ्च च ।
षण्नेत्रप्रणिधानस्य नेत्रस्यैकादशैव तु ॥ २० ॥
पञ्च बस्तिकृतास्तत्र चत्वारः पीडने कृताः ।
एकादश द्रव्यकृताः सप्त शय्याकृतास्तथा ॥ २१ ॥
चत्वारिंशच्चतस्रश्च वैद्यतो व्यापदस्तथा ।
प्रोक्ताः क्रोधादिजाः पञ्च दश चातुरहेतुकाः ॥ २२ ॥
स्नेहस्य कारणान्यष्टावप्रत्यागमकृन्ति च ।
इति नेत्रादिदोषेण षष्टिः सप्त समासतः ॥ २३ ॥
एवं चिकित्सितस्थाने रुजोऽष्टानवतिस्तथा ।
अन्नादिका ह्यञ्जनान्ता विंशतिर्विषहेतुकाः ॥ २४ ॥
वेगाः स्युः स्थावरे दर्वीकरमण्डलिनां विषे ।
राजिमद्वैकरञ्जानां प्रत्येकं सप्त सप्त च ॥ २५ ॥
मूषिकास्तु दशाष्टौ च रोग एको ह्यलर्कजः ।
सप्तषष्टिशतं चात्र कीटानां विषदायिनाम् ॥ २६ ॥
सप्तचत्वारिंशयुतं कल्पस्थाने शतद्वयम् ।
नव सन्ध्याश्रयाः प्रोक्ता वर्त्मजाश्चैकविंशतिः ॥ २७ ॥
शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ।
सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु ॥ २८ ॥
बाह्यजौ द्वौ नेत्ररोगाविति षट्सप्ततिः स्मृताः ।
कर्णगतास्तथा रोगास्ते ह्यष्टाविंशतिर्नृणाम् ॥ २९ ॥
एकत्रिंशद्घ्राणगताः सप्रतिश्यायसंज्ञकाः ।
एकादश शिरोरोगाः परं शालाक्यसंज्ञिते ॥ ३० ॥
आतङ्कमाश्रितं प्रोक्तं षट्चत्वारिंशता शतम् ।
नवबालग्रहा योनिव्यापदो विंशतिः स्त्रियाम् ॥ ३१ ॥
एवं कुमारतन्त्रेऽस्मिन्नेकोनत्रिंशदामयाः ।
अष्टौ ज्वरा ह्यतीसाराः षट् चतस्रः प्रवाहिकाः ॥३२॥
चत्वारो ग्रहणीदोषा यक्ष्मैको गुल्मपञ्चकम् ।
हृद्रोगाः पञ्च चत्वारः पाण्ड्वाख्याः कामलाद्वयम् ॥३३॥
हलीमकं पानकी च रक्तपित्तं चतुर्विधम् ।
षट् प्रकारा मता मूर्च्छा विकाराः सप्त मद्यजाः ॥३४॥
दाहाः पञ्च तृषाः सप्त छर्दयः पञ्च देहिनाम् ।
हिक्काः श्वासास्तथा कासाः प्रत्येकं पञ्च पञ्च च ॥३५॥
स्वरभेदास्तथा षट् स्युर्विंशतिः कृमिजातयः ।
नवोदावर्तका दृष्टा विसूच्यस्तिस्र एव च ॥ ३६ ॥
आनाहौ द्वौ स्मृतौ चैव तथाऽरोचकपञ्चकम् ।
मूत्राघाता द्वादश स्युरिति कायचिकित्सिते ॥ ३७ ॥
आमयानां शतं प्रोक्तं चत्वारिंशच्च सप्त च ।
देवता-दैत्य-गन्धर्व-यक्ष-पितृहि-रक्षसाम् ॥ ३८ ॥

पिशाचस्याभिषङ्गेन गदाश्चाष्टौ प्रकीर्तिताः।
अपस्माराश्च चत्वार उन्मादाः षडुदीरिताः॥ ३९॥
अष्टादशगदा भूतविद्यायां सूक्ष्मदर्शिभिः।
एवं हि सौश्रुते तन्त्रे काशीराजेन कीर्तिताः॥ ४०॥

व्यासतो विस्तरतः। हिशब्दो हेत्वर्थे, यस्मात् कारणात् ॥ ७॥ ८॥—

**भिन्ना दोषास्त्रयो गुणाः।**
**द्विषष्टिधा भवन्त्येते भूयिष्ठमिति निश्चयः॥ ९॥**

भिन्ना इत्यादि। भिन्ना भेदंगताः। द्विषष्टिधा भवन्तीत्यर्थः। त्रयो दोषा वातपित्तश्लेष्माणः। गुणा गुणमयाः सत्त्वरजस्तमोलक्षणाः। तद्यथा—रजोभूयिष्ठो मारुतः, रजो हि प्रवर्तकं सर्वभावानां; पित्तं सत्त्वोत्कटं, लघुप्रकाशकत्वात्, रजोयुक्तं चेत्येके; कफस्तमोबहुलः, गुरुप्रावरणात्मकत्वादित्याहुर्भिषजः। यद्येवं तत् कथं कफप्रकृतिके पुंसि सत्त्वगुणोपपन्नता पठिता? उच्यते—गुणद्वितयमपि कफे ज्ञातव्यं, सत्त्वतमोबहुला आप इत्युक्तत्वात्॥ ९॥

**त्रय एव पृथक् दोषा द्विशो नव समाधिकैः।**
**त्रयोदशाधिकैकद्विसममध्योल्वणैस्त्रिशः॥ १०॥**
**पञ्चाशदेवं तु सह भवन्ति क्षयमागतैः।**
**क्षीणमध्याधिकक्षीणक्षीणवृद्धैस्तथाऽपरैः॥ ११॥**
**द्वादशैवं समाख्यातास्त्रयो दोषा द्विषष्टिधा।**
**मिश्रा धातुमलैर्दोषा यान्त्यसंख्येयतां पुनः॥ १२॥**
**तस्मात् प्रसङ्गं संयम्य दोषभेदविकल्पनैः।**
**रोगं विदित्वोपचरेद्रसभेदैर्यथेरितैः॥ १३॥**
**भिषक् कर्ताऽथ करणं रसा दोषास्तु कारणम्।**
**कार्यमारोग्यमेवैकमनारोग्यमतोऽन्यथा॥ १४॥**
**अध्यायानां तु षट्षष्ट्या ग्रथितार्थपदक्रमम्।**
**एवमेतदशेषेण तन्त्रमुत्तरमृद्धिमत्॥ १५॥**
**स्पष्टगूढार्थविज्ञानमगाढमन्दचेतसाम्।**
**यथाविधि यथाप्रश्नं भवतां परिकीर्तितम्॥ १६॥**

**सहोत्तरं त्वेतदधीत्य सर्वं**
**ब्राह्मं विधानेन यथोदितेन।**
**न हीयतेऽर्थान्मनसोऽभ्युपेता-**
**देतद्वचो ब्राह्ममतीव सत्यम्॥ १७॥**

**इति सौश्रुते आयुर्वेदशास्त्रे उत्तरस्थानं समाप्तम्।**

कथमेते द्विषष्टिधा भवन्तीत्याह—त्रय एवेत्यादि। तत्र पृथक् प्रकुपिता दोषा वातपित्तश्लेष्माणस्त्रयः, इतरौ च द्वौ स्वस्थाविति ज्ञेयौ। वृद्धो वातः स्वस्थौ पित्तश्लेष्माणौ, वृद्धं पित्तं स्वस्थौ वातश्लेष्माणौ, वृद्धः श्लेष्मा स्वस्थे वातपित्ते इति। द्विशो नव समाधिकैरिति तत्र समवृद्धाभ्यां द्वाभ्यां दोषाभ्यां त्रयः संसर्गा भवन्ति; यथा—वातपित्ते समे वृद्धे स्वस्थः श्लेष्मा, वातश्लेष्माणौ समौ वृद्धौ स्वस्थं पित्तं, पित्तश्लेष्माणौ समौ वृद्धौ स्वस्थो वात इति। अन्यतराधिकवृद्धाभ्यां षट्, तद्यथा—वातपित्तयोः वृद्धयोः वातोऽधिको वृद्धः स्वस्थः श्लेष्मा; वातपित्तयोर्वृद्धयोः पित्तमधिकं वृद्धं स्वस्थः श्लेष्मा, वातश्लेष्मणोर्वृद्धयोः वातोऽधिको वृद्धः स्वस्थं पित्तं, वातश्लेष्मणोः वृद्धयोः श्लेष्माऽधिको वृद्धः स्वस्थं पित्तं; पित्तश्लेष्मणोर्वृद्धयोः पित्तमधिकं वृद्धं स्वस्थो वातः, पित्तश्लेष्मणोर्वृद्धयोः श्लेष्मा अधिको वृद्धः स्वस्थो वातः। त्रिशस्तु वृद्धैस्त्रयोदश। तत्र त्रिभिरधिकैरेकः, अधिकैकदोषास्त्रयः, द्विदोषास्त्रयः, सममध्यमोल्वणदोषाः षट्। तद्यथा—वातपित्तश्लेष्मणां वृद्धानां वातोऽधिकवृद्धः, वातपित्तश्लेष्मणां वृद्धानां पित्तमधिकवृद्धं, वातपित्तश्लेष्मणां वृद्धानां श्लेष्माऽधिकवृद्धः- अथाधिकद्विवृद्धदोषाः, तद्यथा,—वातपित्तश्लेष्मणां वृद्धानां वातपित्ते अधिकवृद्धे, वातपित्तश्लेष्मणां वृद्धानां वातश्लेष्माणि अधिकवृद्धे, वातपित्तश्लेष्मणां [illegible]नां वातपित्ते अधिकवृद्धे। अथ हीनमध्योल्वणवृद्धाः षडुच्यन्ते। तत्र समः समवृद्धो हीनवृद्ध इत्यर्थः। तद्यथा—हीनवृद्धो वातः, मध्यवृद्धं पित्तं, अधिकवृद्धः श्लेष्मा; हीनवृद्धो वातः, मध्यवृद्धः श्लेष्मा, अधिकवृद्धं पित्तं; हीनवृद्धं पित्तं, अधिकवृद्धो वातः, मध्यवृद्धः श्लेष्मा; मध्यवृद्धो वातः, हीनवृद्धं पित्तं, अधिकवृद्धः श्लेष्मा; हीनवृद्धः श्लेष्मा, अधिकवृद्धं पित्तं, मध्यवृद्धो वातः; अधिकवृद्धो वातः, मध्यवृद्धं पित्तं, हीनवृद्धः श्लेष्मा। सर्वदोषैः समवृद्धैरेकः। उक्तं च तन्त्रान्तरे—"द्व्युल्वणैकोल्वणैः षट् स्युर्हीनमध्याधिकैश्च षट्। समैश्चैको विकारास्ते सन्निपातास्त्रयोदश"—इति। पञ्चाशदित्यादि। एवमनेन प्रकारेण क्षीणैर्दोषैः पञ्चविंशतिभेदाः स्युः। तद्यथा—वातपित्तकफैरेकैकैः क्षीणस्त्रयो भेदा भवन्ति। द्विशो नव प्रोच्यन्ते। तद्यथा—वातपित्ते समक्षीणे स्वस्थः श्लेष्मा, वातश्लेष्माणौ समक्षीणौ स्वस्थं पित्तं, पित्तश्लेष्माणौ समक्षीणौ स्वस्थो वातः; वातपित्तयोः क्षीणयोर्वातोऽधिकक्षीणः स्वस्थः श्लेष्मा, वातपित्तयोः क्षीणयोः पित्तमधिकक्षीणं स्वस्थः श्लेष्मा, वातश्लेष्मणोः क्षीणयोर्वातोऽधिकक्षीणः स्वस्थं पित्तं, वातश्लेष्मणोः क्षीणयोः श्लेष्माऽधिकक्षीणः स्वस्थं पित्तं, पित्तश्लेष्मणोः क्षीणयोः पित्तमधिकक्षीणं स्वस्थो वातः- पित्तश्लेष्मणोः क्षीणयोः श्लेष्माऽधिकक्षीणः स्वस्थो वातः। अथ क्षीणदोषत्रयभेदास्त्रयोदश प्रोच्यन्ते। तत्र—त्रिभिरपि समक्षीणैरेकः। अधिकैकैकक्षीणैश्च त्रयः; यथा,—वातपित्तश्लेष्मणां क्षीणानां वातोऽधिकक्षीणः, वातपित्तश्लेष्मणां क्षीणानां पित्तमधिकक्षीणं, वातपित्तश्लेष्मणां क्षीणानां श्लेष्मा अधिकक्षीणः। अथाधिकक्षीणद्विदोषाः; तद्यथा—वातपित्तश्लेष्मणां क्षीणानां वातपित्ते अधिकक्षीणे, वातपित्तश्लेष्मणां क्षीणानां वातश्लेष्माणावधिकक्षीणौ, वातपित्तश्लेष्मणां क्षीणानां पित्तश्लेष्माणौ अधिकक्षीणौ। अथ हीनमध्योल्वणक्षीणाः षट् प्रोच्यन्ते। तद्यथा,—हीनक्षीणो वातः मध्यक्षीणं पित्तं

क्षीणः श्लेष्मा, मध्यक्षीणो वातः हीनक्षीणं पित्तं
क्षीणः श्लेष्मा, अधिकक्षीणो वातः मध्यक्षीणं पित्तं
णः श्लेष्मा, हीनक्षीणो वातः अधिकक्षीणं पित्तं
णः श्लेष्मा, अधिकक्षीणो वातः हीनक्षीणं पित्तं मध्य-
श्लेष्मा, मध्यक्षीणो वातः अधिकक्षीणं पित्तं हीन-
श्लेष्मा । क्षीणेत्यादि । अत्र मध्यशब्देन स्वस्थोऽ-
ते, अधिकशब्देन च वृद्धः । तत्र क्षीणमध्याधिक-
षट् । तद्यथा—क्षीणो वातः स्वस्थं पित्तं वृद्धः श्लेष्मा,
वातः वृद्धं पित्तं स्वस्थः श्लेष्मा, स्वस्थो वातः पित्तं
वृद्धः श्लेष्मा, वृद्धो वातः क्षीणं पित्तं स्वस्थः श्लेष्मा,
वातः पित्तं वृद्धं क्षीणः श्लेष्मा, वृद्धो वातः स्वस्थं
पीणः श्लेष्मा । अथ द्विक्षीणैकवृद्धांस्त्रीनाह—वातपित्ते
वृद्धः श्लेष्मा, वातश्लेष्माणौ क्षीणौ पित्तं वृद्धं, पित्त-
णौ क्षीणौ वातो वृद्धः । अथ द्विवृद्धैकक्षीणानाह—
ते वृद्धे क्षीणः श्लेष्मा, वातश्लेष्माणौ वृद्धौ क्षीणं पित्तं,
ष्माणौ वृद्धौ क्षीणो वातः । एवमनेन प्रकारेण,
भेदाः कथिताः, त्रयो दोषाः वातपित्तश्लेष्माणः ।
[ मार्गः श्लोकैरुच्यते । तद्यथा,—

मध्यः श्लेष्मोल्बणो वायुः पित्तं हीनं तथा स्थितम् ॥१३॥
मध्यवातोऽधिकं पित्तं हीनवृद्धस्तथा कफः ।
एवमेते भवन्त्यत्र सन्निपातास्त्रयोदश ॥ १४ ॥
पूर्वैर्द्वादशभिः सार्धं विकल्पाः पञ्चविंशतिः ।
यथा वृद्धैस्तथा क्षीणैर्दोषैः स्युः पञ्चविंशतिः ॥ १५ ॥
क्षीणस्वस्थाधिकैरेभिर्दोषभेदा भवन्ति षट् ।
क्षीणः समीरणस्तत्र स्वस्थं पित्तं कफोऽधिकः ॥ १६ ॥
क्षीणो वायुः कफः स्वस्थः पित्तमत्राधिकं तथा ।[1]
क्षीणं पित्तं मरुत् स्वस्थो भेदोऽन्यस्मिन् बली कफः ॥१७॥
क्षीणं पित्तं कफः स्वस्थः प्रवृद्धस्त्वधिको मरुत् ।
श्लेष्मा क्षीणोऽनिलः स्वस्थः पित्तमत्र तथोल्बणम् ॥१८॥
कफः क्षीणः समं पित्तं प्रवृद्धस्तु समीरणः ।
क्षीणस्वस्थाधिकैरेवं भेदाः षट् परिकीर्तिताः ॥ १९ ॥
क्षीणं गते मरुत्पित्ते प्राप्तो वृद्धिं तथा कफः ।
क्षीणौ समीरणकफौ तथा स्यात् पित्तमुत्कटम् ॥ २० ॥
क्षीणौ पित्तकफौ तद्वन्नभस्वान् स्यात्तु वृद्धिमान् ।
द्वौ क्षीणावेको वृद्धश्च भेदत्रयमिति स्मृतम् ॥ २१ ॥
वातपित्ते गते वृद्धिं संप्राप्तश्च क्षयं कफः ।
वृद्धौ वातकफौ तद्वत् पित्तं चाथ क्षयं गतम् ॥ २२ ॥
तद्वत् पित्तकफौ वृद्धौ प्रक्षीणश्च मरुत् पुनः ।
एकक्षीणद्विवृद्धैश्च त्रयो भेदा भवन्त्यमी ॥ २३ ॥
क्षीणमध्याधिकैस्त्वेवं भेदा द्वादश कीर्तिताः ।
प्रकृतिस्थैः समीराद्यैस्तथैकः परिकीर्तितः ॥ २४ ॥
त्रिषष्टिर्दोषभेदानामिति सम्यङ्निरूपिता ॥ इति ।

एतेषां वातपित्तश्लेष्मणां लक्षणानि उच्यन्ते—तद्यथा—वातवृद्धौ वाग्बाहुल्यं गात्रस्फुरणं ऊष्मकामिता निद्रानाशोऽल्पवाक्त्वं गाढवर्चस्कं चेति, पित्तवृद्धौ पीतावभासता सन्तापः शीतकामित्वं अल्पनिद्रता मूर्च्छा बलहानिः दौर्बल्यं पीतविण्मूत्रनेत्रत्वं चेति, श्लेष्मवृद्धौ शौक्ल्यं शैत्यं गौरवमवसादं तथा निद्रा वह्निविश्लेषश्च । वातक्षये मन्दचेष्टता अल्पवाक्त्व मप्रहर्षो मूढसंज्ञता, पित्तक्षये मन्दोष्माग्निता रूक्षताऽन्तर्दा आमाशयेतरश्लेष्माशयशिरसां शून्यता सन्धिशैथिल्यं तृष् दौर्बल्यं च । एवंविधैर्लक्षणैः प्रकृतिसमसमवेतानां वृद्ध क्षीणानां च वातपित्तश्लेष्मणामवगमो मिश्रैश्च लक्षणैः संस सन्निपातावगम इति ।

क्षीणमध्याधिकस्य एकक्षीणवृद्धानां च केषांचिल्लक्षणानि दिश्यन्ते । तद्यथा—

[1] भवेत ।

[2] कैकः क्षीणस्त्वेको